Madras University Sanskrit Series No. 19. (A)

KHAṆḌADEVA'S

# BHĀṬṬA-DĪPIKĀ

[ PURVAṢATKA-PART I ]

WITH

# THE PRABHĀVALĪ

OF

ŚAMBHU BHATTA

*Edited by*

**Panditaraja**

**S. SUBRAHMANYA SASTRI, M.A.,**

*Lecturer in Sanskrit,*

*University of Madras.*




UNIVERSITY OF MADRAS

1957

मद्रपुरीयविश्वविद्यालयसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः १९ (A)

# भाट्टदीपिका

## श्रीशम्भुभट्टविरचितप्रभावलीसंवलिता

[पूर्वषट्कम्—तृतीयाध्यायस्य ४, ५, ६, ७, ८. पादाः चतुर्थाध्यायश्च]

संपादकः

एस्. सुब्रह्मण्यशास्त्री

पण्डितराजः, न्यायवेदान्तविद्वान् मीमांसकशिरोमणिः

मद्रपुरीयविश्वविद्यालयः

१९५७

# PREFACE

The second volume of the *Bhāṭṭā-Dīpikā* of Khaṇḍadeva with the *Prabhāvalī* of Sri Śambhubhaṭṭa, comprising the last 5 pādas of Chapter III and Chapters IV, V and VI is now issued. The printing of Chapters I, II and the first three pādas of Chapter III is not taken up as this portion has been published by the Nirnaya Sagara Press, Bombay. It is needless to stress the importance of the *Bhāṭṭu-Dīpikā* and the *Prabhāvalī* for the correct understanding of what is called the New School of Mīmāmsā as they are the only works available in the subject. I have given a brief survey of the contribution of Sri Śambubhaṭṭa to Mīmāmsā in my Sanskrit Introduction.

In editing the text of the *Bhāṭṭa-Dīpikā* I made use of a Paper manuscript (R. 4424) deposited in the Government Oriental Manuscripts Library, Madras along with the printed editions issued by The Government Oriental Library, Mysore and the Asiatic Society of Bengal, Calcutta. For the *Prabhāvalī* I made use of the following manuscripts:—

1. My own copy of the Prabhāvalī which is a transcript of a complete paper manuscript in Grantha character belonging to the late Mahāmahopādhyāya Mīmāmsā Kaṇṭhīrava Vaidyanatha Sastriar, my late teacher who taught Mīmāmsā at the Sankar Mutt, Bangalore for four decades (1900 to 1940).

2. Paper Manuscript (Grantha) of the Prabhāvalī containing Adhyāyas 3, 4, 5 and 6 belonging to the Adyar Library, Adyar, Madras.

3. A Paper manuscript (Telugu) containing Adhyaya IV only which belonged to the late Mahāmahopādhyāya Venkata Subba Sastriar, Principal, Sanskrit College, Mylapore, and kindly lent by Sri Ramaswami Sastri of Tiruvisalur, the grandson of the late Sastriar.

4. A paper manuscript containing Adhyāya VI only belonging to the Curator's Library, Trivandrum. About 30 pages are missing in this manuscript.

5. A paper manuscript containing first 4 pādas and a portion of the Vth pāda of Adhyāya VI belonging to Sri Dixit Sastri, Deccan College Research Institute, Poona, kindly procured through the help of the late Sri V. A. Ramaswami Sastriar.

My thanks are due to all these persons and heads of the institutions who helped me in editing this work by lending their manuscripts.

I am grateful to Dr. V. Raghavan, Professor of Sanskrit, University of Madras who helped me in various ways in bringing out this work.

I must thank Mr. S. Krishnaswami of Sri Ramachandra Printing Works, who evinced great interest in printing this work.

MADRAS<br>DECEMBER, 1956.

S. SUBRAHMANYA SASTRI.

## CONTENTS

# उपोद्घातः

निगमाय सुकर्मबोधिने मुनये जैमिनये च सूत्रिणे ।
शबराय च भाष्यकारिणे नम ईशाय कुमारिलात्मने ॥

न्यायादिशास्त्रेष्विव पूर्वमीमांसायामपि नव्यप्राच्यभेदेन मतद्वयमस्ति । तत्र पार्थसारथिमिश्रान्ताः प्राचीनाः । खण्डदेवादयः नवीनाः । यद्यपि वैदिककर्मानुष्ठाने मीमांसाफलभूते नास्ति मतभेदः तथापि शास्त्रार्थपरिष्करणे शाब्दबोधविचारे चास्त्येव वैलक्षण्यम् । अत एव "सोमेन यजेतेतिवत् उद्भिद्वता यागेनेति मत्वर्थलक्षणा आवश्यिकीति प्राञ्चः । वस्तुतस्तु दृष्टान्तेऽपि" (1-4-2) इत्यादिना स्वस्य नव्यत्वं व्यञ्जयति ग्रन्थकारः ।

नव्यमते खण्डदेवोक्ता विशेषाः

1. अर्थभावना प्रयत्नरूपा; पार्थसारथेस्तु व्यापारसामान्यम्

2. शब्दभावना वेदे अलौकिकधर्मः; पार्थसारथेस्तु इष्टसाधनत्वमेव

3. मन्त्राणां प्रामाण्यं पदार्थविधया; मन्त्रविनियोगवाक्यार्थबोधे तेषां उपयोगात् ।

4. 'सोमेन यजेत' इत्यादौ प्राथमिकबोधे मत्वर्थलक्षणा नाङ्गीकार्या ।

5. ज्योतिष्टोमे नियतानि चत्वारि पृष्ठस्तोत्राणि विद्यन्ते

6. षष्ठ्यन्तनिर्दिष्टस्यापि भावनायामेवान्वयः इतरकारकवत् । प्राचीनास्तु षष्ठ्यन्तार्थस्य कारकान्वयमिच्छन्ति

7. परमापूर्वानङ्गीकारेपि शास्त्रार्थः उपपादयितुं शक्यते ।

8. प्रयाजशेषाधिकरणस्य अन्यथोपपादनम् यथाश्रुतस्य निषादस्थपत्यधिकरणन्यायविरुद्धत्वात्

9. उद्गातृशब्दस्य उद्गीथकर्तरि रूढिः तत्संबन्धादितरयोरपि लक्षणया ग्रहणमिति प्राञ्चः । योगेनोपपत्तौ रूढ्यनङ्गीकार इति खण्डदेवः ।

10. यूपाहवनीयादिशब्दाः अदृष्टविशेषविशिष्टकाष्ठाग्न्यादिपराः इति खण्डदेवः। केवलादृष्टपरा इति प्राञ्चः-इत्यादयः

शास्त्रार्थपरिष्करणमपि अत्रत्यं न कुत्रापि ग्रन्थेषु दृष्टचरम् एकपदार्थत्वं, एककर्मत्वं श्रुतिलिङ्गादयः अतिदेशोहबाधतन्त्रप्रसङ्गादयः पदार्थाः निष्कृष्य सदलप्रयोजनमत्र कथिताः इति ग्रन्थस्यास्येतरग्रन्थेभ्यः समुत्कर्षः। किञ्च विधिरसायनोक्तविधिलक्षणदूषणानि अत्र परिहृतानि। यद्यपि बहुभिः विधिरसायनोक्ताक्षेपाः परिहर्तुं प्रयतिताः, केचन श्रीअप्पय्यदीक्षितवंशोद्भवैः पण्डितैः दूरूहशिक्षाकारादिभिः दूषिताश्च; तथापि सर्वाण्यपि दूषणानि परिहृत्य श्रीदीक्षिताभिप्रेतं लक्षणं अत्र परिष्कृत्योपपादितम्। अयमन्यो विशेषः भाट्टदीपिकायां, यत् प्राचीनोक्तसिद्धान्तयुक्तिषु यत्र यत्र किञ्चिद्दौर्बल्यं दृश्यते तत्र तत्र तत्तत्सिद्धान्तयुक्तीरपि पूर्वपक्षे उद्भाव्य स्वयं युक्त्यन्तरेण सिद्धान्तयति ग्रन्थकारः यथा प्रयाजशेषाधिकरणे। अयं प्रकारः बहुषु अधिकरणेषु दृश्यते। न केवलं मीमांसकोक्ताः दुर्बलयुक्तयः प्रबलयुक्त्यन्तरैः व्यवस्थाप्यन्ते किन्तु इतरग्रन्थोक्ता अपि-यथा निषादस्थपत्यधिकरणे तत्पुरुषे पूर्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्टे लक्षणाप्रसङ्गोद्भावनेन सिद्धान्तः कृतः प्राचीनैर्मीमांसकैः। श्रीअप्पय्यदीक्षितैस्तु परिमले इयं युक्तिः स्वत्वसंबन्धेन राज्ञः पुरुषेऽन्वयसंभवात् असंभवदुक्तिकत्वेन दूषिता। खण्डदेवस्तु श्रीदीक्षितोक्तमपि पूर्वपक्षे आपाद्य प्रकारान्तरेण सिद्धान्तमाह (6-1-12)। एवं मीमांसकाभिमतः प्रकरणान्तरन्यायेन कर्मभेदः 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यादौ खण्डितः श्रीमदप्पय्यदीक्षितैः परिमले वैधाद्यर्थभेदादित्यधिकरणे तत्र तत्र भावनाभेदमात्रमङ्गीकुर्वाणैः, 'भिद्यते भावनामात्रं' इति वार्तिकवाक्यं चानुकूलयद्भिः। श्रीखण्डदेवस्तु स्वयं युक्त्यन्तरैरेव कर्मान्तरत्वं बृहस्पतिसवादेः प्रतिष्ठापयति कौस्तुभे (2-3-11-) अयं चापरो विशेषः श्रीखण्डदेवस्य यत् मीमांसकसिद्धान्तः सर्वथा समर्थ्यत एव, न तु वेदान्तिभिः खण्डितः मीमांसकसिद्धान्तः क्वचित्क्वचित्स्थलेषु इति स्वयं वेदान्तसिद्धान्तोऽवलम्ब्यते। यथा अध्ययनविधेः अर्थज्ञानार्थत्वमेव समर्थ्यते, अर्थवादानां विधिभिः सह पदैकवाक्यत्वमेवाङ्गीक्रियते, देवताविग्रहादिकमनभ्युपगम्यैव च मीमांसा व्याक्रियते।

अध्वरमीमांसाकुतूहलवृत्तिकारास्तु—

अध्ययनविधेः अक्षरावाप्तिपर्यन्तत्वमेव सिद्धान्तयन्ति देवताविग्रहः श्रीजैमिनेः सूत्रकारस्य वार्तिककारस्य भट्टाचार्यस्य सम्मत एवेति ब्रुवन्ति। न्यायमालाकारः भूतार्थ-

वादानां वेदान्तसिद्धदेवताधिकरणन्यायमवलम्ब्य अर्थवादानां विधिभिः वाक्यैकवाक्यत्व-मुट्टङ्कयति। श्रीखण्डदेवः देवताविग्रहादिकं जैमिनेरसम्मतमित्येव ब्रवीति इहत्य-देवताधिकरणान्ते 'इति जैमिनिमतनिष्कर्षः। मम त्वेवं वदतोऽपि वाणी दुष्यतीति तत्र हरिस्मरणमेव शरणम्' इति ब्रुवन् (९-१-४) जैमिनिमतोपपादनमपि स्वस्यायुक्तमेवेति च मन्यते। ज्ञानकर्मसमुच्चयपक्षं मीमांसकसम्मतमुपपादयन्नपि तत्र स्वस्यानभिमतिं व्यनक्ति "यदा तु ज्ञानकर्मसमुच्चयोऽपि प्रामाणिकः" इति ब्रुवन्।

खण्डदेवः

श्रीरुद्रदेवसूनुः खण्डदेवः किंदेशीय इति निर्धारयितुं नास्माभिः पार्यते। ग्रन्थोप-संहारे श्रीशम्भुभट्टोक्त्या परं काश्यां ब्रह्मनाले स्वीकृततुरीयाश्रमः १७२२ शके (1666. A D) ज्येष्ठमासि हस्तनक्षत्रे गुरुवासरे प्रातः सिद्धिमगमत् इत्यवगम्यते। अयं च कालः सर्वेषां शास्त्राणां विशेषतः नव्यमतस्य उत्पत्तिप्रचयगमनादिना परमोत्कर्षापादक इति वक्तुं शक्यते। शके १६६० समये एव श्रीअप्पय्यदीक्षिताः द्रविडदेशे वेदान्त-मीमांसा-अलङ्कार-शैवादिशास्त्रेषु विचारबहुलान् ग्रन्थान् रचयामासुः। मार्कि शकाब्दे १७६० समये मधुसूदनसरस्वत्यः अद्वैतासिध्यादीन् निर्माय द्वैतवादिनो विजिग्युः। नव्यव्याकरणमतप्रवर्तकाः नागेशभट्टाः एतस्मिन्नेव समये स्वीयशब्देन्दुशेखरमञ्जूषा-दिभिः व्याकरणशास्त्रं मण्डयामासुः। गदाधरभट्टाचार्या अपि (1650 AD) समये स्थिताः दीधितिटिप्पणीव्युत्पत्तिवादशक्तिवादप्रामाण्यवादादीन् चतुष्षष्टिवादग्रन्थान् वितेनिरे इति श्रूयते। "देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयं" इति वदन् रसगङ्गाधरकारः विश्रुतजगन्नाथपण्डितः स्वपितुः पेरुभट्टस्य खण्डदेवादेव मीमांसाशास्त्राध्ययनं ब्रवीति। इत्थं श्रीखण्डदेवस्य काल एव तादृशः यच्छास्त्राणां महोन्नतेः प्रसवभूमिरिति।

श्रीखण्डदेवकृताः त्रयो ग्रन्थाः भाट्टदीपिका भाट्टकौस्तुभः भाट्टरहस्यमिति प्रसिद्धाः भाट्टत्रयमित्यपि प्रथिताः। तेषु भाट्टकौस्तुभः प्रथमद्वितीयपादमारभ्य बलाबलाधिकरणान्त एव; शब्दकौस्तुभन्यायरक्षामण्यादिवत् अतिविस्तृतः टीकानपेक्षश्च। भाट्टरहस्यं व्युत्पत्तिवादवत् शाब्दबोधव्युत्पत्तिप्रदर्शनात्मकं प्रथमपरिच्छेदान्तमेवोपलभ्यते। भाट्टदीपिका तु प्रथमाध्यायद्वितीयपादमारभ्य द्वादशाध्यायान्तं संपूर्णमुपलभ्यते।

तत्रापि मीमांसादर्शनसंबद्धविचारात्मकः प्रथमपादार्थः नैव खण्डदेवेन विवृतः नापि संकर्षकाण्डात्मकः परिशिष्टविचारः। तदुभयमपि भास्कररायेण संक्षेपेण

ग्रन्थितम्। संकर्षकाण्डभाष्यं देवस्वामिविरचितमप्यचिरादेवास्यां ग्रन्थावल्यां प्रकाशयिष्यतेऽस्माभिः। भाट्टदीपिका अत्यन्तसंक्षिप्तत्वात् व्याख्यानसापेक्षा। तत्र भाट्टचन्द्रिका भाट्टकल्पतरुः इति व्याख्याद्वयं क्वाचित्कं न संपूर्णग्रन्थस्य। भाट्टचिन्तामणिः संपूर्णोऽपि न तथा प्रसिद्धः यथा प्रभावलीति विख्याता खण्डदेवान्तेवासिश्रीशम्भुभट्टविरचिता व्याख्या। शम्भुभट्टः किल खण्डदेवादेव भाट्टदीपिकामधीत्य अध्ययनकाले गुरुभिः कथितमेव प्रमेयं स्वग्रन्थेन प्रकटीचकारेति तत्कृतव्याख्याया उत्कर्षः।

शम्भुभट्टश्च ग्रन्थकर्तुः शिष्योऽपि गुरूक्तमर्थं विवेचयितुं समर्थः गुरूक्तावपि युक्तायुक्तत्वे विचार्य निष्कर्षयति। वक्ति च सविनयं—

> यद्यप्यत्र गुरोः कृतावपि मयाप्युद्भाव्यते काचना
> ऽसंभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता।
> किन्तु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तवद्धादराः
> मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्वियं मे मतिः॥

इति। अन्ते च

> अधीतिकाले कथितं प्रमेयं यत्पूज्यपादैर्लिखितं मया तत्।
> अतिक्रमस्तेन चिरन्तनानां जातोऽपि नासौ मम दोषकारी॥

इति।

बहुषु स्थलेषु शम्भुभट्टः मूलं खण्डयति यथा—

1. 'द्वित्वबहुत्व' इत्यधिकरणे (3-3-9)
2. कर्मार्थे तु फलं तेषां इत्यत्र (3-8-9)
3. यस्मिन् प्रीतिः इत्यत्र (4-1-2)
4. श्रुतिलक्षणमानुपूर्व्यं (5-1-1)
5. अर्थाच्च (5-1-2)
6. प्रवृत्त्या तुल्यकालानां (5-1-13)
7. अङ्गवत्क्रतूनामानुपूर्व्यम् (5-3-12)

8. स्वकाले स्यात् (5-4-5)

9. फलार्थत्वात् कर्मणः (6-1-2)

10. स्ववतोस्तु वचनात् (6-1-4)

11. तस्या यावदुक्तम् (6-1-6)

12. उपांशुयाजेऽवचनात् (6-5-2) इत्यादिस्थलेषु 'मम तु प्रतिभाति' इत्यारभ्य स्वाभिप्रायः स्पष्टीकृत एव।

मीमांसकानां मोक्षोपायविचारः

यद्यप्ययं विचारः प्रथमपाद एव सङ्गतः तथापि विश्वजिदधिकरणे अश्रुतफलस्य विश्वजिद्यागस्य किं फलं कल्पनीयमिति विचारे मोक्षस्य विश्वजित्फलत्वनिषेधावसरे मीमांसकसंमतं मोक्षस्य ज्ञानकर्मसमुच्चयजन्यत्वमुपपादितं श्रीशम्भुभट्टेन।

तथाहि—त्रिविधमात्मज्ञानं (१) शरीरव्यतिरिक्तकर्तृभोक्त्रात्मज्ञानमेकम्। इदं च कर्मप्रवृत्तौ अङ्गभूतम्।

(२) यत्तु 'एष आत्मा अपहतपाप्मा विजरो विमृत्युः विशोकः' इत्यादिश्रुत्या पापजरा-मृत्युशोकक्षुत्पिपासाराहित्य-काम्यमानफलप्राप्ति—संकल्पमात्राधीनसिद्धिरूपगुणविशिष्टा-त्मज्ञानं जन्यते तत् द्वितीयं 'सर्वांश्च लोकानाप्नोति' इत्यादिवाक्यशेषसमर्पित फलसाधनम्।

(३) यत्तु 'आत्मानमुपासीत' इति श्रुत्या केवलनिर्गुणात्मविषयज्ञानं जन्यते तत् तृतीयं, तच्च "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते" इत्यादिश्रुत्युक्तब्रह्माख्यलोकरूपमोक्षफलकम्। इदं च नित्यनैमित्तिककर्मानुष्ठान-सचिवमेव। न च कर्तृत्वाभिमाननिवृत्तौ कथमनुष्ठानमिति शङ्क्यम्—असंसार्यात्म-ज्ञानपरिपाकात्प्राक् कर्तृत्वभोक्तृत्वाभिमानानिवृत्तौ कर्मप्रवृत्त्युपपत्तेः। प्रत्यवाय—परिहारार्थत्वेन तदनुष्ठानावश्यंभावात्। अत्र च स्वाभाविकस्यैव स्वप्रकाशानन्दस्य संसारदशायां दुःखसंवलितस्य सतोऽपि वायुविक्षिप्तदीपस्येवासतः मुक्तौ तदभावे अनुभवोपपत्तिरिति न्यायसुधाकाराः।

पार्थसारथिमिश्रास्तु दुःखध्वंसात्मकं मोक्षं नैयायिकवदङ्गीचक्रुः । एतत्सर्वं विस्तरेण विश्वजिदधिकरणे द्रष्टव्यमिति । श्रीशम्भुभट्टैः बहुषु स्थलेषु इतरग्रन्थेषु अदृष्टाः स्वतन्त्रविचाराः कृताः यथा

1. अध्ययनविधिविचारः (1-2-1)
2. विधिलक्षणविचारः (1-2-4)
3. अश्वप्रतिग्रहेष्ट्यधिकरणविचारः (3-4-15)
4. प्रासनवन्मैत्रावरुणायेत्यधिकरणविचारः (4-2-6)
5. विश्वजिन्न्यायः (4-3-5)
6. स्त्रिया सहाधिकारविचारः (6-1-6)
7. रथकाराधिकरणविचारः (6-1-11)
8. स्वामिनः फलसमवायादित्यधिकरणविचारः (6-3-7)
9. अभ्युदितेष्ट्यधिकरणविचारः (6-5-1)
10. देवताधिकरणविचारः (9-1-4)
11. तदुत्पत्तेस्तु निवृत्तिः (9-2-12)
12. सन्ततवचनात् धारायामादिर्संयोगः (12-3-11)

इत्यादयः । मूलार्थावगमे तदुपरि प्रसक्तानामाक्षेपाणां समाधानकरणे चास्य ग्रन्थस्य निरतिशयं साधनत्वं सर्वैरप्यङ्गीकार्यमेव ।

एतादृशग्रन्थरत्नमुद्रणे कृतसाहाय्यकः मद्रपुरीयविश्वविद्यालयः सर्वतो धन्यवाद-मर्हतीति शम्

एस्. सुब्रह्मण्यशास्त्री.

## Index of Authors and Works cited in the Bhāṭṭa-Dīpikā

## Index of Authors and Works cited in the Bhāṭṭa-Dipīkā



---

# विषयानुक्रमणिका

## तृतीयाध्यायस्य चतुर्थः पादः

पञ्चमः पादः

---

षष्ठः पादः

---

सप्तमः पादः

---

अष्टमः पादः

# चतुर्थाध्यायस्य प्रथमः पादः

प्रयोज्यत्वं अध्यायार्थः

---

द्वितीयः पादः

---

तृतीयः पादः

चतुर्थः पादः

॥ श्रीः ॥

# भाट्टदीपिका

प्रभावलीसमेता

## तृतीयाध्यायस्य चतुर्थः पादः

जैमिनीयसूत्राणि

(१)—निवीतमिति मनुष्यधर्मः शब्दस्य तत्प्रधानत्वात् ॥ १ ॥ अपदेशो वाऽर्थस्य विद्यमानत्वात् ॥ २ ॥ विधिस्त्वपूर्वत्वात्स्यात् ॥ ३ ॥ स प्रायात् कर्मधर्मः स्यात् ॥ ४ ॥ वाक्यस्य शेषवत्त्वात् ॥ ५ ॥ तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥ ६ ॥ तत्प्रधाने वा तुल्यवत्प्रतिसङ्ख्यानादितरस्य तदर्थत्वात् ॥ ७ ॥ अर्थवादो वाऽप्रकरणात् ॥ ८ ॥ विधिना चैकवाक्यत्वात् ॥ ९ ॥

दर्शपूर्णमासयोः "निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत" इति श्रुतम्। तत्र सर्वोऽप्ययम् "उपव्ययते" इत्यस्योपवीतविधे-

---

निवीतं मनुष्यधर्मः

अत्राहीनाधिकरणमारभ्य श्रुत्यादिभिः प्रकरणस्य विरोधाविरोधविचारस्य प्रसक्तत्वात्[1] पेषणस्य प्रकरणबाधेनोत्कर्षे वाक्यादुक्ते तत्प्रसङ्गागतसर्वार्थत्वादिविचारे कृतेऽपि तद्विचारसमाप्तौ पुनस्स एव क्रियते उत्कर्षानुत्कर्षफलक इति नास्य निवीते क्रियमाणविचारस्यासङ्गतत्वमिति सूचयितुमाह—दर्शपूर्णमासयोरिति। तथा च प्रकरणे आम्नानात् तस्य श्रुत्यादिभिः सह विरोधाविरोधौ विचार्येते इति नासङ्गतिरित्यर्थः। अत्र च निवीते शुद्धमनुष्यधर्मः, उत क्रतुयुक्ततद्धर्मः, उत कर्मधर्मः, उत प्राकरणिकान्वाहार्यदानादिकर्मधर्मः, उत मनुष्यप्रधानकर्मधर्म

---

1. A. प्रस्तुतत्वात

शेषो न तु स्वतन्त्रो विधिरित्यौदुम्बराधिकरणेनैव स्थितम्। यदा विधिस्तदा कृत्वाचिन्तया निवीतवाक्ये विचारः ॥

तत्र प्रकरणाच्छुद्धक्रतुधर्मः, मनुष्यग्रहणं तु सम्बन्धसामान्यवाचिन्या षष्ठ्याऽर्थप्राप्तकर्तृत्वाख्यसम्बन्धानुवादादविरुद्धमित्याद्यः पक्षः। मनुष्यग्रहणस्य वैयर्थ्यापत्तेः षष्ठ्या अङ्गाङ्गिभावसम्बन्धपरत्वावसायात् निवीतस्य मनुष्याभिलषितफलजनकत्वाङ्गीकाराच्छुद्ध-

---

इति सन्देहपूर्वकं तत्तत्पूर्वपक्षवत् प्राचीनावीतोपवीतयोः तदसम्भवात् अविचारणीयत्वमित्यभिप्रेत्याह—**निवीतवाक्ये इति**। उपवीतस्य "सन्दिग्धेषु व्यवायाद्वाक्यभेदः स्यात्" (पू-मी ३-१-११) इति श्रुतिपादाधिकरणे सामिधेन्यङ्गत्वनिरासेन महाप्रकरणात् दर्शपूर्णमासाङ्गत्वस्य सिद्धत्वेन कर्मधर्मत्वपूर्वपक्षस्यैवाभावात् शुद्धदेवपितृधर्मक्रतुयुक्तदेवपितृधर्मपक्षयोश्च प्राचीनावीतसाधारण्येनैवासम्भवात् न तद्वाक्ययोः विचारः साकल्येन सम्भवतीत्यर्थः। यत्तु **प्रकाशकृता** षष्ठ्युपात्तशुद्धतत्तद्धर्मः, क्रतुयुक्ततत्तद्धर्मः, शुद्धक्रतुधर्मः, प्राकरणिकतत्प्रधानकर्मधर्म इति पक्षचतुष्टयस्य प्राचीनावीतेऽसम्भवादविचार इत्युक्तम् तत् दर्शपूर्णमासयोः प्रोक्षणीशेषनिनयनस्य पितृप्रधानकर्मत्वेनापसव्येनैवानुष्ठानात् प्राकरणिकपितृप्रधानकर्मधर्मत्वपक्षस्य चतुर्थस्य तत्र सम्भवात् अनवधानकृतमित्युपेक्षितम्। **हिरण्यकेश**सूत्रानुसारिणां स्विष्टकृदनन्तरं जुह्वां समन्त्रकाबानयनस्यापसव्येनैवानुष्ठानाच्च। अत एव शुद्धमनुष्यधर्मः, क्रतुयुक्ततद्धर्मः, शुद्धक्रतुधर्मः प्राकरणिकमनुष्यप्रधानकर्मधर्म इति पूर्वपक्षचतुष्टयं सूत्रक्रमानुरोधेन भाष्यादिषु क्रमेण कृत्वा सनकादिमनुष्यप्रधानसर्वकर्मधर्मत्वमिति सिद्धान्तः कृतः। तत्र पूर्वपूर्वास्वरसेनैवोत्तरपक्षाणामुपपादनस्य युक्तत्वात् पूर्वपक्षस्य प्रबलस्यैव प्रथमतः करणे उत्तरपक्षानुत्थितेः, कथञ्चिदुत्थानेऽपि वा बहुतरक्लेशोपपादनीयत्वापत्तेः सिद्धान्तपक्षत्वेन सम्मतस्याग्रे दूषणात्, वाक्यप्राबल्यात् शुद्धमनुष्यधर्मत्वपक्षे उक्ते तदविरोधेन प्रकरणात् क्रतुयुक्तमनुष्यधर्मत्वपक्षे द्वितीये वा उक्ते शुद्धकर्मधर्मत्वतृतीयपूर्वपक्षासम्भवात् तदुक्तक्रमानादरेण पक्षत्रयेण पूर्वपक्षः एकपक्षेण सिद्धान्त इति पक्षचतुष्टयमेव युक्तमित्यभिप्रेत्य सर्वेभ्यो दुर्बलमेव पक्षं प्रथमतो दर्शयति—**तत्र प्रकरणादिति**। **अर्थप्राप्तेति**। सर्वस्यापि कर्मणो मनुष्याधिकारिकत्वात् अर्थप्राप्तं कर्तृत्वमित्यर्थः। अस्य पक्षस्य दुर्बलत्वं दर्शयन् द्वितीयपक्षमाह—**मनुष्यग्रहणस्येति**। **षष्ठ्या इति**। वासिष्ठानामित्यत्रेवेति शेषः। न च निवीतोद्देशेनैव मनुष्यकर्तृकत्वविधिः। मनुष्याणामर्थप्राप्तत्वेनाविधेयत्वात्। निवीतस्यैव च विधाने सति तदङ्गत्वसम्भवेन वैपरीत्यानापत्तेः। **एतेन** **मनुष्याणामिति कृद्योगनिमित्तकषष्ठीत्वेन कर्तृत्वोक्तेः कथं मनुष्यप्राधान्यमिति निरस्तम्, 'न**

**मनुष्यधर्मः** षष्ठीश्रुत्या **प्रकरणबाधा** इति द्वितीयः। अबाधेनोपपत्तौ बाधायोगात् फल-कल्पनापत्तेश्च सन्निपत्योपकारकत्वलाभाच्च प्रकरणलङ्घतया तया जञ्जभ्यमानमन्त्रवत् क्रतुयुक्तपुरुषधर्म इत्यपरः। अत्र पूर्वपक्षत्रयक्रमो मूलेऽन्यथाकृतोऽप्ययुक्तिसहत्वादुपक्षितः। **सिद्धान्तस्तु**—प्राचीनावीतवैषम्यापत्तेः तत्समभिव्याहारात्मकवाक्यानुरोधात् षष्ठ्याः मनुष्य-सम्प्रदानकप्राकरणिकान्वाहार्यदानपाकादिपदार्थोपकारकत्वरूपसम्बन्धपरत्वावसायादुक्तविध—सम्बन्धेन मनुष्यार्थत्वम्। सम्भवति हि प्राचीनावीतस्यापि पितृदेवत्यप्राकरणिकप्रोक्षणी-शेषनिनयनाङ्गत्वात् पित्रुद्देश्यकप्राकरणिककर्माङ्गत्वम्। अतस्तत्समभिव्याहारादस्यापि तत्। एवं चाध्वर्यवसमाख्याऽप्यनुगृहीता भवति। इतरथा तस्या गुणभूतकर्तृप्राप्तावेव नियामकत्वस्य वक्ष्यमाणत्वात् क्रतुयुक्तपुरुषधर्मत्वे तदनुपपत्तेः।

---

लोके' (पा. सू. २-३-६९) इति निषेधाच्चेति भावः। **षष्ठीश्रुत्येति**। श्रुतिपदं प्राचां मतेन, गौणश्रुत्यभिप्रायेण वा द्रष्टव्यम्। स्वमते मुख्यश्रुतेरभावेनास्य वाक्यरूपत्वात्। तृतीयं पक्षं द्वितीयपक्षास्वरसेनाह—**अबाधेनेति**। "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति विहित-मन्त्रपाठवदित्यर्थः। अत्र सर्वेष्वपि पक्षेषु निवीतस्य गळवेणिकापरिकरबन्धोभयरूपतया प्रसिद्धेः युद्धादन्यत्र गळवेणिकाया अप्राप्तेः तदानीमप्राप्तविधित्वम्; परिकरबन्धस्य तु पक्षेऽपि कदाचित्प्राप्तेः नियमकरणान्नियमविधित्वं च द्रष्टव्यम्। **अत्र पूर्वपक्षत्रयेति**। व्याख्यातमेतत्। **प्राचीनावीतवैषम्यापत्तेरिति**। प्राचीनावीतस्य निवीतोक्तन्यायेन शुद्धपितृधर्मत्वक्रतुयुक्तपितृ-धर्मत्वयो[योर] सम्भवात् तेनास्य वैषम्यापत्तेरित्यर्थः। **मनुष्यसम्प्रदानकेति**। अयमंशो-ऽग्रे व्याख्यास्यते। **उक्तविधेति**। अतश्च यथैव प्राचीनावीतस्य पितृसम्प्रदानकप्रकृत-कर्मोपकारकत्वसम्बन्धेन पित्रर्थत्वं वक्तव्यं तथैव मनुष्यसम्प्रदानकप्रकृतकर्मोपकारकत्वसम्बन्धेन मनुष्योद्देशेन विधानात् मनुष्यार्थत्वमित्यर्थः। सोऽयं चतुर्थः पक्षः प्राचीनावीते न सम्भवतीति **प्रकाशकारोक्तं** मया खण्डितम्। तत्खण्डनतात्पर्येण प्राचीनावीतेनास्य वैषम्यमुप-पादयति—**सम्भवति हीति**। प्राचीनावीतसमभिव्याहारेणैव निवीतस्य प्राकरणिकान्वाहार्य-दानधर्मत्वसिद्धेः तत्रेतरपक्षासम्भवेऽपि अयं पक्षः सर्वथा सम्भवत्येवेति दृष्टान्तसूचनव्याजेन **तत्समभिव्याहारादस्यापीत्यनेन** सूचितम्। **वक्ष्यमाणत्वादिति**। "संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् (पू. मी. ३-८-२) इत्यधिकरणे केशश्मश्रुवपनादीनां यजमानसंस्का-राणां समाख्यया अध्वर्युकर्तृकत्वमाशङ्क्य स्वगतयोग्यताधानरूपसंस्कारकरणे स्वस्यैव कर्तृत्व-सम्भवे परिक्रयेणान्योपादाने प्रयोजनाभावात् स्वकार्यं साधयितुं यजमानेन गुणत्वेनैवाध्वर्यादि-ऋत्विक्परिक्रयात् यत्रैव गुणत्वेन तस्य प्राप्तिः तत्रैव समाख्यया कर्तृत्वनियमः क्रियत इति

न च भवन्मतेऽपि दानस्य याजमानत्वात् कथं समाख्योपपत्तिः, निवीतस्यारादुपकार-

---

नाध्वर्योः गुणत्वेन संस्कारेषु प्राप्तिरित्यस्यार्थस्य एतदध्यायाष्टमपादे वक्ष्यमाणत्वात्, इह गुण-भूतत्वेनाध्वर्योः प्राप्त्यभावात् नाध्वर्यवसमाख्यानुग्रहः सम्भवतीत्यर्थः। न चान्वाहार्यदानरूप-कर्मधर्मत्वपक्षेऽपि इहैवाष्टमपादे स्वामिकर्मपरिक्रयः कर्मणस्तदर्थत्वादित्यधिकरणे (पू. मी. ३-८-१) दानस्य यजमानकर्तृकत्वोक्तेः तस्मिन् दाने कर्तव्ये निवीते यजमानकर्तृकत्वस्यैवापत्तेः अध्वर्यु-कर्तृकत्वाप्राप्तौ कथं समाख्योपपत्तिः सिद्धान्तेऽपि इत्याशङ्क्य परिहरति—**न च भवन्मतेऽपीति**। **यत्त्वत्र प्रकाशकृता** अन्वाहार्यदानार्थकत्वपक्षेपि उपवीतस्य लिङ्गात् कर्तृसंस्कारद्वारैव तदङ्ग-त्वेन याजमानत्वापत्तौ नाध्वर्यवसमाख्यानुग्रह इत्याशङ्क्य यजमानस्यैवोपवीततामध्वर्युः करिष्यति स्वाध्यायाध्येतृसंस्कारकमिवोपनयनं गुरुः इत्यदोष इति परिहृतम्; तत्र आशङ्काग्रन्थे तत्समा-धानग्रन्थे च कर्तृसंस्कारकत्वमुक्तमप्ययुक्तमिति सूचनाय **निवीतस्य आरादुपकारकत्वेनेत्युक्तम्**। तस्यायमर्थः ब्रह्मसूत्रवासोऽन्यतराश्रितनिवीतक्रियायाः प्रकरणसहकृतवाक्येन मनुष्यसम्बन्धिप्रकृत[1]-कर्मविशेषोद्देशेन विधानेपि विधेयनिवीतसामर्थ्यात् तत्कर्मकर्तृद्वारकत्वमात्रसिद्धेः कर्तृनिष्ठ-संस्कारजनकत्वे नैव किञ्चित्प्रमाणम्। अयमेव हि कर्मधर्मत्वान्वाहार्यदानादिरूपकर्मधर्मत्वा-पेक्षया शुद्धमनुष्यधर्मत्वक्रतुयुक्तमनुष्यधर्मत्वपक्षयोः विशेषः, यत्तयोः पक्षयोः कर्माङ्गत्वं तदङ्ग-कर्तृद्वारा, अनयोस्तु मनुष्यस्यैवोद्देश्यत्वात् क्रियाजन्यफलाश्रयत्वेन प्राधान्ये सति अवघातेन व्रीह्यादिष्विव निवीतेन तन्निष्ठादृष्टमेवोत्पद्यते, तददृष्टं क्रतुयुक्तधर्मत्वपक्षे क्रत्वपूर्वे उपयोगि शुद्धतद्धर्मत्वपक्षे तु स्वतन्त्रस्वर्गादिरूपफलजनने, इत्यन्यदेतत्। सर्वथापि तु कर्तुद्देशेन विधानाभावे तत्संस्कारकत्वमसम्भव्येव। यद्यपि वा कथञ्चित् तत्संस्कारकत्वं प्रमाणवद्भवेत् तदा इतरसंस्कारन्यायेन उद्देश्यभूतयजमानकर्तृकत्वस्यापत्तिर्दुर्निवारैव। अथ यजमानस्यैवोप-वीततामध्वर्युः करिष्यतीति प्रकारेण उभयानुग्रहोपपादनं तदा क्रतुयुक्तपुरुषधर्मत्वपक्षेऽपि अनेनैव प्रकारेण 'आध्वर्यव' समाख्यानुग्रहसम्भवात् तत्पक्षे समाख्यानुपपत्तिदूषणं स्वयमेवोपपादितं सर्वथा सङ्गतमेव। अतः कर्तृद्वारकत्वेपि कर्त्रा कृतधारणेनैव निवीतादौ कृते तत्कर्मसिद्धि-रित्येवमारादुपकारकमेव। तथाच 'स्वाध्यायाध्येतृसंस्कारकमिवोपनयनं' इत्युपनयनवैलक्षण्यतया दृष्टान्तानुपपत्तिः। अतो दशमचतुर्थपादाद्याधिकरणभाष्ये श्येने ऋत्विग्गतनिवीतस्य उपवीतस्य चादृष्टार्थत्वाभिधानात् तेनैव न्यायेनेहापि निवीतस्यारादुपकारकत्वेन कर्तृसंस्कारकत्वाभावात् यजमानकर्तृत्वनियमाप्राप्तेः अध्वर्य्वादीनामङ्गत्वात् आनर्थक्यतदङ्गन्यायसहकृततत्सामर्थ्यात्

---

1. A. प्राकृत

**कत्वेनाध्वर्युकर्तृकेनापि तेन दानोपकारसिद्धेः ।** पाकाद्यर्थत्वमेव **वाऽङ्गीक्रियतामिति न दोषः । अतस्सर्वप्रमाणाबाधात्प्राकरणिकमनुष्योद्देश्यककर्माङ्गमित्येव सिद्धान्तः ।**

---

अङ्गभूतयोग्यमनुष्यद्वारलाभे यजमानसाधारण्येन अङ्गत्वाविशेषेण सर्वैरपि यजमानपञ्चमैः निवीतकरणे बाधकाभावात् अध्वर्युणापि तत्करणेन समाख्योपपत्तिः । अथवा प्रतिग्रहीतृगतोदङ्मुखत्वमिव स्वशरीरावच्छेदेनैव अध्वर्युकर्तृकमेव निवीतं दाने उपकारकं भविष्यत्येवेति तदुपपत्तिः । यदितु कर्तृद्वारैव तदङ्गत्वमित्याग्रहः तदा यजमानस्यैव निवीततामध्वर्युः करिष्यतीति न काचिदनुपपत्तिरिति । अत्र च प्रकाशकाराणां 'उपवीततां, उपवीतं' इति यल्लिखनं तदनवधानकृतम् । निवीतस्यैव विचारविषयत्वात्, लेखकप्रमादाद्वा द्रष्टव्यम् ।

**अध्वर्युकर्तृकेनापीति ।** प्रकारत्रयेण व्याख्यातमेतत् । एवमन्वाहार्यदानार्थकत्वपक्षे आध्वर्यवसमाख्यानुग्रहसम्भवेऽपि न्यायसुधाकृता अन्वाहार्यदानधर्मत्वपक्षे अध्वर्युकर्तृकत्वानुपपत्तिपरिहाराय 'अन्वाहार्यदानादि प्रतीयत' इति वार्तिकस्य 'अन्वाहार्यदाने यत् स्वसिद्ध्यर्थमादीयते गृह्यते तदन्वाहार्यपाकादि तत्सर्वं अन्वाहार्यदानादिशब्देनोच्यत' इति व्याख्यानं कृत्वा अन्वाहार्यपाकाद्यङ्गत्वमुक्तम्, तत् पाकस्य पाच्यप्रधानत्वेन मनुष्यप्रधानत्वायोगादुपेक्ष्यमित्येवं **प्रकाशकारै**र्दूषितमपि तद्दूषणमयुक्तमित्यभिप्रेत्य प्रयोजनाभावेऽपि तदुक्तपाकार्थत्वम् । तथा कर्तृसंस्कारकत्वाग्रहे यस्य संस्कारः स संस्कार्यकर्तृक एव स्यादित्यतः पाकार्थत्वाङ्गीकारं विना न तत्संस्कारकत्वनिर्वाह इति सूचयन्निव पक्षान्तरेण दर्शयति—**पाकाद्यर्थत्वमेव वेति ।** अयं भावः । न ह्यत्र मनुष्याणां शाब्दमेव प्राधान्यं विवक्षित्वा मनुष्यप्रधानकर्मणः उद्देश्यत्वं सर्वत्रापि मीमांसकमते पित्रादिदेवतानां गुणत्वेनैव कर्मण्यन्वयेन शब्दतः प्राधान्याभावात् पित्रर्थाध्यासनादीनामासाद्यमानसंस्कारार्थत्वेन पितृप्रधानकत्वाभावेन तत्र प्राचीनावीतप्राप्त्यनापत्तेश्च । अतः सर्वत्र पितृमनुष्याद्युद्देश्यकर्मण एवोद्देश्यत्वं वक्तव्यम् । तच्च तदुद्देश्यककर्मप्रयोगान्तःपात्यङ्गप्रधानसाधारणं साक्षात्परंपरानुवृत्तं ग्राह्यमिति दक्षिणाग्नौ क्रियमाणस्य अध्वर्युकर्तृकान्वाहार्यपाकस्य अन्वाहार्योदनकरणकदानसिद्धिद्वारा ऋत्विगुद्देश्यकत्वमिति न बाधकम् । इतरथा पाच्यस्वरूपेऽप्यानर्थक्यापत्त्या तस्यापि प्राधान्यासम्भवात् । अतः तस्यापि ऋत्विगानमनार्थत्वेन तदुद्देश्यकत्वात् अध्वर्युणा पाके कर्तव्ये निवीतानुष्ठानं कर्तव्यमितिन्यायसुधाकृदुक्तं निर्दुष्टमेवेति अङ्गीक्रियतामित्यनेन सूचितम् । अत एव पूर्वतनफक्किकायां मनुष्यसम्प्रदानकेत्यत्र प्रतिग्रहीतृत्वपर्यन्तस्य मुख्यसम्प्रदानत्वस्यासम्भवात्, तद्घटकीभूतोद्देश्यत्व-

यत्तु मूले पक्षान्तरं सिद्धान्तत्वेनोपन्यस्तं तथा हि—वाक्यादयं शुद्धमनुष्यप्रधानकातिथ्यादिकर्माङ्गतया विधिः। न च तदुपस्थापकाभावः मनुष्यपदस्य लक्षणया सनकादिमनुष्यपरत्वेन तत्प्रधानकस्य हन्तकारातिथ्यादेरुपस्थितिसम्भवात्। अत एव न फलकल्पनाऽपीति तत् वाक्याबाधस्यास्मन्मतेऽप्युपपादितत्वात्, सनकादिपरत्वस्य तेन चातिथ्याद्युपस्थितेरव्यभिचरितत्वाभावेन वक्तुमशक्यत्वात्, प्रकरणसमाख्ययोर्बाधे प्रमाणाभावात् कृत्वा चिन्तात्वेन च सिद्धान्तनियमस्यानावश्यकत्वात् अस्य पक्षस्य वार्तिककृता क्लिष्टत्वाभिधानाच्चोपेक्षितम्। अतः प्राकरणिकमनुष्यप्रधानककर्माङ्गत्वमेव सिद्धान्तः॥

---

मात्रमेव विवक्षितं द्रष्टव्यमिति। वाक्यादयमिति। 'प्राचीनावीतं पितृणां' इति समभिव्याहाररूपाद्वाक्यादित्यर्थः। अत एवेति।

अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः।
मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः॥

इत्यादियोगीश्वरादिवचनैः हन्तकारातिथ्यादिकर्मणः फलवत्त्वादेवेत्यर्थः। बाधे प्रमाणाभावादिति। एतेन 'प्राचीनावीतं पितृणामुपवीतं देवानां' इति तुल्यवत्कीर्तनेन मनुष्यशब्दस्य पितृदेवतुल्यसनकादिमनुष्यवाचित्वावगतेः दर्शपूर्णमासयोश्च पितृप्रधानवत् देवतुल्यमनुष्यप्रधानस्यापि कर्मणो भावात्, प्रकरणसमाख्यानुग्रहानुपपत्तेः प्रकरणानपेक्ष एवायं आतिथ्ये निवीतविधिरिति न्यायसुधोक्तमपास्तम्। पूर्वोक्तरीत्या पितृप्रधानस्य कर्मणोऽपि प्रकृतावुपपादितत्वात्। मनुष्यप्रधानस्यापि दानपाकादेः प्रकृतावुपपन्नत्वात्। मनुष्यपदस्य देवतुल्यसनकादिपरत्वाङ्गीकारे 'अविकृतमातिथ्यम्' इत्यापस्तम्बादिभिर्विहिते अतिथित्वेन प्राप्तमनुष्योद्देश्यकगवालम्भादिरूपातिथ्ये तदनापत्तेश्च; स्वयमेव 'आतिथ्ये निवेक्ष्यत' इति भाष्यव्याख्याने आतिथ्ये निवेशोक्तेः; पूर्वं सनकादिपरत्वाङ्गीकारस्यायुक्तत्वाच्च। मनुष्याणामिति तुल्यवत् कीर्तनात् मनुष्यरूपरामकृष्णादिदेवप्रधानकर्मणि, सपिण्डीकरणादिक्रियाजन्यप्राप्तपितृभावमनुष्यरूपपितृप्रधानकर्मणि च उपवीतप्राचीनावीतयोः विधानं नान्यत्रेत्येवं वैपरीत्यस्यापि वक्तुं शक्यत्वेन तदन्यदेवपितृप्रधानकर्मणोः तदप्राप्त्यापत्तेः; तुल्यवत्कीर्तनस्यानियामकत्वाच्च। अत एव पार्थसारथिना सनकादिपरत्वमनङ्गीकृत्यैव यन्मनुष्यप्रधानं आतिथ्यादिकर्म तद्धर्म इत्युक्तम्। यदा तु मनुष्ययज्ञे अतिथिभोजनादौ वा सनकादीनामेवोद्देश्यत्वं; अत एव कालतत्त्वविवेचनकारैः आन्हिककृतौ तादृशस्थले 'सनकादिभ्यो हन्त न मम' इति त्यागप्रयोगो लिखित इत्युच्येत तन्निरासार्थं सनकादिपरत्वस्येत्याद्युक्तम्। तथा चाविशेषश्रुतस्य मनुष्यपदस्य न प्रकरणादिबाधफलः सङ्कोचो युक्त इत्यर्थः। अनावश्यकत्वादिति। एवं स्थिते न्यायसुधायाः स्वारस्येन प्रकाश-

कृता 'उपव्ययत' इत्यनेनैव दर्शपूर्णमासयोरुपवीतविधिसिद्धेः उपवीतं देवानामित्यपि देवप्रधान-कर्ममात्रे तत्प्राप्त्यै विधिः। एवञ्च पितृदैवत्ये प्राचीनावीतस्मृतेः मूलान्तरादर्शनात् 'प्राचीनावीतं पितृणां' इतिवत् देवदैवत्ये उपवीतस्मृतेरपि 'उपवीतं देवानां' इत्येव मूलम्। तद्वच्च सनकादिऋषिरूपमनुष्यदैवत्ये तर्पणहन्तकारादौ निवीतस्मृतेः मूलान्तराभावात् 'निवीतं मनुष्याणां' इति मूलम्। अतः स्मृतेः मूलान्तरकल्पनाद्वरं मनुष्यपदस्य सामान्यपरस्य विशेषपरतेति प्रकरणबाधो युक्त इत्युक्तम्। **तदप्यपास्तम्**। मूलान्तरकल्पनाऽभावकृतलाघवानुरोधमात्रेणास्य प्रकरणबाधेनापि सामान्यविधित्वाङ्गीकारे कथमपि अर्थवादत्वसिद्धान्तासम्भवात्। प्रकरणाबाधेनार्थवादत्वाङ्गीकारेऽपि तन्मूलत्वोपपत्तौ तस्य विधित्वाङ्गीकारेणैव तन्मूलकत्वस्थापनस्यानावश्यकत्वात्। न चार्थवादत्वपक्षे तन्मूलत्वसम्भवेपि भवदभिमतविधित्वेन सिद्धान्तकरणे तन्मूलान्तरकल्पनापत्तिगौरवमिति तदपेक्षया ईदृशविधित्वाङ्गीकरणमेव युक्तमिति वाच्यम्। मनुष्यपदस्य लक्षणाऽभावकृतलाघवस्य प्रकरणसमाख्यानुग्रहस्य च प्रथमतस्सम्भवेऽनुपस्थित-तत्स्मृतिमूलान्तरकल्पनाया औत्तरकालिकत्वेन गुरुभूताया अपि कल्पने दोषाभावात्। अतः सनकादिपरत्वे मानाभावात् क्त्वाचिन्ताविचारे यस्यैव पक्षस्य सर्वदोषपरिहारानुकूलत्वं तस्यैव सिद्धान्तपक्षत्वेनाङ्गीकार उचितः। न तु भवदुपपादिततत्वमात्रेण दुष्टस्यैव तदङ्गीकारनियम इति तन्नियमस्यानावश्यकत्वमिति भावः।

**सिद्धान्त इति। ममतु प्रतिभाति।** मनुष्यपदस्य तत्सम्प्रदानककर्मपरत्वाङ्गीकारे कर्मणउद्देश्यत्वेन तत्रैव बहुत्वान्वयप्रतीतेः तस्य चोद्देश्यविशेषणत्वेनाविवक्षया साहित्यानपेक्षायामपि कर्मगतबहुत्वप्राप्तेः बहुवचनमुभयत्ववदनुवाद इत्यवश्यं वक्तव्यम्। उद्देश्यविशेषणाविवक्षास्थलेऽपि यथा तथा प्राप्त्यनुवादत्वस्य विशेषणे सर्वैरप्यङ्गीकारात्। अत एवोपनयनवाक्येऽप्राप्तत्वेन अष्टवर्षत्वानुवादायोगात् अर्धमन्तर्वेदीतिवत् विशिष्टलक्षणामप्यङ्गीकृत्य विशिष्टस्योद्देश्यत्वात् नाष्टवर्षाविवक्षेत्युक्तं ग्रहैकत्वाधिकरणे **कौस्तुभे**। अत्र तु अनेकतत्तत्प्रधानकर्मणामुद्देश्यत्वेन अनुवादसम्भवात न तद्विशिष्टलक्षणापीति बहुवचनमनुवाद एव। न चायमनुवादः प्रकृतौ देवकर्मबहुत्वेन देवानामिति बहुवचनस्येव पितृमनुष्यप्रधानप्राकरणिककर्मबहुत्वेन सम्भवति। प्रकृतौ प्रोक्षणीशेषनिनयनान्वाहार्यदानपाकव्यतिरेकेण अध्वर्युकर्तृकपितृमनुष्यप्रधानकर्मान्तरानुपलब्धेः। अतो बहुवचनश्रुत्या प्रकरणबाधेन सर्वपितृदेवप्रधानकर्मणोरविशेषेण प्राचीनावीतोपवीतयोरिव इहापि मनुष्यमात्रप्रधानसर्वकर्मणि कर्तव्यमिति पदाध्याहारेण निवीतस्य विधिरेव युक्तः; न तु सनकादिमनुष्यप्रधानकर्मण्येव, सर्वत्रापि सङ्कोचे मानाभावात्। एवञ्च तत्तत्स्मृतीनां मूलान्तरकल्पनमपि नापद्यते वार्तिककारीयमस्य क्लिष्टत्वाभिधानं प्रौढिमात्रम्। अस्मिंश्च पक्षे 'उपवीतं

**वस्तुतस्तु नायं विधिः वाक्यभेदापत्तेः** अपि तु उपवीतविधेरेव **शेषः प्राचीनावीतवत्। यथा च निवीतप्राचीनावीते तत्तत्प्रधानकर्माङ्गत्वसम्बन्धेन मनुष्यपितृसम्बन्धिनी उचिते तथोपवीतमपि देवसम्बन्धितया; अतस्तदेव दर्शपूर्णमासयोः प्रशस्तमिति स्तुतिः। अथ वा ते तत्र तत्र** वक्ष्यमाणवचनात्प्रशस्ते, **अत्र तु देवत्वादुपवीतमेवेति स्तुतिः ॥ १ ॥**

---

## (२)—उपवीतं लिङ्गदर्शनात्सर्वधर्मस्स्यात् ॥ १० ॥ न वा प्रकरणात्तस्य दर्शनम् ॥ ११ ॥

तदिदमुपवीतं **सर्वकर्माङ्गम्।** मृताग्निहोत्रे **"प्राचीनावीती दोहयेत् यज्ञोपवीति हि देवेभ्यो दोहयति"** इति **जीवदवस्थायां यज्ञोपवीतानुवादलिङ्गस्य** प्राप्तयभावेन **सर्वार्थ-**

---

देवानां' इत्यनेनैव दर्शपूर्णमासयोरप्युपवीतप्राप्तेः 'उपव्ययत' इत्यस्यैव प्राचीनावीतोपवीतविध्यर्थ-वादत्वम्।

अथवा पितृमनुष्यप्रधानकप्राकरणिककर्मण्यपि प्राचीनावीतनिवीतयोर्बाधाय पुनर्विधायकत्वं वेति तु वादान्तरमिति। उपवीतविधेरिति। 'देवलक्ष्ममेव तत्कुरुते, इत्यर्थवादानुरोधादाव-श्यकस्येति शेषः। **वक्ष्यमाणवचनादिति।** प्राचीनावीती दोहयेदित्यादिवक्ष्यमाणवचनादित्यर्थः।

---

### उपवीतं लिङ्गदर्शनात्सर्वधर्मः स्यात्।

इतः प्रभृति षट्सूत्रीं भाष्यकारस्तत्याज। तत्र वीजं केचिद्वर्णयन्ति 'दिग्विभागश्च तद्वत्' 'परुषि दितपूर्णघृतविदग्धं च तद्वत्' इति वक्ष्यमाणसूत्रयोः तच्छब्देन निवीतं मनुष्याणा-मितिवदर्थकेन अव्यवधाने सति निवीतपरामर्शोपपत्तेः अन्तरा विचारान्तरकरणे तदनुपपत्तेस्त्याग इति। न्यायसुधोक्तं तु त्यागबीजं विस्तरभयान्न लिख्यते। वार्तिककृता तु 'पानव्यापच्च तद्वत्' इत्यादौ तच्छब्दस्य 'अचोदितं च कर्मभेदात्' इत्यधिकरणान्तरेण व्यवहितस्य 'दोषा-त्त्विष्टिर्लौकिके स्यात्' इत्यक्षप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षसूत्रगतलौकिकपदपरामर्शित्वमादायापि अधिकरणविचारदर्शनेन तत्त्यागस्यायुक्तत्वाम् जैमिनीयत्वेन व्याख्येयानीति व्याख्यातानि। तदभि-प्रायेण स्वयमपि व्याचष्टे—**तदिदमुपवीतमिति।** पूर्वाधिकरणे उपव्ययत इत्येतद्विधिस्तावकत्वं निवीतादिवाक्यानामुक्तम्। तेन च सिद्धमेव तस्य उपवीतविधायकत्वमिति तद्विहितोपवीतस्यैवाग्रे विचारोऽयं क्रियत इति नासङ्गतिरिति तदिदमिति पदाभ्यां सूचितम्। **मृतेति।** मृतस्य यजमानस्याग्निहोत्रम्, तत्रान्येन क्रियमाणतत्प्रयोगे श्रुतमित्यर्थः। **प्राप्त्यभावेनेति।** यदि

तागमकत्वात्। विप्रकृष्टत्वेन दर्शपूर्णमासस्थस्यानुवादानुपपत्तेश्च, वैकल्पिकैन्द्रमहेन्द्रदेवत्य-दार्शिकदोहने देवताबहुत्वाभावेन तदनुवादानुपपत्तेश्च। सर्वार्थत्वे तु कर्तृसंस्कारकस्योपवीतस्य बहुदेवत्याग्निहोत्रप्रयोगाङ्गत्वेन तद्दोहनेऽपि प्राप्तेरनुवादोपपत्तिरिति प्राप्ते—

सन्निकृष्टासम्भवे विप्रकृष्टानुवादस्यापि न्याय्यत्वात्प्रकृतिविकृत्यभिप्रायेण च साान्नाय्येऽपि देवताबहुत्वसत्त्वादनुवादोपपत्तेः प्रकरणाद्दर्शपूर्णमासाङ्गमेवोपवीतम्। वस्तुतस्तु—वक्ष्यमाणवचनानुसारादग्निहोत्रेऽपि यज्ञोपवीतसत्त्वेन तत्रत्यस्यैवायमनुवादः ॥ २ ॥

---

'उपव्ययत' इत्यनेन दर्शपूर्णमासाङ्गत्वेनैव प्रकरणादुपवीतं विधीयेत तदा अग्निहोत्रे जीवदवस्थायां दोहे प्राप्त्यभावेन 'यज्ञोपवीती हि' इति सिद्धवदनुवादानुपपत्तिरिति सर्ववैदिककर्माङ्गत्वमेव युक्तमित्यर्थः।

ननु 'सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात्' इत्यधिकरणे कर्तृद्वारा उपवीतस्य दर्शपूर्णमासाङ्गत्वस्य स्थापनात् कर्तुश्च प्रयोगाङ्गस्य साङ्गप्रधानाङ्गत्वेन साान्नाय्यहविर्दोहेऽपि प्राप्तेः तद्द्वारा दर्शपूर्णमासाङ्गत्वानपायादिदं लिङ्गं दर्शपूर्णमासस्थस्यैवानुवादकमिति तदङ्गत्वेऽप्युपपद्यत एवेत्यत आह—विप्रकृष्टत्वेनेति। सायमग्निप्रजापत्योः प्रातः सूर्यप्रजापत्योः द्वयोर्द्वयोर्देवतात्वेऽपि अग्निहोत्रप्रयोगे सर्वासामेव देवतानां समुच्चयात् बहुवचनोपपत्तिरित्यभिप्रेत्याह—**बहुदेवत्येति**। अत्र सिद्धान्ते साान्नाय्ये देवताबहुत्वाभावेन 'देवेभ्य' इति बहुवचनानुपपत्तिपरिहाराय **वार्तिककृता** अविवक्षितं बहुवचनमिति पक्षान्तरमुक्तम्, तत् दर्शदोहत्वेनैवानुवादत्वाभावात् अनुवादत्वेनैव च प्राप्तिकालवैषम्याविषयत्वात् किमित्यविवक्षा वक्तव्येत्यभिप्रेत्य विकृत्यभिप्रायं बहुवचनमिति तदुक्तं पक्षान्तरमाह—प्रकृतिविकृतीति। विकृतिः पयस्यादिः। अत एव यत्र प्राप्तिकालवैषम्यापत्तिः द्विरुक्तत्वं वा तत्र पाशमन्त्रगतबहुत्वस्य न विकृत्यभिप्रायेण गतिरित्येकत्वलक्षणयापि प्रकृतावेव निवेश इष्यत एव। इह तु अनुवादत्वात् प्रकृतिविकृत्यभिप्रायेण तदुपपत्तिर्युक्तेत्यर्थः। एवं वार्तिककारमतेन अधिकरणं व्याख्याय भाष्यकारकृतोपेक्षाकारणं सूचयन्निव अधिकरणविचारमाक्षिपति—वस्तुतस्त्विति। **वक्ष्यमाणेति**। उत्तराधिकरणवक्ष्यमाणस्मृतिकाठकवचनाभ्यामित्यर्थः। तथा च ब्रह्मसूत्रस्य वासोविन्यासस्य वा अग्निहोत्रे कर्मान्तरसाधारण्येनैव प्राप्तेः तत्रत्यस्यैव सम्भवत्येवानुवाद इति तद्बलेन दार्शपूर्णमासिकोपवीतस्यैव सर्वार्थत्वादिपूर्वपक्षोद्भावनादि सर्वं व्यर्थमेवेति भाष्यकृता सम्यगेवोपेक्षितमिति भावः।

---

## (३)—विधिर्वा स्यादपूर्वत्वात् ॥ १२ ॥

"उपव्ययते" इति विधिरनुवादो वेति चिन्तायां "नित्योदकी नित्ययज्ञोपवीती" इति गौतमस्मृत्या प्राप्तत्वादनुवादः। यदि तु अनेन पुरुषार्थतया प्राप्तिराशङ्क्येन तथाऽपि "यज्ञोपवीतिना कर्तव्यम्" इति स्मृत्यनुसारात्क्रत्वर्थत्वेनापि प्राप्तिरुद्भावनीया। यदि तूक्तवचनेनाङ्गत्वे तद्भ्रेषे स्मार्तप्रायश्चित्तापत्तेर्याजुश्रौतप्रायश्चित्तप्राप्त्यर्थं दर्शपूर्णमासयोस्त-

---

### विधिर्वा स्यादपूर्वत्वात्।

उपव्ययत इत्यस्य विधित्वे सति पूर्वतनाधिकरणद्वयसिद्धान्तो घटते; तदेव त्वयुक्तमित्याक्षेपेणेदमारभ्यते—**उपव्यय इति**। अत्र सिद्धान्तेनैवोपक्रमस्य सूत्रे दर्शनात् पूर्वपक्षस्य निरासार्थकवाशब्देन सूचनकरणात् सूत्रस्थविधिपक्षप्राथम्यानुरोधेन स्वयमपि विधिकोटिमेव पूर्वाधिकरणविचारसाधकतयाऽभ्यर्हितां प्रथमतोऽनुवदति—**विधिरिति**। अत्र **न्यायसुधाकृता** शिष्टाकोपाधिकरणभाष्यकारीयविचारखण्डनाय 'उपव्ययत इत्यस्य यज्ञोपवीतविधायकत्वेन तस्य श्रौतत्वमित्युपपादनपरवार्तिकस्वारस्यमनुरुद्ध्य स्मृतितस्तत्प्राप्तावपि अत्र याजुर्वैदिकप्रायश्चित्तप्राप्तये तस्य पुनर्विधानमित्येकं पक्षमुपपाद्य, परमार्थतस्तु यज्ञोपवीतस्य सूत्रविन्यासविशेषरूपत्वात् उपवीतस्य तु वासोविन्यासविशेषरूपत्वात् भेदः। अत एव यज्ञोपवीतेन चास्याविरोधात् समुच्चय इति टुप्टीकायां **वार्तिककृता** उक्तत्वात् 'सन्दिग्धे तु व्यवायाद्वाक्यभेदः स्यात्' इत्यधिकरणे "कर्तुश्च वासोविन्यासमात्रं गुणो भवत्युपवीतं नाम" इति भाष्यकृता उक्तत्वाच्च नानेन ब्रह्मसूत्रं विधीयते, किन्तु वासोविन्यास एव; "यज्ञोपवीत्येवाधीयीत" इत्यनारभ्यवाक्येन तस्य प्राप्तत्वेन तत्प्रायश्चित्तस्यापि प्राप्त्युपपत्तेश्च। **शिष्टाकोपाधिकरणे** वार्तिककृता 'यज्ञोपवीती' इत्यनेनैव ब्रह्मसूत्रस्य श्रौतत्वसिद्धौ अभ्युच्चयाय एतदुदाहृतमिति सिद्धान्तितम्।

**प्रकाशकारैस्तु** तादृशटुप्टीकावार्तिकस्य क्वचिदप्यनुपलम्भात् यज्ञोपवीत्युपवीतिशब्दार्थयोर्भेदे 'उपवीतं लिङ्गदर्शनात्' इति पूर्वाधिकरणे उपव्ययत इत्यस्य **"नित्योदकी नित्ययज्ञोपवीती"** इति स्मृतिप्राप्तानुवादोक्तिः सर्वधर्मत्वाय च दैवाग्निहोत्रे "यज्ञोपवीती हि देवेभ्यो दोहयति" इत्यनुवादस्य लिङ्गत्वोक्तिश्च पूर्वपक्षे विरुद्ध्येत। तथा सिद्धान्ते अनुवादस्य दर्शपूर्णमासमात्रविषयत्वोक्तिश्च विरुद्ध्येत। अतः उपवीतयज्ञोपवीतयोरभेदात् स्मृत्या प्राप्तमपि ब्रह्मसूत्रं प्रायश्चित्तविशेषलाभाय पुनर्विधीयते। काठकवाक्य एव तु 'अजिनं वासो वा' इति वाक्यशेषात् वासोविन्यासो विधीयते। एवं वाक्यशेषादर्शनेन

द्विधानमित्याशङ्क्येत ततो “यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा” इत्यादितैत्तिरीयक-श्रुत्या सर्वयज्ञार्थत्वेन यज्ञोपवीतविधानात्प्रायश्चित्तस्यापि प्राप्त्युपपत्तेः विधानानर्थक्यम्। यदि त्वेतेषां सर्वेषां वचनानां नवतन्तुकत्रिसूत्ररूपमुख्ययज्ञोपवीतविषयत्वाद्वासोविन्यासरूपगौणोपवीतस्यैवाप्राप्तस्य दर्शपूर्णमासाङ्गत्वेन विधिराशङ्क्येत

---

काठकवाक्यस्य ब्रह्मसूत्रविषयत्वं शिष्टाकोपाधिकरणवार्तिकोक्तं सन्दिग्धे तु व्यवायादित्यधिकरणे उपन्यस्यत इत्यस्य वासोविन्यासपरत्वं भाष्योक्तं चोपेक्ष्यमेवेत्युक्तम्। तत्र प्रकाशकारोक्त-तद्दूषणं परिहरन्नेव पूर्वपक्षोपपादनव्याजेन न्यायसुधाकृत्सिद्धान्तं समर्थयन्निव पूर्वपक्षं दर्शयति—ततो यज्ञोपवीत्येवेति। गौणोपवीतस्यैवेति। अयमर्थः यज्ञोपवीतोपवीतयोर्नास्ति भेदः, स्मृत्यादिषु उभयपदप्रयोगेण अन्यतरार्थग्रहणात्। “प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुपवीतिनः” इत्यादिश्रुतावपि तथा दर्शनाच्च। तथापि आगोपालाङ्गनं नवतन्तुक-त्रिसूत्ररूपब्रह्मसूत्र एव बहुधा तच्छब्दयोः प्रचुरप्रयोगात् तत्रैव शक्तिः, शूद्रादीनां मुख्य-यज्ञोपवीताभावात् वासोविन्यास एव तत्स्थानीय इति तत्र यज्ञोपवीतकार्यकर्तृत्वेन यज्ञोपवीतोप-वीतशब्दयोः गौणः प्रयोगः। अत एव यज्ञोपवीतमन्त्रे गौणमुख्यन्यायेन मुख्यमेव यज्ञोप-वीतशब्देनोच्यत इति न वासोविन्यासे तन्मन्त्रप्राप्तिः। प्रकृते च काठकवाक्येन मुख्यस्य प्राप्तेः पुनर्विधाने फलान्तराभावात् गौणस्यैव तस्य विधानात् दार्शपौर्णमासिकोपवीतयज्ञोपवीतयो-रस्त्येव भेद इत्येतत्तात्पर्यकमेव न्यायसुधाकृतो भेदवचनम्; न तु सर्वत्रैव तयोर्भेद इत्येत-दर्थम्। एवञ्चास्मिन्नधिकरणे यज्ञोपवीतशब्दस्य गौणमुख्यार्थसाधारण्यभ्रमेण प्राप्तयाऽनुवादत्वं शक्यत एव वक्तुं पूर्वपक्षे। सिद्धान्ते च मुख्ययज्ञोपवीतस्यैव तया स्मृत्या विधानात् तद-प्राप्तेः तद्विधानार्थं पुनर्विधानमिति युज्यत एवाधिकरणारम्भ इति न्यायसुधाकृद्वचनमपि नानु-पपन्नम्।

एतेन वाक्यार्थविचारात्मिकायां मीमांसायां पदार्थभ्रमेण पूर्वपक्षो न क्वापि कृत इति ‘सन्दिग्धे तु व्यवायात्’ इत्येतदधिकरणोपपादितमेतद्दूषणं प्रकाशकारोक्तमपास्तम्। मीमांसायां सर्वेष्वप्यधिकरणेषु वाक्यार्थभ्रमेणैव पूर्वपक्षारम्भात्। स्वर्गादिपदार्थस्य रथकारादिपदार्थस्य च भ्रमेणैव तत्र तत्र पूर्वपक्षारम्भाच्च। तथा उपवीतं लिङ्गदर्शनात्’ इत्यत्रापि ‘यज्ञोपवीती हि’ इत्यनुवादे न केवलं मुख्यं ब्रह्मसूत्रं गृह्यते किन्तु ‘प्राचीनावीतिना पित्र्याणि’ ‘प्राचीनावीतिना प्रसव्यम्’ इत्यापस्तम्बीयसूत्रद्वयेन पित्र्यकर्मसु सर्वत्रोपवीतस्य प्राचीनावीतत्व-विधानस्य कपर्दिसुदर्शनस्वामिभिः प्रदर्शनात् तस्यैव स्मार्तस्य वासोविन्यासस्य याजुर्वैदिकत्व-

सिद्ध्यर्थं अजिनवाक्येन विधाने सति वक्ष्यमाणविधया तत्रत्यप्राचीनावीतस्यानेनोपसंहारात् 'प्राचीनावीती दोहयेत्' इति पूर्ववाक्ये वासोविन्यास एव गृह्यत इति तत्साहचर्यात् वासोविन्यास परमेव यज्ञोपवीतवाक्यमिति वासोविन्यासस्य 'उपव्ययते' इति वाक्येन विहितस्य सर्वार्थत्वे उपपद्यत एव लिङ्गमिति **न्यायसुधाग्रन्थस्य** तात्पर्यम् ; न तु प्राचीनावीतशब्दस्य वासोविन्यास-विशेषवाचित्वे, तत्र तद्वाचित्वस्य तेनानुक्तत्वात् । **एतेन** एतन्न्यायसुधाकृदुक्तोपपत्तिदूषणं प्राचीनावीतशब्दस्यापि वासोविन्यासवाचित्वे सर्वत्र तद्विधौ 'प्राचीनावीती दोहयेत्' इत्यादौ ब्रह्मसूत्रस्य इष्टो विन्यासविधिर्न सिद्ध्येदिति तदधिकरण एव **प्रकाशकारोक्तमपास्तम्** । स्मार्तब्रह्मसूत्रवाससोः प्राचीनावीतत्वानुष्ठानस्य तस्यापीष्टत्वात् । प्रत्युत भवन्मत एव तदसिद्धेर्वक्ष्यमाणत्वाच्च । काठकवाक्ये तु तादृशसाहचर्यरूपज्ञापकाभावे गौणार्थस्य ग्रहणे मानाभावात् मुख्यस्यैव प्राप्तिः न गौणस्येति वैषम्यात् दर्शपूर्णमासस्थेन वाक्येन गौणमुपवीतं वासोविन्यासरूपमेव विधीयते ।

अत एव 'विधिर्वा स्यादपूर्वत्वात्' इत्यत्र सिद्धान्तसूत्रस्थापूर्वपदव्याख्यायां 'अन्यश्चायमर्थः क्रतुधर्मो विधीयते' इति अपूर्वपदं वार्तिके प्रयुक्तम् । लौकिकमुख्यप्रसिद्ध्यपेक्षया अपूर्वं उप-वीतत्वेनाप्रसिद्धं यल्लोके तद्विधीयते इत्यर्थसूचनात् ब्रह्मसूत्रापेक्षया अस्य भिन्नत्वं दर्शयति । अनेनैवाभिप्रायेण दशमचतुर्थपादाद्याधिकरणे श्येने "निवीता ऋत्विजः प्रचरन्ति" इत्युदाहृत्य तद्विहितेन निवीतेन 'निवीतं मनुष्याणां' इत्यानुपूर्व्या दर्शपूर्णमासयोर्विधीयमानमुपवीतं अति-देशप्राप्तं बाध्यते वा नवेति सन्देहे बाधमाशङ्क्य उपवीतमदृष्टार्थम्, कथं तस्य कार्ये निवीतं वर्तते इति अदृष्टार्थत्वात्समुच्चय इति **भाष्यकृता** सिद्धान्तितम् ।

**वार्तिककृता** तु श्येनस्य सोमयागविकृतित्वेन दर्शपूर्णमासविकारत्वाभावे तदतिदेशप्राप्तो-पवीतस्यैवाभावात्, तदङ्गभूतदीक्षणीयादिषु उपवीतप्राप्तावपि श्येनप्रधान एव निवीतनिवेशसम्भवेन आनर्थक्याभावे आनर्थक्यतदङ्गन्यायाः (पू.मी. ३-१-९) नवतारेण तेन न्यायेन दीक्षणीयाद्य-ङ्गेषु निवीताप्राप्तेः निवीतस्य प्रधानमात्रविषयत्वं उपवीतस्यातिदेशप्राप्तस्याङ्गविषयत्वमिति भिन्नविषय-त्वान्न बाधाभ्युच्चयचिन्तावतार इति भाष्योदाहरणं खण्डितम् । उभयथापि लोकव्यवहारानु-गुणरूढ्या ब्रह्मसूत्रात्मकयज्ञोपवीतधारणाश्रितप्रकारविशेषस्य निवीतस्य प्रकृतिप्राप्तोपवीतस्य भेदे सत्येव युज्यतेऽयं विचारः । अन्यथा ब्रह्मसूत्रस्यैव प्रकृतौ विधाने तस्यैव निवीतत्वात् प्रकृतिप्राप्तोपवीतसमुच्चयानुपपत्तेः । **वार्तिककारस्यापि** अनयोरेकविषयत्वं स्याद्यदि तदा बाधा-भ्युच्चयौ सम्भवेतां इति तात्पर्यावगत्या तयोर्भेदस्येष्टत्वाच्च ।

**वस्तुतस्तु** वार्तिककारोक्तमस्यानुदाहरणत्वमयुक्तम्; नहि दीक्षणीयादिषु आनर्थक्य-तदङ्गन्यायेन निवीतप्राप्तिः भाष्यकृत इष्टा। तथात्वे प्रधाने श्येने तदप्राप्तेरेवापत्तेः। किन्तु प्रकृतावुपवीतं यथैव सामर्थ्यात् कर्तृद्वारकमिति कर्तुः प्रयोगाङ्गत्वात् साङ्गप्रधानाङ्गमिति सर्वैः कर्तृभिः सर्वादौ कर्तव्यम्, एवं श्येने विधीयमानं निवीतत्वं कर्तृद्वारा साङ्गप्रधानाङ्गमिति हिरण्यमालित्वलोहितोष्णीषत्वादिवत् सर्वादौ क्रियमाणं दीक्षणीयादिषु अतिदेशप्राप्तोपवीतेन भवत्येकविषयमिति तच्चिन्ता युक्तैव। किञ्च उपवीतस्य यजमानसाधारण्येन कर्तृत्वांशे निवेशात् साङ्गे प्रधाने निवेशसम्भवेऽपि इह ऋत्विग्द्वारा निवीतस्याङ्गत्वात् प्रधाने यजमानकर्तृकत्वेन ऋत्विक्कर्तृकत्वाभावेनानर्थक्येन तदनिवेशे सति अङ्गेष्वेवावतार इति कथं न तन्न्यायावतारः। अतो दीक्षणीयादिषु प्रधानेषु यजमानकर्तृकत्वेऽपि तदङ्गेषु यजमानातिरिक्तऋत्विक्कर्तव्येषु युक्त एव समुच्चयः। एतच्च भाष्याद्युक्तसमुच्चयाभिधानं सर्वकर्मसु यज्ञोपवीतवत् वासोधारणस्य "नित्यमुत्तरं वासः कार्यं" इति **आपस्तम्बस्मृत्या**ऽङ्गत्वेऽपि तत्समकक्षतया ब्रह्मसूत्रेण सह वासोविन्यसस्य निवीतत्वाभावाभिप्रायेण।

अथवा एकोपवीतबाधेनैवोपपत्तौ उभयबाधस्यान्याय्यत्वात् मुख्यब्रह्मसूत्रोपवीतबाधेन निवीतत्वस्य विधानात् श्येने सर्वदैव ब्रह्मसूत्रीयनिवीतस्य वासोविन्यासोपवीतस्य चास्त्येव समुच्चयः। तथापि अतिदेशप्राप्ततदीयोपवीतस्य निवीतेनाप्युपपद्यते समुच्चयः न तु बाध इत्यभिप्रायेण द्रष्टव्यम्।

**पूज्यपादैस्तु** उभयोपवीतधारणाश्रितप्रकारविशेषेण निवीतेन तदीयोपवीतयोः समुच्चयस्य स्वरूपेणैव विरोधेनासम्भवात् यज्ञोपवीतधारणस्य सदा धारणप्रयुक्तप्रत्यवायपरिहाररूपे कार्ये तत्तत्कर्मसाद्गुण्यफलकतत्तत्कर्मवैगुण्यपरिहाररूपे चैककार्य एवान्यत्र प्राचीनावीतनिवीतप्रकारयोर्विधानेन एककार्यत्वावगमात् भिन्नादृष्टार्थत्वाभावात्। इतरथा अदृष्टार्थत्वमात्रेण श्राद्धादावपि प्राचीनावीतोपवीतयोः समुच्चयापत्तेरयुक्तं भाष्योदाहरणमिति तत्रैव वक्ष्यते। **एतेनादृष्टार्थ**त्वात्समुच्चय इति सिद्धान्तसंभवेऽपि श्योनोपकार[रानुप]कारारूपभिन्नकार्यत्वेन पूर्वपक्षासंभवादयुक्तं भाष्योदाहरणमिति दाशमिक**प्रकाशकार**वचनमपास्तम्। सर्वथापि तु ब्रह्मसूत्राश्रितेन निवीतेन प्रकृतिप्राप्तवासोविन्यासरूपोपवीतस्य भेदात् प्रकृतौ ब्रह्मसूत्रोपवीतवासोविन्यासोपवीतयोरविरोधात् समुच्चय इव इहापि समुच्चयो भाष्यवार्तिककृत्सम्मतो दार्शपौर्णमासिकोपवीतयज्ञोपवीतयोर्भेदे सत्येवोपपद्यत इति **टुप्टीकायां** तयोर्भेदस्योक्तत्वादिति **न्यायसुधाकारो**क्तं युक्तमिति।

एतेन टुप्टीकाग्रन्थस्य तथाविधस्यानुपलम्भेन त्वदुक्तावनाश्वासादिति **प्रकाशकार-वचनमपास्तम्। न्यायसुधायामर्थ**तः स्वयं तात्पर्येण तादृशसन्दर्भलिखनेऽपि तथाविधटुप्टीकार्थे-

**ततो यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुषम्" इति वचनेन तस्यापि सर्वयज्ञार्थत्वेन प्राप्तत्वादनुवाद एवायं दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते—**

---

ऽसत्त्वाभावात्। नामधेयपादे "अत एव टुप्टीकायां केचिद्वानर्थक्येनोत्सूत्रं पूर्वपक्षं कुर्वन्ति। सूत्रेण च तत्परिहारं" इति तन्मतमुपन्यस्य "तन्न, आनर्थक्यस्य पूर्वमेव सर्ववेदविषयस्य निराकृतत्वात्" इति स्वयमेव दूषितमिति उद्भिदधिकरणारम्भे **न्यायसुधाकृ**ल्लिखनात्। अध्यायत्रयेऽपि[1] टुप्टीकावार्तिके सत्त्वोपलम्भात्। अस्मिन् देशे तदप्रचारेऽपि **आन्ध्रदेशे** तत्सत्तया एतदधिकरणे न्यायसुधाकृल्लिखितानुपूर्वीकताहशटुप्टीकाग्रन्थस्य स्वादर्शनमात्रेणानुपलम्भत्वोक्तेरयुक्तत्वाच्च। शिष्टाकोपाधिकरणवार्तिकानुपपत्तिस्तु अन्यतरवाक्यविषये उभयमतेऽपि स्पष्टैवेति नैव परिहर्तव्येति उपव्ययत इत्यस्याप्राप्तवासोविन्यासविधायकत्वं नानुपपन्नम्।

वस्तुतस्तु यथैव "यज्ञोपवीतिना कर्तव्यं" इति स्मृतिप्राप्तयज्ञोपवीतस्य विस्रंसने सति पुनः करणे वेदवेदिकरणक्रमो बाध्यते न वेति विचारः तथैव समानन्यायात् "नित्यमुत्तरं वासः कार्यं" इत्यापस्तम्बादिस्मृत्यन्तरेण उत्तरीयवाससोऽपि विधानात् तस्यापि विस्रंसने सति पुनःकरणे स विचारस्सम्भवत्येव भाष्यमते। ततश्च दर्शपूर्णमासयोरुभयोरपि श्रौतत्वोपपादनाय वाक्यद्वयोपन्यासो वार्तिककृता कृत इत्यन्यतरवाक्योपन्यासस्यायुक्तत्वं **न्यायसुधाप्रकाशकारोक्तं** हेयमेवेति दिक्।

तदेवं **प्रकाशकारोक्त**दूषणपरिहारे **गौणशब्देन** सूचिते सति न्यायसुधाकृदुपपादितं वासोविन्यासविधायकत्वं सिद्धान्ते निर्बाधमेवेति कथमनुवादत्वपूर्वपक्षसिद्धिरित्यत आह—**ततो यज्ञस्येति। अयं भावः** न्यायसुधाकृता काठकवाक्यस्य नवतन्तुकब्रह्मसूत्रविषयत्वमुपपादयता अवश्यं "अजिनं वा" इति भागस्य तच्छेषत्वं नास्तीत्येव वक्तव्यम्। इतरथा **प्रकाशकारोक्त**रीत्या तस्य वाक्यशेषबलात् वासोविन्यासविधायकत्वस्यैवापत्तेः।

यत्तु **प्रकाशकृता** अस्य वाक्यशेषत्वमङ्गीकृत्य तद्बलादेव पूर्ववाक्यस्य वासोविन्यासविधानपरत्वमुक्तम्। तत्र किं 'सन्दिग्धेषु वाक्यशेषात्', इति न्यायेनास्य निर्णायकत्वं उत 'अदितिमोदनेन' इतिवत् शक्तिनिर्णायकत्वं वा? आद्ये चरुशब्दवत् यज्ञोपवीतशब्दस्य लोकत एव निर्णीतार्थस्य सन्दिग्धत्वाभावात वासोमात्रसङ्कीर्तनेनैव "तेजो वै घृतं" इतिवत्

---

1. B. न्यायत्रयेऽपि

"यज्ञस्य प्रसृत्यै" **इत्यनेन फलाधिक्यजनकगुणाधिक्यद्वारकत्वेनास्य जयादिहोमवत्सर्वयज्ञाङ्गत्वावगत्याऽनावश्यकत्वप्रतीतेरावश्यकत्वार्थं दर्शपूर्णमासयोर्वासोविन्यासविध्युपपत्तिः।** अत एव शिष्टा अपि वासोविन्यासं विनाऽपि कर्मान्तराण्याचरन्ति।

---

तन्निर्णयोपपत्तौ "इति यज्ञोपवीतम्" इत्युक्तेर्वैयर्थ्याच्च। द्वितीये चरुशब्दस्येव लोकसिद्धशब्दार्थबाधेन स्मार्तवाक्येष्वपि यज्ञोपवीतशब्देन तस्यैव सर्वत्र ग्रहणापत्तेः, क्वचित्सूत्रविशेषे तच्छब्दप्रयोगस्यैव गौणत्वापत्त्या यज्ञोपवीतमन्त्रस्य वासोविन्यास एवापत्तेश्च। "एतदेव विपरीतम्" इति भागस्य पूर्वविध्यनपेक्षितत्वेन अनुपयुक्तकथने प्रयोजनाभावाच्च। तथात्वेऽपि वा 'प्राचीनावीती, दोहयेत्" इत्यादिषु वासोविन्यासस्यैव प्राचीनावीतपदेन ग्रहणापत्तेश्च। यज्ञोपवीतस्य श्रौतत्वप्रतिपादनपरशिष्टाकोपाधिकरणशास्त्रदीपिकाव्याख्याने स्वयमेव "उपव्ययत" इत्यस्य वासोविन्यासविधायकत्वेऽपि काठकवाक्येन ब्रह्मसूत्रस्य श्रौतत्वमभिप्रेतमित्युक्तेः तेन इह पूर्वापरविरोधाच्च। अतः "प्रसृतेन वै" इत्यर्थवादपूर्वकं 'यज्ञोपवीत्येवाधीयीत' इति वाक्यभागेन वाशब्दसूचितसर्वकर्मलक्षणया सर्वविहितकर्मोद्देशेन प्रसिद्धस्य निस्सन्दिग्धस्यैव सूत्रविशेषस्य श्रौतत्वार्थं विधानं क्रियते। तत्र पूर्वार्थवादे उक्तापि यज्ञप्रसृतिः 'अङ्गेषु फलश्रुतिरर्थवाद" इतिन्यायात् अर्थवादमात्रम्; न तु फलपरत्वम्, आकाङ्क्षाऽभावात्। यज्ञस्य प्रसृत्या इत्यारभ्य तु वासोविन्यासरूपं यज्ञोपवीतशब्दपरिभाषितं गौणमेव तत् विधीयते। तस्यैवाग्रे प्राचीनावीतत्वादि च तत्परिभाषाकरणप्रयोजनञ्च ब्रह्मसूत्रवत् तत्तत्कर्माङ्गत्वलाभः। यज्ञस्य प्रसृत्या इत्यर्थवादेन कर्मजन्यफलाधिक्यबोधनद्वाराऽनावश्यकत्वबोधनं क्रियते। एवञ्च यज्ञोपवीतशब्दस्य मुख्यार्थबाधः अक्लृप्तशक्त्यन्तरकल्पनं वाक्यशेषत्वेनाप्रयोजकत्वञ्च नापद्यते। काठकवाक्यस्य ब्रह्मसूत्रविषयत्वे सकलग्रन्थस्वारस्यञ्च लभ्यते। अत एतद्वाक्यशेषबलेन काठकवाक्यस्य वासोविन्यासपरत्वे मानाभावात् यज्ञस्य प्रसृत्या इति भागस्य स्वतन्त्रवासोविन्यासरूपगौणयज्ञोपवीतविधायकत्वमेव न्यायसुधाकृतोऽभिप्रेतम्। ततश्च तस्मादेव वासोविन्यासस्यापि प्राप्तत्वात् अनुवाद एवायमिति सिद्धः पूर्वपक्ष इति।

एवं पूर्वपक्षमुपपाद्य वासोविन्यासस्यैव विधिरिति तदीयमतसिद्ध्यनुकूलमेव सिद्धान्तमुपपादयति—**यज्ञस्य प्रसृत्या इति।** **अत एवेति।** अनावश्यकत्वादेवेत्यर्थः। **कर्मान्तराणीति।** दर्शपूर्णमासातिरिक्तानि सन्ध्यादीनीत्यर्थः। यद्यपि "तृतीयमुत्तरीयार्थे" इति स्मृत्या वासोविन्यासस्य स्थाने विहितसूत्रधारणेनैव वाससोऽभावे कर्मान्तराण्याचरन्ति शिष्टा इति वासोविन्यासस्यावश्यकत्वम्, तथापि तस्य तृतीयसूत्रस्य वासः कार्ये यज्ञप्रसृतिरूपे स्थानापत्त्या

यद्यपि च 'यज्ञस्य' इति वाक्यं "यज्ञोपवीत्येव' इत्यस्य वाक्यस्य शेषः सन्निधानादिष्येत, तथाऽपि समस्तेन तेन वासोविन्यास एव फलाधिक्यार्थं विधीयत इति न दोषः। मुख्य-ब्रह्मसूत्ररूपयज्ञोपवीतं तु तदा स्मृत्यैव सर्वयज्ञार्थत्वेन विधीयते। एवं च श्रौतप्रायश्चित्त-

---

विधानात् तस्यैव फलस्यानियतकामनाविषयत्वात् तदर्थं सूत्रधारणस्यापि अनावश्यकत्वमेव प्राप्नो-तीति आवश्यकत्वार्थमुपपद्यत एव तद्विधिरिति भावः। अङ्गीकृत्यापि 'यज्ञस्य प्रसृत्या' इत्यस्य वाक्यशेषत्वं वासोविन्यासविधिमेव द्रढयति—**यद्यपि। न दोष इति**। तथाप्यावश्य-कत्वार्थमनेन तद्विधानमिति न दोष इत्यर्थः। अस्मिन् पक्षे काठकवाक्यस्य फलाधिक्यार्थमपि वासोविन्यासस्यैव विधानात् ब्रह्मसूत्रविधायकत्वाभावे स्मृत्यैव तद्विधीयते चेत् तदा प्रकाशका-रोक्तमपि युक्तमेवेत्यभिप्रेत्याह—**एवञ्चेति**। एवं स्वयं तत्तन्मते स्थित्वा इतरमतास्वरस-युक्तिप्रदर्शनेन मतद्वयमप्युपपाद्यानयोः कतरद्युक्तमित्यपेक्षया स्वाभिप्रेतं पक्षमाह—**निवीतादीति**। दार्शपूर्णमासिकानां 'निवीतं मनुष्याणां' इत्यादिवाक्यानां समभिव्याहारदर्शनेन सादृश्यात् काठक-वाक्यशेषसमभिव्याहारोपस्थितौ सत्यां ब्रह्मसूत्रापेक्षया वासोविन्यासस्यैव झटित्युपस्थितस्य विधानं युक्तम्; न ब्रह्मसूत्रस्यैवेत्यर्थः तत्रापि 'यज्ञस्य प्रसृत्यै' इत्यस्य फलपरत्वे सति आवश्यकत्वेन नियमः। यदि तु अस्मिन् पक्षे निवीतादिवाक्यकल्प्यविधिभिः तत्तत्कर्माङ्गत्वावगतेः तस्यार्थ-वादत्वमेव न फलपरत्वम्' अत एव गृहस्थपुरस्कारेण 'नित्यमुत्तरं वासः कार्यम्, अपि वा सूत्रमुपवीतार्थे" इत्यापस्तम्बस्मृत्या वासोविन्यासस्य तदभावे सूत्रस्य वा सर्वदा धारणमुक्तम्।

स्मृत्यन्तरेऽपि—"यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते॥

इति यज्ञोपवीतद्वयस्य श्रौतस्मार्तकर्माङ्गत्वस्यैव वस्त्रस्य तत्स्थानीयसूत्रस्य वा तदङ्गत्वं स्पष्टमेवोच्यते। तथा एकवस्त्रस्य कर्म विगुणम्, द्विवस्त्रस्य तत्सगुणम्, इत्यर्थप्रतिपादके

होमे देवार्चनाद्यासु क्रियास्वाचमने तथा।
नैकवस्त्रः प्रवर्तेत द्विजो वाचनिके जपे॥

इत्यादिस्मृत्यन्तरवचनैरपि तथा। न चैतासु स्मृतिषु काठकवाक्योक्तमुख्ययज्ञोपवीत-सदृशवासोविन्यासापेक्षया भिन्नमेव स्कन्धमात्रारूढत्वेन लोकाचारप्राप्तं द्वितीयं वस्त्रमुत्तरीयत्वेन तदभावे सूत्रं विधीयत इति वाच्यम्। क्लृप्तप्रत्यक्षश्रुतिविहितवासोविन्यासरूपयज्ञोपवीतविषय-त्वेनोपपत्तौ ततो भिन्नस्य विधाने मूलान्तरकल्पनापत्तेः। अत एव ब्रह्मचारिप्रकरणे आपस्तम्बेन

सिद्ध्यर्थमिदमपि दर्शपूर्णमासाङ्गत्वेन "उपव्ययते" इत्यनेन विधीयत इत्यपि केचित्। निवीतादिसमभिव्याहारस्योभयत्र प्रत्यभिज्ञापकस्य तुल्यत्वात्तु वासोविन्यास एवात्र

---

"यज्ञोपवीति द्विवस्त्रः" इति प्रथमसूत्रेण यदा द्विवस्त्रः तदा अन्यतरेण वस्त्रेण यज्ञोपवीतवदेकं धारयेत् इत्यर्थकेन द्विवस्त्रप्रकारमुक्त्वा "अथो निवीतस्त्वेकवस्त्र" इत्युत्तरसूत्रेण एकवस्त्रस्य तदेकदेशेन न द्विवस्त्रत्वं कार्यं, किन्तु तत्समग्रमेव अधः परिधेयमित्युक्ते, तर्हि तस्य द्वितीयवस्त्राभावे किं कर्तव्यमित्यपेक्षया सर्वसाधारण्येन "अपिवा सूत्रमुपवीतार्थे" इति सूत्रान्तरेण तत्स्थाने सूत्रं विहितम्। स्कन्धारूढवस्त्रधारणं तु निर्मूलमेव।

अस्तु वा जीवत्पितृकस्य उत्तरीयनिषेधे उत्तरीयपदार्थनिर्णयाय उपरिवासोमात्रं नोत्तरीयं निषिद्धम्; अपि तु "सग्रन्थिपरिमण्डलं वस्त्रमुत्तरीयं कुर्यात्। वस्त्रोत्तरीयाभावे तु एकाङ्गुलं द्व्यङ्गुलं वा सूत्रैरेव कृतं परिमण्डलमुत्तरीयं कुर्यात्" इति जातूकर्णोक्तोत्तरीयरूपम्। तत्रैवोत्तरीयशब्दस्य रूढत्वात्। अत एव 'यज्ञोपवीते द्वे धार्ये' इति स्मृत्या उक्ततृतीयोपवीतधारणमपि एतदुत्तरीयस्थानापन्नत्वात् तस्य निषिद्धम्। उपरिवस्त्रमात्रं तु---

> एकवस्त्रो न भुञ्जीयात् न कुर्याद्देवतार्चनम्।
> नचार्चयेद्द्विजान्नान्यत् कुर्यादेवंविधो नरः॥

इति **गोभिलेन** एकवस्त्रस्य सर्वस्य सर्वकर्मानुष्ठाननिषेधात् जीवत्पितृकस्य भवत्येव। उत्तरीयशब्दस्य योगाविशेषेऽपि निषेधे पूर्वोक्तरूढस्यैव ग्रहणेन इह निषेधस्याप्रवृत्तेरिति **रामकृष्णभट्टकृतजीवत्पितृककर्मनिर्णये** लिखनात् मुख्यब्रह्मसूत्रवत् सग्रन्थिपरिमण्डलाकारं वस्त्रं यथा सर्वथा धार्यं तथा तृतीयमुपरिवस्त्रमपि स्कन्धारूढतया धार्यमिति। तावतापि उपवीतशब्दाभिधेयस्य सग्रन्थिपरिमण्डलाकारवाससः 'अजिनं वासो वा' इति श्रुतिमूलकतया सर्वकर्माङ्गत्वेन धारणमावश्यकमित्यत्र न कोऽपि विवादः। अतो न 'यज्ञस्य प्रसृत्यै' इत्यस्य फलपरत्वकल्पनेनानावश्यकत्वं तस्येत्यावश्यकतया तन्नियमविधानं सम्भवति, तथापि तत्तद्वाक्यैः वासोविन्यासस्य स्वस्वकर्तृकस्यैव प्राप्तेः अध्वर्युकर्तृकत्वनियमार्थम्, अथवा दर्शपूर्णमासाङ्गभूतप्रोक्षणीशेषनिनयनाद्यङ्गेषु प्राप्तप्राचीनावीतत्वादिबाधेनोपवीतनियमार्थम्, अथवा तत्स्थानापन्नसूत्रधारणव्यावृत्त्या नियमार्थं वासोविधानं नाऽयुक्तमिति सर्वं **नियस्यत** इति सामान्योक्त्या पूज्यपादैः सूचितम्।

**नियम्यत इति युक्तमुत्पश्यामः।** सर्वथा "उपव्ययते" इति विधिः, दर्शपूर्णमासविधिव्यवहितत्वात् तत्स्तावकत्वानुपपत्तेरिति सिद्धम्॥ ३॥

---

यदुक्तं पूर्वपक्षे दर्शपूर्णमासस्तुत्यर्थमिति तद्दूषयति—**सर्वथे**ति। अस्य विधित्वाभावे 'निवीतं मनुष्याणां' इत्यादिसमभिव्याहारस्य तथा 'देवलक्ष्ममेव' इत्यस्यापि वा स्तावकत्वानुपपत्तेः, दर्शपूर्णमासविधेश्च दूरस्थत्वेन व्यवधानात् तदेकवाक्यतया समस्तस्यापि स्तावकत्वासम्भवात् विधित्वमेवास्याश्रयणीयमिति **सर्वथा**पदेन सूचितम्।

अत्र च **प्रकाशकारैः** 'सन्दिग्धे तु व्यवायात्' इत्यधिकरणे उपवीतस्यास्य प्रोक्षणादिवत् अदृष्टकर्तृसंस्कारार्थत्वमुक्तम् **यद्यपि** भाष्यकारीयदाशमिकादृष्टार्थत्वोक्त्या न विरुद्धम्, अदृष्टरूपकर्तृसंस्कारार्थत्वेनापि उपवीतनिवीतयोस्तदभिलषितसमुच्चयोपपत्तेः; **तथापि** कर्तृनिष्ठादृष्टोत्पत्तौ कर्तुरुद्देश्यत्वाभावे न किञ्चित् प्रमाणम्, सामर्थ्यस्य द्वारसमर्पणमात्रोपक्षीणतया तद्वाचकपदान्तरकल्पनया उद्देश्यत्वकल्पनेन तन्निष्ठादृष्टोत्पादकत्वपर्यन्तव्यापाराभावात्। अत एव यत्र व्रीहिप्रोक्षणादौ प्रधानोत्पत्त्यपूर्वपर्यन्तं प्रोक्षणक्रियाया नाशेन स्थायित्वाभावात् साक्षात् तदुपयोगासम्भवे मध्ये कल्प्यमानमदृष्टं व्यापारो धर्मिग्राहकमानात् व्रीहिनिष्ठमेव कल्प्यत इति भवति प्रोक्षणस्य व्रीहिनिष्ठादृष्टरूपसंस्कारजनकत्वम्; यत्र तु प्रधानापूर्वपर्यन्तं व्रीहिगतवैतुष्यस्य दृष्टस्यास्ति सद्भावः तत्र तेनैव द्वारेण तदपूर्वोपयोगसम्भवात् न व्रीहिनिष्ठादृष्टकल्पनेति **मीमांसकमर्यादा**।

एवञ्च प्रकृतेऽपि सदाधारितब्रह्मसूत्रादिविषयोपव्यानक्रियायाः पुनर्विहिताया अवैयर्थ्यस्यैव[1] फलतया कल्पितस्य आन्तं सद्भावात् मध्यतनतत्तदपूर्वजननानुकूलतत्तत्पदार्थनिष्ठयोग्यतासम्पादनकाले तस्य स्वत एव विद्यमानत्वात् न तदतिरिक्तादृष्टसंस्कारार्थत्वकल्पनं प्रमाणवत्, इतरथा वपनादिवत् आत्मनेपदश्रवणात् तद्वदेव कर्तृत्वांशेन संस्कारस्य व्यर्थत्वात् अभ्यर्हितत्वाच्च भोक्तृत्वांशेनैव संस्कार्यत्वापत्तौ कर्तृद्वारकत्वेन ऋत्विजामुपवीतानापत्तेः। अतः प्राथमिकशुद्ध्यर्थस्नानाचमनवत् दृष्टविधयैव कर्तृत्वांशोपयोगात् स्नानादिवत् सर्वेषामुपवीतं वक्तव्यम्। अत एव मन्त्राणां दृष्टद्वारैव क्रियाङ्गत्वं सामर्थ्याद्भवति, न तु सामर्थ्येनादृष्टम्। तथा आरुण्यादीनामेकहायनीपरिच्छेदकत्वस्य सामर्थ्यलभ्यत्वेऽपि एकहायनीसंस्कारार्थत्वं वा नेष्यत एव। एतदभिप्रायेणैवाभिक्रमणाधिकरणे प्रयोजनकथनावसरे 'योग्यतारूपलिङ्गात् आहवनीयसमीपप्रापणरूप-

---

1. A. त्रवैषम्यस्यैव

कर्तृसंस्कारार्थत्वावगतेः' इत्यादिग्रन्थेनाभिक्रमणस्य दृष्टसंस्कारद्वारकत्वम् । सन्दिग्धे तु व्यवायादित्यत्रापि अन्ते उपवीतस्य कर्तुरवैयग्र्यापादकत्वे तत्संस्कारत्वादित्यादिग्रन्थेन च कर्मकालेऽवैयग्र्यरूपदृष्टसंस्कारकत्वं चोपवीतस्योक्तं कौस्तुभे पूज्यपादैः । एवं स्थिते दर्शपूर्णमासाङ्गमुपवीतं तत्कर्तृसंस्कारतया तत्कर्तृभिः सर्वप्रयोगारम्भे कार्यमिति तदधिकरणभाट्टदीपिकोक्तिरपि एतदभिप्रायिकैव ज्ञेया । सर्वकर्माङ्गभूतमुख्यगौणोपवीतप्राचीनावीतनिवीतानां तु साधारणद्वारापि दृष्टप्रयोजनासम्भवेऽदृष्टविधयैव तत्कर्माङ्गत्वम् । अत एव निवीतस्यारादुपकारकत्वं प्रागुक्तं पूज्यपादैः । सूचितमप्येतत्पूर्वं प्रमेयं विस्तरेणोपपादितम् ।

यदि तु सत एवोपवीतस्य पुनःकरणमात्रांशेऽवैयग्र्यापादकत्वेऽपि उपवीतस्य वस्त्रस्यादृष्टरूपार्थत्वमेव युक्तमित्यालोच्यते, तदा तददृष्टस्योपस्थितकर्तृनिष्ठत्वं, अथवा तत्तदुत्तरक्रियमाणपदार्थनिष्ठत्वं वा कल्प्यत इत्यपि युक्तं वक्तुमिति ध्येयम् । सर्वथापि तु ब्रह्मसूत्रस्येव वाससोऽपि धारणं उपवीतप्राचीनावीतनिवीतेति प्रकारत्रयेण तत्तत्कर्म व्यवस्थया कर्तव्यम् । यदा पितृकर्माद्यर्थे प्राचीनावीतादिकरणं तदापि सदा उपवीतधारणकार्यस्य प्रत्यवायपरिहारादेः तेनैव प्राचीनावीतादिना वचनात्सिद्धेः न पृथगुपवीतकरणमिति 'सदोपवीतिना भाव्यं' इति स्मृतिबाधेऽपि न क्षतिः ।

एतेन उपवीतद्वयापेक्षया प्राचीनावीतादि अन्येनैव वाससा ब्रह्मसूत्रेण वा कर्तव्यमित्याशङ्का परास्ता । 'एतदेव विपरीतं प्राचीनावीतम्' इत्यादिश्रुत्या स्मृत्यन्तरेण चोपवीतभेदान्तरेणैव प्राचीनावीतनिवीतप्रकारोपपादनाच्च । तत्र सर्वकर्मार्थत्वेन ब्रह्मसूत्रस्येव वाससोऽपि धारणे आवश्यके सति तद्धारणं कर्तव्यमेव । सर्वदा तदशक्तौ वस्त्राभावेऽपि वा तत्स्थाने पूर्वलिखितस्मृत्या तृतीययज्ञोपवीतं धार्यम् । यद्यपि तृतीयमुत्तरीयार्थे इति स्मृत्या वस्त्राभाव एव तद्विहितमिति वस्त्रसत्वे अशक्तिप्रयुक्तधारणाऽसम्भवेन तद्विधानं सम्भवति तथापि "अपि वा सूत्रमुपवीतार्थे" इत्यापस्तम्बस्मृत्या सामान्यत एव वाससमकक्षतयैव विकल्पाभिधानात् सर्वत्रापि वासोविन्याससूत्रयोर्विकल्पविधानेन लघुभूतपक्षाङ्गीकारे न बाधकम् ।

किमर्थं तर्हि 'वस्त्राभावे तदिष्यत' इति वचनमिति । उच्यते । यत्र हि वस्त्राभावप्रयुक्तैव तद्धारणप्रसक्तिः तत्र तदर्थे सर्वकर्मसाधारण्येन सूत्रे धृते किञ्चित्कर्मारम्भे सति पुनःवस्त्रलाभे प्रतिनिधिनाऽरब्धप्रयोगानन्तरं कार्यनिष्पत्तेः पूर्वं मुख्यव्रीहिलाभे व्रीहीणामिव वस्त्रस्यैव ग्रहणम् । कर्मानारम्भे तु सूत्रे धृतेऽपि वस्त्रलाभे तु सुतरामेव वस्त्रग्रहणम् । न चैतावता प्राक्धृतसूत्रस्य प्रतिनिधिभूतनीवाराणामिव त्यागः कार्यः तस्य सर्वार्थत्वेन धृतत्वात्

उत्तरीयवाससः सदा सत्त्वासम्भवाच्चेत्येवमनुष्ठानप्राप्तयर्थं तद्वचनम् । अत एव शिष्टा वासोविन्यासं विना सूत्रमात्रस्य, अथवा तत्समुच्चयेन सूत्रस्य च धारणं कुर्वन्तो मुख्यब्रह्मसूत्रसाहित्येन वासोविन्यासमपि तत्तत्कर्मपुरस्कारेणोपवीतप्राचीनावीतनिवीतादिरूपेण धृत्वा कर्माण्याचरन्ति। एवञ्चेतरकर्मसु वासो विनापि तत्स्थानीयेन सूत्रेण धारणाशक्तौ वस्त्राभावे वा निर्वाहेऽपि दर्शपूर्णमासयोः वासोविन्यासाभावे वैगुण्यमेव भवतीति तत्साद्गुण्याय वासोविन्यासोपवीतनियमः क्रियते। एतच्च काठकवाक्येन सर्वकर्माङ्गत्वेन वासोविन्यासोपवीतादिप्रकारत्रयविधानं अनावश्यकमेवेत्यभिप्रेत्योक्तं उपवीतं लिङ्गदर्शनादित्यधिकरणे यज्ञोपवीतीहीत्यस्य विप्रकृष्टदार्शपूर्णमासिकानुवादत्वसिद्धान्ते वासोविन्यासस्य यज्ञोपवीतशब्दग्राह्यत्वोपपत्त्यै। अत्रत्ययज्ञोपवीतशब्दस्य वासोविन्यासपरप्राचीनावीतशब्दसाहचर्येण वासोविन्यासपरत्वं स्वीकुर्वतो **न्यायसुधाकारस्य** तु मते काठकवाक्यविहितस्यैव वासोविन्यासस्य प्राचीनावीतवासोविन्यासोऽपि न दर्शपूर्णमासातिरिक्तकर्ममात्राङ्गमिति प्रतीयते। इतरथा अग्निहोत्रेऽपि वासोविन्याससत्वेन तत्रत्यस्यैवानुवादसम्भवेन विप्रकृष्टानुवादत्वसिद्धान्तानुपपत्तेः। अतो वासोविन्यासोपवीतादीनां नेतरकर्माङ्गत्वम्।

**तस्यायमाशयः**—काठकवाक्येन यज्ञोपवीत्येवेति पूर्ववाक्यमनारभ्याधीतमपि स्मृतिप्राप्तस्य यज्ञोपवीतस्यैव याजुर्वैदिकत्वसिद्ध्यर्थं सर्वकर्मार्थत्वेन श्रुत्यैव विनियोगात् न पर्णतान्यायेन प्रकृतौ निविशते। 'यज्ञस्य प्रसृत्या' इत्युत्तरभागेन तु विधीयमानो वासोविन्यासोपवीतप्रकारः स्मृतिप्राप्त एव याजुर्वैदिकत्वसिद्ध्यर्थं विधीयमानः मित्रविन्दान्यायेन यत्र प्रकृतौ 'उपव्ययत' इति विधानं तत्रैवोपसंहारन्यायेन निविशते। यत्रैव वा अग्निहोत्रादौ यजमानमृतौ दोहे, अन्यत्र वा प्राचीनावीतविधानं; यत्र वा कचिन्निवीतादिविधानं तत्रैव निविशते। अत एव निवीतं मनुष्याणामित्यत्र वासोविन्यासरूपमेव निवीतमुक्तं **दिग्विभागश्च तद्वत्** इत्यधिकरणे **न्यायसुधायाम्**। तथा च याजुर्वैदिकवासोविन्यासप्रकारत्रयस्यान्यत्रासम्भवात् 'प्राचीनावीती दोहयति' इत्यत्र एतदेव विपरीतं प्राचीनावीतमित्युक्तवासोविन्यासप्राचीनावीतस्यैव ग्रहणं, तत्साहचर्यात् यज्ञोपवीतशब्देऽपि तथेत्यलं विस्तरेण।

'निवीतं मनुष्याणां' इत्यादीनामर्थवादत्वस्य **अर्थवादो वा प्रकरणात्, विधिना चैकवाक्यत्वादिति** सूत्रद्वयेन स्थापनात् तेनैव उपव्ययत इत्यस्य विधित्वनिश्चयात् पुनःपूर्वपक्षानुत्थानमित्यतः **विधिर्वा स्यादपूर्वत्वात्** इति सूत्रस्य स्वतन्त्राधिकरणपरत्वमयुक्तमित्यभिप्रेत्य तस्य **पूर्वपक्षसूत्राशयतया** वर्णकान्तरमाह—**एवं वा**।

**एवं वा**—यावज्जीववाक्येनाग्निहोत्रे जीवनस्य निमित्तत्वावगमेऽपि **वचनेनैव दाहावधि सायंप्रातःकाले मरणोत्तरं नित्यत्वेन विहिताग्निहोत्रप्रयोगो मृताग्निहोत्रम्। तस्मिन् मृताग्निहोत्रे "प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति" इत्यनेन श्रुतेन दैवाग्निहोत्रे किं यज्ञोपवीतस्य विधिरनुवादो वेति चिन्तायां**—

स्वरूपेण **प्राप्तस्यापि ब्रह्मसूत्रस्य श्रौतप्रायश्चित्तप्राप्तिफलकतया विधिः वासोविन्यासरूपस्य वा** नियमार्थं **विधिरिति प्राप्ते—स्थितं तावदपर्यवसितम्।** मध्ये **चिन्तान्तरारम्भः ॥ ३ ॥**

---

यावज्जीववाक्येन जीवनसम्बन्धे सत्येवाग्निहोत्रप्रयोगविधानात् किं तन्मृताग्निहोत्रं? इति सन्देहं निराकुर्वन् विषयवाक्यमुदाहरति —**यावज्जीवेति**। यज्ञोपवीतपदेन मुख्यब्रह्मसूत्रमेवोच्यते? अथवा पूर्वोपपादितदिशा प्राचीनावीतसाहचर्यात् गौणो वासोविन्यासो वा? उभयथापि पूर्वपक्षमाह—**स्वरूपेणेति**। 'नित्ययज्ञोपवीती' इत्यनेन पुरुषार्थतया 'यज्ञोपवीतिना कर्तव्यं' इति स्मृत्या कर्माङ्गत्वेनापि प्राप्तस्यापीत्यर्थः। अस्यैव विधेः तत्स्मृतिमूलत्वकल्पनेऽग्निहोत्रातिरिक्तकर्माङ्गत्वानापत्तेः अवश्यं तस्या मूलान्तरकल्पनं कर्तव्यमिति मूलमूलिभावेन विधिवैयर्थ्यासम्भवमभिप्रेत्य प्रयोजनान्तरेण तत्परिहरति—**श्रौतेति**। विधित्वपक्षे यजुर्वेदविहितत्वात् तद्भ्रेषे 'यदि यजुष्टो भुव इति दक्षिणाग्नौ जुहुयात्' इति श्रौतं प्रायश्चित्तं भवति; पुरुषार्थत्वेन प्राप्तयनुवादपक्षे तस्य कर्मानङ्गत्वात् तद्भ्रेषे कर्मणो वैगुण्याभावात् न किञ्चित्प्रायश्चित्तम्। स्मृतिप्राप्तकर्माङ्गत्वेनानुवादपक्षे तस्या अविज्ञातवेदविशेषमूलत्वात् 'यद्यविज्ञाते भूर्भुवस्स्वरिति सर्वा अनुद्रुत्याहवनीये जुहुयात्' इति प्रायश्चित्तमिति प्रयोजनभेदाद्विधित्वं युक्तमित्यर्थः। वासोविन्यासविधिपक्षे **न्यायसुधाकारमते** एतस्यैव प्रयोजनस्य लाभेऽपि स्वयं प्रकारद्वयेन काठकवाक्ये सर्वकर्माङ्गत्वेन वासोविन्यासविधिस्वीकारात् याजुर्वैदिकप्रायश्चित्तस्यापि तत एव लाभे किमर्थं पुनर्विधिरित्यत आह—**नियमार्थं वेति**। पूर्वोक्तविधया नियमार्थमित्यर्थः। अत्र चास्य विधित्वपूर्वपक्षस्य 'उदक्त्वं' इत्युत्तरसूत्रकरिष्यमाणपूर्वपक्षस्य च एकेनैव **सतो वा लिङ्गदर्शनात्** इति सूत्रेण निराकरणपूर्वकं सिद्धान्तकथने लाघवात्, 'उदक्त्वं च' इति चकारात् अत्रत्यपूर्वपक्षसूत्रस्थविधिर्वेतिपदस्य अव्यवधानेनानुकर्षलाघवाच्च अनिराकृत एवैतत्पूर्वपक्षे अन्तरागर्भिणीत्वेन चिन्तान्तरं दर्शयति—**मध्य इति**।

---

## (४)—उदक्त्वं चापूर्वत्वात् ॥ १३ ॥ सतो वा लिङ्गदर्शनम् ॥ १४ ॥

तत्रैव "ये **पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्**" इति श्रुतेऽपि ये पुरा दर्भास्ते **उदञ्चः कार्याः इत्येवं विधिवाचक**पदाध्याहारेणापि **पूर्ववद्विधिः। न च पुराशब्दस्य विशेषणत्वे विशिष्टोद्देशः।** दक्षिणाग्रत्वस्य **मृताग्निहोत्रे विधावर्थादेवोदक्त्वस्य जीवदवस्थायामेव प्राप्तत्वेनाविशेषणत्वात्।** निपातत्वेन **पुराशब्दान्वयस्य व्युत्पन्नत्वाच्च।** न च अग्रवन्ति **प्रागग्राण्युदगग्राणि वा" इति सामान्यस्मृत्यैवोदगग्रत्वप्राप्तेर्विध्यानर्थक्यमिति वाच्यं**

---

**उदक्त्वं चापूर्वत्वात्।**

अत्र चकारेण विधिरिति पूर्वसूत्रस्थविधिपदस्यानुकर्षः तथा अपूर्वत्वादित्यन्तस्य समग्रस्यैव सूत्रस्य भवितुमर्हत्येवानुकर्षः इति अपूर्वत्वादिति पदं व्यर्थमेवेति ज्ञेयम्। **तत्रैवेति।** मृताग्निहोत्र एव। **ये इति।** पुरा यजमानमरणात् पूर्वं जीवदवस्थयजमानकर्तृकतत्प्रयोगे ये उदञ्चः उदगग्रा इत्यर्थः। अत्र स्मृत्यापि उदगग्रत्वस्य प्राप्तयभावात् हिशब्दाप्रयोगेण च स्तावकतानुपपत्तेः। यच्छब्दस्योद्देश्यतासमर्पकत्वेन विधिशक्तिप्रतिबन्धकत्वानुपपत्तेः युक्तमेव विधित्वमित्यधिकाशङ्कया पूर्वपक्षं दर्शयति—**ये पुरा दर्भा इति। पदाध्याहारेणापीति।** अपिना सिद्धवदुक्त्यन्यथानुपपत्त्यैवास्यापि विधित्वमिति वार्तिककारीययुक्तेरन्वाचयत्वं सूचितम्। यज्ञोपवीतीहीत्यस्य विधित्वपूर्वपक्षे पुराशब्दाभावेऽपि अर्थात् जीवदवस्थाविषयत्वसिद्धिवत् इहापि पुराशब्दार्थान्वयाभावेऽपि तत्सिद्धेः नोद्देश्यविशेषणत्वमावश्यकमित्याह—**दक्षिणाग्रत्वस्येति।** अनेनैव न्यायेन उत्तराधिकरणे कल्प्यमानोपरिधारणविधेः जीवदवस्थाविषयत्वं सिद्धान्ते पुराशब्दाभावेऽपि द्रष्टव्यम्।

वस्तुतस्तु पुराशब्दार्थस्य विशेषणत्वस्वीकारेऽपि न वाक्यभेदप्रसक्तिः। तस्य दर्भान्वये बाधकाभावेन अव्युत्पन्नान्वयप्रयुक्तत्वस्य दूषकताबीजस्याभावादित्याह—**निपातत्वेनेति।** भावनान्वयकार्यकारणभावे निपातातिरिक्तत्वेन विशेषणात् तेषां भावनान्वयनियमाभावे स्वसमभिव्याहृतपदार्थान्वयस्य व्युत्पन्नत्वमेवेत्यर्थः।

उदग्रत्वप्रापकस्मृतितः प्राप्तत्वात् अनुवादत्वं प्राचीनैः सिद्धान्तितम्, तदनूद्य दूषयति—**न चाग्रवन्तीति।** अत्र च सिद्धान्ते **न्यायसुधाकारादिभिः** उदञ्च इत्यस्य उदक्संस्थत्वरूपार्थान्तरपरत्वाङ्गीकारेण विधित्वाशङ्कापरिजिहीर्षया 'अपवर्गवन्ति प्रागपवर्गाणि उदपवर्गाणि वा, इति स्मृत्यन्तरोपन्यासो वार्तिके इत्युक्तम्; तत् 'दक्षिणाग्रान्' इत्युक्तरदक्षिणाग्रत्वस्यैव पूर्वोक्त-

**यजुर्भ्रेषप्रायश्चित्तसिद्ध्यर्थं तद्विधानोपपत्तेः। अन्यथा स्मृतिमूलभूतश्रुतेरविज्ञातवेदत्वात् "यद्यविज्ञाते भूर्भुवस्सुवरित्याहवनीये जुहुयात्" इत्येतत्प्राप्येतेति प्राप्ते—**

यच्छब्दश्रवणात्**प्रत्यक्षविध्यभावा**द्विध्यन्तरै**कवाक्यत्वाच्च नायं विधिः,** अपि तु **प्राप्तत्वात्तच्छब्दापेक्षितोद्देश्यविशेषसमर्पक एवेत्यनुवादः** ॥ ४ ॥

---

## (४)—सतो वा लिङ्गदर्शनम् ॥ १४ ॥

**स्थितादुत्तरम्—**

**हिशब्दोपबन्धाद्विध्यन्तरैकवाक्यत्वाच्चायमपि निवीतादिवत्प्राचीनावीतस्तुत्यर्थः।** अत एव **'उपव्ययते' इतिवदानर्थक्याभावादपि विधिकल्पनं निरस्तम्।** यज्ञोपवीत**पदवाच्यब्रह्मसूत्रस्य च स्मृत्यैव जीवदग्निहोत्रे प्राप्तत्वादौचित्यादिना स्तुत्युपपत्तिः। वासो-**

---

प्रतिस्पर्धितया विधानात् तद्बलेन 'उदञ्च' इत्यत्र उदगग्रत्वस्यैव पूर्वपक्षे सिद्धान्ते च ग्रहणात् उदक्संस्थत्वाशङ्काया एवायोगात् व्यर्थमेव तत्स्मृत्यन्तरोपन्यसनमिति सिद्धान्तोपपादने तत्स्मृत्यनुल्लेखेनैव सूचितम्। **अग्रवन्ति** दर्भसमित्स्रुगादीनि द्रव्याणि तानि प्रागग्राण्युदगग्राणि वा कुर्यादिति। यानि एकदेशे क्रमेण निधेयत्वात् समाप्तिमन्ति दर्भपवित्रादीनि तानि प्राक्संस्थानि उदक्संस्थानि वा कुर्यात् इति द्व्यर्थः। एवं स्मृतिप्राप्तस्यापि पुनर्विधाने पूर्वपक्षिते विध्यश्रवणादेव सिद्धान्तमाह—**यच्छब्दश्रवणादिति।** उपव्ययत इत्यत्र पञ्चमलकारश्रवणात् तद्वैलक्षण्यं दर्शयति—**प्रत्यक्षेति। विध्यन्तरेति।** दक्षिणाग्रत्वविध्येकवाक्यत्वादित्यर्थः। **अपि त्विति।** अत्र वार्तिके पुरा ह्येतद्युक्तं न तु सांप्रतं मृतावस्थायामित्येवं स्तुत्यर्थत्वमुपपादितं तत् तस्मात् तादृशस्तुतिबुद्धेरनुदयात् उद्देश्यसमर्पकत्वे सम्भवति तल्लक्षणायां गौरवादयुक्तमिति समर्पक एवेत्येवकारेण सूचितम्। अत एव तच्छब्देन पूर्वोक्तदर्भाणामुपस्थितेः तेषां च परिस्तरणाद्यर्थानां जीवदवस्थायां परिधानीयकर्मपर्यन्तं धृतानां मध्ये प्रतिपत्त्यन्तराभावेनात्यक्तानामेव दक्षिणाग्रताविधानात् बर्हिर्व्यक्त्यैक्यसिद्धिः प्रयोजनमनुवादस्य लभ्यते। उदञ्च इति पदं तु स्वार्थबाधकताद्योतकमिति भावः।

---

**स्थितादुत्तरम्।**

**अत एवेति।** उपव्ययत इत्यस्य विध्यन्तराश्रयणेन तदेकवाक्यतयाप्यानर्थक्यापरिहारात पञ्चमलकाराश्रयणेन विधायकत्वं स्वीकृतम्। इह तु प्राचीनावीतविध्येकवाक्यतया

विन्यासरूपस्यापि वा अनियमेनोक्तविषया जीवदग्निहोत्रे प्राप्तत्वात् स्तुत्युपपत्तिः। यदि तु नियमेन तत्प्राप्तिस्स्तुतावावश्यकी अपेक्ष्येत ततस्सन्निकृष्टासम्भवाद्विप्रकृष्टदर्शपूर्णमासादिस्थस्यैवायमनुवादः स्तुत्यर्थं नानुपपन्नः। बहुवचनं तु प्रकृतिविकृत्यभिप्राय-मित्युक्तमेव ॥ ४ ॥

---

## (५)—विधिस्तु धारणेऽपूर्वत्वात् ॥ १५ ॥

मृताग्निहोत्र एव 'अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि हि देवेभ्यो धारयति' इति श्रुतेन किं उपरिधारणं दैवाग्निहोत्रे विधीयते उतायमप्यनुवाद इति चिन्तायां—

---

स्तावकत्वसम्भवे न तत्कल्पनं वाक्यभेदापादकं युक्तमित्यर्थः। यज्ञोपवीतपदेन मुख्यगौणार्थ-ग्रहणेऽपि स्तुत्यर्थत्वमुपपादयति—यज्ञोपवीतेति। उक्तविषयेति। जयादिहोमवत् फलाधि-क्येच्छया सर्वकर्माङ्गत्वेन प्राप्तिसम्भावनयेत्यर्थः। एवं सन्निकृष्टानुवादसम्भवेऽपि वार्तिकाद्युप-पादितविप्रकृष्टदर्शपूर्णमासस्थानुवादोपपत्तिमपि कथञ्चिद्दर्शयति—यदि त्विति। अत्र वार्तिके नित्ये अग्निहोत्रदोहे विनाप्युपवीतेनावैगुण्यमिति सिद्धान्तप्रयोजनमुक्तम्। तत् मुख्यब्रह्मसूत्रो-पवीताभावे अन्यकर्मस्विव इहापि वैगुण्यप्राप्तेः यथाश्रुतमनुपपन्नं तद्भ्रेषे श्रौतप्रायश्चित्ताभाव-परतया वासोविन्यासोपवीतपक्षे तस्यापि विहितत्वेन तदभावे वैगुण्यापत्तेस्तुल्यत्वात् तन्नियमा-भावपरतया वा व्याख्येयमिति पूर्वोत्तरपक्षोपन्यासेनैव प्रयोजनस्य स्पष्टत्वहेतुकानुपन्यासेन सूचितम्।

---

### विधिस्तु धारणेऽपूर्वत्वात्।

अधुना हिशब्दोपबन्धस्थले पूर्वत्रानुवादत्वेनोक्तं स्तुत्यर्थत्वमपोद्यते; तत्रोदाहरणं दर्शयति—मृताग्निहोत्र एवेति। केचित्तु 'ये पुरोदञ्चो दर्भाः' इति वाक्यं अधस्तादिति वाक्यं च पितृयज्ञे पठितम्। अत्र च सर्वमभ्यर्हितं प्रच्छाद्यैव देशान्तरं नेतव्यमित्याचारात् उपरि-भावे कस्यचित्प्राप्ते अधस्ताद्वाक्यस्थितसमित्पदानुषङ्गेण समिदंशे नियमविधानेऽपि उपरिभावस्य प्राप्तत्वात् उपरिधारणांशोऽनुवाद इति प्राचीनैः पूर्वपक्षः कृतः। सोऽयुक्तः दर्शपूर्णमासादिषु हविः प्रच्छादनाचाराभावेन नियमेन हविःप्रच्छादनानुरोधकृतोपरिभावस्याप्राप्तेः। 'स्रुग्दण्डे समिधमुपसङ्गृह्यानुद्रवति' इति श्रुतेः वार्तिके हविः प्रच्छादनाचारमूलतयोक्ताया अपि हविरु-परिधारणार्थपरत्वे प्रमाणाभावात् स्रुग्दण्डस्यैवाधस्ताद्देशप्रतियोगित्वेन वा उपरिदेशप्रतियोगितया-ऽन्वयात् तदुपरिधारणांश एवोपरिहीत्यस्यानुवादत्वपूर्वपक्षविधित्वसिद्धान्तयोरेव कर्तुमुचितत्वाच्च।

**हिशब्दश्रवणाद्विध्यन्तरैकवाक्यत्वाच्च 'उपरि हि' इत्यनुवादः पूर्वस्तुत्यर्थः। न च प्राप्त्यभावः** "स्रुग्दण्डे **समिधमुपसङ्गृह्यानुद्रवति" इति वचनेन स्रुग्दण्डस्याधिकरणत्वप्रतीतेरुपरिधारणाभावे पतनप्रतिबन्धकत्वरूपतदयोगादुपरिभावस्य प्राप्तेः। न च समित्स्रुग्दण्डयोरुभयोरपि कृतार्थत्वात् "उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः"** इतिव-

---

अतो हविरुपरिधारणांशे 'उपरि हि' इत्यस्य व्यापाराभावात् आचारतः प्राप्तेश्चानियतत्वात् स्रुग्दण्डोपरिभावमादायैव पूर्वपक्षे कर्तव्ये तत्साधकतया 'स्रुग्दण्डे' इति वाक्येनैव प्राप्तिं दर्शयति—**स्रुग्दण्डे इति**। स्रुचि गृहीतं पित्र्यं हविः होतुं यदा गार्हपत्यात् आहवनीयं गच्छेत् तदा स्रुग्दण्डस्याधस्तात् समिधं धारयेत् इति वचनार्थः।

एतेन 'स्रुग्दण्डे समिधमुपसङ्गृह्यानुद्रवति' इति वाक्यात् 'स्रुग्दण्डे समिधमभ्युद्गृह्णन् अनुद्रवति' इत्यस्माद्वा 'स्रुग्दण्डे निधाय समिधमनुद्रवति' इत्यस्माद्वा स्रुग्दण्डोपरिधारणप्राप्तावपि हविरुपरिधारणाप्राप्तेः, आचारादेव पूर्वपक्षे तत्प्राप्तिरिति आचारप्राप्त्युपपादनपरशास्त्रदीपिकाविवरणं **प्रकाशकारोक्तमपास्तम्**।

'उपरिहि' इत्यस्य हविरुपरिधारणविषयत्व एव प्रमाणाभावात्। स्रुग्दण्डे समिधं धारयित्वा आहवनीये तां निधाय तदुपरि प्रधानद्रव्याहुतिः क्रियते; तत्र क्वोपयोगो हविः प्रच्छादनस्य ? इतरथा मृताग्निहोत्रेऽपि स्रुचि प्रथमतो निधायैव समिधं तदुपरिद्रव्योन्नयनापत्तेः। अतः स्रुग्दण्डोपरिधारणस्य प्राप्तत्वादनुवादः। **यदपि** 'स्रुग्दण्ड' इति वाक्येन स्रुग्दण्डदेशनियमात् हविषः प्रागेवासौ धारयितव्येति नोपरिधारणं प्राप्तम्, अतः उपरिहीत्ययं विधिरिति वार्तिकोपपादितसिद्धान्तयुक्त्युपबृह्मणं **प्रकाशकाराणाम्**। तदप्यनूद्य दूषयति—**न चेति**। **इतिवदिति**। यथैव सोमे 'उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः' इति श्रुतेन वाक्येन यस्मिन् दक्षिणहविर्धानशकटेऽभिषवः तत्राग्नीषोमीयादिसामिधेन्यनुवचनं कर्तव्यमित्यर्थकेन लक्षणापरिहाराय सोमधारणे कृतार्थस्यापि हविर्धानशकटस्य **पुरोडाशकपालन्यायेना**ङ्गत्वम्। ततश्च हविर्धानशकटे स्थित्वा तदनुवचनं कार्यमिति पूर्वपक्षं प्रापय्य हविर्धानस्य हविर्धारणाद्यर्थत्वेन कृतार्थस्य अत्यन्ताप्राप्तस्य विधावपूर्वविधित्वापत्तावपि[1] प्रकृतित आहवनीयप्रत्यग्देशस्यातिदेशप्राप्तस्य अनियमेन दक्षिणोत्तरहविर्धानसमीपवर्तितया प्राप्तेः दक्षिणहविर्धानलक्षितदेशस्य **नियम**विधौ लाघवमिति तदनुरोधेन यच्छब्देन देशलक्षणया देशस्याङ्गत्वमिति **सामिधेनीस्तदन्वाहु**-

---

1. B, त्वापत्तेः

देशार्थत्वावधारणात् सप्तम्या सामीप्यमात्रलक्षणेति केषांचिदुक्तं युक्तम्। कृतार्थयोरङ्गाङ्गिभावाभावेऽप्यधिकरणत्वेनैव दृष्टान्त इव स्रुग्दण्डस्य देशत्वोपपत्तेः। अतोऽत्राप्यनुवाद इति प्राप्ते—

स्रुग्दण्डस्य न तावद्ग्रहणेऽधिकरणत्वम्, हस्तादेरेव तदधिकरणत्वात् उपशब्दवैयर्थ्याच्च। नाप्युपशब्दार्थे सामीप्ये, स्रुग्दण्डस्य सामीप्यप्रतियोगित्वेनाधिकरणत्वानुपपत्तेः। अतस्सप्तमी सामीप्यप्रतियोगित्वलक्षणार्था। कथञ्चित्सामीप्याधिकरणत्वसम्भवेऽपि वा समिदधिकरणत्वस्याप्राप्तत्वान्नोपरिभावानुवादः। अतो हिशब्दपरित्यागेनैकवाक्यतामपि भङ्क्त्वा दैवाग्निहोत्रे उपरिभावनियमविधिः।

---

रिति हविर्धानयोर्वचनात् सामिधेनीनामित्यधिकरणे तृतीयसप्तमपादे निर्णीतम्। तद्वदिहापि स्रुग्दण्डस्य स्रुक्कार्यार्थतया कृतार्थस्य धारणस्य होमार्थसमिदर्थत्वेन च कृतार्थस्य अन्योन्यमङ्गाङ्गिसंयोगायोगात् देशलक्षणार्थत्वमित्यर्थः।

यद्यपि तद्ग्रन्थे सप्तम्या सामीप्यमात्रलक्षणा नोक्ता किन्तु देशलक्षणा, तथापि स्रुग्दण्डपदेन देशे लक्षितेऽपि तस्यैव सप्तम्याऽधिकरणत्वापत्तौ उपरिभावप्राप्त्या तदप्राप्तिसाधनासम्भवात् तत्सिद्ध्यर्थं अवश्यं तया सामीप्यं लक्षयित्वा स्रुग्दण्डदेशसमीप इत्येव [1]तद्वाक्यार्थो वर्णनीयः इत्येतत्तात्पर्येण सामीप्यमात्रलक्षणेत्युक्तम्।

दृष्टान्त इवेति। दृष्टान्ते देशलक्षणायामपि न तत्समीपवर्त्यन्यस्मिन् देशेऽवस्थानम्; अपि तु हविर्धानदेशाधिकरणकमेव तत् इति तद्देशोपरिभावो विनापि सप्तमीश्रवणेन लभ्यते। तथा इह सुतरामधिकरणत्वार्थसप्तमीश्रवणे सति तद्देशोपरिभावप्राप्त्युपपत्तेरित्यर्थः। उपसङ्गृह्येति श्रवणात् स्रुग्दण्डस्याधिकरणत्वं किं ग्रहणनिरूपितम्? उत उपसर्गार्थनिरूपितमिति विकल्प्य पूर्वपक्ष्युक्तामुपरिभावप्राप्तिं निरस्यन् सिद्धान्तमाह—स्रुग्दण्डस्येति। कथञ्चिदिति। लक्षणामनङ्गीकृत्य पतनप्रतिबन्धकत्वरूपस्य मुख्यस्यासम्भवः कथञ्चिच्छब्देनोक्तः। अप्राप्तत्वादिति। स्रुग्दण्डवाक्येन स्रुग्दण्डस्योपेत्युपसर्गार्थसमित्प्रतियोगिकसामीप्यनिरूपिताधिकरणत्वप्राप्तावपि समिन्निष्ठाधेयतानिरूपिताधिकरणत्वमनेन 'उपरिहि' इति वचनेन विधीयते। ततश्च स्रुग्दण्डसमीपे उपर्यधोभावरूपानियमेन तद्धारणस्य तेन वाक्येन प्राप्तौ उपरिभावनियमस्सिद्ध्यतीत्यर्थः। अत्र प्राचीनैः नवीनैश्च प्रकाशकारैः उपरिहि' इति वाक्यश्रुताख्यात एव पञ्चमलकारत्वकल्पनया भिन्नवाक्यत्वमाश्रित्य विधित्वमुक्तम्; तत्रास्वरसं सूचयन्नेवास्य विध्यन्तरकल्पकत्वमेव युक्त-

---

1. A. इत्येतद्वा

वस्तुतस्तु—अनियतप्राप्त्याऽप्येकवाक्यत्वसम्भवे हविरुभयत्वादिवद्वाक्यभेदाङ्गीकारस्यायुक्तत्वादस्यार्थवादत्वमेवाङ्गीकृत्य सिद्धवन्निर्देशान्यथानुपपत्त्या विध्यन्तरस्यैवाप्राप्तनियमफलकस्य कल्पनेति युक्तम् ॥

वस्तुतस्तु "स्रुग्दण्डे निधाय समिधमनुद्रवति" इति न्यायसुधाकृल्लिखितवचनेनोपरिभावस्यापि लक्षणातात्पर्यग्राहकप्रमाणाभावेन प्राप्तत्वादेतद्वचनाभावं कृत्वा चिन्तयेदमधिकरणमिति ध्येयम् ॥ ५ ॥

---

मित्याह—वस्तुतस्त्विति। हविरुभयत्वादिवदिति। कादाचित्कोभयहविर्नाशमादायापि उभयत्वानुवादाङ्गीकारेणैकवाक्यत्वे सम्भवति न विशिष्टोद्देशप्रयुक्तवाक्यभेदस्वीकारः, तथेहापि सम्भवतीति नास्त्येव विधित्वाश्रयणम्, अपि तु विध्यन्तरकल्पकत्वमेव। एवञ्च हिशब्दत्यागोऽपि नापद्यत इत्यर्थः। अधुना भाष्यकारलिखिततदधिकरणोपेक्षाहेतूपपादने न्यायसुधाकृल्लिखितेन स्पष्टेनैव वाक्यान्तरेणोपरिभावनियमप्राप्तिसूचनेन भाष्यकारकृतोपेक्षैवात्र युक्तेत्यभिप्रेत्यास्याधिकरणस्य कृत्वाचिन्ताविषयत्वं परमार्थतो दर्शयति—वस्तुतस्त्विति। लक्षणातात्पर्येति। अस्मिन् वचने उपशब्दाभावेन सामीप्यप्रतियोगित्वादिलक्षणातात्पर्यग्राहकाभावात् स्रुग्दण्डे निधाय समिधमिति स्रुग्दण्डोपरिमात्रस्य प्राप्तत्वादित्यर्थः। अत एव पूर्वपक्षे सिद्धान्ते च प्रयोजनाविशेषात् कृत्वाचिन्तात्वमेव द्योतयितुं प्रयोजनानुपन्यासः।

येषां तु मते हविरुपरिधारणप्राप्त्याऽनुवादत्वपूर्वपक्षः तेषामपि पूर्वपक्षे समिधो हविरुपरि धारणं, सिद्धान्ते सर्वस्यापि स्रुग्दण्डोपरि धारणमित्येवं भेदेन प्रयोजनप्राप्तौ पूर्वपक्षे उपरिधारणहाने आचारमूलश्रुतेरविज्ञातवेदत्वात् अविज्ञातशेषप्रायश्चित्तम्; सिद्धान्ते याजुर्वैदिकप्रायश्चित्तमित्येतत्पर्यन्तं प्रकाशकारीयं प्रयोजनकथनं व्यर्थमेव। स्रुग्दण्डे इति श्रुतेः आचारमूलभूताया वार्तिके प्रदर्शनेन प्रत्यक्षमूलभूतश्रुतिवेदीयप्रायश्चित्तस्यैव प्राप्त्या अविज्ञातवेदप्रायश्चित्तप्राप्त्यभावाच्च। यदि तु श्रुतेः स्रुग्दण्डोपरिधारणविषयाया न हविरुपरिप्रच्छादनाचारमूलत्वं भिन्नविषयत्वात्; अतो वार्तिकोक्तं तन्मूलत्वमयुक्तमिति विभाव्यते, तदाऽस्तु तदपि युक्तमिति दिक्।

## (६)—दिग्विभागश्च तद्वत्सम्बन्धस्यार्थहेतुत्वात् ॥ १६ ॥

सोमे "**प्राचीनवंशं करोति**" इत्येतद्विधिशेषः "**अभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीं रुद्राः**" इत्ययं श्रुतः । तत्र मनुष्यसंयुक्ते **निवीताधिकरण-**

---

दिग्विभागश्च तद्वत् ।

पूर्वप्रकृतया प्रकरणस्य वाक्यादिविरोधाविरोधचिन्तया सङ्गतिमस्य दर्शयितुमाह-**सोम इति** । तैत्तिरीयशाखायां 'प्राचीनवंशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीं रुद्रा' इति यत्पठितं तदीयावयवभूतं 'अभजन्त' इत्यनुषङ्गसहितं प्राचीमित्यादिभागमेवोदाहरणत्वेन दर्शयति—**प्राचीं देवा इति** । अतश्च 'उदीचीमसुरा' इति भाष्यलिखिते 'रुद्रा' इत्यस्य विरोधेऽपि न क्षतिरिति भावः । वास्तवमर्थवादत्वमेवौदुम्बराधिकरणसिद्धं द्योतयितुं 'प्राचीनवंशं करोति' इति विध्युपन्यासपूर्वोऽस्य तच्छेषत्वोपन्यासः । **प्राचीनाः** प्रागग्राः उपरिवंशा यस्य असाविति व्युत्पत्त्या तथाभूतं पत्नीशालामण्टपं करोतीत्यर्थो विधेर्द्रष्टव्यः । अत्र भाष्यकारादिभिः दिग्विभागोदाहरणे, उत्तराधिकरणवक्ष्यमाणोदाहरणे च विधित्वं अर्थवादत्वं वेति सन्देहपूर्वकं यदा विधिः तदा निवीताधिकरणपूर्वपक्षानुपन्यस्य तद्वदेव तदर्थवादत्वं तद्वदिति सूत्रपदेन निर्दिष्टं स्थापितम् । तत्र दिग्विभागादिसूत्रद्वयस्थतद्वच्छब्देन भाष्यकृन्मते अव्यवधानात् निवीताधिकरणे 'अर्थवादो वा प्रकरणात्, (३-४-८) विधिना चैकवाक्यत्वात्' (३-४-९) इति सिद्धान्तसूत्रद्वयप्रतिपादितनिवीतवाक्यगतार्थवादत्वसिद्धान्तस्यैव परामर्शेन सुहृद्भावमात्रतयोपदेशोपपत्तेः । वार्तिककृन्मतेऽपि च दूरस्थपरामर्शेऽपि तावन्मात्रपरामर्शस्यैव सम्भवात् विधित्वपूर्वपक्षोत्तरत्वमात्रेणैवाभ्यां सूत्राभ्यामर्थवादत्वसिद्धान्तस्थापनस्य कर्तुं शक्यत्वात् निवीताधिकरणपूर्वपक्षपक्षाणामपि परामर्शे प्रयोजनाभावात् न पूर्वपक्षीयपक्षोद्भावनस्यात्र प्रयोजनमित्यभिप्रेत्य तदनुपन्यासेनैव विधित्वमात्रपूर्वपक्षं दर्शयति—**तत्र मनुष्यसंयुक्त इति** । 'प्राचीं देवाः' इत्यादिपुराकल्पसरूपेणार्थवादेन यस्माद्देवाः प्राचीं पितरश्च दक्षिणामभजन्त अतो देवैः प्रागभिमुखत्वरूपं पितृभिश्च दक्षिणाभिमुखत्वरूपं भजनं कर्तव्यमिति विधिकल्पनाया देवादिवाक्येष्वसम्भवात् **मनुष्यसंयुक्त** इत्युक्तम् । अत एव निवीतादिवाक्येषु आख्याताभावात् स्तावकत्वसम्भवेऽपि इह 'अभजन्त' इत्यनुषक्तक्रियापदे लङर्थभूतत्वाविवक्षया तस्यैव विपरिणामेन विधायकत्वसम्भवादस्तु विधित्वमिति विशेषाशङ्कापनोदाय भाष्यमते पुनरारम्भः ।

**वदौदुम्बराधिकरणवच्च विधित्वं निरस्तम**पि पूर्वाधिकरणवन्मनुष्यकर्तव्य**वैदिककर्मणि ताव- द्दिगन्तरस्यैव** सामान्यविशेषादिवचनेन **प्राप्ततया प्रतीच्या अप्राप्तेर्लौकिके च कर्मणि प्रतीच्या नित्यप्राप्त्यभावात् विधित्वं विधिकल्पकत्वं वेति प्राप्ते—**

**इह प्रतीच्या मनुष्यसम्बन्धमात्रोपादानेऽपि कर्मविशेषानुपादनात्सर्वत्र विधानस्य त्वयैव निरस्तत्वाद्यस्यामेव क्रियाव्यक्तौ प्रतीचीदिगभिमुखत्वं लोके** यदृच्छया **सिद्धं तादृशक्रियागतमेव मनुष्यप्रतीचीसम्बन्धं गृहीत्वा स्तुत्युपपत्तेर्नातिरिक्त- विध्यन्तरकल्पनं प्रमाणवत् । 'उपरि हि' इत्यत्र तु दैवाग्निहोत्रत्वावच्छेदेनोपरिभाव- श्रवणात्तस्य चाप्राप्तत्वेन विध्यन्तरकल्पनया दैवाग्निहोत्राङ्गसमिद्धारणा**नुवादे**नोपरिभाव- विधिः । अनुमितवाक्यत्वाच्च न विशिष्टोद्देश इति वैषम्यम् ॥ ६ ॥**

---

एवं निवीताधिकरणेन आतिदेशिकीं सङ्गतिं सूचयित्वा वार्तिककारमते पूर्वाधिकरणेन आपवादिकीं अनन्तरसङ्गतिं दर्शयन्नेव विधित्वं साधयति—**पूर्वाधिकरणवदिति** । ततश्च एतत्सूत्रद्वयस्थचशब्दार्थकत्वकल्पनया तुशब्दसूचितनिरसनीयपक्षस्य पूर्वपक्षत्वात् पूर्वाधिकरण- सिद्धान्तेनैव तस्योपक्रमादपवादोऽयमित्यर्थः । प्राप्तिसत्वे प्रत्यक्षविधिसरूपश्रवणस्य अर्थवादत्व- कल्पनात्, अप्राप्तौ च अर्थवादसरूपस्यापि उपरिहीत्यस्य विधित्वकल्पनात् इहापि पुराकल्पार्थ- वादस्य विधित्वकल्पकत्वमप्राप्तावेव युज्यत इत्यभिप्रेत्याप्राप्तिमिह दर्शयति—**मनुष्यकर्तव्येति** । **सामान्येति** ।

यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु ।
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्याऽपराजिता ॥

इति सामान्यवचनात् 'प्रागपवर्गाण्युदगपवर्गाणि वा' इति विशेषवचनाच्च दिगन्तरप्राप्ते- रित्यर्थः । **सर्वत्रेति** । वैदिककर्ममात्रे इत्यर्थः । **यदृच्छयेति** । यत्रैव पूर्वाह्ण- सौकर्यात् पृष्ठत आदित्यं कृत्वा सुखं व्याप्रियन्ते मनुष्या इति यदृच्छया, अथवा सायङ्काली- नार्घ्यादौ विध्यन्तरेण वा प्रतीचीप्राप्तिः तत्र क्रियागतमनुष्यप्रतीचीसम्बन्धानुवाद इत्यर्थः । **धारणानुवादेनेति** । 'स्रुग्दण्डे समिधमुपसङ्गृह्य' इति वचनेनानूद्यमानार्थस्य सर्वस्य प्राप्तत्वात् अनेनोपरिभावनियमस्य विधिरित्यर्थः । आदौ निवीताधिकरणवद्विधित्वनिरासपूर्वकमुक्तेऽर्थ- वादत्वे विधित्वपूर्वपक्षेणापोदिते सति विधित्वखण्डनेन अपवादाभावे उत्सर्गस्य प्रवृत्तिरिति न्यायेन सिद्धमेवार्थवादत्वं निवीतादिवाक्यवदित्यभिप्रेत्य स्पष्टत्वान्न सिद्धान्तोपसंहारः कृतः ।

---

## (७)—परुषिदितपूर्णघृतविदग्धं च तद्वत् ॥ १७ ॥

दर्शपूर्णमासयोः "पर्व प्रति लुनाति" इत्यादिविधेः "यत्परुषि दितम् तद्देवानाम्। यदन्तरा तन्मनुष्याणाम्। यत्समूलम् तत्पितृणाम्" इति शेषः। तथा सोमे "यत्पूर्णं तन्मनुष्याणां यदुपर्यर्धस्तद्देवानाम्" इति "उपरि बिलाद्धरति" इत्यस्य विधेः। तथा तत्रैव "नवनीतेनाभ्यङ्क्ते" इत्यस्य "घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणाम्" इति। तथा दर्शपूर्णमासयोः 'अविदहता श्रपतंकृत्यः' इति विधेः 'यो विदग्धस्स

---

### परुषि दितपूर्णघृतविदग्धं च तद्वत्।

पूर्वाधिकरणोदाहरणेषु षष्ठ्यभावेऽपि आख्यातसत्वेन निवीतवैलक्षण्यात् विशेषाशङ्कोदय-निराकरणाय पृथगधिकरणारम्भेऽपि इह वक्ष्यमाणोदाहरणेषु षष्ठ्याख्यातसदसद्भावाभ्यां निवीत-वैलक्षण्याभावात् न पृथगारम्भो युक्तः तथापि निवीतमिति पदोपात्तनिव्यानक्रियाया विधाने स्वतन्त्रफलकल्पनापत्तेः, इह क्लृप्तफलकलौकिकतत्तल्लवनादिक्रियास्वेवान्तरात्वादिगुणानां नियमेन विधाने नियमादृष्टमात्रकल्पनेऽपि निवीतवदत्यन्ताप्राप्तक्रियाजन्यस्वतन्त्रादृष्टफलान्तरकल्पनाया अप्रसक्तेः भवतु विधित्वमिति उदेत्येवाधिकाशङ्का। तामपाकर्तुं पृथगारम्भो युक्त एवेति प्राचीनो-क्ताधिकाशङ्कां वक्ष्यमाणरीत्याऽयुक्तामिवेत्यप्रदर्श्यैव विषयवाक्यमुदाहरति—**दर्शपूर्णेति**। **परुषि**, पर्वणि, **अन्तरा** अपर्वणि, **दितं** छिन्नमित्यर्थः। **पूर्ण** घृतादिद्रव्यविषयमानक्रियायां पूरितं पात्रं पूर्णमित्यर्थः। एतच्च चातुर्मास्यान्तर्गतमहापितृयज्ञे 'पितृभ्योऽग्निष्वात्तेभ्यो मन्थं' इति विहितस्य मन्थस्य 'अर्ध उपमन्थति अर्धो हि पितृणाम्' इति विधेः यत्पूर्णं तन्मनुष्याणां, उपर्यर्धो देवानां, अधः पितृणां' इति यः शेषः तस्याप्युपलक्षणम्। तथा च पात्रस्याधोभागरू-पेणार्धेन परिमिते अभिवान्याया दुग्धे यवपिष्टं प्रक्षिप्य मन्थः कर्तव्यः। देवानान्तु पात्रस्यो-परितनार्धभागरूपेण परिमितं द्रव्यं भवतीत्यर्थः। **मस्तु** दधिभवं मण्डम्। **निष्पक्वमिति**। निष्पक्वशब्दार्थत्वेन वार्तिके विलीननवनीतमुक्तम्। **अधिकरणमालायां** तु शिरसि प्रक्षेप्तु-मीषद्विलीनं नवनीतं तक्रं वेत्यपि दर्शितम्। 'यो विदग्ध' इत्येकमेव सूत्रानुरोधाल्लिखितमपि समानन्यायात् 'योऽश्रृतस्स रौद्र' इत्यस्याप्युपलक्षणं भवितुमर्हतीत्यन्यैर्लिखितमपि रौद्रवाक्यं न लिखितम्, लाघवानुरोधात्। तत्र देवादिवाक्ययोः यद्देवानां पितृणां च दितं तत्पर्वणि समूलं चेत्येवं विधाने विशिष्टोद्देशापत्तेः देवपित्रोः कर्तृत्वेन प्राप्त्यभावेन तदनुवादासम्भवान्न विधित्व-

नैर्ऋतः" इति । तत्र मनुष्यसंयुक्ते क्रियाविशेषस्य लवनादेरुपादानात् तत्र च लवनत्वाद्यवच्छेदेनान्तरात्वादिगुणानां नित्यप्राप्त्यभावाद्विध्यन्तरकल्पनया तत्र तद्विधानम्। न च फलकल्पना। "तद्यथैवादौ मनुष्यराज आगते" इत्यादौ "नयनं दक्षिणं दीक्षितः पूर्वमाङ्क्ते इत्यादौ च शतशस्तस्या अङ्गीकारात्। अन्यथा तत्तत्स्मृतीनां तत्तदर्थवादोन्नीतविधिमूलकत्वानुपपत्तेः। "यो विदग्धः" इत्यत्र तु विदग्धनिर्ऋतिदेवतोभयसम्बन्धस्य प्राप्तत्वाद्विध्यन्तरकल्पनायां नैव किञ्चिद्बाधकमिति प्राप्ते—

---

पूर्वपक्षः सिद्ध्यतीत्यभिप्रेत्याह—**अत्र मनुष्यसंयुक्त इति**। तथा च मनुष्यसंयुक्तवाक्यपूर्वोत्तरवाक्यानि देवपितृविषयाणि अर्थवाद इत्यर्थः। **उपादानादिति**। दितमित्यस्यानुषङ्गादिति शेषः। **तद्यथैवेति**। "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्" इति स्मृतिमूलत्वेन 'तद्यथैवादौ मनुष्यराज आगतेऽन्यस्मिन्नुक्षाणं वेहतं वा क्षदन्ते' इति सिद्धवदनुवादकल्पितविध्यङ्गीकारे 'सव्यं हि मनुष्या' इत्याद्यर्थवादकल्प्ये च तस्मिन् फलकल्पनाया अङ्गीकारादित्यर्थः। अत्र तु नियमादृष्टकल्पनं न तु 'तद्यथैव' इति कल्पितविधिविधेयस्य अत्यन्ताप्राप्तादृष्टकल्पनवत् इह फलकल्पनमस्तीति वैषम्यं शतश इति पदेन सूचितम्। तत्तदर्थवादोन्नीतस्मृतिमूलभूतविधिकल्पने फलान्तरकल्पनाया अङ्गीकारात्। विदग्धवाक्येऽपि तत्कल्पने बाधकाभावेन अन्तरावाक्ये नियमाभावकृतवैषम्ये सत्यपि विधित्वं युक्तमेवेत्याह—**यो विदग्ध इति**। अन्तरावाक्ये विधेयवैषम्यं तुशब्देन सूचितम्। अत्र प्रकाशकृता 'यो विदग्ध' इति वाक्ये विदग्धत्वकर्तव्यताविधिप्रदर्शनपरवार्तिकाशयं वर्णयता यच्छब्दस्याव्यवधानात् विदग्धपदेनान्वये तस्योद्देश्यत्वात् तदुद्देशेनाभ्युदितेष्टिवत् प्राकृतदेवतासम्बन्धबाधेन इह निर्ऋतिदेवतासम्बन्धान्तरस्य प्रायश्चित्तरूपतया विधौ अदृष्टफलान्तरकल्पनापत्तेः। यच्छब्दस्य व्यवहितान्वयकल्पनया 'यो नैर्ऋत' इत्युद्देश्यभावकल्पनया निर्ऋतिदेवताकक्लृप्तफलकयागसाधनद्रव्यस्य पुरोडाशादेः पक्षप्राप्तेषद्ग्धत्वेषच्छृतत्वरूपगुणनियमविधानात् विदग्धत्वाशृतत्वे कर्तव्ये इति वार्तिकोक्तेरित्युक्तम्। न्यायसुधाकृता तु उत्पत्तिशिष्टाग्न्यादिदेवताबाधप्रसङ्गादपि यच्छब्दस्य व्यवहितान्वय इत्याशयो वर्णितः तदयुक्तमिति सूचयितु—**विदग्धनिर्ऋतिदेवतोभयसम्बन्धस्येति**। संमुग्धोक्तौ प्रथमतो विदग्धपदस्य नैर्ऋतपदत्यागेन निर्ऋतिदेवतापदस्य चोपादानं कृतम्। **तस्यायमर्थः**—न तावत् फलकल्पनाभिया उत्पत्तिशिष्टाग्न्यादिदेवताबाधभिया वा वाक्यरूपयच्छब्दसमभिव्याहारबाधो युक्तः, तद्द्वयस्यौत्तरकालिकत्वेनादोषत्वात्। फलकल्पनायाश्च 'तद्यथैव' इत्याद्यर्थवादकल्प्ये उपरिहीत्याद्यर्थवादकल्प्ये च विधौ सर्वत्र स्वीकारात्। इतरथा अभ्युदितेष्टिवाक्येऽपि

तत्कल्पनाभिया 'यस्याग्नये दाते पुरोडाशादि पशुकामेष्ट्यां निर्वपेत् स चन्द्राभ्युदयदिने प्रारम्भं कुर्यात् इत्यर्थापत्तेः। यदि तु पाठादभ्युदितेष्टिप्रायश्चित्तं दर्शपूर्णमासाङ्गमिति न स्वतन्त्र-फलकल्पनम्, इहापि तर्हि पुरोडाशेषद्दाहाश्रृतत्वयोर्निमित्तयोः विधीयमाननिर्ऋतिरुद्रदेवता–सम्बन्धकल्प्ययागद्वयं दर्शपूर्णमासाङ्गमिति तुल्यमेव। अतो भवन्मते प्रकरणस्य अतिदेश–प्राप्ताविदाहपूर्वकश्रपणस्य बाधो यच्छब्दसमभिव्याहारबाधश्चेति दोषाः। तदपेक्षया औत्तरकालि-कफलकल्पनदेवताबाधस्वीकारे न किञ्चिद्बाधकमिति 'यो विदग्धो यश्चाश्रृतः तदुद्देशेन निर्ऋति-देवतासम्बन्धो विधीयते पुरोडाशप्रकरणाच्च तद्विशेषलाभः न तु नैर्ऋतपुरोडाशस्योद्देश्यत्वम्।

**वस्तुतस्तु** दग्धाश्रृतभागावशिष्टपुरोडाशस्यापि पूर्वदेवतासम्बन्धोपपत्तेः अपनयनविध्यन्त-राभावाच्च इह न पूर्वदेवताबाधेनापूर्वनिर्ऋतिरुद्रदेवतयोः समग्रपुरोडाशे विधानम्; अपितु उत्पत्ति-शिष्टनैर्ऋतपुरोडाशत्वाविरोधेन ईषद्दग्धाश्रृतविधानस्य भवताप्यङ्गीकारात् तादृशपुरोडाशभाग-त्वेन विधानवत् तादृशस्यैव भागस्य प्रतिपत्त्यपेक्षया अयं यागः प्रतिपत्तिकर्मरूप एवान्यो लोहित-निरसनयाग इव विधीयत इति क्व पूर्वदेवताबाधप्रसक्तिः? संपूर्णदाहे तु सुतरामिति **नैव किञ्चि–द्बाधकमित्यनेनोक्तम्**। अस्मिंश्च पक्षे पूर्वपक्षेऽपि प्रतिपत्तिनियमादृष्टमात्रकल्पनेऽपि प्रतिपत्त्यंशे दृष्टार्थत्वमेव लभ्यते। अत एवेह फलकल्पनाभावात् निवीतवैलक्षण्येन विशेषाशङ्कया अधि-**करणान्तररचनमपि प्राचां** निरस्तम्। अप्राप्तार्थत्वेन विधित्वस्वीकारे फलकल्पनाभावहेतोर-प्रयोजकत्वात् फलकल्पनायामपि पूर्वोदाहृतार्थवादेषु[1] विधित्वस्वीकाराच्च। अविघ्नपरिसमाप्ति-प्रतिबन्धकवैयग्र्यापादकशीतादिवारकत्वेन परिकरबन्धपक्षे निवीतेऽपि नियमविधिस्वीकारात नियमादृष्टमात्रकल्पनेन तत्रापि फलान्तरकल्पनाभावात् तद्वैलक्षण्योपपादनायोगाच्च। अतो दिग्विभागोदाहरणे उपरिहीत्यधिकरणसिद्धान्तेन पूर्वपक्षे कृते तदुत्तरपक्षत्वेन विध्यश्रवणात्, विधिशक्तिप्रतिबन्धकभूतार्थवाच्याख्यातयोगिपुराकल्पार्थवादत्वेन स्तावकत्वोपपत्त्या सिद्धान्ते च स्थिरीकृते, यत्र पुनः तादृशार्थवादशून्यत्वं तत्र तर्हि 'उपरिहि' इतिवत् विधिकल्पनमस्तु इत्येताव-न्मात्रविशेषाशङ्कां तुशब्दार्थकचशब्दनिरसनीयत्वेन सूचितां निराकर्तुं अपवादरूपतयाऽऽरम्भो युक्तः। अत एव सिद्धान्ते सौत्रतद्वच्छब्देनाऽव्यवधानात दिग्विभागस्यैव ग्रहणात् दिग्विभाग-वाक्येष्विव एष्वपि वाक्येषु **विधिस्तु धारणेऽपूर्वत्वात्** इत्यधिकरणप्राप्तविधित्वस्यापवाद इत्ये-वार्थः, न तु व्यवहितनिवीताधिकरणग्रहणमिति पूर्वापवादतयाऽऽरम्भणीययोः दिग्विभागप्ररूपि-दिताधिकरणयोः विशेषाशङ्काहेतुकारम्भकथने प्रयोजनाभावस्य पूर्वाधिकरणे पूर्वाधिकरणवदित्यु-

---

1. A. र्थादेव विधि

"परुषि दितम्" इत्यत्र दितपदस्य वैदिकलवनपरस्य 'अन्तरा' इत्यत्रानुषङ्गेण तदर्थपरत्वे विकल्पप्रसङ्गात् अर्थान्तरपरत्वे वैरूप्यापत्तेरनुषङ्गायोगेन अध्याहारावश्यंभावात्, "यदन्तरा" इति यच्छब्दयोगेन च लोकप्राप्तयादृच्छिकान्तरालवनस्यैवानुद्दिश्यैव मनुष्यसम्बन्धस्य स्तुत्यर्थमुपदेशप्रतीतेर्लौकिकलवनत्वावच्छिन्ने अन्तरात्वस्याप्रतीतेस्तस्य च तद्व्यक्तौ नित्यप्राप्त्या न विध्यन्तरकल्पनम्। "यत्तं दक्षिणं दीक्षितः पूर्वमाङ्क्ते सव्यं हि मनुष्या आञ्जते" इत्यत्र तु मनुष्यनेत्राञ्जनत्वावच्छेदेनैव सव्यपूर्वकत्वस्य स्तुत्यर्थमुपादानात्तादृशस्य च नित्यप्राप्त्यभावेन विधिकल्पकत्वमिति विशेषः। यादृशस्य हि स्तुत्यर्थमुपादानं तादृशस्य नित्यवदप्राप्तौ विधिकल्पनं नान्यत्र।

अत एव—"यो विदग्धः" इत्यादौ विदग्धत्वनिन्दार्थं तस्य कर्मानर्हत्वफलकनिर्ऋतिसम्बन्धमात्रस्योत्प्रेक्षाविषयया सङ्कीर्तनात् निर्ऋतिसम्बन्धस्य "तं यज्ञं निर्ऋति-

---

क्त्या सूचनात् अधिकरणद्वयेऽपि विशेषाशङ्कायाः प्रदर्शनं नैव पूज्यपादैः कृतमित्यलं विस्तरेण। वैदिकलवनपरस्येति। देवानामिति वाक्यशेषे देवानां कर्तृत्वाभावेन यादृच्छिकदेवकर्तृकलवनानुवादासम्भवात् अगत्या देवप्रधानकर्मपरत्वावगतेः तदनुरोधेन दितपदस्य तत्रत्यस्य वैदिकलवनपरत्वमित्यर्थः। विकल्पेति। पर्वान्तरादेशयोरिति शेषः। अर्थान्तरेति। वैदिकापेक्षयाऽर्थान्तरं लौकिकलवनरूपमित्यर्थः। अध्याहारेति। लौकिकपदस्येति शेषः। तथा च लौकिकलवनोपस्थितिस्सुलभेत्यर्थः। यादृच्छिकेति। मूलपर्वणोरन्तराभागस्य कोमलत्वात् तच्छेदनं मनुष्याणां सौकर्येण प्राप्तमिति यादृच्छिकमित्यर्थः। अत्र च पूर्णनिष्पक्कवाक्ययोः अध्याहारयच्छब्दयोरभावात् सौकर्यान्माने पूर्णत्वस्य शिरसि निहितनिष्पक्कस्य सुखकरत्वाच्च स्वतस्सिद्धयादृच्छिकप्राप्तिमादायैवानुवादकत्वं वक्तव्यमिति यच्छब्दादिसत्वं अन्वाचययुक्तिमात्रम्। अनुवादकत्वसाधकन्तु यादृच्छिकप्राप्तिरेवेति यादृच्छिकपदेन सूचितम्। सव्यपूर्वकत्वस्येति। अन्तरावाक्ये यत्तच्छब्दयोरुपादानात् यच्छब्दस्य तच्छब्दावधि प्रसिद्धार्थकत्वद्योतनेन यदन्तरा प्रसिद्धं सौकर्येण लवनं तन्मनुष्याणां मलिनानामित्येवं निन्दोन्नीतव्यतिरेकेण पर्वलवनस्तुत्यर्थं मनुष्यसम्बन्धोऽनूद्यते। तद्व्यक्तौ चान्तरात्वं नित्यप्राप्तमेव भवति। इह तु 'यत्सव्यमाञ्जते तन्मनुष्या' इत्येवं यत्तच्छब्दयोरभावात् दीक्षितस्यापि मनुष्यत्वेन व्यतिरेकविधया मनुष्यसम्बन्धस्य स्तुत्यर्थत्वेनोपादानायोगात् मनुष्यनेत्राञ्जनं लोके यतस्सव्यपूर्वकं प्रसिद्धं अतो दीक्षितस्य नेत्राञ्जनं वैदिककर्मकर्तृत्वात् दक्षिणपूर्वकमेवेत्येवं व्यतिरेकविधयैव वामाभिधेयसव्यपूर्वकत्वस्य स्तुत्यर्थमुपादानात् मनुष्यनेत्राञ्जनमात्रे सव्यपूर्वकत्वस्य नित्यप्राप्त्यभाव इत्यर्थः। उत्प्रेक्षाविधयेति। अविद्यमानस्यैवाहार्यारोपेणेत्यर्थः। तं यज्ञमिति। "यस्य पुरोडाशः

गृह्णाति" इत्यादौ कर्मानर्हत्वप्रयोजकत्वावगतेरुत्प्रेक्षायां चोत्प्रेक्षितार्थस्य प्राप्त्यभावेऽपि क्षतिविरहात् निर्ऋते रक्षोऽधिपतित्वेन देवानर्हभक्षकत्वस्य प्रमाणान्तरप्राप्तत्वाच्च न विधिकल्पकत्वम् । न ह्ययं देवतातद्धितः । येन तस्या अप्राप्तत्वाद्विधिः कल्प्येत । निन्दार्थे सम्बन्धसामान्येनापि तदुपपत्तेः । अतो नैते विध्यन्तरकल्पकाः ॥ ७ ॥

---

क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति तत्संस्थाप्यान्यद्धविस्तद्दैवत्यं निर्वपेत्" इति सामान्यवचनान्तर इत्यर्थः । अत एव तादृशानां विधिसरूपाणामर्थवादत्वं सत्याञ्जनार्थवादस्य उपरिहीत्येतत्समानन्यायत्वात् तदधिकरणविषयत्वं भवत्येवेति वैलक्षण्यमभिप्रेत्य विध्यनुवादचिन्ताप्रवर्तक-समाप्तिं द्योतयितुं सिद्धान्तमुपसंहरति—**अतो नैते इति** । परुषि दितमिति सौत्रपदेन वैदिक-वाक्यस्यैवानुकरणात न लुङ् कृतः । अत्र च **परुषि दितपदस्य** अन्तरासमूलवाक्योपलक्षणत्वं **पूर्णपदस्योपर्यर्धवाक्योपलक्षणत्वं**, घृतपदस्य मस्तुनिष्पक्ववाक्योपलक्षणत्वं, विदग्धपदस्य अश्रुतवा-क्योपलक्षणत्वं चाङ्गीकृत्य सर्वेषामेव वाक्यानां सङ्ग्रहसूचनं **प्राचाम्**; तद्यद्यपि तत्तद्विधिविधे-यानां सर्वेषां निवीतवन्मनुष्यधर्मत्वादिविचारविषयत्वासम्भवेन[1] इहाविषयत्वाद्व्यर्थमेव; तथापि तद्वदिह विध्यर्थवादविचारस्यापि करणात् विदग्धवाक्ये च तावन्मात्रविचारविषयत्वमिव परुषि दितादिवाक्येष्वपि तावन्मात्रविचारविषयत्वं सम्भवतीत्यभिप्रायेण ज्ञेयम् । **पूज्यपादैस्तु** विदग्धवाक्यसाधारण्यलाभाय मनुष्यधर्मत्वादिपक्षाणामिहानुपन्यासात विध्यर्थवादविचारमात्रेणापि निवीताद्यतिदेशोपपत्तेः विधित्वमात्रेणैव पूर्वपक्षकरणेऽपि देवादिवाक्येषु पूर्वोपपादितविशिष्टोद्देश-प्रयुक्तवाक्यभेदापत्तिभयेन विधित्वपूर्वपक्षासम्भवेन मनुष्यसंयुक्तेष्वेव तद्विचारकरणात् परुषि-दितघृतपदे एव केवलं स्वार्थं विहाय स्वसम्बन्धिवाक्योपात्तान्तरात्वनिष्पक्वयोरुपलक्षके । विदग्ध-पदमेव त्वेकं अजहत्स्वार्थं सत् अश्रुतवाक्योपलक्षकमिति द्रष्टव्यम् ।

अत एव देवपितृवाक्योपात्तपरुषिदितघृतमस्त्वादिप्राप्त्युपपादनक्लेशोऽपि न कृतः । मनुष्यादिवाक्येषु तु यादृच्छिकतयैव अन्तरापूर्णनिष्पक्वानां प्राप्तिस्तु प्रागेव सूचिता । **वस्तुतस्तु** पित्रादिवाक्येषु उपरिहीति वाक्ये अनुमितवाक्यत्वेन विशिष्टोद्देशप्रयुक्तवाक्यभेदाप्रसरवत् वाक्य-भेदानापत्तेः वार्तिकोपपादितरीत्या विध्यर्थवादविचारस्य प्राधान्येनात्र करणे सुतरां कर्तव्यतौचित्यात् सर्वोपलक्षकत्वमेव सौत्रतत्तत्पदानां युक्तमिति स्थिते अधिकरणारम्भे अत्र 'मनुष्यसंयुक्त' इत्युक्तिः मनुष्यसम्बन्धे रौद्रे च सन्देह इति यथाश्रुतभाष्यानुसारेण त्वरातिशयादेव द्रष्टव्या । **यत्तु** विदग्धा-

---

1. A. मनुष्यधर्मत्वादिविचारविषयत्वेन

(८)–अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादस्स्यात् ॥ १८ ॥ विधिर्वा संयोगान्तरात् ॥ १९ ॥

तत्तत्क्रतुप्रकरणस्था विधिप्रतिषेधविशेषाः "समिधो यजति" "नानृतं वदेत्" इत्यादयः

---

श्रुतवाक्ययोः कृष्णवर्णनिर्ऋतिशब्दार्थपृथिवीविकारत्वात् कारणगुणक्रमेण कृष्णत्वं अश्रुते च रौद्रत्वमपि अक्षरवर्णसामान्यात् निर्ब्रूयादिति रोगदत्वमर्थप्राप्तमेवेत्येवं भाष्यादिषु प्राप्त्युपपादनं कृतं तत्र पूर्वोक्तरीत्या यथाश्रुतार्थग्रहणमात्रेणापि विध्यपेक्षितनिन्दोपपत्तेः व्यर्थमेव क्लेशकरणमित्युपेक्षितं **पूज्यपादैः**। प्रयोजनं क्त्वाचिन्तात्वान्न वाच्यम् ।

---

अकर्मक्रतुसंयुक्तम् ।

अत्र च प्रकरणेन श्रुत्याःविरोधाविरोधविचारस्य प्रस्तुतत्वात् सुब्विभक्तिश्रुतेः प्रकरणेन सह तद्विचारे कृते तिङ्विभक्त्या सह प्रकरणस्य विरोधाविरोधविचारस्य इह करिष्यमाणस्य क्रतुपुरुषोभयोपकारकतया प्रसक्तक्रियानिषेधेष्वपि अनारभ्याधीतेषु तथाभूतविधिष्वपि चासम्भवात् न तेषामुदाहरणत्वमिति सूचयत् तदुदाहरणताव्यावर्तकविशेषणयुक्तं उदाहरणं दर्शयति— **तत्तत्क्रतुप्रकरणस्था इति**। तत्तत्क्रतुमध्यप्रसक्तनिषेधकाः तत्तत्क्रतुप्रकरणावगतफलसम्बन्धा इत्यर्थः । तेन 'यो ब्राह्मणायावगुरेत्' इति निषेधस्य कृत्यातनाफलतया व्यावृत्तिः। तथा मलवद्वाससः संवादनिषेधस्य 'तामुपरुध्य यजेत' इति विधिना तस्या उपरोधविधानेन क्रतुमध्याप्रसक्तनिषेधकत्वाद्व्यावृत्तिः। अत्र च प्राचीनैः **अकर्मक्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यादिति** पूर्वपक्षसूत्रानुरोधात् निषेधकैमर्थ्यचिन्तैव मुख्यत्वेन कृता । सा चैवं पदार्थवाक्यार्थसङ्घैरुपकल्पिता—

'विशिष्टां भावनां प्राप्य प्रवृत्तिर्विधिनिषेधयोः', इति न्यायेन निषेधस्य त्र्यंशभावनाविषयस्य निषेध्ये अनिष्टहेतुत्वज्ञापकत्वात् इष्टविपरीतस्य चानिष्टत्वेन आत्मोपकारेच्छया निषेध्यक्रियायां प्रवृत्तौ आत्मापका[1]रस्यानिष्टत्वात् । क्रतूपकारेच्छया तु प्रवृत्तौ क्रत्वपकारस्यानिष्टत्वात् । पुरुषोपकारार्थक्रियावाचिना शब्देन उपकारार्थिया पुरुषमुपस्थापयता पुरुषापकारस्यैवानिष्टतयो–

---

1. आत्मोपकार

पस्थापनेन क्रत्वपकारस्य शब्दस्पर्शायोगात् आत्मोपकारार्थनिषेधस्य क्रत्वपकाराख्यानिष्टहेतुत्वकल्पनेऽपि निवर्तयितुमशक्यत्वात् पुरुषार्थक्रियानिषेधेन निवृत्तिसिद्ध्यै क्रत्वर्थायाः क्रत्वपकाराख्यानिष्टहेतुत्वज्ञापनेऽपि हेत्वाकाङ्क्षानुपपत्तेः। एवमेव क्रत्वर्थक्रियानिषेधेष्वपि पुरुषापकाराख्यानिष्टहेतुत्वज्ञापनासंभवात् तत्तदनूद्यमानक्रियाभाव्यभूतेष्टविपरीतानिष्टबोधकत्वानुरोधेन निषेध्यक्रियैदमर्थ्याधीनैदमर्थ्यस्यावश्यकत्वात् (निषेधैदमर्थ्याधीनेति) तत्सिद्ध्यर्थं क्रियागतैदमर्थ्यचिन्तायां अमुख्यतया कर्तव्यायां तथाभूतविधिविधेयानामपि उदाहरणत्वं, न तु मुख्यचिन्तायाम्। अत एव 'यदर्था क्रिया तदर्थो निषेधः' इत्यर्थसिद्धनियमानुरोधेन सम्भवत्पुरुषार्थत्वक्रत्वर्थत्वक्रियाविषयाणामेव निषेधानां सन्दिग्धक्रियाविषयत्वेन एकतरार्थत्वनिश्चयाय तदधिकरणारम्भात्। सम्भवन्निषेधान्तरविषयताकक्रियाविषयकाणामेवानृतवदनादिनिषेधानामुदाहरणत्वम्। अत एव सौत्रमनुवादपदमुपपद्यते; अनृतवदनस्यैव पुरुषोपकारकत्वेन क्रतूपकारकत्वेन च सम्भवत्प्रातिकस्य क्रतुमध्यपठितनिषेधातिरिक्तसामान्यपुरुषार्थनिषेधगोचरत्वसम्भवात्। अतो निषेधानां मुख्यचिन्ताविषयत्वं विधीनां तु तत्सिद्ध्यर्थचिन्ताविषयत्वमिति प्रतिपादितम्। तदेतत् ऐन्द्रजालिकमात्रमित्यभिप्रेत्य यदर्था क्रियेति नियममूलतया पूर्वसिद्धान्तपक्षप्रतिपादने प्रयोजनाभावात् प्रबलया श्रुत्या पुरुषार्थत्वम्; तदविरोधिना प्रकरणेन क्रत्वर्थत्वमित्येवंविधविचारस्यैव मुख्यत्वोपपत्तेः; तस्य च यत्र संभवस्तेषां सर्वेषामेव मुख्यतयोदाहरणत्वोपपत्तेः निषेधसमकक्षतया विधीनप्युदाहरति—**विधिप्रतिषेधा इति। अयं भावः।** निषेध्यक्रियाया आत्मोपकारार्थाया निषेधेन इष्टविपरीतात्मापकाराख्यानिष्टहेतुत्वज्ञापनेऽपि क्रतुवैगुण्यप्रयुक्तक्रतुजन्यफलानुत्पत्तिरूपात्मापकारस्यापि इष्टविपरीततया तज्जनकत्वबोधनेऽपि बाधकाभावात् नियमेन पुरुषगतप्रत्यवायस्यैव वैपरीत्येनानिष्टत्वकल्पने मानाभावः। अत एव स्त्र्युपगमनिषेधानां क्रत्वर्थत्वाङ्गीकारे ईदृशमेवेष्टवैपरीत्यं स्वीकर्तव्यम्। स्वीकृतं च यदर्था क्रिया तदर्थः प्रतिषेध इति नियमे

> स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः।
> प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयात् ॥

इति व्याकरणाधिकरणवार्तिकदर्शितव्यभिचाराशङ्कोत्तरत्वेन न्यायसुधायाम्। अतः पुरुषार्थतया प्रसक्तक्रियाविषयनिषेधानामपि क्रतुवैगुण्यरूपानिष्टहेतुत्वाक्षेपकत्वेऽपि परम्परया पुरुषार्थत्वाक्षतेः क्रत्वर्थत्वसिद्धान्तोपपत्तिसम्भवात् पुरुषार्थत्वादिपूर्वपक्षसिद्ध्यै प्रकरणोपस्थितविलम्बितक्रतुवैगुण्यापेक्षया समानाभिधायकाख्यातश्रुत्यवगतपुरुषगतप्रत्यवायजनकत्वस्यैवाक्षेपेण भवतु पुरुषार्थत्व-

सित्येवं पूर्वपक्षे श्रुतिरेव क्रतूपस्थापकप्रकरणबाधिका मुख्यहेतुर्वाच्या। सिद्धान्ते चाख्यातश्रुत्या पुरुषाननिधानमेव मुख्यहेतुः। क्वचिदेव तूभयथापि सम्भवत्प्रासिकानृतवदनादिनिषेधेषु पुरुषार्थत्वक्रत्वर्थत्वपक्षयोः नियमोऽप्यौत्सर्गिकोऽस्तु साधक इत्यन्वाचययुक्तिमात्रत्वेन तदुपन्यसनम्। अत एव दीक्षितस्य दानहोमपाकप्रतिषेध इति सूत्रे दशमे स्त्र्युपायमांसभक्षणनिषेधेषु व्यभिचारात् यदर्था क्रिया तदर्थः प्रतिषेध इति कर्त्रधिकरण उक्तम्। तदौत्सर्गिकमिति तन्त्ररत्नोक्तमपि सङ्गच्छते। एवञ्च तादृशस्य मुख्यहेतोः केषुचिद्विधिषु स्त्र्युपगमननिषेधेषु च सत्वादविशिष्टमेव तेषामप्युदाहरणत्वम्।

यद्यपि स्त्रीकामाभावे अनृतौ गमनस्य पुरुषार्थनिषेधेनैव निषिद्धत्वात्, स्त्रीकामनायां ऋतौ च विहितत्वात् निषेधानुपपत्तेः नास्य निषेधत्वमेव सम्भवति, तथापि गुणभूतऋत्वादिकालानुरोधेन प्रधानभूतगमनावृत्तेरन्याय्यत्वात् एकस्मिन् ऋतुकाले षोडशाहान्तर्गते न्यायतो गमनप्राप्तौ यज्ञीयदिने गमनस्य इच्छया प्राप्तस्य निषेधकरणेन निषेधोपपत्तेः दशमे वक्ष्यमाणत्वेन न बाधकम्। न चानया रीत्या क्रतूपकारकतया पुरुषोपकारकतया वा प्रसक्तक्रियानिषेधानां परम्परया पुरुषार्थत्वोपपादने पुरुषार्थत्वक्रत्वर्थत्वयोः सत्प्रतिपक्षत्वाभावेनाविरुद्धत्वात् कथमेतदधिकरणे पुरुषार्थत्वनिरसनेन क्रत्वर्थत्वसाधनमिति वाच्यम्। परम्परया सर्वत्र पुरुषार्थपर्यवसायित्वेऽपि वक्ष्यमाणलक्षणलक्षितगौणपुरुषार्थत्वक्रत्वर्थत्वविषयकस्यैवेह विचारस्य करणेन पुरुषगतप्रत्यवायजनकत्वक्रतुवैगुण्यजनकत्वयोः स्वरूपेण विरोधसम्भवेन तदुपपत्तेः।

अत एव न्यायसुधाकृताऽनृतवदनादीनां विधिं विनापि अपूर्वानपेक्षलौकिकक्रतूपकारार्थत्वेन पुरुषोपकारार्थत्वेन वा तत्साधनसामर्थ्यात् प्राप्तानां निषेधोपपत्तिरुक्तेति ग्रन्थे वाशब्दप्रयोगेण पुरुषोपकारकत्वेन प्राप्तानां निषेधोपपत्त्युक्त्या केवलपुरुषार्थप्रसक्तनिषेधवाक्यानामपि एतदधिकरणोदाहरणत्वं दर्शितम्। एतेन 'क्रतौ पुरुषे चार्थतः प्रसक्तं प्रतिषेधन्ते' इति शास्त्रदीपिकायां चकारपाठेन उभयोपकारकतया प्रसक्तक्रियानिषेधानामेवोदाहरणत्वेन अतथाभूतानां स्त्र्युपगमननिषेधानामनुदाहरणत्वमिति प्रकाशकारोक्तमपास्तमिति दिक्।

दीक्षितो न जुहोतीत्येवमादीनां पर्युदासत्वात् प्रतिषेधपदेन तद्व्यावृत्तिः। यदा तु पार्थसारथ्युक्तरीत्या प्रतिषेधत्वं तदापि विधिप्राप्तनिषेधेषु नातिरात्रे षोडशिनं गृह्णातीत्यादिष्विव विवक्षितपुरुषार्थत्वपूर्वपक्षासम्भवादेव अनुदाहरणत्वम्। अतिरात्रवाक्ये तु अतिरात्रश्रुत्यैव निषेध्यनिषेधयोः क्रत्वङ्गत्वनिश्चयात् वक्ष्यमाणविधेयेतरनिषेधेष्विव विवक्षितपुरुषार्थत्वक्रत्वर्थत्वपक्षयोः असम्भवादपि नोदाहरणत्वमित्येतत्सर्वं विशेषपदेन सूचितम्।

किं शुद्धपुरुषधर्माः उत क्रतुयुक्तपुरुषधर्माः उत शुद्धक्रतुधर्मा इति विचारः।

यद्यपि च प्रतिषेधस्य परोद्देशप्रवृत्तकृतिकारकत्वेन विधेयत्वरूपमङ्गत्वमेव दुर्वचम्। प्रतिषेधपदार्थस्य निवर्तनाया वदनानुकूलकृत्यभावस्य वा सम्बन्धान्तरेण कृत्यन्वयित्वेऽपि निमित्तादिवत् कृतिकारकत्वाभावात्। उपकारकत्वव्याप्यस्य अङ्गत्वस्य व्यापकाभावेऽसम्भवाच्च। प्रतिषेध्यवदनादेस्तु क्रत्वङ्गत्वपुरुषाङ्गत्वे विध्यविहितत्वादेव कृष्यादिवत् दूरापास्ते। अतोऽङ्गत्वासंभवादेव तद्विशेषविचारासम्भवः।

तथाऽपि प्रतिषेधस्य पुरुषार्थत्वं नाम पुरुषनिष्ठप्रत्यवायजनकक्रियाविषयत्वम्। क्रतुसम्बन्धिपुरुषगतायोग्यतासम्पादकक्रियाविषयत्वं च क्रतुयुक्तपुरुषधर्मत्वम्। क्रतुगतवैगुण्यापादकक्रियाविषयत्वं शुद्धक्रतुधर्मत्वम्, इदं च तत्र यत्र न प्रतिषेध्या क्रिया विशिष्य शास्त्रेण विहिता, यथा प्रकृतोदाहरणे। यत्र तु सा विशिष्य विहिता यथा षोडशिग्रहणादौ तत्र प्रतिषेध्यषोडशिग्रहणाभावेऽपि क्रतोः फलजनकत्वमित्यस्यैव निषेधेनाक्षेपा-

---

समिधो यजतीत्यादि तु स्पष्टत्वार्थं स्वरूपमात्रकथनम्। पूर्वपक्षसूत्रे अकर्मनित्यानुवादेति पदद्वयञ्चोपलक्षणं द्रष्टव्यम्। ततश्च निषेधरूपमहावाक्यार्थवेलायां विधेर्निषेधपरत्वेनानृतवदनस्याविधेयत्वेऽपि शेषस्य निषेधात् परिशिष्टस्य निषेध्यस्यानृतवदनस्य निषेधान्वयाय अवश्यमनुवदितव्यत्वात् अप्राप्तस्य चानुवादायोगात् प्रापकं च विना प्राप्त्ययोगात् प्रापकस्य च लौकिकस्यापि रागादेः ऐदमर्थ्यावधारणापेक्षत्वात् अनुवादसिद्ध्यै अवान्तरवाक्यार्थविवक्षयैव अनृतवदनादिकैमर्थ्यचिन्ता कार्येति विधिकैमर्थ्यचिन्तैव मुख्या निषेधेष्वपि सा फलतीत्यभिप्रायेण समतुल्यतया विधिष्वप्युदाहृतेषु तत्तत्पूर्वपक्षकोटौ पार्थसारथिना सूत्रानुरोधेन विधित्वानुवादत्वे निवेशितमपि विधिष्वसम्भवात् फलत्वेन तदुक्तौ प्रयोजनाभावाच्चेत्युपेक्ष्य निवीताधिकरणवत् पक्षरचनायामपि उत्तराधिकरणे सारवत्तया एतदधिकरणाविषयत्वेन पक्षत्रयमुपन्यस्तं यद्वार्तिककृता तत्पक्षत्रयमात्रोद्देशेनैव संशयमाह—किमिति। ननु अध्यायार्थभूतस्याङ्गत्वस्य विहितत्वघटितत्वात् तस्य च निषेधेष्वसम्भवेनानुपपत्तेः तद्विशेषविचारकरणं तदर्थं च श्रुतिप्रकरणविरोधाविरोधचिन्तनं च व्यर्थमेवेत्याशङ्क्य परिहरति—यद्यपि चेति। सम्बन्धान्तरेणेति। स्वविषयकज्ञान-जन्यानुमितिप्रयोज्याभावप्रतियोगित्वसम्बन्धेनेत्यर्थः। तथापीति। यद्यपि स्वयं प्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताकत्वं क्रत्वर्थत्वं विधेयनिषेध्यसाधारणं स्वयमेव चतुर्थे वक्ष्यमाणं पारिभाषिकरूपमिहापि शक्यत एव वक्तुं, तथापि इह निषेध्यक्रियागतपुरुषार्थत्वद्वारापि समर्थनीयस्य निषेधगतपुरुषार्थत्वादेः निषेध्यैदमर्थ्याधीनत्वात् तस्यां च चतुर्थोक्तपुरुषार्थत्वादेरसम्भवात्

दुक्तविचारार्थानुमापकत्वेनैव प्रतिषेधस्य क्रत्वङ्गतेति ध्येयम्। अत एव—गौणमुख्यसाधारण्येनाङ्गत्वमेवाध्यायार्थ इति न लक्षणासङ्गतिः।

तत्र सत्यपि भावार्थाधिकरणोक्तन्यायेन भावनावाचित्वे आख्यातस्य कर्ताऽपि वाच्यः एकत्वादिवत् ततस्तस्यापि प्रतीतेः, "कर्तरि कृत्" इत्येतत्सूत्रस्थकर्तरीत्येतदनुकर्षणार्थचकारयुक्तेन "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यनेन कर्तृकर्मभावानामप्याख्यातार्थत्व-

---

तन्मात्रविषयपुरुषार्थत्वाद्युपपादनं न विरुध्यते। समिदाद्यङ्गानां तु मुख्यस्यैवाङ्गत्वस्य सम्भवात् सूपपादमेव तद्विशेषविचारकरणम्। उक्तविचारार्थानुमापकत्वेनेति। षोडशिग्रहणाभावसहकृतेतराङ्गैरेव क्रतुमहोपकारकत्वानुमापकताप्रकारश्च वक्ष्यते। तथा च क्रतुमहोपकारजनकेतराङ्गसहिताभावप्रतियोगिक्रियाविषयत्वरूपमेव क्रत्वर्थत्वमेतादृशे विषये इत्यर्थः। क्रत्वङ्गतेति। तेनास्य क्रत्वङ्गतानिश्चयात् नोदाहरणत्वमिति सूचितम्। अत्र पुरुषार्थत्वपूर्वपक्षसिद्धये कर्तुराख्यातार्थत्वसाधनेपि तस्य कर्तुः गुणत्वेनोपादानात् तत्तत्कर्तृकक्रियायाः प्रकरणेन क्रत्वङ्गत्वे बाधकाभावात् कर्तृगतगुणतया सह प्रकरणावगतक्रतुप्राधान्यस्य विरोधाभावात् किमर्थं श्रुतिप्रकरणविरोधाविरोधचिन्तापूर्वकं पुरुषार्थत्वक्रत्वर्थत्वविचार इत्याशङ्क्य गुणभूतस्यापि कर्तुरुपस्थितत्वात् स्वामित्वरूपप्राधान्यकल्पनम्। अथवा आख्यातेन गुणत्वप्राधान्योदासीनत्वेन कर्तृत्वमात्रोक्तेः गुणत्वप्रधानत्वयोश्च आकाङ्क्षायोग्यत्वादिभिः पश्चात्कल्पने, अत्रापेक्षावशात् प्राधान्यमेव कल्प्यते। अथवा आख्यातार्थस्य कर्तुः धात्वर्थं प्रति प्रत्ययार्थत्वेन प्राधान्यात् शाब्दबोधे विशेष्यतयाऽवगतं प्राधान्यम्। तदेव प्रयोजनाकाङ्क्षायामपि शक्यं कल्पयितुमिति समानपदोपात्तश्रुत्या प्रकरणावगतक्रत्वङ्गत्वबाधेन पुरुषार्थत्वमिति त्रेधा समाहितं वार्तिके।

तत्र यद्यप्युत्तरपक्षद्वयमाख्यातस्य भावनावाचित्वानङ्गीकारेण केवलकर्तृवाचित्ववादिशाब्दिकमतेन, तथापि 'स च प्रत्ययार्थत्वात् प्रकृत्यर्थं वदनं प्रति प्रधानभूत इति पार्थसारथिना तृतीयस्यैव पक्षस्याङ्गीकारः कृतः। तत्राद्ययोः पक्षयोरपेक्षायां क्लिष्टत्वमेव हेतूकृतं प्रकाशकारैः तद्भावनावाचित्वाङ्गीकारेणापि प्रथमपक्षोक्तरीत्या कर्तुः प्राधान्योपपत्तेः, भावार्थाधिकरणसिद्धभावनावाचित्वाक्षेपपर्यन्तमस्याधिकरणपूर्वपक्षस्य कर्तव्यतानियमे प्रयोजनाभावात् भावनावाचित्वे च सति तां प्रति धात्वर्थकर्त्रोरुभयोरपि गुणत्वेन प्राधान्यानुपपत्तेः अयुक्तमिति सूचयन् वार्तिकेऽभ्युच्चययुक्तित्वेन उत्तरपक्षद्वयोक्तावपि आद्यपक्षस्यैव युक्तत्वेन प्रथमतो मुख्यतया उक्तत्वात् तमेव पक्षं अक्लिष्टं मत्वा पूर्वपक्षमारचयति—तत्र सत्यपीति। अत्र च न पूर्वपक्षिण आख्यातस्य भावनावाचिताखण्डनेन कर्तृमात्रवाचित्वे अथवा भावनावाचित्वेऽपि कर्तृवाचित्वेप्याग्रहः प्रयोजनाभावात्।

स्मृतेश्च। चैत्रः पचतीति चैत्रादिपदसामानाधिकरण्याच्चैवम्। स च 'भावप्रधान-
माख्यातम्' इति स्मृत्या एकत्वादिवदेव यद्यपि भावनां प्रति विशेषणत्वेनान्वीयते,
तथाऽप्युपस्थितत्वाल्लाघवात्पदान्तरमात्रकल्पनायां तदुपकारस्यैव भावनायां भाव्यत्वे-
नान्वयो न तु कर्मणः विलम्बितप्रतीतिकत्वात्। इष्यते च गुणत्वेन प्रतीतस्यापि प्रयो-
जनाकाङ्क्षायां प्राधान्यं पश्चात्, यथा पशुपुरोडाशादौ देवतादेः। विधिनिषेधाभ्यामपि
स्वविषये तद्गतेष्टानिष्टसाधनत्वाक्षेपाच्चैवमेव युक्तम्। अतश्च विधिस्थले स्वर्गो निषेध-

---

अतो येनैव प्रकारेण क्रत्वर्थताखण्डनेन पूर्वपक्षस्सिद्ध्यति तावन्मात्र एव। अतो न प्राचामिव
केवलकर्तृवाचिताङ्गीकारेणात्र पूर्वपक्ष इति भावः। तत्र कर्तुर्वाच्यत्वेन पूर्वपक्षमारभमाणो
ननु भावनावाचित्वे सति अनेकार्थशक्तिकल्पनाऽयोगात् कर्तुः अनुपादानात् कथं पुरुषार्थत्व-
सिद्धिरित्याशंकां परिहरति—**एकत्वादिवदिति**। एकस्यैव लिङो भावनावाचिनोऽपि प्रतीत्या-
दिभिरेकत्वकालादिकमर्थान्तरं स्वीक्रियते, तथा कर्तापि वाच्यत्वेन स्वीक्रियत इत्यर्थः। भाव-
नाकर्त्राद्यनेकार्थस्वीकारेऽपि प्रत्ययार्थत्वेन प्रत्ययार्थप्राधान्यस्मृत्या सर्वेषामेव धात्वर्थं प्रति प्राधान्य-
प्राप्तौ भावप्रधानमाख्यातमिति स्मृत्या भावनायाः प्राधान्यनियमकरणात् शब्दतोऽप्यप्रा-
धान्ये कर्तुस्सुतरामार्थिकप्राधान्यासिद्धिरित्याशंक्य शाब्दबोधे विशेष्यतारूपे प्राधान्ये स्वीकृतेऽपि
फलभोक्तृत्वरूपप्राधान्यसिद्ध्यर्थं तद्वाचकपदान्तरस्य कल्पनं सुववाक्ये द्रवद्द्रव्यपदस्येवावश्यकमेव
तर्हि तद्गुणत्वेऽपि कल्पयित्वा प्राधान्याधायकं भविष्यतीति परिहरति—**स चेति**। क्रियायाम-
ङ्गत्वेनान्वयनिष्पत्तावपि प्रयोजनाकांक्षावेलायां प्राधान्यकल्पनं दृष्टान्तेन साधयति—**इष्यते चेति**।
यथा पशुपुरोडाशवाक्ये अग्नीषोमीयमिति तद्धितश्रुत्या प्रकृत्यर्थभूतयोरग्नीषोमयोः द्रव्यद्वारा द्रव्य-
देवताकल्प्ययागांगतोक्तावपि यागस्य प्रयोजनाकांक्षायां तयोरेव संस्कार्यत्वाख्यप्रयोजनवत्त्वलक्षण-
प्राधान्यमारादुपकारकत्वापेक्षया सन्निपत्योपकारकत्वस्य युक्तत्वेन तल्लाभाय प्रकल्प्य "सर्वे पाका-
दिसम्बन्धे द्व्याकारास्तण्डुलादय इति न्यायेन पूर्वावगतांगत्वस्योत्तरकालावगतप्राधान्येनाविरोधात्
पशुयागाङ्गभूतस्य पशुपुरोडाशयागस्य पशुसमवेताग्नीषोमसंस्कारार्थत्वं दशमे इष्यते तथेहापि
आख्यातश्रुत्या कर्तुरनृतवदनाद्यङ्गत्वोक्तावपि तस्य प्रयोजनाकांक्षायां कर्तुरेव प्रधानत्वं न विरुद्ध-
मिति भावः। यदर्था क्रिया तदर्थः प्रतिषेध इति सामान्यन्यायानुसरणमपि अन्वाचययुक्तित्वेन
दर्शयति—**विधिनिषेधेति**। विधिना हीष्टसाधनत्वबोधनात् इष्टस्य च स्वयं प्रार्थित-
रूपस्य स्वार्थतयैव प्रार्थनीयत्वात् पुरुषार्थरूपेष्टसाधनत्वमेव युक्तं बोधयितुम्। एवं निषेधेन
रागप्राप्तेष्टसाधनतावैपरीत्यस्य बोधनात्। तस्य चेष्टविपरीतस्यानिष्टस्य स्वापकाररूपस्यैव बोधन-
मुचितमित्यर्थः। **स्वर्ग इति**। यद्यपि पूर्वलिखितसमिदादिवाक्यविधेयप्रयाजादीनामार्थवा-

**स्थले च** प्रत्यवाय एव **क्रियाफलं** समानाभिधान**विधिश्रुतिभ्याम्। न तु क्रतूपकारः प्रकरणात्।** एवं च **यद्यप्याख्यातेन कर्ता नाभिधीयते तथाऽपि भावनयाऽऽक्षिप्तस्याख्यातेन लक्षितस्य च तस्यैवोपस्थितत्वात्तदर्थत्व**कल्पनं **न दोषः।** अतश्च **वैमृधवत् प्रकरणबाधेन शुद्धपुरुषधर्मत्वावगतेः, तदा च अनृतवदनप्रतिषेधस्योपनयनप्रभृति प्रवृत्तेस्स्मार्तानृतवदनप्रतिषेधस्यापीदमेव मूलमिति प्रथमः पक्षः।**

---

दिकं भ्रातृव्याभिभूतिरूपमेव रात्रिसत्रन्यायेन पुरुषार्थफलं कल्पयितुं युक्तं न स्वर्गस्तथाप्यर्थवादरहितविधिविधेयानामवश्यं विश्वजिन्न्यायेन स्वर्ग एव फलं कल्पनीय इति तत्साधारण्यलाभाय प्रयाजादावपि तत्संभवमात्रेण बोध्यमानस्वर्गफलत्वमभिप्रेत्य स्वर्गफलमुक्तं न विरुद्ध्यत इति ज्ञेयम्। ततश्च प्रकरणाधिकरणे यत् प्राकरणिकानां क्रत्वङ्गत्वं साधितं तस्यैवाक्षेपसमाधानाभ्यां स्थिरीकरणमिति न तेन पौनरुक्त्यापत्तिः। एतेनास्मिन्नधिकरणे प्रयाजादीनामाख्यातगम्यपुरुषार्थत्वनिरासेऽपि प्रकरणाधिकरणे विश्वजिदादिवत् फलकल्पनया पुरुषार्थत्वमाशंक्य निरासादपौनरुक्त्यमिति **न्यायसुधोक्तमपास्तम्**; स्वर्गातिरिक्तस्य पुरुषोपकारस्याभ्यर्हितत्वाभावेन तमादाय पुरुषार्थत्वाशङ्कानुपपत्तेः इहापि स्वर्गफलत्वस्यावश्यकत्वात् तस्यैव फलत्वनिरासे पौनरुक्त्यतादवस्थ्यात् अत आक्षेपेणैव तत्परिहार उचित इति स्वर्गफलत्वोक्त्या सूचितम्। **प्रत्यवाय एवेति।** प्रत्यवाय एव सामर्थ्यावगतदृष्टेष्टफलविपरीत इति स एव फलमित्यर्थः। ननु क्रत्वर्थत्वेऽपि परंपरया पुरुषोपकारजननात् श्रुतिप्रकरणयोरविरोधस्संभवत्येवेति शङ्कां निरस्यन् तयोर्विरोधप्रदर्शनायाह—**समानाभिधानेति।** विधिनिषेधवाक्यगतसमानाभिधानश्रुतिभ्यां क्रतुमनन्तर्भाव्यैव साक्षात् पुरुषार्थत्वबोधनात् न दुर्बलप्रकरणावगतक्रतुद्वारा पुरुषार्थत्वं कल्पनीयमिति भावः। एतावता च कर्तुर्वाच्यत्वमङ्गीकृत्य साक्षात् श्रुत्या पुरुषार्थत्वे उपपादिते यद्वार्तिके कर्तुर्वाच्यत्वाभावे लक्षणादिना प्रतीतस्य कर्तुः सन्निकृष्टतरस्यापि सन्निधेः स्थानाख्यप्रमाणस्य प्रकरणापेक्षया दुर्बलत्वात् तद्बाधेन साक्षात्पुरुषार्थत्वासंभवात् न पूर्वपक्षसिद्धिरित्यवश्यं तस्य वाच्यत्वमेव स्वीकृत्य श्रौतत्वेन प्रकरणबाधसंभवात् पूर्वपक्षोपपादनं सुकरमित्युक्तं तदाक्षेप्तुं तल्लक्षणापक्षे पूर्वपक्षं द्रढयति—**एवं चेति।** वाच्यत्वपक्षेऽपि क्रत्वपेक्षया झटित्युपस्थितस्य प्राधान्यबोधकपदान्तरकल्पनया वाक्यात्तदङ्गत्ववत् लक्षणापक्षेऽपि तथैवोपपत्तेः श्रुतिवाक्याभ्यां प्रकरणबाधेन तदर्थत्वं भविष्यत्येवेत्याशयेनाह—**तदर्थत्वकल्पनमिति।** वाक्येन प्रकरणबाधं दृष्टान्तेन सूचयन् आद्यं पूर्वपक्षमुपसंहारेणैवोपपादयति—**अतश्चेति।** एवं विधिसाधारण्येन निषेधेषु पुरुषधर्मत्वे उक्तेऽनृतवदनादिनिषेधे विशेषप्रदर्शनाय वक्तव्ये मूलमूलिभावे

द्वितीयस्तु—**सत्यपि पुरुषप्राधान्यावगमे स्वर्गप्रत्यवायादिकल्पनापेक्षया क्रतुगत-फलाधानयोग्यत्वायोग्यत्वरूपसंस्कारस्यैव प्रकरणावगतस्य** श्रुत्यपेक्षितस्य **कल्पनं युक्तम्। अतश्च जञ्जभ्यमानमन्त्रवदेव एषां क्रतुयुक्तपुरुषधर्मत्वम्।** तदा च—

"प्रियं च नानृतं ब्रूयादेष धर्मस्सनातनः"

---

स्मार्तानां षष्ठे उपनयनादिर्नियम इति स्मृत्या उपनयनप्रभृति प्रवृत्तेरुक्तत्वेन विशेषविषयत्वात्, श्रुतेश्चाविशेषेण ततः प्रागपि प्रवृत्त्या सामान्यविषयत्वात् कथं मूलमूलिभाव इत्याशङ्कापरिहारार्थं —**तदा चानृतवदनेत्याद्युक्तम्**। तथा च प्रागुपनयनात् कामचारकामवादकामभक्षा इति स्मृत्या श्रौतानामपि विधिनिषेधानामुपनयनात्प्रागप्रवृत्तिबोधनात्। उभयोरप्युपनयनप्रभृत्येव प्रवृत्तेः समानविषयत्वेनोपपद्यते मूलत्वमित्यर्थः। नन्‌ श्रुतेः स्मृतिमूलत्वे विधित्वस्यैवापत्तेः कथम-कर्मेति पूर्वपक्षसूत्रेऽनुवादत्वोक्तिरिति चेत्, उच्यते, पूर्वसूत्रस्थतच्छब्दोपस्थापितस्य "मनुष्यधर्म-श्शब्दस्य तत्प्रधानत्वात्" इति निवीताधिकरणाद्यसूत्रावयवस्येहानुषङ्गेण अकर्मानृतवदननिषेधनं मनुष्यधर्मः आख्यातशब्दस्य तत्प्रधानत्वादित्येवं लक्षणोपाधिक[1] पूर्वपक्षप्रतिज्ञाप्रतिपादकमकर्मेत्ये-तावन्मात्रमेव। यतोऽकर्म मनुष्यधर्मः स च नानृतं ब्रूयादिति स्मृत्यैव प्राप्तोऽतस्स्मृत्यैव मनुष्यसं-योगान्नानृतं वदेदिति क्रतुसंयुक्तं वचनं नित्यानुवाद इत्येवमुत्तरावयवयोजनयाऽनुवादत्वमुक्तं न विरुद्धम्! सूत्रानुगुण्याभावादेव वा द्वितीयपूर्वपक्षं दर्शयति—**द्वितीयस्त्विति**। **श्रुत्य-पेक्षितस्येति**। श्रुत्या पुरुषगतप्राधान्यावगमेऽपि तद्गतोपकारविशेषाकाङ्क्षावशेनैव प्रकरणसम-र्पितयोग्यताऽयोग्यतासंस्काररूपस्य तत्कल्पनात् प्रकरणस्याविरोधः। तथा सति यद्यपि क्रतुयुक्त-पुरुषधर्मत्वे याजमानास्तु तत्प्रधानत्वादित्यनेन न्यायेन भोक्त्रंशपातित्वापत्तेः साधनांशपातित्वा-भावेन क्रतुसाधनपुरुषधर्मत्वाभावात् प्रकरणगम्यं क्रत्वङ्गत्वं विरुद्ध्यते; तथापि **न्यायसुधोक्तरीत्या** भोक्त्रंशपातिनोऽपि पुरुषधर्मस्य पुंसो भोक्तृत्वयोग्यतां विना क्रतोः फलसाधनत्वासिद्धेः आत्मनः साधनत्वसिद्ध्यै पुंसो योग्यताधानार्थं क्रतुनाऽपेक्षितत्वात् प्रकरणाविरोध उपपद्यत इति भावः। एषां विधिनिषेधानामनुवादत्वसाधनाय---

सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्।
प्रियं च नानृतं ब्रूयादेष धर्मस्सनातनः॥

इति स्मृत्युत्तरार्धस्यैव प्रकृते प्रयोजनात्तावन्मात्रमेवोल्लिखति—**तदा चेति**। प्रियं च प्रियम-

---

1. A. पायक

**इति स्मृतेस्सनातनग्रहणेन** सार्वकालिकविषयत्वावगतेरेतन्मूलकत्वासम्भवेन **मूलान्तरस्यावश्यकत्वात्सर्वदा चानृतं** वर्जयतः **क्रतावनृतप्रसक्त्यभावादनुवाद एवायम्। अस्तु वा—पुरुषार्थप्रतिषेधेन पुरुषस्यानृतवदने प्रत्यवायबोधनेऽपि क्रतुवैगुण्याद्यापत्तौ प्रमाणा-**

---

पीत्यर्थः। **सार्वकालिकेति**। उपनयनमरणान्तरालकालिकेत्यर्थः। **अनृतं वर्जयत इति**। पुरुषं त्यक्त्वा क्रतावदनृतवदनप्राप्त्यभावात् पुरुषे च सर्वदैव निषिद्धत्वात् अनुवादत्वम्। न हि पुरुषः स्वार्थमनृतं वर्जयिष्यति क्रत्वर्थं च वदिष्यति इति संभवति। अतो यावज्जीवानृतवदनप्रतिषेधेनैव तन्मध्यपतितक्रतुयुक्तपुरुषस्याप्यनृतवदनप्राप्तेरभावात् क्रत्वर्थमनृतवदनान्तरस्य प्रसक्त्यभावे निषेधविधित्वानुपपत्तेः अनुवादत्वमित्यर्थः। यद्यपि प्रियं च नानृतं ब्रूयादिति न निषेधः, किन्तु एष धर्मस्सनातन इत्युपसंहारात् प्रजापतिव्रतसमानन्यायेन संकल्पलक्षणायां प्राप्तायामिह विशेषस्यानृतभिन्नस्य सप्तम्योपादानात् अननृतं सत्यं प्रियं ब्रूयादिति विधेर्नानृतनिषेधप्राप्तिरनया संभवति तथाप्येतत्स्मृत्युपन्यासस्य

> न संशयं प्रपद्येत नाकस्मादप्रियं वदेत्।
> नाहितं नानृतं चैव न स्तेनःस्यान्न वार्धुषिः॥

इत्यादितथाविधोपक्रमोपसंहाररहितस्मृत्यन्तरोपलक्षणत्वं द्रष्टव्यम्।

**ननु** दर्शपूर्णमासयोस्तैत्तिरीयशाखायां तस्यैतद्व्रतमित्युपक्रम्य नानृतं वदेदित्यादिनिषेधाम्नानात् तेषां च पर्युदासत्वेन कथमनुवादत्वं? अत एव दर्शपूर्णमासगतस्यास्योदाहरणत्वं **पार्थसारथिप्रदर्शितमयुक्तं** मत्वा पूज्यपादैस्सामान्यतस्तत्तत्क्रतुप्रकरणगतानामुदाहरणत्वोक्त्या ज्योतिष्टोमाधानप्रकरणपठितानां तेषामुदाहरणत्वं सूचितमिति चेत् न, तैत्तिरीयशाखास्थदार्शपूर्णमासिकवाक्यस्य दाक्षायणयाजिविषयत्वात्, तथैव च सङ्कर्षे वक्ष्यमाणत्वात् भाष्यादिलिखनेनेतरशाखास्थस्यैव दर्शपूर्णमासगतस्य तादृशस्य निषेधोपपत्तेः। तथात्वेऽपि वा ज्योतिष्टोमादिप्रकरणगतस्यैव तस्य निषेधत्वेनानुवादत्वोपपत्तेश्च। एवं क्रतुयुक्तपुरुषधर्मत्वपक्षेऽनुवादत्वमुपपाद्य पक्षान्तरेण विधित्वं दर्शयति—**अस्यैवेति**। अयं च विधित्वोपन्यासः क्रतुयुक्तपुरुषधर्मत्वपक्ष एव। केवलपुरुषधर्मत्वपक्षे विधित्वस्य सिद्धत्वात् शुद्धक्रतुधर्मत्वेन विधिरिति सिद्धान्तपक्षापेक्षया वैलक्षण्यस्यापेक्षणाच्च। अत एवैतदनन्तरं सिद्धान्ते सत्यं नानुवादः क्रतुयुक्तपुरुषधर्मत्वे तु न किंचित्प्रमाणं इत्युपन्यासः। तथा च यः प्रत्यवायं सोढ्वा क्रतुमनृतं वदन् सगुणं कर्तुमिच्छति तस्य फलाधानयोग्यतारूपफलजनकत्वबोधनाय विधित्वमिति वक्तव्ये क्रतोस्तु वैगुण्याभावात् फलोत्पाद-

**भावात् यः प्रत्यवायं सोढ्वाऽपि क्रतुं सगुणं कर्तुमिच्छेत् तस्य 'व्रीहिभिर्यक्ष्ये' इत्युक्त्वा सम्भवत्येव यथैयाँगेऽनृतप्रसक्तिरिति क्रतुप्रकरणगतस्यापि निषेधस्य विधायकत्वम्। अतश्चैतदतिक्रमे श्रौतप्रायश्चित्तप्राप्तिश्च फलमिति प्राहे—**

---

क्त्वेऽपि फलस्य योग्याश्रयाभावात् अनुत्पत्तिरित्यर्थो भवति। क्रतुवैगुण्यजनकत्वबोधार्थं तद्विधिरित्युक्तौ तु विगुणात् क्रतोरपूर्वाभावात् फलमेव नोत्पद्यत इत्यर्थो भवति। एकत्र समवायिकारणस्यायोग्यत्वमितरत्र तु निमित्तकारणस्य तदिति यद्यपि क्रतुवैगुण्याद्यापत्तौ प्रमाणाभावादित्यादिसन्दर्भेण निमित्तकारणगतवैगुण्यस्यैव फलत्वप्रतीतेस्तत्परिहारद्वारा निषेधविधेः क्रतुधर्मत्वमेवापद्यते तथापि फलिसंस्कारस्यैव क्रतुसाधनत्वाभिप्रायेण तदभावे क्रतुवैगुण्यमुच्यते तेन न क्रतुयुक्तपुरुषधर्मत्वपक्षस्य हानिः। तत्प्रकारश्च दर्शपूर्णमासादिना पुरुषभोज्यस्यैव फलस्योत्पादनीयत्वात् भोक्तृत्वे चायोग्यं पुरुषं प्रति भोज्यतयोत्पादनाशक्तेः भोक्तृत्वयोग्यताधानस्यापि क्रत्वपेक्षितत्वेन तदर्थानामपि धर्माणां क्रत्वर्थत्वाविरोधात् तदतिक्रमे क्रतुवैगुण्योपपत्तेः क्रतुयुक्तपुरुषधर्मत्वेऽपि, क्रतुवैगुण्यपरिहारफलत्वेन संयोगान्तरत्वात् विधित्वसिद्धेरिति न्यायसुधादर्शितरीत्या वपनादियुतेन दर्शपूर्णमासौ कृत्वा फलमवाप्नुयादित्येवं वपनादीनामिव वर्जितानृतवदनकेन तौ कृत्वा फलं साधनीयमित्येवमनृतवर्जननिषेधस्यापि फलिसंस्कारत्वे सत्यपि साधनत्वात् क्रत्वर्थत्वं पुरुषान्तर्भावेनोपपद्यत इत्येवं द्रष्टव्यम्। यदि यजुषः प्राप्तो यज्ञाङ्गभूतः पदार्थः आर्तिं नाशमियात्तदा भुवस्स्वाहेत्येवमन्वाहार्यपचने दक्षिणाग्नौ होतव्यमित्यर्थकेन यदि यजुष्टो यज्ञ आर्तिमियात् भुवस्स्वाहेत्यन्वाहार्यपचने होतव्यम्" इति प्रायश्चित्तविधिना विहितं प्रायश्चित्तं श्रौतं क्रतुधर्मत्वसिद्धान्ते लभ्यते, न लभ्यते चाद्यपूर्वपक्षे, द्वितीयपूर्वपक्षेऽपि। अनुवादत्वपक्षे तदस्मिन् विधित्वाश्रयणेन द्वितीयपूर्वपक्षेऽपि लभ्यत इति अनुष्ठानविशेषं दर्शयति—**अतश्चेति**। अत्र चाद्यपूर्वपक्षे स्मार्तप्रायश्चित्तमिति प्रयोजनं वक्ष्यते। विधित्वपक्षेऽपि तद्विशेषो दर्शितः। द्वितीयपूर्वपक्षेऽनुवादत्वपक्षे यत्प्रायश्चित्तविशेषप्राप्त्यादि प्रयोजनं नोक्तं तन्मतभेदेन, विसंवादात्। **तथा हि वार्तिके-तन्न्यायसुधायां** च क्रतुयुक्तपुरुषधर्मानुवादत्वपक्षे क्रतौ निषेधातिक्रमे स्मार्तक्रत्वङ्गभ्रेषे स्मृतेरविज्ञातवेदमूलतया 'यद्यविज्ञातो भूर्भुवस्स्वस्स्वाहेत्याहवनीये होतव्यं' इति यद्विहितं प्रायश्चित्तं तत्कार्यमित्युक्तम्। तत्तस्य क्रत्वङ्गभ्रेष एव विधानेनानुवादत्वपक्षेऽङ्गत्वासंभवादिति **प्रकाशे** प्रदूष्य न हि तदा स्मृत्याङ्गत्वं प्रकरणाद्यभावात्। न चानेन प्राकरणिकवचनेन, तदर्थस्याविधेयतया प्रकरणाग्राह्यत्वात्। अतः

गायत्री तु शुनादष्टे चापले चानृतेऽपि" च इति ज्ञानतो **याज्ञवल्क्यस्मृतिविहितो**

सत्यं नानुवादः। क्रतुयुक्तपुरुषधर्मत्वे तु न किञ्चित्प्रमाणमस्ति। यद्यपि तावत्कर्ता वाच्यस्स्यात् तथाऽपि तस्य वक्ष्यमाणरीत्या गुणत्वेनैवोपादानान्न तावच्छब्दत एव

गायत्रीजपः। अज्ञानतश्च—

सुप्त्वा भुक्त्वा च क्षुत्वा च निष्ठीव्योक्त्वानृतं वचः।
पीत्वापोऽध्येष्यमाणश्चाचमेत्प्रयतोऽपि सन्॥

इति मनूक्तमाचमनम्। जलाभावेऽल्पप्रयोजने वा

"क्षुते निष्ठीविते सुप्ते दन्तश्लिष्टे तथाऽनृते।
पतितानां च संभाषे दक्षिणं श्रवणं स्पृशेत्"

इति श्रोत्रस्पर्शः संवर्तोक्तो वा प्रायश्चित्तमित्युक्तम्। अतः पूज्यपादैर्न तद्विशिष्योक्तम्।

वस्तुतस्तु येनैव प्रमाणेन क्रतुयुक्तमनुष्यधर्मत्वं सिद्ध्यति तेनैव क्रत्वङ्गत्वमपि सिद्ध्यति। इतरथा अनुवादत्वे स्मार्तो निषेधः कर्म कुर्वाणे प्रत्ययोग्यताबोधक इति न नियन्तुं शक्यते। अतः प्रकरणपठितनिषेधानुवादवैयर्थ्यबलात् साधारणोऽपि स्मार्तो निषेधः क्रतुगत-पुरुषनिष्ठयोग्यताधानद्वारा क्रत्वङ्गमपीत्येवं कल्पनात्तदतिक्रमे भवत्येव क्रत्वङ्गश्रेषः। इयानेव हि द्वितीयपूर्वपक्षेऽनुवादत्वविधित्वपक्षयोर्विशेषः यत्स्मार्तनिषेधस्यैव क्रत्वङ्गत्वमनुवादत्वपक्षे। विधित्वपक्षे प्रकरणपठितस्यैव तस्य। तत्फलमपीदमेव प्रायश्चित्तविशेषप्राप्तिरूपम्। एतावता क्रत्वङ्गत्वेनोभयपक्षेऽपि संवाद[1]:। तथा च पूर्वपक्षोपसंहारवार्तिकम्। अतो मूलान्तर-प्रभवस्मृत्यर्थानुवादमात्रमेतत् क्रतुप्रशंसार्थम्। अन्यार्थप्रसक्तैरप्येवमादिभिः क्रतुर्युज्यमानो बह्वङ्ग-त्वेन प्रशस्तः प्रतिभातीत्येवमर्थवादतेत्येवं स्मार्तनिषेधस्याङ्गत्वेन क्रतोर्बह्वङ्गत्वं प्रतिपादयति। न हि क्रतुधर्मत्वसिद्धान्तेऽपि निषेधानामितिकर्तव्यताकाङ्क्षारूपप्रकरणाद्विधेयत्वघटितं मुख्यमङ्गत्वं संभवति। अभावस्यानितिकर्तव्यतारूपस्य विधेयत्वाभावात्। अतः पूज्यपादोक्तरीत्या पारिभाषिकमेवाधिकाराख्यप्रकरणावगतसंबन्धनिषेधविधिना बोध्यते। तथैव निषेधानुवादादपि सुबोधमेव तत्। नह्यत्र प्रसङ्गेनोपकारलाभात् अविधित्वं संमतं येनाङ्गत्वं नास्तीत्युच्येत। पुरुषार्थनिषेधेन क्रतुजन्यफलाधानयोग्यताजनकत्वस्य निषेध्येऽबोधनात् तदसिद्धेः। अतः प्रसक्त्यभावादेव तदिति युक्तमुक्तमविज्ञातप्रायश्चित्तं वार्तिकाश्रयेण न्यायसुधाकृता। अयुक्तं चोक्तं (स्मृत्युक्तं) प्रायश्चित्तं प्रकाश इति ध्येयम्। [न तावदिति]

1. A. विसंवादः

प्राधान्यम्। नापि पदान्तरकल्पनया वैमृधादिवत्। कर्तुः प्रयोजनवत्त्वसिद्ध्यर्थमवश्यं प्रकरणालोचने क्रियमाणे क्रतोरुपस्थितत्वेन तद्गतसाद्गुण्यवैगुण्यपरिहारयोरेव प्रवर्ग्यन्यायेन कल्पयितुं युक्तत्वात्। अत एव—यत्र पशुपुरोडाशादौ उद्देशांशस्य द्रव्यविधया देवतास्मारकत्वान्नादृष्टोपकारकल्पना तत्र सन्निपत्योपकारकत्वलाभाय परं प्राधान्याङ्गीकरणमप्यदोषः। जञ्जभ्यमानमन्त्रे तु वक्ष्यते। प्रकृते तु समिदादेः प्रकृतापूर्वसाधनीभूतपुरुषोद्देशेन प्रकृतक्रतुफलाधानयोग्यतासम्पादकतया विधाने गौरवापत्तेर्लाघवात्प्रकृतापूर्वसाधनक्रतुगतसाद्गुण्यसम्पादकत्वमेव समिदादीनाम्। अनृतवदनस्य च तद्गतवैगुण्यसम्पादकत्वम्। अतः शुद्धक्रतुधर्मत्वमेव कर्तुर्वाच्यत्वपक्षेऽपि युक्तम्।

वस्तुतस्तु—न तस्य वाच्यत्वम्। प्रतीतेरन्यथाऽप्युपपत्तेः। तथाहि—आख्याताित्तावत् कर्ता कृतिरेकत्वादिकं प्रतीयत इत्यविवादम्। तत्रानेकार्थबोधकपदे सर्वत्रैव एकत्र शक्तिरपरत्राक्षेपादीत्यपि तथैव। इतरथाऽनेकशक्तिकल्पनापत्तेः। तत्र च नियामकापेक्षायां प्रधानेन गुणभूतस्य लोके आक्षेपदर्शनात् प्राधान्यं तावन्नियामकम्। तच्च यथा "सत्त्वप्रधानानि नामानि" इत्यनया स्मृत्या कृदन्तादिनामसु सत्त्वरूपस्य कर्तुरेव प्राधान्यावगमाद्वाच्यत्वं; न कृतेः लक्षणादिनाऽपि तत्प्रतीत्युपपत्तेः, एवमाख्याते

---

वक्ष्यमाणरीत्या भावप्रधानमाख्यातमिति स्मृत्याऽनेकाख्यातार्थानां मध्ये भावनाप्राधान्यनियमेन कर्तुर्गुणत्वस्य वक्ष्यमाणत्वादित्यर्थः। आरादुपकारकत्वापेक्षया सन्निपत्योपकारकत्वस्य गरीयस्त्वे हेतुःक्वचिद्दृष्टार्थत्वं श्रुत्या विनियुक्तत्वं च यथाऽवघाते। क्वचित्तु श्रुतिविनियोगमात्रं यथा प्रोक्षणादौ। तथाचारादुपकारकत्वकल्पनेऽदृष्टार्थत्वापत्तेः प्रकरणकल्प्यापूर्वसंबन्धापेक्षया क्लृप्तद्वितीयाश्रुत्याऽपूर्वसंबन्धलाभाच्च सन्निपत्योपकारकत्वस्याभ्यर्हिततत्वं भवति। न च तदुभयमप्यत्रास्तीत्याह—**नापीति**। **प्रवर्ग्यन्यायेनेति**। पुरस्तादुपसदामिति कालविधायकवाक्योपस्थितोपसदां न प्राधान्यं श्रुतम्। अपितु पदान्तरकल्पनया यावत्तदङ्गत्वं प्रवर्ग्यस्य कल्पनीयं तावदुपसदां फलवत्त्वज्ञानार्थं प्रकरणालोचने उपजीव्यप्रकरणावगतक्रत्वङ्गत्वमेव कल्पयितुं युक्तमिति प्रवर्ग्याधिकरणे उपपादितम्। तेन न्यायेन भाविक्रत्वङ्गत्वमेव युक्तमिति न क्लृप्तश्रुतिबलेन कर्तृसंस्कारकत्वात् सन्निपत्योपकारकत्वं सम्भवतीत्यर्थः। ननु यथैव कर्तृगतसंख्या भावना प्रतीयत इति तस्याःप्राधान्यं तथैवैकः कृत्याश्रय इत्यपि प्रतीतेः कर्तुरपि प्राधान्यमिति कर्त्रा वा भावनाक्षेपो भावनया वा तदाक्षेप इति कथं नियन्तुं शक्यत इत्याह—**तच्चेति**। तथा च स्मृतिविरुद्धप्राधान्यप्रतीते[1]: भ्रमत्वेन न तद्वशेन कर्तुः प्राधान्यनिश्चय इति न तेन भावनाक्षेप

---

1. A. प्रामाण्यप्रतीतेः

**"भावप्रधानमाख्यातम्" इति स्मृत्या भावनाया एव प्राधान्यावगमाद्वाच्यत्वं; नाश्रयस्य कर्तृकर्मादेः** लक्षणयाऽ**पि तत्प्रतीतेः।** अत एव **यत्र न किञ्चित्प्राधान्यनियामकं तत्रैव घटघट-त्वादौ नागृहीतविशेषणान्याय इत्यादि कौस्तुभे स्पष्टम्। यत्र तु नैकत्वादौ** व्यभिचारादा**क्षेपः तत्रातिरिक्तैव शक्तिः, न तु कर्त्रादौ।**

---

इत्यर्थः। **लक्षणयेति।** तथा च भावना स्वसिद्ध्यर्थमपेक्षमाणा सर्वदैव कर्त्राऽविनाभूता सामर्थ्यात् कर्तारमाक्षिपतीति न तद्वाच्यत्वकल्पनं युक्तम्। यद्यपि सा सर्वकारकाण्यपेक्षते तथाप्यस्तितिष्ठत्यादिषु करणानपेक्षणात् भवनपतनादिषु चाधारानाश्रयणात् अकर्मकेषु कर्माभावा-दासनस्थानपचनादिषु च संप्रदानाभावात् कर्त्रैवाविनाभूतेति न बाधकम्। एवं कर्तर्यविना-भावेनाक्षेपे उक्ते यत्रापि नासौ तत्रापि प्रतीतिवशादेवाक्षेप इति सूचयितुं कर्माख्यते कर्मण आक्षेप इति **कर्मादेरिति** पदेनोक्तम्। यथा चाक्षेपतः प्राप्तस्य शाब्दत्वसिद्ध्यर्थं लक्षणाऽऽव-श्यिकी तथोपपादितं **भाट्टरहस्ये।** एवं प्रतीतिमात्रावगतप्राधान्यबाधकमेकतरप्राधान्यनिया-मकमन्यदस्ति तत्र निश्चितप्राधान्येन [1]गुणभूताक्षेपोपपत्तेर्यत्र जातिव्यक्त्योर्न तदस्ति तत्रोभयोरपि प्रतीत्यवगतप्राधान्ये समाने कथमेकतरस्य वाच्यत्वनिर्णयेन नियमत इतरस्याक्षेप एवेत्यत आह —**अत एवेति। अयमर्थः** यद्यपि तिङन्ते जाताविव कृत्याश्रयरूपे कर्तरि शक्तिकल्पनायां नागृहीतविशेषणान्यायेन कृतावेव शक्तिर्व्यक्ताविवाश्रये लक्षणा सिद्ध्यति, **तथापि** कृदन्तेऽपि तथा वाच्यत्वलक्षणयोरापत्तेर्विशेषणभूताया भावनायाः शुद्धायाः क्वचिदपि आख्यातेन प्रति-पादनाभावात् धात्वर्थाश्रयत्वमात्रेणैव कर्तृपदार्थनिर्वाहे नैकान्ततो भावनायाः विशेषणत्वसिद्ध्या वाच्यत्वनिश्चयस्संभवतीति प्राधान्यमेव तिङ्कृतोर्भावनाकर्तृवाच्यत्वे नियामकं वक्तव्यमिति नाकृत्य-धिकरणप्रवृत्तिः। यत्र तु पशुनेति तृतीयान्तस्थले जातेरपि लिङ्गसंख्यान्वयित्वेन प्राधान्यं संभवति, यत्र वा संप्रदानादिस्थले व्यक्तेरेव लिङ्गसंख्यान्वयित्वेन प्राधान्यं, तत्रोभयोरपि प्राधा-न्यस्य समत्वात् नैकतरेणैकतरस्य गुणभूतत्वेनाक्षेपः। तत्र गोत्वादीनामितरव्यावृत्तये व्यक्ति-शक्त्यनुप्रवेशावश्यकत्वात् नागृहीतविशेषणान्यायेन जातावेव शक्तिर्व्यक्तौ लक्षणेति भावार्थाधिकरणे **कौस्तुभे** स्पष्टम्। **व्यभिचारादिति।** द्वित्वादिसङ्ख्यान्वितकर्तृनिष्ठत्वेनापि भावनाप्रतीतेर्न भावनाया एकत्वाद्यविनाभावः इत्यवश्यं तया तस्यानाक्षेपात् शक्तिरेव कल्प्येत्यर्थः। एतावता च पूर्वपक्ष्युक्तां कर्तृवाच्यत्वसाधिकां कर्तृप्रतीतियुक्तिं लक्षणया निराकृत्य तयैव गौश्शुक्ल इत्यादिष्विव सामानाधिकरण्योपपत्तेः सामानाधिकरण्यरूपा कर्तृवाच्यत्वसाधिका पूर्वपक्ष्युक्त-

---

1. A. गुणभूताक्षेपे उक्ते

या तु स्मृतिस्तत्र प्राश्नः—"द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम्" इति सङ्ख्याशास्त्रेण "लः कर्मणि" इत्यादेरेकवाक्यता। अत्र हि "द्व्येकयोः" इत्यत्र भावप्रधानो निर्देशः द्वित्वैकत्वयोरित्यर्थः। अन्यथा द्व्येकेष्विति बहुवचनापत्तेः। तथा च कर्त्रादौ वर्तमानेषु एकत्वादिषु लकारादेशभूततिबाद्येकवचनादीनि भवन्तीति सूत्रद्वयार्थः; न तु कर्त्रादौ लकारश्शक्त इति। न चैवं कर्त्रादेरनभिहितत्वात्तत्र तृतीयाद्यापत्तिः; शक्त्याऽनभिधानेऽपि लक्षणयाऽभिधानादिति।

अत्रानभिहितत्वं अभिहितत्वाभावः। तच्चाभिहितत्वं न तिङादिवाच्यत्वं तत्प्रतिपाद्यत्वमात्रं वा—तथात्वे "पाचकेन गम्यते" "चैत्रेण भुक्त्वा गम्यते" इत्यादौ तृतीयाद्यनापत्तेः; कृत्प्रत्ययेन कर्तुरुपात्तत्वात्, क्त्वाप्रत्ययेन समानकर्तृकत्वोक्त्या कर्तुरुपादानाच्च। नाप्यभिहितसङ्ख्याकत्वम्—चैत्रेण पक्व इतिवत् चैत्रेण पाचक इति प्रयोगापत्तेः। सूत्रे लक्षणापत्तेश्च।

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।

इति निपातेन युज्यत इति क्रियाभिधायकेन सङ्ख्यानभिधानात् वृक्षमिति द्वितीयापत्तेश्च। अपि तु—यद्वृत्तिकारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्वम्। अस्ति चेदं "चैत्रः पचति" "ओदनः पच्यते" इत्यादौ, चैत्रादिवृत्तिकर्तृत्वकर्मत्वादेर्निरुक्तपदेन प्रतिपादनात्। "पाचकेन गम्यते" इत्यादौ च कृदुपात्तस्य पुरुषस्य गमनक्रियैवान्वयिनी, न तु पाकक्रिया, तस्या एव तस्मिन्नन्वयात्, तद्वृत्ति च कारकत्वं न कर्माख्यातेनाभिहितमिति युक्तैव तत्र तृतीया। एवं चैत्रेणेत्यस्य

---

युक्तिरपि निरस्तैवेत्यभिप्रेत्यावशिष्टां तत्साधकत्वेनोक्तां व्याकरणस्मृतिमनूद्याविरुद्धार्थप्रतिपादकतया न त्वत्पक्षसाधिकेत्याह—**या तु स्मृतिरिति**। **भावप्रधान इति**। भावार्थकत्वतत्पर इत्यर्थः। कर्तरि कृदिति सूत्रे कर्तरीति सप्तम्यन्तस्यार्थपरत्वेऽपि लः कर्मणीति सूत्रेऽनुवृत्तस्यापि तस्य कर्मणीत्यस्यापि च नार्थपरत्वं, किन्तु सप्तम्यन्तत्वापरित्यागेनैव एकत्वविशेषणत्वमित्याह—**कर्त्रादौ वर्तमानेष्विति**। **कृत्प्रत्ययेनेति**। पाचकपदगतण्वुलुरूपेणेत्यर्थः। **इतिवदिति**। पक्व इति कर्मक्ता सङ्ख्यानभिधानात् अभिहितसंख्याकत्वरूपाभिहितत्वाभावादनभिहितत्वाच्चैत्रेणेति तृतीया। तद्वच्चैत्रः पाचक इत्यत्रापि ण्वुला संख्यानभिधानात् चैत्रपदे तृतीयापत्तिरित्यर्थः। **सूत्र इति**। तृतीयाविधायकसूत्रे अनभिहिते कर्तरीति पदे कर्तृगतसंख्याविवक्षणे लक्षणापत्तेरित्यर्थः। **सङ्ख्यानभिधानादिति**।

भुजिक्रियायामनन्वयात् गमनक्रियायामेवान्वयाङ्गीकारात्तृतीयोपपत्तिः। **"मयैव पक्त्वा मयैव भुज्यते"** इत्यत्र तु पक्त्वा इत्यनेन कर्तुरुपात्तत्वान्न कर्तरि **"मया"** इत्यादितृतीया। अपि तु **"आत्मानमात्मना वेत्सि" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि"** इत्यादिवत् करणे इति न काचिदनुपपत्तिः। पक्त्वौदनो भुज्यत इत्यादौ तु पचधातोः कर्माकाङ्क्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम्। न हि प्रधानक्रियायामुक्तस्य कारकस्य गुणभूतक्रियायामप्युक्तिरिति नियमे प्रमाणमस्ति, येनाध्याहारं विनाऽपि वाक्यं समर्थ्येत। तथात्वे **"ओदनं भुक्त्वा शास्त्रं पठ्यते"**

**श्रुत्वाऽप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना।**

इत्यादिद्वितीयान्तप्रयोगानापत्तेः। यदि तु—**उक्तप्रयोगेष्वनाश्वासः। "मयैव पक्त्वा मयैव भुज्यते" इत्यत्र च कर्तर्येवाद्या तृतीया। पक्त्वौदनो भुज्यत इत्यत्र नाध्याहाराङ्गीकरणम्। तथा—उक्तनियममङ्गीकृत्य क्त्वाप्रत्ययस्यापि च भाव एव शक्तिमङ्गीकृत्य तदर्थस्य भावस्य पूर्वकालत्वसमानकर्तृकत्वसंसर्गेणोत्तरक्रियायामन्वयोऽङ्गीक्रियते। तदाऽस्तु**

---

यदि तेनैकत्वमभिधीयते तदा विषवृक्षौ विषवृक्षाश्छेत्तुमसांप्रतम् इति प्रयोगानापत्तिः। सर्वसंख्याभिधाने तु अव्यवस्थापत्तिरित्यर्थः। ननु पक्त्वौदनो भुज्यत इत्यत्रैकस्यै-वौदनकर्मण उभयक्रियान्वयात् पक्त्वेति क्रियावाचकपदेन कर्मत्वस्यानभिधानात् द्वितीयापत्ताव-भिहितत्वाभावात् प्रथमानापत्तिरित्यत आह—**पक्त्वौदन इति।** तथा चाध्याहृतौदनपदस्यैव पक्त्वेत्यत्रान्वयात् प्रथमान्तौदनपदप्रतिपाद्यौदनवृत्तिकर्मत्वस्य भुजिक्रियायामेवान्वयात् न पचिक्रिया स्वान्वयिनीत्यर्थः। **वाक्यं समर्थ्येतेति।** तथा च नियमस्वीकारे यत्प्रधान-क्रियायां प्रथमान्तं कारकं तत्प्रथमयैव गुणभूतक्रियायामप्युक्तमिति न द्वितीयापत्तिपूर्वकप्रथमानु-पपत्तिरित्यर्थः। किं भिन्नकारकवृत्त्यपि कर्मत्वाद्येकविभक्तिकपदेनैवोच्यत इति नियमः अथवैक-कारकवृत्तिकर्मत्वादिविषय एव एकविभक्तिकपदप्रतिपाद्यत्वनियमो वा? उभयथापि व्यभिचारं दर्शयति—**तथात्व इति। द्वितीयान्तप्रयोगानापत्तिरिति।** प्रधानभूतपठनक्रियान्वितशास्त्र-वाचकपदे अर्थपदे च प्रथमासत्वादिहापि ओदनपदे प्रथमापेक्षितेत्यर्थः। ननु यत्र न गुण-भूतक्रियायां कर्मवाचकपदान्तरप्रयोगस्तत्रैवैष नियम इति कल्पने बाधकाभावात् न व्यभिचार इत्येवं नियमोपपादने संभवत्यपि व्यभिचारापादकप्रयोगाभावमभिप्रेत्यापि नियमे बाधकाभावं दर्शयति—**यदि त्विति।** एवं मीमांसकमते कर्तृवाच्यत्वसाधकतया उपन्यस्तानां प्रतीतिसामा-नाधिकरण्यस्मृतीनामविरोधे उपपादिते **यन्नवीनवैयाकरणैर्मनोरमायां** दूषणमस्यां स्मृतिव्य-

यद्वृत्तिकारकत्वं स्वान्वयिप्रधानक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्वमभिहितत्वं तदभावोऽनभिहितत्वं, तत्र तृतीया इति संक्षेपः ॥

अत्र वदन्ति—एवं सति ल इति षष्ठ्यन्तं तिबाद्यन्वितं वाच्यं प्रथमान्तस्यानन्वयात् । अतश्च "लस्य" इति सूत्रवैयर्थ्यापत्तिः । लादेशभूतशानजादेः कर्त्रादिवाचित्वानुपपत्तिश्च । न च "कर्तरि कृत्" इत्यनेन तद्वाचित्वम् । तथात्वेऽपि कर्मणि भावे चाकर्मकेभ्यस्तत्प्राप्तेस्सूत्रान्तराविषयत्वात् । अत एवं परिहर्तव्यम्—ल इति प्रथमान्तं कर्त्रादावेवान्वेति । न त्वेतावता तस्य वाच्यत्वम् । लाघवेन वृत्त्या तद्गम्यत्वस्यैव शास्त्रतात्पर्यविषयत्वेन शक्त्यंशे तद्व्यापाराकल्पनात् । सा तु प्राधान्यं विनैव सिद्ध्यतीति सिद्धमाख्याते कर्त्रादेरवाच्यत्वम्, शानजादौ च वाच्यत्वमिति, 'लस्य' इति सूत्रस्य च तिबादीनां लादेशत्वविधायकस्य न वैयर्थ्यम् ।

अतः कर्तुरवाच्यत्वाद्वाच्यत्वेऽपि वा प्राधान्यस्य दूरभ्रष्टत्वान्नपुरुषधर्मत्वक्रतुयुक्तपुरुषधर्मत्वे । एतेन लक्षणया तस्योपस्थितत्वादेव तत्कल्पनेति निरस्तम् ॥

---

वस्थायामुक्तं तदुपपादयति—अत्र वदन्तीति । अनन्वयादिति । कर्त्रैकत्वादौ एकवचनादिरूपा लकारास्संभवन्तीत्यर्थस्य तिबाद्यादेशेष्वेकवचनादिसंज्ञाविधानेन स्थानिभूते लकारे अभावात् अनुपपत्तेर्ल इति षष्ठ्यन्तमङ्गीकृत्य लकारादेशभूतं तिबाद्येकवचनादीत्यर्थौ वक्तव्य इत्यर्थः । षष्ठ्यन्तत्वेनान्वये लकाराः कर्तरि कर्मणि भवन्तीत्यर्थाभावात् तिबाद्यादेशानां कर्त्रैकत्वादिवाचकतया कर्तृवाच्यत्वाभावोपपादनेऽपि लादेशभूतशानजादीनां कर्तृवाचकत्वस्य तवेष्टस्य सिद्धिर्न भवेदित्याह—लादेशभूतेति । सेति । शक्तिरित्यर्थः । तथा च कर्तृकर्मणोः कृतीतिवत् लाक्षणिकानुशासनम् । न च शक्त्यनुशासनाभावे लाक्षणिकानुशासनस्यैव प्रणयनमनुचितम् । पाणिनिना तत्तल्लकाराणां वर्तमानत्वादिकालरूपशक्यार्थप्रतिपादनाय तत्तदनुशासनकरणेनास्य लाक्षणिकत्वोपपत्तेः । न च विनिगमनाविरहः । साधारणासाधारणप्रतीत्योरेव नियामकत्वात् । स्मृतेस्साधुत्वान्वाख्यानपरत्वेन शक्तिलक्षणयोरुभयोरप्यौदासीन्येन कर्त्रादौ प्रतीते सकर्मकाकर्मकेभ्यो व्यवस्थया लकारमात्रविधायकत्वात् न विरोध इति भावः । कर्तुर्वाच्यत्वाभावे क्रतुयुक्तपुरुषधर्मत्वं नास्तीत्युपसंहरति—अतः कर्तुरिति । अत्रेदमाकूतं—कर्तुर्वाच्यत्वपक्षे वैमृधन्यायेन पदान्तरकल्पनया प्राधान्यापादने प्रवर्ग्यन्यायेन क्रतोरेवोपस्थित्या तदङ्गत्वमेव युक्तमिति दूषणं न युक्तं स्थाण्वाहुतिं जुहोतीति वाक्योत्पन्नस्थाण्वाहुतेः स्थाणुपदान्तरकल्पनया साक्षादपूर्वासंबन्धिनोऽपि स्थाणोः स्वजन्यकाष्ठद्वारा यूपरूपादृष्टार्थत्वेन

संस्कार्यतयोपस्थितत्वात अदृष्टद्वारापि तदङ्गत्वस्य दशमे स्वयमेव वक्ष्यमाणत्वात्। तेन न्यायेनेहापि साक्षादपूर्वसंबन्धिकर्तृसंस्कारकत्वस्यानिवार्यत्वात्। न च तत्र यूपस्यादृष्टरूपत्वेनैवानर्थक्यपरिहारात् न क्रतुपर्यन्तोपस्थितेः प्रयोजनमिति शङ्कयं, तत्रापि रशना च लिङ्गदर्शनात इत्यधिकरणवक्ष्यमाणरीत्या अनुवादस्य सन्निहितगामित्वानुरोधेन यूपधर्माणां यूपद्वाराऽग्नीषोमीययागार्थत्वस्य स्वयमेवाङ्गीकारवदिहापि तेन न्यायेन क्रत्वङ्गत्वस्यापत्तेः। अत एव न प्रवर्ग्यस्थलेऽपि ज्योतिष्टोमोपस्थितेरावश्यकत्वात् नोपसदङ्गत्वं उपसज्जन्यावान्तरापूर्वेणैवानर्थक्यपरिहारोपपत्तेः क्रतूपस्थितेरावश्यकत्वाभावात्। अपि तु वाक्यान्तरप्राप्तप्रवर्ग्यानुवादेन उपसत्पूर्वकालस्य तदङ्गत्वस्य विधाने वाक्यभेदापत्त्यैवेति तदधिकरणे मयाऽऽवेदितम्। अत उत्पत्तिवाक्ये वैमृधस्य विशिष्टस्यैव विधानात् न यत्र वाक्यभेदप्रसक्तिस्तत्रोपस्थितपौर्णमासीवाचकपदान्तरकल्पनयापि तन्मात्राङ्गत्वं कल्प्यते। यत्र वा सन्निपत्त्योपकारकत्वलाभस्तत्र वा तथाकल्पनं तदृष्टद्वाराऽदृष्टद्वारा वाऽस्तु; नतु तत्राग्रह इत्येव वक्तव्यमिति प्रकृतेपि वाच्यत्वपक्षे तदापत्तिस्स्यादेव। अत एव वाच्यत्वपक्षे तदङ्गत्वं दुर्निवारमभिप्रेत्यैव वाच्यताखण्डन एव भाष्यकारप्रभृतीनामाग्रहः।

एवं च यत्राङ्गिवाचकं पदं श्रुतमस्ति प्राधान्यमात्रमेव त्वपेक्षावशात्कल्प्यं तत्रोपस्थितिलाघवानुग्रहेण पदान्तरकल्पनया तत्प्रकल्प्य तदङ्गत्वे कल्प्यमाने क्वचित्प्रकरणबाधोऽस्तु, यद्वा परंपरया प्रकरणानुग्रहो वा तत्र तन्मात्राङ्गत्वमिति हेतोः प्रकृते कर्तुः शब्देनोपादानाभावात् लक्षणादिना कर्तुः गुणत्वेनोपस्थितिः। पश्चाच्च पदान्तरकल्पनम्। ततः प्राधान्यमित्येवं दूरतरत्वात् प्राधान्यापेक्षया शीघ्रोपस्थितक्रत्वङ्गत्वमेव कल्पयितुं युक्तमित्येव कर्त्रङ्गत्वखण्डनन्यायशरीरमुत्तराधिकरणन्यायविलक्षणमस्मिन्नधिकरणे स्वीकर्तव्यम्। प्रतीयते च तथैव **भाष्यवार्तिकस्वारस्यानुगृहीतायां न्यायसुधायामाशङ्कोत्तरपरेण** ग्रन्थेन।

**अयं हि तदीयो ग्रन्थः**—कर्तुः अश्रौतत्वेऽपि समानपदोपात्तभावनालक्षितत्वेन प्रकृतात्क्रतोः प्रत्यासन्नतरतया धात्वर्थं प्रति शेषित्वसिद्धेः अनृतोक्तिनिषेधस्य पुरुषार्थत्वनिरासेन क्रत्वर्थत्वसिद्धयै कर्तुर्वाच्यत्वनिरासोऽनर्थक इत्याशङ्कानिरासार्थं "यश्च न श्रौतो न स वाक्यात् गम्यते। कथमसौ प्रकरणं बाधिष्यते" इति भाष्यं वक्ष्यमाणः पुनरादित एव नैष शास्त्रेणोक्त इत्येवं तावत्प्रतीयते। न च तेनानुक्त आदर्तव्यो भवति इति वाच्यावाच्यचिन्ता प्रयोजनवार्तिकालोचनेनाश्रौतत्वे कर्तुः निष्पादकत्वेन तल्लक्षणायामाख्यातशब्दस्य व्यापारात् निष्पादकांशे तात्पर्यवृत्त्या शाब्दत्वात् शाब्दधात्वर्थभावनान्वयोपपत्तावपि शेषित्वेन लक्षणाभावात शेषित्वांशे शब्दतात्पर्याभावेनाशाब्दत्वात् धात्वर्थभावनान्वयायोगसूचनार्थस्य वाशब्दस्य शास्त्रवाचित्वावगतेः

अश्रौतस्य शास्त्रापरिगृहीतत्वेनानादृत्यत्वात् प्रकरणबाधकत्वं न संभवतीत्येवमर्थतया स्पष्टत्वात् न व्याख्यातमिति ।

तस्माद्वाच्यत्वपक्षे कर्तृसंस्कारकत्वस्य दुर्निवार्यत्वात् वाच्यत्वखण्डनेनैव लक्षणोपस्थिताव-प्राधान्यं पूर्वोक्तरीत्यैवोपपादनीयम् । अत एव चतुर्थे प्रजापतिव्रतानां प्रकरणानधीतानामनुपस्थित-क्रत्वङ्गत्वानुपपत्तावेवाक्षिप्तस्य गुणभूतस्यापि कर्तुः प्राधान्यं प्रकल्प्य पुरुषार्थत्वं स्पष्टं साधयिष्यते तन्त्ररत्नेऽपीति । आद्यपक्षे प्रतिषेधस्यानुष्ठेयत्वाभावात्प्रतिषेध्यानृतवदनादेर्वर्जनीयत्वेन कर्त्रनपेक्षणे-नाध्वर्यवसमाख्याया अप्रवृत्तेरध्वर्युकर्तृकत्वनियमाप्राप्तेः प्रवृत्तमात्रेण तद्वर्ज्यमिति प्रयोजनविशेषं सिद्धान्तेऽपि समत्वादुपेक्ष्य प्रयोजनान्तरं दर्शयति--आद्यपक्षे इति । नन्वाद्यपूर्वपक्षे मूलमूलि-भावाभ्युपगमात् प्रत्यक्षयजुर्वेदविहितत्वात् याजुर्वैदिकप्रयुक्तश्रौतप्रायश्चित्तापत्तिः स्यादेवेति चेन्न, श्रौतप्रायश्चित्तस्याहिताग्निपरत्वेनानाहिताग्नेः तद्भेषे स्मार्तप्रायश्चित्तमात्रेरवश्यवक्तव्यतया निमित्तैक्ये सति आहिताग्नेरपि स्मार्तप्रायश्चित्तस्यैव वक्तुमुचितत्वात् । "यदि यजुष्टो यज्ञ" इति वाक्ये यजुष्टः प्राप्तः क इति जिज्ञासाया विषयविशेषनिर्देशं विनाऽनुपगमाद्धविरार्तिन्यायेन यज्ञशब्दार्थ-भूतयज्ञाङ्गस्यावश्यविशेषणीयत्वेन तदनङ्गभूतनिषेधातिक्रमे प्राप्त्यभावाच्च । अतः स्मार्तप्राय-श्चित्तमुक्तं युक्तमेव । तदपि गायत्रीजपादिरूपं प्रयोगविध्यसंग्रहात् न क्रतुमध्ये, किन्तु क्रतुं समाप्य कार्यमिति **प्रकाशकारः** ।

**तत्रायं विवेकः** । यद्यपि क्षुतादिप्रयुक्ताचमनादिप्रायश्चित्तवत् अनृतभाषणप्रयुक्तमपि तत् क्रतुप्रयोगमध्ये शक्यत एव प्रयोगविध्यनुपसंगृहीतमपि कर्तुं एकसन्दर्भेणैव पूर्वलिखित-स्मृतौ क्षुतानृतवदनादिनिमित्तेषु तदाम्नानात, तथापि एकस्मृतिविहितस्यैकस्य प्रायश्चित्तस्य विधाने निमित्तस्य भेदेन क्रतुमध्येऽनुष्ठानं अननुष्ठानं चेति बाधकम्[1] । प्रायश्चित्तनिमित्तं हि द्विविधं एकं निषिद्धमपरमनिषिद्धं; यथाऽऽद्यमनृतवदनादि । तच्च निषेधेन प्रत्यवायजनकमिति बोध्यते, तन्नि-मित्तप्रायश्चित्तस्य प्रत्यवायपरिहारार्थत्वकल्पनया क्रतोरनपेक्षणात् न तु क्रतुमध्ये कार्यम् । अपरस्य तु क्षुतादेः निषेधाभावे प्रत्यवायजनकत्वाकल्पनेन कर्तृगतशुद्ध्यापादकत्वस्यैव लाघवाद-ङ्गीकारेण कर्तृत्वयोग्यतासंपादकत्वमेव तत्प्रयुक्तप्रायश्चित्तस्येति क्रतोरपेक्षितत्वात् क्रतुमध्ये कर्तव्य-मेवेति स्थिते कर्तृशुद्ध्यापादकस्याचमनादेरल्पस्यानुष्ठाने निर्विवादे भूयसोऽपि तस्य प्रधानकाला-विरोधेन शक्यानुष्ठानस्य मध्येऽनुष्ठानं कार्यं निषिद्धनिमित्तकस्य त्वल्पस्य भूयसो वाऽपि न सर्वथा क्रत्वन्तरनुष्ठानमिति फलितम् । यदि त्वेतादृशमवान्तरनिमित्तगतभेदमप्रकल्प्य सर्वस्याप्यल्पस्य भूयसो

**प्रयोजनं** त्वाद्यपक्षे **स्मार्तं प्रायश्चित्तम्।** क्रतुयुक्तपुरुषधर्मत्वे **फलिसंस्कारकत्वाद्यजमानेनैव विधिप्रतिषेधार्थसम्पादनं;** न तु समाख्ययाऽध्वर्युनियमः। **शुद्धक्रतुधर्मत्वे तु विधिषु सति सम्भवे तया नियमः।** निषेधेषु तु तस्या **नियामकत्वासम्भवात्कर्तृमात्रेण वर्जयितव्यमिति** ॥ ८॥

---

वापि प्रायश्चित्तस्य स्मार्तस्यापि प्रधानकालाविरोधे युक्तमनुष्ठानं क्रतुमध्य एवेति विभाव्यते तदा ज्ञानतोऽनृतवदने गायत्रीजपस्य अज्ञानत आचमनदक्षिणकर्णस्पर्शादेर्युक्तमेव क्रतुमध्येऽनुष्ठातुमिति प्रकाशकाराणां गायत्रीजपादेः क्रतुसमाप्त्यनन्तरकर्तव्यतावचनं विभावनीयमेवेति क्रतुमध्यानुष्ठानाननुष्ठानयोरौदासीन्यतात्पर्यमनुमत्यैव[1] सूचितं पूज्यपादैरिति दिक् ॥

क्रतुयुक्तपुरुषधर्मत्वपूर्वपक्षेऽनुवादत्वपक्षे मतभेदेन स्मार्तमथवाऽविज्ञातवेदनिबन्धनप्रायश्चित्तं प्रागेव सूचितम्। विधित्वपक्षे तु यदि यजुष्ट इत्येवमादीनां ज्योतिष्टोमप्रकरणे आम्नातानामपि वेदसंयोगेन श्रवणाद्वाक्येन प्रकरणं बाधित्वा सर्वयज्ञाङ्गत्वप्रतीत्या दर्शपूर्णमासाङ्गनिषेधातिक्रमेऽपि क्रतुधर्मत्वसिद्धान्तपक्ष इव याजुर्वेदिकप्रायश्चित्तप्राप्तेस्सत्वात् प्रयोजने विशेषाभावमभिप्रेत्य सविशेषं प्रयोजनान्तरं दर्शयति—**क्रतुयुक्तपुरुषधर्मत्व इति। न तु समाख्ययेति।** याजमानास्तु तत्प्रधानत्वात् कर्मवदिति तार्तीयाधिकरणन्यायेन समाख्यायाः गुणभूत[2]कर्तृप्राप्तावेव नियामकत्वस्योक्तत्वेन प्रधानभूतयजमानस्यैव प्राप्तेर्नाध्वर्युनियमः। तत्र समिदादीनां यागरूपत्वात् दीक्षणीयादिवत् पक्षद्वयेऽपि याजमानत्वं प्रसिद्धमेव। यजमानवृद्धावपि तन्त्रेणानुष्ठानान्न कश्चन विशेषः। ये तु स्तोत्रशस्त्रजपादयः तत्र गुणभूतकर्तृनियमप्रापकतत्तदौद्गात्राध्वर्यवादिसमाख्याबाधेन दन्तधावनादिवद्यजमानकर्तृकत्वमेव नाध्वर्युकर्तृकत्वं यजमानवृद्धौ च तन्त्रत्वासंभवात् प्रतियजमानं भेदेनानुष्ठानमित्यर्थः। तृतीये सिद्धान्तपक्षे उक्तव्यतिरेकमाह—**शुद्धेति।** तत्तद्यजमानादिकर्तृत्वप्रापकसमाख्यादिप्रमाणान्तरसत्वे तु सत्यपि अध्वर्युकाण्डपठितत्वे नाध्वर्युनियमस्तदभावे तु सर्वथा तया समाख्ययाध्वर्युनियम इति सूचयितुं सतिसंभव इत्युक्तम्। **निषेधेषु त्विति।** निषेधस्यानुष्ठेयत्वाभावात् गुणभूतत्वेन कर्त्रनपेक्षणात् समाख्याया नियामकत्वानुपपत्तेः यत्रैव प्राप्तिः क्रतावनृतस्य तत्रैव निषेधकरणात् यजमानस्य ऋत्विजां च तत्प्राप्तेः सर्वैः क्रतुसंबन्धिभिः कर्तृभिः निषेधपरिपालनङ्कर्तव्यमित्यर्थः। अत्र च प्राकरणिकस्त्र्युपगमनादिनिषेधानामपि शुद्धक्रत्वर्थत्वस्येहैव प्रसाधनीयत्वस्याधिकरणारम्भे सूचितत्वात् यत् क्रतूपकारकतया प्राप्तं सन्निषिद्ध्यते तस्यैव

---

1. A. अनुक्त्यैव
2. A. कर्म

(९)—अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ २० ॥ प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ २१ ॥ व्यपदेशादपकृष्येत ॥ २२ ॥

ज्योतिष्टोमे "तीर्थे स्नाति तीर्थमेव समानानां भवति" इत्यत्र तीर्थस्नानस्य प्रकरणादेव पूर्ववदारादुपकारकत्वं प्राप्तं पशुपुरोडाशन्यायेन दृष्टरूपमलापाकरणार्थत्वलिङ्गेन बाधित्वा क्रतुयुक्तपुरुषधर्मत्वम्। "अप्सु दीक्षातपसी प्रावेशयन्" इत्यर्थवादे अप्सु दीक्षावत्त्वसङ्कीर्तनात् दीक्षायाश्च यमनियमपरिग्रहरूपायाः पुरुषसंस्कारकत्वस्य "गृहपतिं दीक्षयति"

---

क्रत्वर्थत्वसाधनसिद्धान्तानभिधानात् तेनैव न्यायेन यत् क्रतूपकारकतयाऽथवा पुरुषार्थतया प्राप्तमनृतवदनं तदुभयमपि क्रतुवैगुण्यजनकतया निषिद्ध्यत इति सिद्धेऽर्थे यद्वार्तिके सिद्धान्तपक्षे "अतश्च यजमानेन व्रीहिमयं संकल्प्य न यवमयो दातव्यस्तथैवाध्वर्य्वादिभिरपि अन्यतरं पक्षङ्करिष्यामह इत्युक्त्वा न लाघवादिवशेन पुनर्विसंवदितव्यमित्येवं क्रतूपकारकतया प्रसक्तानृतवदनकर्तृकत्वमेव यजमानर्त्विक्साधारणं तन्निषेधे प्रदर्शितम्। तदर्था क्रिया तदर्थ एव निषेध इति नियमानुरोधमात्रेणैव ज्ञेयम्। अत एव पूज्यपादैरेतद्वार्तिकोक्तं क्रतूपकारकतया प्रसक्तानृतवदनमात्रनिषेधकत्वं पूर्वोक्तनियमे व्यभिचारादुपेक्ष्य सामान्येनैव सिद्धान्तकरणात् अनृतवदननिषेधस्येव स्त्र्युपगमनादिनिषेधस्यापि ऋत्विग्भिर्यजमानेन च परिपालनं क्रत्ववैगुण्याय कर्तव्यमिति **शंयौ सर्वपरीदानादित्य**धिकरणान्ते तन्निषेधस्य क्रत्वङ्गत्वोपपादनेन सूचितमित्यलं विस्तरेण।

---

**अहीनवत्।**

**पशुपुरोडाशन्यायेनेति।** पशुपुरोडाशस्य दृष्टार्थत्वानुरोधेनाग्नीषोमवाचकपदान्तरकल्पनया तत्सारकत्वेन संस्कारकर्मत्वं प्रवर्ग्यन्यायवैलक्षण्येन पूर्वाधिकरणे उपपादितं तेन न्यायेनेत्यर्थः। अत्र **प्राचीनै**रस्मिन् वाक्ये तीर्थविशिष्टस्नानस्य विधेयत्वात् विशेषणांशस्य सुखावतरणाख्यपुरुषोपकारशक्त्यात्मकेन विशेष्यांशस्य च मलापकर्षणाख्यपुरुषोपकारशक्त्यात्मकेन लिंगेन तीर्थनियमस्य दुःखावतरह्रदादिमात्रनिवृत्त्यर्थत्वाभावेन नियम्यमानान्यनिवृत्त्यर्थत्वे तूद्धृतोदकादेः सुखकरस्यापि अन्यत्वाविशेषात् निवृत्तेस्तदर्थनियमस्यादृष्टार्थत्वेऽपि तीर्थमेव सजातानां भवतीति वाक्यशेषेण तद्विशेषार्पणात् वाक्येन पुरुषार्थत्वात्तेन सह प्रकरणस्याविरोध एव। "अस्नाताशी मलं भुङ्क्ते" इत्यादिस्मृतिप्राप्तस्नानानुवादेन तीर्थविधौ तु तस्य स्नानस्य क्रतुप्रकरणाभावात् विधिबलेनैव लिङ्गोपेतेन पुरुषार्थत्वं तदाश्रितभोजनप्राग्भावनियमतीर्थनियमावपि दृष्टार्थत्वाभावात् पुरुष-

**इत्यादिना स्पष्टत्वादपि स्नानस्य क्रतुयुक्तपुरुषधर्मत्वम्। अत एव—कर्तृत्वांशे वैयर्थ्यादनुपयोगेऽपि फलाधानांशे उपयोगकल्पनादस्य याजमानत्वमिति। स्पष्टत्वादेवेदं मूले उदाहृतमपि न विचार्यते।**

---

गताहष्टार्थैवेति पुरुषार्थत्वं साधितम्। तत्र विशेषणांशस्य सुखावतरणाख्यपुरुषोपकाराख्य-शक्त्याख्यं लिङ्गं तीर्थनियमस्य पुरुषगतादृष्टार्थत्वं च यदुक्तं तदुपेक्ष्य केवलं दृष्टरूपमलापकर्षणार्थ-त्वरूपं लिङ्गं स्नानगतमेवोक्तं **पूज्यपादैः**।

**तस्यायमाशयः**—नास्मिन् वाक्ये तीर्थविशिष्टस्नानस्य विधिर्न वा भोजनपूर्वभाविस्नानानु-वादेन तीर्थविधिः विशिष्टविधिगौरवापत्तेः। भोजनपूर्वभाविनस्तस्यासन्निहितत्वेन उपस्थित्य-भावाच्च। किंतु "अङ्गिरसस्सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन् अप्सु स्नाति साक्षादेव दीक्षातपसी अवरुन्धे तीर्थे स्नाति तीर्थे हि ते तां प्रावेशयन् तीर्थे स्नाति तीर्थमेव समानानां भवति" इति सार्थवादकाप्सुस्नातीत्यत्रैव स्नानविधिः। नह्यत्र रागप्राप्तस्य स्मृत्यन्तरप्राप्तस्य वा स्नानस्य विधिः संस्कार्यरूपानुपादेयसहकृतानुपस्थितिप्रकरणान्तरन्यायेन भेदात्। अतोऽपूर्वस्यैव वपनादे-रिव दीक्षासंस्कारान्तर्गतत्वेन स्नानस्य विधिः। एतत्स्नानाश्रितस्यैव तीर्थाधिकरणत्वस्योत्तरवाक्येनार्थ-वादिकफलान्तरसंबन्धविधानमात्रं क्रियते। तथा च दीक्षासंस्कारार्थं यत्र क्वचन जलाशये स्नानमपेक्षितमपि यजमानेन कर्तव्यं; तत्रापि तद्यदि तीर्थे करोति तदा स्वसंस्कारजनकस्नानस्य तीर्थेऽनुष्ठानात् तत्प्रविष्टदीक्षातप आदिसंस्कारः समानानां भवतीत्यर्थात् अन्यत्र गुणफलसंबन्धस्थले गुणाश्रयजन्यादृष्टद्वयस्येवेहापि तत्स्वीकारेऽपि आश्रयजन्यस्यादृष्टस्य यजमानगामित्वं तीर्थरूप—गुणजन्यस्य तु जातेष्टाविवान्यस्वसमानगामित्वमित्येवं पूर्वापरसार्थवादकतत्तद्विध्यालोचनेन निर्णये सति क्व तीर्थनियमस्य यजमानगतादृष्टार्थत्वम्? नतरां च तीर्थविशेषणे सुखावतरणाख्य-पुरुषोपकाराख्यशक्तिरूपं लिङ्गं संभवति। नह्यत्र तीर्थपदं सुखावतरणजनकमात्रपरं माना-भावात्। अन्यत्र तीर्थादौ पापापाकरणजनकत्वरूपयोगाश्रयेण रूढ्या च प्रयोगस्य नानास्मृतिषु दर्शनेन तस्यैवेह ग्राह्यत्वात्।

**एतेन** पूर्वलिखिततैत्तिरीयवाक्यातिरिक्तत्वेन अङ्गिरसो वा इत उत्तमास्सुवर्गं लोकमायन् तेऽप्सुदीक्षातपसी प्रावेशयन् तीर्थे स्नाति तीर्थमेव सजातानां भवतीति भाष्यलिखितं शाखान्तरीयमेव वाक्यमेवात्रोदाहरणं, तथापि पूर्वोक्तरीत्या तीर्थविशिष्टस्नानान्तरविधानमेव स्वीकर्तव्यमिति तावतापि न तीर्थांशे नियमविधित्वेन तज्जन्यमदृष्टं यजमानगतं सिद्ध्यति,

दर्शपूर्णमासयोस्तु **"जञ्जभ्यमानो(ऽनु)ब्रूयात् मयि दक्षक्रतू इति प्राणापानावेवात्मन्धत्त" इति श्रुतो मन्त्रपाठः** किं शुद्धक्रतुधर्मः? **उत शुद्धपुरुषधर्मः**? आहोस्वित् क्रतुयुक्तपुरुषधर्म इति चिन्तायां—पूर्ववत्पुरुषस्य शानजुपात्तस्यापि सर्वप्रधानभूतायां **भावनायां चैत्रादिवद्विशेषणत्वेनोपादानात्प्रवर्ग्यन्यायेन प्राधान्यकल्पनानुपपत्तेः** "लक्षणहेत्वोः क्रियायाः" इत्यनेनानु-

---

नवा सुखावतरणरूपपुरुषोपकारकत्वलिङ्गमिति ज्ञेयम्। अतो न तत् पुरुषार्थत्वसाधकं लिङ्गमित्यलं विस्तरेण। ते इति तच्छब्दोपादानं पूर्वनिर्दिष्टाङ्गिरसां परामर्शद्वारा पूर्वतनार्थवादसंग्रहार्थम्। एवं ज्योतिष्टोमप्रकरणगतलिङ्गप्रकरणविरोधाविरोधविचारोदाहरणमविरोधस्य स्पष्टत्वादुपेक्ष्य वाक्यप्रकरणविरोधाविरोधविषयमुदाहरति—**दर्शपूर्णमासयोस्त्विति**। अत्र निवीताधिकरणवत् कर्तव्येषु पञ्चसु पक्षेषु मध्ये सारवत्तया पूर्वाधिकरणोक्तपक्षत्रयस्य कर्तव्यतायां पूर्वाधिकरणापवादत्वसूचनार्थं पूर्वाधिकरणगतसिद्धान्तपक्षमादावुल्लिखन् पक्षत्रयेण सन्देहं दर्शयति-**किं शुद्धक्रतुधर्म इति**। अत्र च प्रकरणात् शुद्धक्रतुधर्मत्वकोटेः **शास्त्रदीपिकायामनुल्लेखा**-त्तद्बीजस्याख्यातवाच्यकर्त्रभावेऽपि कृता पुरुषस्योक्तत्वात् पुरुषार्थत्वस्यैव वाक्येनैव प्राप्तेः सुनिरस्यत्वरूपस्य **प्रकाराकारै**रुक्तस्यायुक्तत्वं सूचयत् वार्तिके संक्षेपमात्रेण दर्शितं क्रतुधर्मत्वपूर्वपक्षं स्वयं विस्तरेणाह—**पूर्ववदिति**। अत्र च शानचोपात्तस्य कर्तुः प्राधान्यकल्पनया केवलपुरुषार्थत्वं द्वितीयपक्षे वार्तिके साधितं, तदनूद्य दूषयति—**सर्वप्रधानभूतायामिति**। सत्त्वप्राधान्यप्रतिपादकस्मृत्या कृदुपात्तकृतिं प्रति जृंभारूपधात्वर्थं प्रति च तस्य प्राधान्येऽपि ब्रूयादित्युपात्तसर्वप्रधानभूतभावनायां कर्तृतया गुणत्वेनान्वयात् नानुवचनक्रियां प्रति पुरुषस्य प्राधान्यं संभवति पदान्तरकल्पना तु पूर्वमेव प्रवर्ग्यन्यायेन निरस्तेत्यर्थः। यदप्यत्र **प्रकाराकारैः** जृंभाया अनुपादेयत्वेन निमित्तत्वावश्यंभावात् उद्देश्यत्वादेकस्मिंश्च पदे एकप्रसरताभङ्गापत्त्या जृंभायामुद्देश्यत्वस्य तदाश्रयकर्तुश्च गुणत्वेन विधेयत्वस्यानुपपत्तेः अगत्या पुंसोऽपि शानजुक्तस्य प्राधान्यमेव युक्तमिति वाक्येन प्रकरणबाधात् न क्रत्वर्थत्वमपि तु पुरुषार्थत्वमेवेत्युक्तं तत् जृंभाया निमित्तत्वेऽपि शानजुपात्तकर्तुर्विधेयत्वानङ्गीकारेण एकप्रसरताभङ्गानापत्त्या न तद्द्वयेन प्राधान्यं सिद्ध्यतीति अयुक्तमिति सूचयन् निमित्तत्वमुपपादयति—**लक्षणहेत्वोरिति**। अत्र च जृंभिकानिमित्तस्य मन्त्रोच्चारणस्य किमर्थत्वं पुनः स्यादित्यधिकरणोपक्रमवार्तिकोक्तं जृम्भिकानिमित्तत्वमुपपादयता **न्यायसुधाकृता** लक्षणहेत्वोः क्रियाया इति **स्मृतेर्जृंभायाश्शानचोद्देश्यत्वाख्यलक्षणत्वस्योक्तत्वात्**, निमित्ततां च विना उद्देश्यत्वायोगात्, निमित्तत्वावगतिरित्युक्तं, तत् भिन्ने जुहोतीत्यादिवत् सप्तम्याद्यभावात् लक्षणत्वस्य च भाव्यतावच्छेदकत्वेऽप्युपपत्तेः अपेक्षितभाव्यपरत्वे संभवति अनपेक्षितनिमित्तपरत्वायोगात् अतो जञ्जभ्यमानपदं भाव्यपरमेव। आर्थिकी तु जृंभाया निमित्तता। अत एव

**वचनक्रियायां लक्षणत्वेनावगतस्य जृम्भणस्य भाव्यत्वादिना लक्षणत्वायोगान्निमित्तत्वप्रतीते-र्जृम्भायां निमित्तेऽनुवचनं भेदनहोमवदारादुपकारकम्। शानजुपात्तकर्ता तु अर्थप्राप्तत्वा-**

---

जञ्जभ्यमानस्य संस्कारो जञ्जभ्यमानपदेनापूर्वं लक्ष्यत इत्यादिसूत्रभाष्यादिस्वारस्यं लभ्यते। इतरथा निमित्ते अपूर्वसाधनत्वलक्षणायाः क्वापि मीमांसकैरनङ्गीकारात् तत्स्वारस्यभङ्गापत्तेरित्येवं **प्रकाराकारै**र्दूषितं ; तदयुक्तमिति सूचयितुं भेदनहोमस्य दृष्टान्तत्वेनोपादानं कृतम्।

**तस्यायमाशयः**। नहि सप्तम्यपि निमित्ते केनचिदनुशासनेन विहिता। अपि तु यस्य च भावेन भावलक्षणमिति भावलक्षणे विहिता निमित्तत्वरूपलक्षणत्वेऽर्थतः फलति इत्यार्थिक-निमित्तत्वपरैव। अत एव प्रतिषिद्धेष्वकर्मत्वादिति षाष्ठकलञ्जभक्षणाधिकरणे लक्षणार्थकशतृ-प्रत्ययात् आदित्योदयस्यानीक्षणसङ्कल्पं प्रति निमित्तत्वं साधयता **तन्त्ररत्नकृ**ता उक्तं—यस्मिंस्तूप-संप्राप्ते कर्तव्यतया क्रिया लक्ष्यते तदेव निमित्तमित्युच्यते। तेन नेक्षेतेत्यनेन कर्तव्यतयोच्यमानस्या-नीक्षणसंकल्पस्य आदित्योदयो लक्षणत्वेनोच्यमानो निमित्तं भवति। सप्तमीयद्वृत्तयोरपि एतावदेव निमित्तप्रतिपादकत्वम्। सप्तम्यपि हि भावलक्षणे विहिता तन्मात्रमेव श्रुत्याऽभिधत्ते न निमित्ततां, तथा यच्छब्दोऽपि अन्योपलक्षणत्वेन स्वार्थमभिवदति। तच्च निमित्तत्वेनैव घटते नान्यथेति विधिशब्दसमभिव्याहृताभ्यां निमित्तत्वसिद्धिरेवमिहापीति। एवं च शानचोऽपि लक्षणे विहितस्य निमित्तत्वपर्यवसायित्वसाम्ये सति भिन्ने जुहोतीतिवत् सप्तम्याद्यभावादित्युक्तेर्न विशेषकरत्वं प्रत्युत सप्तम्यनुशासनेन क्रियावाचकस्य धातोः प्रातिपदिकसंज्ञाऽभावात् सप्तमीविधानानुपपत्तेः तादृशक्रिया-विशिष्टकर्तृकर्मान्यतरबोधकपदादेव तद्विधानात्। ब्राह्मणेषु अधीयानेषु गतः गोषु दुह्यमानासु गत इत्यादौ कर्तृकर्मवाचकाधीयानदुह्यमानपदपरतत्सप्तम्या विशिष्टस्य बोधितं लक्षणत्वमर्थात् निर्ज्ञात-कालाध्ययनदोहनक्रिययोः फलति। न तु शब्दवृत्त्या क्रियागतत्वेन तद्बोध इत्येव शाब्दिक-सिद्धान्तः।

प्रकृते तु लक्षणहेत्वोः अर्थयोर्विद्यमानाद्धातोरेव परतश्शतृशानज्विधानात् तदर्थे लक्षणरूपे धात्वर्थक्रियायास्साक्षादेव भेदेन प्रकृत्यर्थत्वेनान्वयात् ताभ्यां बोधितं निमित्तत्वपर्यवसायि लक्षणत्वं शब्दवृत्त्यैव क्रियायां बोधितमिति भवत्येव शाब्दं न त्वार्थिकं, तच्च पूर्वक्रियावर्तमानकालिकत्वादि-रूपं यथासंभवमन्यद्वेत्यस्तु विचारान्तरं; सप्तम्यपेक्षया शब्दाच्छीघ्रं तस्येह बोधे तु न कोऽपि विवादः। **अतश्च शानचा निमित्तत्वबोधनेऽपि यदा भेदनहोम इव क्रतूपकार एव भाव्यं तदा जञ्जभ्यमानस्य**

दनुवादः। **वस्तुतस्तु—अनुवचनस्थारादुपकारकत्वे समाख्यया आध्वर्यवत्वापत्तेर्यजमानान्य-**

---

भिन्नकपालस्येव भाव्यत्वाभावात् भाव्यतावच्छेदकत्वेन लक्षणत्वानुपपत्तेर्लक्षणत्वस्य निमित्ततापर्य-वसायित्वस्यैव वक्तव्यत्वात् भाव्यापेक्षाभावेऽनपेक्षितनिमित्तपरत्वमगत्या स्वीकर्तव्यमेव।

**यदपि** सिद्धान्ते जञ्जभ्यमानस्य संस्कार्यत्वं तदा लक्षणार्थकशानज्करणे नैव किञ्चि-त्प्रमाणमपि तु अन्यत्र पचमाना इत्यादिष्विव लक्षणत्वार्थकत्वाभावेऽपि शानचः प्राप्तिसंभावात् धात्वर्थरूपजृंभाविशेषणत्वेन तदाश्रये संस्कार्यतानियमोपपत्तेः लक्षणत्वस्य भाव्यतावच्छेदकत्वेऽपि उप-पत्तेरित्युक्तिरकिंचित्करैव। नहि भाव्यतावच्छेदकस्य भाव्यलक्षणत्वेऽपि उत्तरक्रियालक्षणत्वं संभवति येनात्र लक्षणे शानच्प्रत्ययो भवेत्। अतो यः कंपते सोऽश्वत्थ इत्यादाविव उत्तरक्रियालक्षकत्वा-भावे तत्प्राप्त्यनुपपत्तेरिह जृंभाया उत्तरक्रियालक्षकत्वेन रूपेण बोधस्यावश्यकत्वात् अवश्यं लक्षणा-र्थके एव शानचि कृते जृंभाया निमित्तत्वपरमेव जञ्जभ्यमानपदं संस्कार्यं च तद्वाचकत्वेन कल्पित-पदान्तरोपस्थापितमेवेति नापूर्वसाधनत्वलक्षणाद्यनुपपत्तिः। नहि पदान्तरकल्पनां विना भवदुक्त-रीत्या जृंभाया निमित्तत्वमङ्गीकृत्य एकप्रसरताभङ्गापत्तिमात्रेण पुंसः प्राधान्यं शक्यं कल्पयितुम्। तथाप्येकस्मिन् पदे एकप्रसरतारूपैकार्थीभावभङ्गापत्तेः तदवस्थत्वात् भवन्मते जृंभाया आर्थिक-निमित्तत्वाङ्गीकारात् प्रथमतः शाब्दबोधे जृंभाविशिष्टपुंसः कर्तृत्वेन गुणतयैवान्वये सति अर्था-ज्जृंभायानिमित्तत्वस्य उपपन्नत्वेऽपि तद्गतनिमित्तत्वानुरोधेन पुंसि प्राधान्यकल्पने मानाभावाच्च। अतः सिद्धान्ते जृंभागतलक्षणत्वबोधनियमानुरोधेन "शयाना भुञ्जते यवनाः" इति वाक्ये शयानापद इवेहापि लक्षणार्थशानचा तत्प्रतीतिर्वक्तव्या। सुतराञ्च क्रतुधर्मत्वपूर्वपक्षे भेदनस्य सप्तम्येवेत्यभि-प्रायेण **न्यायसुधाकृ**तस्तल्लक्षणोद्भावनपूर्वकं जृंभिकानिमित्तस्य मन्त्रोच्चारणस्येति वार्तिकव्याख्यानं नायुक्तम्।

अत एव **पूज्यपादैः** प्रथमपूर्वपक्ष एव निमित्तताप्रतिपादनपरतदनुशासनं लिखितं पुरुषविशेषणत्वपक्षे तस्य गुणत्वे प्राधान्येऽपि वा विशेषणमर्यादालभ्यमार्थिकमेव निमित्तत्वं वक्ष्यते। तेन जृंभिकानिमित्तस्येति वार्तिकं यथा कथंचित् प्रतीतजृंभिकानिमित्तमात्रपरत्वेन व्याख्येयं, न तु **राणक**रीत्या तदनुशासनशिष्टत्वेनैवेति सूचितं; न त्वेवं भवद्भिरार्थिकनिमित्तत्वे उच्यमाने सूत्रानु-शिष्टत्वं नास्त्येवेति वक्तुं शक्यते, लक्षणत्वस्य भाव्यतावच्छेदकत्वेनाप्युपपत्तेः इति भवल्लिखने भाव्यपरत्वपक्षेऽपि तदनुशासनप्रवृत्तेर्दर्शितत्वात्। अतः क्रतुधर्मत्वपूर्वपक्षे कपालगतभेदनस्य सप्तम्येव पुङ्गतजृंभायाः शानचा निमित्तत्वापत्तिर्युक्तैवेति। **अनुवाद इति।** तथा च **गुणत्वेन**

**पुरुषजृम्भायामपि** तत्कर्तृकमन्त्रपाठापत्तेः शानजुक्तजृम्भाकर्तृकर्तृकत्वानुवादानुपपत्तेरवश्यं **जृम्भायाः क्रियायां पुरुषविशेषणत्वमङ्गीकृत्य जञ्जभ्यमानकर्तृविशिष्टमनुवचनमेवाध्वर्यवं विधीयते आरादुपकारकत्वेन। ततश्च जृम्भायाः** क्रियां प्रति **निमित्तत्वेनान्वयायोगादार्थिकमेवास्याः** वषट्कारादिवन्निमित्तत्वमिति **प्रथमः पक्षः॥**

**द्वितीयस्तु—जञ्जभ्यमानस्य कर्तृत्वेनानुवचनं प्रति गुणत्वाङ्गीकारे** गुणानुरोधेन **प्रधानभूतानुवचनस्य क्रतौ पाक्षिकत्वापत्तेः जञ्जभ्यमानस्य क्रियां प्रति शब्दतो विशेषणस्यापि** स्वर्गादिवदेव **प्राधान्यम्। तदा हि प्रधानानुरोधेन पाक्षिकत्वेऽपि न दोषः।** यद्यपि च **तिङभिहितकारकत्वमेव प्रथमार्थः न तु संस्कार्यत्वम्। तथाऽपि कर्तृत्वस्य फलसमानाधिकरणत्वतद्व्यधिकरणत्ववैशिष्ट्यभेदेन भिन्नत्वात्** उक्तयुक्त्येह **फलसमानाधिकरणकर्तृत्वस्यैव प्रथमार्थत्वात् फलभोक्तृत्वरूपसंस्कार्यत्वसिद्धिर**विकलैव। **एतदभिप्रा-**

---

विधेयत्वाभावात् न जृंभाया निमित्तत्वाङ्गीकारेऽपि एकप्रसरताभङ्गापत्तिरित्यर्थः। **कर्तृकर्तृकत्वानुवादेति।** क्रतुयुक्तपुरुषसंस्कारकत्वे हि वपनादिवद्याजमानत्वेन यजमानस्यैव जृंभावतोऽनुवचनकर्तृत्वप्राप्तावपि आरादुपकारकत्वपक्षे गुणभूतकर्तृनियामिकया समाख्यया आध्वर्यवत्वापत्त्या यजमानान्यजृंभायामपि तत्प्राप्त्यापत्त्या जृंभावत्कर्तृकत्वानुवादोऽनुपपन्नस्स्यादित्यर्थः। **आध्वर्यवमिति।** आध्वर्यवसमाख्ययाऽनुवचनस्याध्वर्यवत्वे सिद्धे अर्थाज्जञ्जभ्यमानस्सन्नेव स तत्र कर्तेति फलति इत्यध्वर्युणा जृंभावताऽनुवचनं कर्तव्यमित्यर्थः। **क्रियां प्रतीति।** व्याख्यातपूर्वमेतत्। **वषट्कारादिवदेव वेति।** यथा वषट्कर्तुः प्रथमभक्ष इत्यत्र वषट्कारकर्तृकर्तृकभक्षान्तरविधौ विशेषणत्वबलादार्थिकं वषट्कारस्य निमित्तत्वं तद्वदित्यर्थः। **गुणानुरोधेनेति।** यदा जञ्जभ्यमानः तदानुवचनमन्यदा नेत्येवं गुणभूतकर्त्रनुरोधेन नित्यवच्छ्रुतप्रधानभूतानुवचनस्य पाक्षिकत्वापत्तेरित्यर्थः। **स्वर्गादिवदेवेति।** यथा स्वर्गस्य कर्तृविशेषणत्वेऽपि तस्मिन् फलत्वादार्थिकं प्राधान्यं तद्वदिह तस्यैवार्थिकं तद्भविष्यतीत्यर्थः। ननु तत्र स्वर्गस्य काम्यमानत्वेनोपादानात् तद्भोक्तृत्वप्रतीतेः प्राधान्यसंभवेऽपीह संस्कार्यताबोधकाभावे कुतस्तत्प्रतीतिरित्याशङ्कापरिहारायाह—**यद्यपि चेति।** यदि कारकत्वमात्रं प्रथमार्थः स्यात् तदा कर्मत्वमादायैवोपपद्यमाना प्रथमा संस्कार्यत्वेन प्राधान्यपरा स्यात्; नत्वेतदस्ति, किन्त्वनुब्रूयादिति तिङुपात्तकारकत्वमिति तेन कर्तृत्वस्यैवोक्तौ प्रथमयापि तदेव वक्तव्यमतो न प्राधान्यप्रतीतिरिति सूचयितुं तिङभिहितेत्युक्तम्। **उक्तयुक्त्येति।** गुणानुरोधकृतपाक्षिकत्वापत्तियुक्त्येत्यर्थः। **अविकलैवेति।** तथा च फलभोक्तृत्वसमानाधिकरणकर्तृत्वे प्रथमया उक्ते कर्तृत्वाश्रयस्यैव फलभोक्तृताप्रतीतेः कर्तृत्वस्य

येणैव कौस्तुभे अधिकारित्वस्य प्रथमार्थत्वोक्तिरिति ध्येयम्। अतो जञ्भ्यमानोद्देशेनानुवचनविधानात्प्रकरणानुरोधेन च वाक्यसङ्कोचे प्रमाणाभावाच्छुद्धपुरुषधर्मत्वम्। न च फलकल्पना। प्राणापानधारणरूपस्य फलस्य स्ववाक्य एव क्लृप्तत्वेन तदभावात्। यद्यपि चायमर्थवादस्स्यात् तथाऽपि प्रकरणावगतक्रतूपकारापेक्षयाऽस्यैव स्ववाक्योपस्थितस्य तद्वाचकपदान्तरकल्पनया फलत्वस्यौचित्याच्च। अतश्शुद्धपुरुषधर्मत्वमिति प्राप्ते—

न तावत् फलं क्लृप्तम्। धत्त इति वर्तमानत्वनिर्देशेन योग्यानुपलब्धिबाधितत्वात्। अतोऽस्य स्तुत्यर्थत्वेनैवान्वयमङ्गीकृत्य फलापेक्षायां कामपदयुक्तपदान्तरकल्पनयाऽस्यैव वा भविष्यदर्थकत्वकल्पनया फलपरत्वं परिकल्प्य तस्य कथञ्चिज्जञ्भ्यमानकर्तृभोग्यत्वं वाच्यं, तथा सति फलं तज्जनकत्वं तद्व्यापाररूपापूर्वं चेत्यनेककल्पनातो वरं

---

कृदुपात्तजृंभाश्रयवृत्तित्वेन भोक्तृत्वस्यापि तद्वृत्तित्वसिद्धौ संस्कार्यत्वकर्तृत्वयोरेकवृत्तितोरपि एककाले बोधानुपपत्त्या जृंभाश्रयरूपकर्ता अनुवचनेन स्वोपकारं भावयेदित्येवं संस्कारवाचकपदकल्पनया संस्कार्यत्वसिद्धिरविकलेत्यर्थः। अनयैव च रीत्या स्वर्गकामस्य फलभोक्तृत्वसमानाधिकरणकर्तृत्वप्राप्तावपि तत्र फलस्य स्वर्गस्य श्रुतत्वात् तदाश्रयत्वेनैव भोक्तृत्वं भवति। यत्र तु न तच्छ्रुतं तत्रार्थवादिकम्, अथवा योग्यताख्यसंस्काररूपं तत्प्रकल्प्य तदाश्रयत्वेन तत्कल्पनम्। ततश्चास्मिन्नधिकरणे गुणानुरोधकृतपाक्षिकत्वापत्तिप्रयुक्तम्, यत्र तु फलभोक्तृत्वं श्रुतं तत्र तद्वाचकपदान्तरकल्पनया ऽथवा अर्थात्तस्य प्राधान्यं कल्पयित्वा साक्षादेव तदर्थत्वम्, अथवा तत्संस्कारद्वारा क्रत्वङ्गत्वमित्येवं न्यायो यः पूर्वाधिकरणे जञ्भ्यमानमन्त्रे तु वक्ष्यत इत्यनेन सूचितः स प्रवर्ग्याधिकरणपूर्वाधिकरणवैलक्षण्येनोक्तः। येषां च **प्राचां** मते कर्तुः शानजुपात्तत्व एव पुरुषधर्मत्वसाधनभारः तेषां तु शक्त्यैव पुरुषस्योपस्थितत्वात् आख्यात इवानुपपत्तिप्रतिसन्धानमूलकलक्षणाकृतविलम्बाभावेन तद्वाचकपदान्तरमेव प्रकल्प्य तदर्थत्वमित्येवं प्रवर्ग्याधिकरणपूर्वाधिकरणवैलक्षण्यं मया प्रागेव सूचितमिति ध्येयम्। **यद्यपि चेति**। वक्ष्यमाणेन द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति **पर्णमय्यधिकरणन्यायेनेति** शेषः। यत्र परार्थत्वं विज्ञातं तत्रार्थवादे फलश्रुतिरर्थवादोऽस्तु, इह तु वाक्येन प्रकरणबाधे सति परार्थत्वानिश्चयात् प्रत्युतापेक्षितत्वेन फलसमर्पकत्वं युक्तमेवेति **स्यात्पदेन** सूचितम्। फलपरताद्योतककामपदाद्यभावेन शक्त्या तत्प्रतिपादनासमर्थस्यार्थवादत्वे युक्तेऽपि समाधत्ते—**तथापीति**। **योग्यानुपलब्धीति**। **यद्यपि** मन्त्रपाठानन्तरमस्य तदानीमपि प्राणापानधारणं जायमानं दृश्यते इति न योग्यानुपलब्धिबाधितत्वं **तथाप्यस्य** तत्पाठं विनापि जाय-

प्रकरणानुरोधेन क्लृप्तक्रतुफलाधानयोग्यताजनकत्वमात्रं क्रत्वपेक्षितत्वात्कल्पयितुमुचितमिति क्रतुयुक्तपुरुषधर्म एवायम्। फलाधानयोग्यतासम्पादकत्वाच्च याजमान इति प्रयोजनम् ॥ ९ ॥

---

## (१०)—शंयौ च सर्वपरिदानात् ॥ २३ ॥

अत एव दर्शपूर्णमासयोः "देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वहेति सोऽब्रवीत् वरं वृणै किं मे प्रजाया इति तेऽब्रुवन् यो ब्राह्मणायावगुरेत् तं शतेन यातयात्

---

मानत्वान्न फलत्वं, अतः प्राणापानवियोगकालीनं कालान्तरभावितद्वारणमेव फलं वाच्यम् । तस्य च वर्तमानत्वासंभवात् योग्यानुपलब्धिबाधितत्वमित्यर्थः । क्रत्वपेक्षितत्वादिति । क्रतुप्रकरणाम्नानेन क्रतुकथंभावाकाङ्क्षयाऽपेक्षितत्वादित्यर्थः । पूर्वपक्षद्वये तत्तदुपपादनेनैव प्रयोजनस्य स्पष्टत्वात् तदुपेक्ष्य सिद्धान्तपक्षे प्रयोजनमाह—फलाधानेति । यजमानप्राधान्येन तस्यैव कर्तृत्वेन नियमतः प्राप्तौ गुणभूतकर्तृनियामकतया आध्वर्यवसमाख्याया अप्राप्तेर्नाध्वर्युकर्तृकोऽपि तु याजमान एवायं धर्म इत्यर्थः ।

---

### शंयौ सर्वपरीदानात् ।

अत्र प्राचीनैः पूर्वाधिकरणे सिद्धान्तितस्य क्रतुयुक्तपुरुषधर्मत्वस्येहापवादः क्रियत इति सूचितम् । तदयुक्तम् । अनृतवदनन्यायेनास्मिन्नपि निषेधे क्रतुयुक्तपुरुषधर्मत्वनिरासेन शुद्धक्रतुधर्मत्वस्यैव प्राप्तेः पूर्वाधिकरणविषयत्वाभावेन तदप्रसक्तावपवादत्वायोगात् । अतोऽकर्मक्रतुसंयुक्तमित्याद्यधिकरणेषु निवीताधिकरणवत् कर्तव्येषु पञ्चसु पक्षेषु मध्ये योग्यतया सारवत्तया च विचारणीयानां पुरुषधर्मत्वक्रतुयुक्ततद्धर्मत्वशुद्धक्रतुधर्मत्वपक्षाणां त्रयाणां विषयभेदेनापवादापवादकरूपतया विचारस्य कर्तव्यतायां नानृतं वदेदित्युदाहरणे आद्यपक्षद्वयनिरासेन क्रतुधर्मत्वे साधिते तमेव पूर्वपक्षीकृत्याव्यवहितपूर्वाधिकरणे तन्निरासादपवादरूपेण यथा द्वितीय एव पक्षः सिद्धान्तितः, तथेहापि तदेव क्रतुधर्मत्वं पूर्वपक्षीकृत्य तन्निरासादपवादरूपेणाद्य एव सिद्धान्तपक्षत्वेन साध्यते यया युक्त्या तयैव नान्तरीयकतया पूर्वाधिकरणसिद्धान्तोऽपवदितो भवतीति पूर्वाधिकरणप्रत्युदाहरणमात्रत्वेन तदुत्तरमारंभ इत्येतत्सूचयन् पक्षत्रयमनुलिख्यैव प्रत्युदाहरणरूपत्वं दर्शयति—अत एवेति । फलश्रवणस्य क्लृप्तत्वादेवेत्यर्थः । प्रकरणवाक्ययोर्विरोधाविरोधचिन्तासङ्गतिदर्शनाय दर्शपूर्णमासयोरित्युक्तम् । सूत्रे शंयुपदोपेतोपक्रमवाक्यगतनिषेधस्योदाहरणत्व-

तस्मान्न ब्राह्मणायावगुरेत्" इति श्रुतो दण्डोद्यमनादिरूपावगोरणप्रतिषेधोऽपि शुद्धपुरुषधर्म एव। यातनारूपस्य फलस्य क्लृप्तत्वेन प्रकरणेन वाक्यसङ्कोचायोगात्। अत्र ह्याशिषि लिङ् प्रवर्तनाया बाधात्। आख्यातार्थोऽपि लक्षणया भोगरूपानुभवो निस्तारो वा। तमिति द्वितीयार्थो विषयत्वम्। तथाचावगोरणकर्तृविषये शतगुणं यातनानुभवः शतसंवत्सरेण वा तन्निस्तारो भवत्वित्यर्थः।

वस्तुतस्तु—आख्यातार्थोऽनुभावनादि, लिङर्थोऽनुकूलव्यापार एव। तथा च तं प्रति भवान् शंयुरनुभावयेदित्यर्थः। अत्र च लिङुपादानेन पूर्ववद्वर्तमानत्वाप्रतीतेर्यातनायास्साध्यत्वावगमान्निषेध्यफलं कामपदाद्यभावेऽपि क्लृप्तम्। अतश्शुद्धपुरुषधर्म इति प्रत्युदा-

---

सूचनात् तदर्थं चिन्तासङ्गतिदर्शनाय शंयुं बार्हस्पत्यमित्याद्युपक्रमेण यथाकथञ्चित् उपयुक्तानुपयुक्तसाधारण्येन निषेध उदाहरणतया दर्शितः। दण्डोद्यमनादीत्यादिपदेनाधिकरणमालायां दर्शितस्यावज्ञारूपस्यार्थस्य संग्रहः सूचितः। अवगूरणादीत्यादिपदेन लोहितकरणहननसंग्रहः। तेनावगूरणनिषेधतदव्यवहितपठितयोर्न लोहितं कुर्यान्न निहन्यादित्यप्युदाहरणं सूचितम्। यातनारूपस्य नरकरूपस्येत्यर्थः। क्लृप्तत्वमेवोपपादयितुमाह—अत्र हीति। यातनानुभवस्य तन्निस्तारस्य वाऽऽख्यातार्थस्यावगोरणकर्तृनिष्ठस्य परप्रेरणाजन्यत्वाभावेन प्रवर्तनायां यातयादिति लिङोऽनुपपत्तेः आशीरर्थकत्वं तस्याह—आशिषीति। शतेनेत्यस्याग्रे संख्येयस्यानुपादानात् यो निहनत् तं सहस्रेण यातयात् यो लोहितं करवद्यावतः प्रस्कद्य पांसून् संगृह्णात् तावतः संवत्सरान् पितृलोकं न प्रजानीयात् तस्मान्न ब्राह्मणायावगुरेन्न निहन्यात् न लोहितं कुर्यात् इति वाक्यशेषे संवत्सरोपादानेन इहापि संवत्सरस्यैव विशेष्यत्वोपपत्तेः शतेन सहस्रेण वा संवत्सरेणेत्येवमर्थान्तरं दर्शयति —शतसंवत्सरेणेति। एवमाशीर्वादार्थकत्वं प्राचां रीत्या अनुभवस्य निस्तारस्य वा आख्यातार्थत्वाङ्गीकारेण उक्तमपि देवानामवगुरणादिकर्तरि शापदातृत्वाद्युपपत्तिसंभवेऽपि शंयोस्तद्यातनाधिकाराभावे वरप्रदानानुपपत्तेः अयुक्तमित्युपेक्ष्य पक्षान्तरमाह—वस्तुतस्त्विति। अनुभावनादीति। यातनानुभवजनकं यातनासंयोगादिरूपमनुभावनमवगोरणकर्तृनिष्ठं आख्यातार्थः। तदनुकूलव्यापारः शंयुनिष्ठो लिङर्थ इत्यर्थः। कामपदाद्यभावेऽपीति। नहि विधिफलवन्निषेधफलं कामपदोपबन्धापेक्षि। त्यक्तव्यार्थे कस्यापि कामनाया अनुदयात्। अतस्तदभावेऽपि यातयादिति लिङा यातनायास्साध्यत्वावगतौ फलत्वं क्लृप्तमित्यर्थः। प्रत्युदाहरणमात्रमिति। मदुक्तरीत्या अस्यापवादत्वासंभवात् प्रत्युदाहरणरूपतया नातीव क्रतुयुक्तपुरुषधर्मत्वेन क्रतुधर्मत्वेन वा पूर्वपक्षे यतितव्यमिति मात्रचा सूचितम्। ततश्च यो ब्राह्मणायावगुरेदित्युपक्रमगतपुरुषमात्रवाचकस्य यच्छब्दस्योपसंहारस्थनिषेधोत्तरकालं प्रकरणव्यापारानुरोधेन सङ्कोचायोगात् प्रकृताप्रकृतस्य ब्राह्मणापगूरण-

हरणमात्रम्। अत एव **सामान्येन शंयोर्वरदानमपि सङ्गच्छते**। पुरुषधर्मत्वं च **पुरुषनिष्ठफलजनकक्रियाविषयत्वमात्रं; न तु पुरुषस्य संस्कार्यतया शेषित्वं** प्रमाणाभावादिति ध्येयम्। **न च क्रतावपगोरणप्राप्त्यभावादेवास्योत्कर्षसिद्धेर्न प्रत्युदाहरणत्वमिति वाच्यं,** अन्वाहार्येण**नत्यसम्भवे तस्यापि तदर्थं प्राप्तेः**। क्रतूपकारकतया **प्राप्त्यभावेऽपि "न स्त्रियमुपेयात्" इत्यादिवत् क्रतुमध्यप्रसक्तप्रतिषेधस्यापि क्रत्वङ्गत्वोपपत्तेश्च**। **अतश्च फलस्य**

---

कर्तुरुपादानात् वर्तमाननिर्देशाभावेन योग्यानुपलब्धिबाधितत्वाभावात् सर्वजनद्वेष्यत्वेन प्रतीयमानयातनायाः फलत्वावगतिसामर्थ्याच्च निषेध्यद्वारा प्रतिपादितेन निषेधस्य पुरुषार्थत्वेनाहीनवत् पुरुषधर्मस्तदर्थत्वादिति पूर्वसूत्राध्याहृतापकृष्येतेति पदानुषङ्गेण मण्डूकप्लुत्या च व्यवहितस्यापि कर्त्रधिकरणपूर्वपक्षसूत्रस्याकर्मपदस्यानुषङ्गेण शंयूपक्रमे यदकर्मनिषेधनं तत् प्रकरणादपकृष्येत सर्वावस्थस्य दर्शपूर्णमासकर्तृत्वावस्थानपेक्षस्य पुंसो नरकपरिहारार्थं ब्राह्मणापगोरणादीनां दानात् खण्डनात् इत्येवं भाष्यरीत्या शंय्वौ **सर्वपरीदानादिति** सूत्रव्याख्यानं सूचयित्वा सर्वेभ्यो ऋत्विग्भ्योऽनृत्विग्भ्यो वा ब्राह्मणेभ्यः परिपालनाख्यवरदानादिति वार्तिककारदर्शितसूत्रव्याख्यानान्तरं युक्त्यन्तरकथनव्याजेन दर्शयति—**अत एवेति**। क्रतुयुक्तपुरुषापेक्षितभोक्तृत्वयोग्यताधानाख्यफलनिरासेन पुरुषमात्रापेक्षितनरकपरिहाराख्यफलैकत्यर्थत्वादेवेत्यर्थः। तथा च प्रजात्वेन संकीर्तितब्राह्मणमात्रस्यैव परिपालनं शंयुना प्रार्थितं देवैर्दत्तमिति सर्वब्राह्मणविषयकापगोरणनिषेधस्य प्रकरणेन सङ्कोचो न संभवतीति। ततश्च परिपालनाख्यवरदानादिति सूत्रार्थो ज्ञेय इत्यर्थः। कर्त्रधिकरणे निषेधे पुरुषधर्मत्वं पारिभाषिकमुक्तमपि पुरुषे निषेधसंस्कार्यताविशेषाशङ्कानिराकरणाय पुनरनुवदति—**पुरुषधर्मत्वं चेति**। **प्रमाणाभावादिति**। प्राधान्ये प्रमाणाभावात् उपयोगाभावाच्चेत्यर्थः। **क्रताविति**। क्रतूपकारकत्वेन तस्य प्राप्त्यभावादित्यर्थः। चतुर्ब्राह्मणसाध्यत्वात् दर्शपूर्णमासयोस्तदानत्यर्थं सामदानदण्डभेदेषु प्रयुज्यमानेषु अन्वाहार्यदानेनानमयेदिति नियमे यदा तन्मात्रेण नानमन्ति तदा पुनर्यथाऽनतिर्भवति तथा प्रयत्यमाने लौकिकोपायप्रसक्तौ सत्यामयं दण्डप्रकारोऽपगोरणादिः पक्षे प्राप्त इति स प्रतिषिध्यते न कर्तव्यस्तेन तद्व्यतिरिक्तोपायान्तराश्रयणङ्कार्यमित्येवं वार्तिकदर्शितरीत्या क्रतूपकारकतया तत्प्रसक्तिं दर्शयति—**अन्वाहार्येणेति**। यदभिप्रेत्य मया कर्त्रधिकरणे क्रतूपकारकतया प्रसक्तनिषेधकानामपि निषेधानामुदाहरणत्वं पूज्यपादानामिष्टमित्युपपादितं तमेव स्वाभिप्रायङ्कर्त्रधिकरणोक्तन्यायेन क्रतुधर्मत्वप्रसक्त्युपपादनव्याजेन दर्शयति—**क्रतूपकारकतयेति**। **यद्यपि** तदहर्मांसमैथुने वर्जयेदिति ब्रह्मचर्यविधिना न स्त्र्युपगमनस्य क्रतुमध्येऽपि प्रसक्तिस्तथापि ऋतुकालीनगमनस्य ब्रह्मचर्याविघातकत्वात् तत्कालीनत्वेनेच्छयाऽन्वाधानदिनरात्रौ

**क्लृप्तत्वादेव पुरुषधर्मत्वम्।** अत्र चार्थवादोन्नीतस्य वा पदान्तरस्य फलपरत्वं अस्यैव स्वर्गादिवद्वा तत्परत्वमित्यादि तु स्वयमूह्यम्॥ १०॥

---

## (११)—प्रागपरोधान्मलवद्वाससः ॥ २४ ॥ अन्नप्रतिषेधाच्च ॥ २५ ॥

दर्शपूर्णमासयोरेव **"मलवद्वाससा न संवदेत" इति श्रुतम्। मलवद्वासाः रजस्वला। अस्य प्रतिषेधस्य** फलाश्रवणात् **क्रत्वङ्गत्वे नानुपपत्तिः। न च "यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत" इति वचनेनैवानालम्भुकापदवाच्य-रजस्वलाऽपरोधोत्तरं क्त्वाप्रत्ययेन यागप्रयोगकर्तव्यताविधानात्**क्रत्वङ्गभूतस्य **लौकिकस्य च याजमानस्यार्त्विज्यस्य वा रजस्वलासंवादस्याप्रसक्तेः कथं प्रतिषेध इति वाच्यं,**

---

तदनुपकारकस्यापि प्रसक्त्युपपत्तेर्न विरोधः इतरथा तस्य निषेधत्वानापत्तेः। अत्र चेति। संपूर्णस्य पूर्वतनभागस्यावगोरणादिनिन्दार्थत्वेन फलप्रतिपादनाशक्तेः उपस्थितस्य यो यातनामनुभवितुमिच्छेत् स ब्राह्मणमवगुरेत हन्याद्वेत्येवंरूपपदान्तरकल्पनया तस्यास्तत्फलत्वम्। अथवा आशीरर्थलिङाश्रयणेनाव्यवधानादेव एतदेव वाक्यं निषेध्यफलयातनाबोधकं; अन्यत्तु तदुपष्टम्भकमिति। आदिपदेन च प्रयोजनं स्वयमूह्यमित्यर्थः। तच्च पूर्वपक्षे ऋत्विज अनृत्विजो वा ब्राह्मणमात्रस्य क्रतुमध्ये अपगोरणे सति यदि यजुष्टो भुव इति श्रौतं निषेधातिक्रमप्रायश्चित्तं स्मार्तमपि तदन्ते। सिद्धान्ते तु स्मार्तावगोरणादिनिषेधस्यैतच्छ्रुतिमूलकत्वाभ्युपगमेनास्य यज्ञाङ्गत्वाभावात् न श्रौतमपि तु विप्रदण्डोद्यमे कृच्छ्र इति स्मृत्युक्तमेव क्रत्वन्त इति ज्ञेयम्।

---

### प्रागपरोधात् मलवद्वाससः।

निषेधगतप्राप्तिसापेक्षत्वरूपलिङ्गेनेह प्रकरणविरोधाविरोधसदसद्भावं सूचयितुमाह—**दर्शपूर्णमासयोरेवेति।** पूर्वाधिकरणापवादकहेतोरभावे सामान्यप्राप्तं क्रतुधर्मत्वं पूर्वपक्षे शक्यत एव वक्तुमिति दर्शयति—**फलाश्रवणादिति। क्रत्वङ्गभूतस्येति।** क्रतूपकारकस्येत्यर्थः। तथा च क्रतूपयोगिद्रव्यादिजिज्ञासया प्रसक्तस्य लौकिकस्य, अथवा "युक्ता मे यज्ञमन्वासाता" इति मन्त्रोच्चारणलक्षणस्य यजमानकर्तृकस्य पत्नीसंवादस्य सहाधिकारप्रदर्शनार्थत्वेन यजमानसंस्कारार्थत्वात् यजमानस्य अथवा अग्ने गृहपते उपमाह्वयस्वेत्यादिसुप्रजास्त्वाय इत्यन्तमन्त्रस्य देवपत्न्युपस्थानार्थस्य पत्नीप्रयोज्यत्वेनावश्यकस्य तस्या अनुपनीतत्वेन मन्त्रपाठाभावे तच्छिक्षणरूपत्वेन

अन्यस्याप्रसक्तावपि **साधारणद्रव्यतया व्रीह्याद्यंशेऽनुमतिरूपस्य तस्य प्रसक्तेः।** अनु- मतेरपि **परम्परया ज्ञातुं शक्यत्वेन संवादाप्रसक्तौ तु** पत्नयतिरिक्त**रजस्वलान्तरसंवादस्य क्रतुमध्ये रागतः प्राप्तस्यापरोधवाक्याविषयस्य स्मृतौ निषिद्धस्यापि क्रत्वर्थतया प्रतिषेधो ऽनृतवदनप्रतिषेधवदिति प्राप्ते—**

**मनुना "रजस्वला च षण्डश्च"** इत्यादि प्रक्रम्य

**होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते।**
**दैवे हविषि पित्र्ये वा तद्गच्छत्ययथायथम्॥**

**इत्युक्त्वा "तानप्यपनयेत्ततः" इत्यनेन रजस्वलामात्रस्य दैवकर्ममात्रे वाक्येन श्राद्धप्रकरणं बाधित्वाऽपनयविधानात्तया सह संवादाप्रसक्तेर्न क्रत्वर्थत्वम्।** न चेयमेव **श्रुतिस्तस्या**

---

प्रसक्तसंवादस्याध्वर्युकर्तृकत्वात् आर्त्विजस्य वाऽवरोधविधिना प्रसक्तेरिति भावः। अवरोधविधानात् क्रत्वनुष्ठानान्निवर्तनेऽपि क्रतुविनियोज्यद्रव्यानुज्ञाप्रश्नार्थं संवादोपपत्तिरित्यभिप्रेत्याह—**अन्यस्या- प्रसक्तावपीति।** क्रत्वनुष्ठाननिवृत्त्या क्रत्वन्तः पातितया संवादाप्रसक्तावपीत्यर्थः। अपरोधस्य- त्त्वाप्रत्ययबलात् प्रयोगप्राग्भावप्रतीतेः सर्वस्मादनुष्ठानसिद्ध्यर्थानुज्ञाप्रश्नादिसहितादनुष्ठानान्निवर्त- नावगतेः तदर्थस्यापि संवादस्याप्राप्तिरित्युत्तरे विद्यमानेऽपि द्रव्यांशे अनुज्ञामगृहीतवतो यजमान- स्यान्यथानुपपत्त्याऽवश्यप्रसक्ततत्संवादस्यावरोधविधिना निवृत्त्यसंभवात् न तेन संवादाप्रसक्तिस्सं- भवतीत्यभिप्रायेण तदुत्तरमपेक्ष्य सिद्धान्त्यभिमतं संवादाय प्रसक्त्युपायान्तरं दर्शयति—**अनु- मतेरपीति।** कथं तर्हि पूर्वपक्षसिद्धिरित्याशङ्कां तुशब्दसूचितां निरस्यति---**पत्न्यति- रिक्तेति।** नोदक्ययाऽभिभाषेतेति स्मृत्यासर्वोदक्यासंवादसाधारणत्वात् अवरोधविधेश्च यजमान- पत्नीमात्रविषयस्येतरोदक्यासंवादनिषेधकत्वाभावेऽपि स्मार्तस्य निषेधस्य प्रवृत्तेर्दुर्निवारत्वान्निषिद्ध- स्यापीत्यर्थः। क्रतूपकारकत्वेन तदनुपकारकत्वेन वापि कथञ्चिन्मध्ये प्रसक्तस्यापि निषेधः क्रत्वर्थो भवितुमर्हतीति सूचयितुं क्रतुमध्य इत्युक्तम्। **इत्यादि प्रक्रम्येति।** नेक्षेरन्नश्नतो द्विजानिति पाद- संग्रहार्थ आदिशब्दः। **न चेयमिति।** दर्शपूर्णमासप्रायश्चित्तप्रकरणान्तराले पठितेयं श्रुतिरिति दर्शपूर्णमासविशेषविषयिणीत्यर्थः। अत्र च यस्य व्रत्येऽहन्निति वाक्येन व्रतोपायनप्रभृति व्रतविसर्गान्तं पत्न्यामनालंभुकायामवरोधविशिष्टयागविधायकेन अन्वाधानदिवसे सङ्कल्पोत्तरमेवा- रंभस्य जातत्वात् तस्य च समापननियमात् तदनुरोधेनावरोधपूर्वकयागविधानं क्रियते सङ्कल्पात्पूर्वं तु पत्न्यां रजस्वलायां न तदवरोधेन यागविधानं तस्य तदानीमनावश्यकत्वेन तच्छुद्ध्यनन्तरं गौण- एव तत्करणमिति याज्ञिकैकदेशिमतमुपपाद्य **रामाण्डारेणैतन्मतसहायत्वेन** प्रतिप्रयोगमधिकारभेदात्

**मूलम्। स्मृतेर्दैवकर्ममात्रविषयत्वेन सामान्यरूपत्वात्। न च रजस्वलामात्रस्याप-नयेऽपरोधवाक्यवैयर्थ्यं** अपरोधवाक्यस्य **पत्न्या सहैव पत्युरधिकारात् रजस्वलायाश्चा-नधिकारेण तां विना यागाकरणप्रसक्तौ दर्शपूर्णमासकरणविध्यर्थत्वात्।** अत एव **तत्रत्यमप-रुध्येत्यनुवादः।** अतश्चा**प्रसक्तत्वात्पुरुषार्थ एवायं निषेधः। श्रौतप्रायश्चित्तप्राप्त्यर्थं इति तु शक्यते वक्तुम् इति ध्येयम्॥ ११ ॥**

---

यावज्जीवार्थमेकसङ्कल्पाभावात् प्रागरजस्वलायामधिकाराभावात् कर्मकर्तृत्वसंपादनाशक्तेर्निर्गमि-तत्वात् प्रयोगशक्त्यभावनिश्चयात् मीमांसकानामपि सङ्कल्पादूर्ध्वं रजस्वला चेदपरुद्धय याग एवेति मीमांसकमतमुक्तं, तदयुक्तमित्यपरोधवाक्यवैयर्थ्याशङ्कापरिहारव्याजेन दर्शयति—**अवरोध-वाक्यस्येति**। यथैव सहाधिकारात् पत्न्यभावेनैकाकिनो यजमानस्य सङ्कोचे मानाभावात् सङ्कल्पो-त्तरमारब्धत्वेऽपि करणनिवृत्तावेतच्छास्त्रप्रवृत्तिरङ्गीक्रियते तथैवाविशेषप्रवृत्तस्य तस्य सङ्कोचे माना-भावात् सङ्कल्पात् प्रागपि तत्प्रवृत्तिर्युक्तैव। यो ह्येकाकित्वेन स्वकाले प्राप्तेऽपि दर्शपूर्णमासातिपातनं सहेत सहेतासावारंभोत्तरमपि तेन हेतुना तदिति तत्परिहारोपायजिज्ञासायास्तुल्यत्वाद्विस्पष्टतया च मीमांसकैः कस्मिन्नप्यधिकरणे सङ्कल्पपूर्वोत्तरकालभेदेन रजस्वलायां पत्न्यां सत्यामनुष्ठानानुष्ठान-विशेषभेदस्याप्रदर्शनात् सर्वदैव तस्यां रजस्वलायां नित्यदर्शपूर्णमासयोः काम्ययोरप्युपक्रान्तयो-रनुष्ठानं भवत्येवेति मीमांसानयसिद्धं रुद्रदत्ताद्युक्तमेव युक्तम्। अत एव व्रत्येहन्नित्यस्य व्रतोपायप्रभृतीत्यर्थकरणे मानाभावात् कर्मदिनमात्रपरत्वमेवाङ्गीकार्यमित्यर्थः। यस्मात् स्मार्त-वाक्येन दैवहविर्निरीक्षणादिनिषेधपूर्वापनयविधानद्वारा क्रत्वङ्गत्वेनावरोधः प्राप्तोऽत एवेद-मित्याह—**अत एवेति**। अत्र चापरुद्धयेत्यनुवादपूर्वकयागविधानसामर्थ्यादेव कर्मकरणदिन-गतानालंभुकात्वस्य प्रतीतेर्व्रत्येहन्नित्येतस्य निमित्तविशेषणत्वेनाविवक्षायामपि दर्शपूर्णमाससंबन्ध-वतो दिनस्य निमित्तविशेषणत्वमर्थादेव ज्ञेयम्। तत्र च प्राप्तकालकर्तव्ययोरेव दर्शपूर्णमासयोर्य-द्विधानं तत्सहाधिकृतपत्न्यभावकृतक्रत्वकरणसमाधानार्थं प्रायश्चित्तरूपं नैमित्तिकम्। अत एव प्रायश्चित्तविध्यन्तराले अस्य प्रायपाठ उपपद्यते। तथा च नित्यः प्रयोगो यो न कृतः स्वकाले, स गौणे काले तस्याश्शुद्धौ कार्यः सहाधिकारानुरोधेन। अत एवैतस्मादेव पापक्षयादिकं फलम्। अथवा सहाधिकृतपत्न्यभावकृतक्रत्वकरणसमाधानस्येव नित्याकरणसमाधानस्यापि तेनैव प्रायश्चित्तेन सिद्धेः न पुनरनुष्ठानम्। अथवा यो नित्यस्स एवायं तदपरोधेन कार्यो न तु कालान्तरे तत्साहित्येन प्रयोगान्तरानुष्ठानमिति तु वादान्तरं सुधीभिर्निष्कर्षणीयमिति। अतोऽप्रसक्तनिषेधत्वानुपपत्त्या प्रकरणबाधेन पुरुषार्थत्वमुपसंहरति—**अतश्चेति**। तथा च नोदक्यथाऽभिभाषेतेति तु स्मृतेरि-

(१२)—अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ अद्रव्यत्वात्तु शेषस्स्यात् वेदसंयोगात् ॥ २८ ॥ द्रव्यसंयोगाच्च ॥ २९ ॥ स्याद्वा संयोगवत्फलेन सम्बन्धस्तस्मात्कर्मैतिशायनः ॥ ३० ॥

**अनारभ्य "सुवर्णं हिरण्यं भार्यम्। दुर्वर्णोऽस्य भ्रातृव्यो भवति" इति श्रुते** न तावत् **क्रतुगतहिरण्योद्देशेन सुवर्णत्वविधिः, धारणप्राप्त्यभावेनानुवादानुपपत्तेः। नापि "हिरण्यं हस्ते सम्प्रदाय षोडशिनस्स्तोत्रमुपाकरोति" इति विहितक्रतुहिरण्य-**

---

यमेव श्रुतिर्मूलमिति भावः। प्रयोजनं पूर्वपक्षे दर्शपूर्णमासयोः निषेधातिक्रमे याजुर्वैदिकं प्रायश्चित्तम्। मनुवाक्याभावेनैव च पूर्वपक्षकरणात् नाविज्ञातप्रायश्चित्तम्। अग्निहोत्रादौ तु तन्निषेधाभावात् न याजुर्वैदिकमपि तु दर्शपूर्णमासयोरिव स्मार्तमेव। सिद्धान्ते तु मनुवाक्येन क्रत्वङ्गत्वस्यापि निषेधबोधनात् दर्शपूर्णमासाग्निहोत्रादिसर्वकर्मसु अविज्ञातप्रायश्चित्तमेव स्मार्तप्रायश्चित्तेन समुचितं न तु याजुर्वैदिकमिति स्पष्टत्वान्नोक्तम्।

---

**अप्रकरणे तु**

अत्रानारभ्याधीतवाक्यस्योदाह्रियमाणत्वात्तस्य च प्रकरणविरोधाविरोधचिन्ताविषयत्वासंभवात् महाप्रकरणसङ्गत्यभावेऽपि तत्फलीभूतोत्कर्षानुत्कर्षविचारेण पादसङ्गतिं पूर्वत्र प्रकरणाधीतानामन्यत्र गमनागमने चिन्तिते तद्वैपरीत्येनाप्रकरणाधीतानामपि अन्यत्र गमनागमनचिन्तायाः बुद्धिस्थत्वात्प्रासङ्गिकीमनन्तरसङ्गतिं च स्पष्टत्वादनुक्त्वा उदाहरणं दर्शयति—**अनारभ्येति**। **अधिकरणमालायान्तु** भार्यमित्यस्याग्रे सुवर्ण एव भवतीत्यधिकं लिखितम्। एतच्च सुवाससा भवितव्यं रूपमेव बिभर्तीति भाष्यलिखितोदाहरणान्तरस्यापि उपलक्षणम्। अत्र **प्राचीनैस्सुवर्णहिरण्य**विशिष्टधारणभावनाविधानमाश्रित्य क्रतुधर्मत्वं, अथवा क्रतुगतहिरण्यानुवादेन धारणसंस्कारमात्रविधानेन क्रतुधर्मत्वं, अथवा क्रतुगतहिरण्यधारणानुवादेन सुवर्णत्वमात्रविधानेन क्रतुधर्मत्वमिति पूर्वपक्षत्रयं कृतम्। तत्रोत्तरपक्षद्वये एकैकविधाने लाघवे संभवति विशिष्टविध्याश्रयणेन पूर्वपक्षस्यातीव निर्बीजत्वात् आद्यं पूर्वपक्षमनुल्लिख्यैव तृतीयपक्षस्यान्ते करणेन सूचितं सयुक्तिकत्वम्। तद्दूषयन् मध्यमपूर्वपक्षमेव सयुक्तिकत्वेन स्वयमारचयति—**न तावदिति**। क्रियायामव्याप्तस्य हिरण्यस्वरूपस्यानाकाङ्क्षितसुवर्णत्वविध्यसंभवात् हविरार्तिन्यायेन क्रतुसंबन्धित्वलक्षणात्

धारणानुवादेन **सुवर्णत्वविधिः।** विशिष्टोद्देशापत्तेः अतो **भार्यमिति कृत्यप्रत्ययेन सुवर्णस्य कर्मत्वाभिधानात्तदुद्देशेनैव धारणाख्यसंस्कारविधिः।** हिरण्यपदस्य तु सुवर्णरजतसाधारणवाचिनोऽनुवादत्वम्। न चैवमपि क्रतुगतसुवर्णोपस्थितावेव प्रमाणाभावः।

---

तव्यप्रत्ययश्रुतेर्हिरण्यस्य कर्मत्वेन क्रतुगतत्वेन चोपस्थितिस्संभवतीत्यभिप्रेत्य **क्रतुगतहिरण्योद्देशेने**-त्युक्तम्। **धारणानुवादेनेति।** यद्यपि संप्रदायेत्युक्ते दानमेवायाति न धारणं तथापि हस्तपद-वैयर्थ्यानुपपत्त्या संप्रदायेति क्त्वाप्रत्ययोपात्तसमानकर्तृकत्वस्य प्रयोजककर्तृतया नेयत्वेऽपि दानस्य दानपूर्वकधारणपर्यन्तत्वावगतेः धारणप्राप्तिरविकलेत्यर्थः। एतच्च षोडशिवाक्यं हिरण्यस्रज ऋत्विजो भवन्तीत्यादीनां हिरण्यवद्विनियोगविधीनामप्युपलक्षणम्। तादृशस्थलेषु स्पष्टमेव धारण-पर्यन्तताप्राप्तिः। **यत्त्वत्र** क्रियायामव्याप्रियमाणस्यानाकाङ्क्षितसुवर्णत्वविधययोगात् अनुवाद्यत्वेऽपि भार्यत्वेन विशेषणीयत्वोपपत्तेः अनुवाद्यत्वाविरोध इत्युक्तं **न्यायसुधाकृता,** ततश्चोद्देश्यपर्यवसा-नस्य हविरार्तिन्यायेन विशेषणान्वयं विना अपर्यवसानात् विशिष्टलक्षणयोद्देश्यत्वमुक्तं; **तदयुक्तं,** हिरण्यमात्रस्योद्देश्यत्वेऽपि येन केनचिद्रूपेण क्रतुगतोपस्थितेरावश्यकत्वे तेनैव तत्पर्यवसानोपपत्तेः विशिष्टलक्षणायामन्यथानुपपत्त्यभावात् आर्तिमात्रस्य तु निमित्तताऽपर्यवसानात् अगत्या तदाश्रयणम्। अतो दानादिक्रियाव्याप्तस्यापि क्रतुगतत्वात् तद्व्यावृत्तये धारणस्य विशेषणत्वमथवा धारणे वा प्राप्ते हिरण्यस्य विशेषणत्वं वक्तव्यमिति विशिष्टोद्देशे वाक्यभेद इत्यभिप्रेत्याह—**विशिष्टोद्देश इति।** **एतेनाधृतस्य** सर्वक्रियाव्यापृतत्वायोगात् धृतस्यैव तत्संभवात् सर्वक्रियासु हिरण्यसाधनिकासु आक्षेपतः प्राप्तं धारणमिहानूद्य सुवर्णताविधिरिति **प्रकाशकाराणामुक्तमपास्तम्।** अत्र च द्वितीये पक्षे हिरण्यस्योद्देश्यत्वमङ्गीकृत्य धारणस्य विधानम्। तत्र च शुक्लानां व्रीहीणामित्यादौ शुक्लत्वस्येव सुवर्णत्वस्य क्रियाविशेषणतया विधानं, अथवा हिरण्यस्य शोभनरूपता सुवर्णता नित्यप्राप्तेति अनुवादो वा सुवर्णपदमिति **प्रकाशकारैरुक्तम्।** तत्र कथञ्चिदनुवादत्वस्य हिरण्यपदेऽपि संभवात् "यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणं" इत्यभियुक्तज्ञापितप्राथम्यसमानाधिकरणोद्देश्यत्वे संभवत्यस्य तत्कल्पनाऽयोगात् अयुक्तमित्यभिप्रेत्य प्रथमसुवर्णपदोपात्तस्यैव उद्देश्यत्वं दर्शयति—**अतो इति।** रजतं हिरण्यमभवदिति श्रुतेर्हिरण्यपदवाच्यत्वस्य रजतेऽपि सत्वात् तस्योद्देश्यत्वे सुवर्णपदस्य सुवर्णे योगरूढस्य रजते अप्रवृत्तेः पाक्षिकानुवादत्वापत्तिः। सुवर्णस्योद्देश्यत्वे तु तत्र हिरण्यपदवाच्यत्वस्य सदा सत्वादपाक्षिकानुवादत्वं भवतीति तस्यैवोद्देश्यत्वं युक्तमिति रजतसाधारणोक्त्या सूचितम्। क्रियायामव्याप्तस्य हिरण्यस्य धारणसंस्कार्यत्वानुपपत्तेः सामान्यतः क्रियोपयुक्तस्य तत्प्रतीतावपि लौकिकक्रियाव्यावृत्त्या क्रतुसाधनस्यैवोपस्थितौ मानाभावमाशङ्क्य परिहरति—**न चैवमिति।** ननु

**सुवर्णस्वरूपे आनर्थक्याल्लौकिकक्रियासाधनीभूतग्रहणेऽपि च तत्तादवस्थ्यात्। सुवर्णस्यैव श्रुतकर्मत्वान्यथाऽनुपपत्त्या** स्वर्गार्थवादिक**फलकल्पनस्य च आश्रयाभावादनुपपत्तेः परिशेषादेव क्रतुगतसुवर्णोपस्थितिलाभोपपत्तेरिति प्राप्ते**

न तावत् **प्रकरणात्क्रतुसम्बन्धोपस्थितिः, अनारभ्याधीतत्वात्। नापि जुह्वादिवदव्यभिचरितत्वात्, लोकेऽपि सुवर्णसत्त्वेन व्यभिचारात्। न वा पारिशेष्यात्, श्रुतकर्मत्वान्यथानुपपत्त्या सुवर्णस्यार्थवादिकफलसाधनत्वकल्पनाया एव प्रसक्तेः परिशेषा-**

---

तर्हि उद्देश्यत्वाङ्गीकारे आनर्थक्यापरिहारात् विशिष्टधारणस्याथवा सुवर्णगुणमात्रस्यैवार्थवादसमर्पितफलोद्देशेन विधानमस्त्वित्यत आह—**सुवर्णस्यैवेति**। कर्मत्वश्रवणान्न सुवर्णस्य धारणविशेषणतया विधानं, नवा, फलान्तरं कल्पयितुं शक्यत इत्यर्थः। किंचाश्रयालाभादपि न गुणफलसंबन्धस्संभवतीत्याह—**स्वर्गार्थवादिकेति**। अतश्शतसुवर्णगतकर्मत्वान्यथानुपपत्तिसहकृतपरिशेषात् क्रतुगतत्वोपस्थितिरित्यर्थः। अत्र च यावतोऽश्वान् प्रतिगृह्णीयादित्यत्राश्वदानमात्रस्य निमित्तत्वावगमेऽपि वैदिकेन क्रियारूपेण नैमित्तिकेन वैदिकत्वसामान्यात् वैदिकमेव निमित्तं यथा वक्ष्यते तथेहापि हिरण्यधारणे विहिते विधिबलादिष्टमात्रे भाव्येऽवगते वैदिकत्वसामान्याद्वैदिकसुवर्णस्य क्रतुगतस्यैवोद्देश्यत्वेनानर्थक्यपरिहाराभावसूचनाय परिशेषादेवेत्येवकारः प्रयुक्तः। **तस्यायममर्थः** वैदिकत्वसामान्येन क्रतुगतस्योपस्थितावपि क्रियायामव्याप्रुतस्य तस्योद्देश्यत्वासंभवात् क्रतुसाधनदानादिक्रियासाधनत्वेनैव तस्य वक्तव्यत्वे क्रियान्तरसाधनस्य तस्य धारणसंस्कारविधानेऽर्थादेव तत्प्राप्तौ विधिवैयर्थ्यात्, धारणमात्रविधौ च क्रतुगतक्रियान्तरसाधनत्वायोगात् न तेन रूपेणोद्देश्यत्वसंभवः। ईप्सितस्यैव भाव्यत्वनिर्णयेनेप्सितत्वनिर्णयात् प्राक्भाव्यत्वानुपपत्तेः। निमित्तस्य त्वनीप्सितत्वेनैवान्वयात् तेन रूपेणान्वितस्य पश्चात् कथञ्चिद्वैदिकत्वेन तन्निर्णयो युक्त इति वैषम्यम्। अतश्च यद्यपि दध्यानयनवाक्ये प्रागनवगतापूर्वसाधनत्वस्यापि पयसः संस्कार्यत्वं दृष्टं, तथापि तद्बोधकशास्त्रस्य क्लृप्तत्वेनान्योन्याश्रयानापत्तावपीह संस्कार्यत्वान्यथानुपपत्त्याऽपूर्वसाधनत्वेन विनियोगकल्पनेऽन्योन्याश्रयापत्तेरपरिहारात् वैदिकत्वसामान्येन तदुपस्थित्ययोगात् क्रतुगतदानादिसाधनत्वेन रूपेणोपस्थितिः परिशेषादेवेति आनर्थक्यस्य परिशेषोपस्थापकत्वाभावात, अपूर्वे विनियोजकत्वाभावाच्च न तन्मात्रेण क्रतुगतत्वोपस्थितिस्संभवति। अत एव यत्र प्रकरणमस्ति तत्रापूर्वे विनियोगस्य तेन करणात् द्वारविशेषसमर्पणमात्रं श्रुत्या लिङ्गेन वा क्रियते। तत्रानर्थक्यपरिहारार्थं पूर्वावगतापूर्वसाधनत्वलक्षणासंभवेऽपीह प्रकरणाभावे नापूर्वसाधनत्वावगतिस्संभवतीत्यभिप्रेत्याह—**न तावदिति**। केवलमानर्थक्य-

भावात्। धारणस्य संस्कारस्याप्याश्रयापेक्षायां सुवर्णस्य तत्त्वेनाप्यर्थादन्वये बाधकाभावात्। न चेष्टापत्तिः। तथात्वे धारणसुवर्णोभयकरणकयोर्द्वयोर्भावनयोरपूर्वयोस्तत्पदयोश्च कल्पने गौरवापत्तेः, सुवर्णांशेऽप्यपूर्वविधित्वप्रसङ्गाच्च। "अध्वर्युं वृणीते" "स्वाध्यायोऽध्येतव्यः" इत्यादौ तूभयोरपि दृष्टार्थत्वादुक्तगौरवाभावेन संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनेऽपि न दोषः। प्रकृते तु धारणेन सुवर्णं संस्कुर्यात् तेन च तदाश्रितेन फलं भावयेदिति गौरवम् कल्पने। अतः कृत्यप्रत्ययलक्ष्या एकैवात्र भावना। तस्यां चावश्यकत्वादार्थ-

---

परिहारार्थं पूर्वानवगतापूर्वसाधनत्वलक्षणाङ्गीकारे तु तदपेक्षया गुणे त्वन्याय्यकल्पनेति न्यायेन द्वितीयाया एव तृतीयार्थलक्षणा युक्तेत्यभिप्रायेणाह—श्रुतेति। धारणस्येति। तथा च प्रथमतस्सुवर्णोद्देशेन धारणसंस्कारे विहिते तस्योपयोगापेक्षया धारणसंस्कृतेन सुवर्णेनार्थवादिकं फलं साधयेदित्येवङ्कल्पितेन विनियोगविधिना धारणस्य संस्कारकस्यापि आश्रयापेक्षायामुपस्थितत्वात्तस्यैवाश्रयत्वेन सुवर्णस्य करणत्वेन चान्वयस्संभवत्येवेति प्राथमिकसुवर्णगतकर्मत्वानुपपत्त्यभावात् न क्रतुगतत्वेनोपस्थितौ परिशेषस्संभवतीत्यर्थः। ननु तर्हि संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनेनैव वाक्यार्थसंभवे किमिति द्वितीयायास्तृतीयार्थे लक्षणाङ्गीकारेण सुवर्णकरणकधारणविध्याश्रयणमित्याशङ्कामनूद्य परिहरति—न चेष्टापत्तिरिति। तत्पदयोश्चेति। भार्यमिति यथाश्रुतेन विधिभावनयोरनभिधानात् भार्यं सुवर्णं धारयेदित्येवं श्रुतपदस्य तथा सुवर्णेन फलं भावयेदित्यस्य च वाक्यस्य कल्पने गौरवमित्यर्थः। कल्पितविनियोगविधौ पूर्वविधिना धारणस्य प्राप्तत्वेन धारणांशेऽनुवादेपि तद्विशिष्टसुवर्णस्य फले विधानेऽपूर्वविधित्वापत्तिगौरवमप्यधिकं तवेत्याह—सुवर्णांशेऽपीति। अपिशब्देन भावनांशेऽपि अपूर्वविधित्वमुक्तम्। उभयोरपीति। वृतस्याध्वर्योः कर्मकर्तृत्वेनाधीतस्य स्वाध्यायस्यार्थज्ञानार्थत्वेन दृष्टद्वारोपयोगात् अदृष्टद्वयकल्पनाभावात्। अत एवाध्ययनवरणयोर्दृष्टार्थत्वात् अपूर्वविधित्वकृतस्योक्तस्य गौरवस्याप्रसक्तत्वात् वाक्यान्तरकल्पने न दोषः। इह तु वाक्यान्तरकल्पनेऽप्यदृष्टद्वयकल्पनाया अपरिहारात् न तत्कल्पनं युक्तमित्यर्थः। एकैवात्रेति। एवकारेण सुवर्णभाव्यकभावनाया द्वितीयाया निरासो, न तु शाब्दभावनायाः तस्या विधेयतायै अपेक्षणात्। अतश्च विधावपि लक्षणाश्रयणात् सुवर्णविशिष्टधारणकरणिका प्रवर्तनाप्रयोज्या आर्थवादिकफलभाव्यिका भावना बोध्यत इति भावः। अत्र च प्रकाशकारैः सक्तुवाक्ये जुहोतेः अकर्मकत्वात् कर्माभावेऽप्यक्षतेस्तृतीयार्थलक्षणाप्यपेक्षावशात् स्वीक्रियते। इह तु मैत्रावरुणाय दण्डं प्रयच्छतीति वाक्योपात्तधातोः सकर्मकत्वेन दण्डस्येव सुवर्णस्यापि भृञ्धातोरपि सकर्मकत्वात् अनीप्सितकर्मत्वमेवेति लक्षणेत्युक्तं, तत् तृतीया च होश्छन्दसीति सूत्राज्जुहोतेरपि सकर्मकत्वावगत्या तत्राप्यनीप्सितकर्मत्वेनैवान्वयापत्तौ करणत्व-

**वादिकस्य फलस्यैव भाव्यत्वं न तु सुवर्णस्य, उद्देश्यानेकत्वप्रसङ्गात्।** अतस्सक्तुन्यायेन **विनियोगभङ्गात्सुवर्णहिरण्यविशिष्टधारणमेवार्थकर्मतया विधीयते। किञ्च—सुवर्णस्वरूपे आनर्थक्ये यथैव तत्कार्यं क्रतुः एवं लौकिक्यपि क्रिया। तस्यामपि च नैवानर्थक्यं क्षेत्रकर्मणि बलिहरणादिवत् निर्विघ्नपरिसमाप्त्यर्थत्वेन धारणाख्य**संस्कारोपपत्तेः। **अतः परिशेषाभावात् न क्रत्वर्थत्वम्। नचोभयार्थत्वम्, एकस्यैव विधेः** अंशे प्रयोजकत्वमं**शान्तरे च प्रधानप्रयुक्तत्वादप्रयोजकतेति वैरूप्यापत्तेः। अतस्सक्तुवद्विनियोगभङ्गमङ्गीकृत्य धारणस्यार्थकर्मतैव युक्ता। न च तस्यापि वैदिकक्रियात्वसामान्यात् क्रत्वङ्गत्वं,** सादृश्येन **क्रतूपस्थितौ धर्मातिदेशस्येवाङ्गत्वेऽपि बाधकाभावादिति वाच्यं;** विधिवलेनो**पस्थितेषु अनियमेव सर्वेष्विष्टेषु तद्गतनिरतिशयत्वस्यापि सर्वपुरुषाभिलषितत्वेन शीघ्रोपस्थितिकतया स्वर्गस्यैव कल्पनीयत्वात्, आर्थवादिकफलस्य स्ववाक्योपात्तत्वेन ततोऽपि शीघ्रोपस्थितिकत्वाच्च। क्रत्वर्थत्वे तु स्वगतेन वैदिकक्रियात्वेन क्रतुगतस्य तस्योपस्थितौ क्रतोरुपस्थित्या तदङ्गत्वकल्पने गौरवम्।** अत एव **विश्वजिद्रात्रिसत्रादौ न तत्कल्पनम्। प्रकृते तु विशिष्टधारणस्यार्थवादिकमेव फलमिति पुरुषार्थता।**

---

लक्षणानापत्तेः। तथात्वेऽपि वा उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्य चतुर्थे **मैत्रावरुणाधिकरणे** वक्ष्यमाणत्वात्, वार्तिके च साधनत्वेनैव रूपेण तदन्वयाभिधानाच्चायुक्तमित्यभिप्रेत्यान्यथानुपपत्त्या लक्षणैव सर्वत्र युक्तेत्याह—**अतस्सक्तुन्यायेनेति। संस्कारोपपत्तेरिति।** ततश्च लौकिकक्रियोपयोगिनि सुवर्णे पूर्वं धारणङ्कर्तव्यं तत्फलं च दृष्टसंभवे दृष्टमदृष्टं वोपपद्यत एवेति न परिशेष इत्यर्थः। **अंशे प्रयोजकत्वमिति।** विधेर्निर्विघ्नपरिसमाप्तिरूपफलप्रयोजकत्वं अंशे च अपूर्वस्य क्रतुरूपप्रधानप्रयुक्तत्वात् अप्रयोजकत्वमिति वैरूप्यमित्यर्थः। **सादृश्येनेति।** एकदैवौषधद्रव्यकत्वसादृश्येनाग्नेययागोपस्थितौ सत्यां सौर्ये तद्धर्मातिदेशस्येव विधेयगतवैदिकत्वसादृश्येन उपस्थितक्रत्वङ्गत्वमस्त्विति भावः। स्वर्गफलस्यापि वैदिकत्वेन तुल्यत्वात् तदुपस्थितेरप्यनिवार्यत्वात् सर्वाभिलषितत्वेन नियामकेन तस्यैव फलत्वकल्पनं युक्तमित्यभिप्रेत्योत्तरमाह—**विधिबलेनेति।** अत एव यत्र प्रकरणाम्नानं तत्रापि क्रत्वङ्गत्वस्य वैदिकत्वसामान्यमात्रेण कल्पनेऽन्येषां प्रकरणाम्नानस्याविशेषकरत्वापत्तिरिति सूचयितुं अतिप्रसङ्गापत्तिं व्यतिरेकेण दर्शयति—**अत एवेति। वस्तुतस्तु** भृञ्धातोस्सकर्मकत्वानुरोधेन कर्माकाङ्क्षाया अशान्तेः **न करणत्वं, अपि तु धात्वर्थ**कर्मत्वं सुवर्णस्यैव। तदपि **न प्रकाशकारोक्तरीत्या अनीप्सितकर्मत्वं, धात्वर्थकर्मत्वाङ्गीकारेणे**प्सितत्वे संभवति तत्कल्पनायोगादतः सुवर्णसंस्कारकत्वेनैवाद्यवाक्येन धारणविधिः। **दुर्वर्ण इत्यपरेण तु तेनेति पदाध्याहारेण धृतसुवर्णस्य फलार्थत्वेन विनियोग इति न करणत्वलक्षणा, नवा**

तत्त्वे तु—**सुवर्णस्य कर्मत्वमेव तस्यैव त्वार्थवादिकं फलम्। तेनेति पदाध्याहारस्य स्तुतिपक्षेऽपि समानत्वात्।** न चात्राश्रयापेक्षा, विधिवैयर्थ्यस्य **संस्कारविधिनैव परिहारात्। "दुर्वर्णोऽस्य भ्रातृव्यो भवति" इत्यत्र भविष्यदर्थकत्वमात्रलक्षणा तु प्राचीनमतेऽप्य-**विशिष्टा। **स्तुतिलक्षणा सुवर्णपदे अपूर्वसाधनत्वलक्षणा च तत्राधिकेति ममैव लाघ-वमिति ॥ १२ ॥**

---

संस्कारविध्यन्यथानुपपत्त्या विनियोगविध्यन्तरकल्पना, नतराञ्चार्थवादे स्तुतिलक्षणा, नतमां च सुवर्णपदेऽपूर्वसाधनत्वलक्षणेति लाघवमभिप्रेत्य परमार्थतो वाक्यार्थं सिद्धान्ते दर्शयति—**तत्त्वे त्विति।** केवलसुवर्णस्य गुणत्वेन फलसंबन्धे विधिवैयर्थ्यानुपपत्त्या आश्रयापेक्षायामपि धारण-क्रियाविशिष्टस्य तस्य तच्छब्देन परामर्शे सति आश्रयापेक्षापि नास्तीति लाघवान्तरं सूचयति— **न वा आश्रयापेक्षेति।** यद्यपि च तच्छब्देन केवलसुवर्णस्यैव परामर्शेन फलसंबन्धाङ्गीकारेण तस्याश्रयापेक्षायां पूर्ववाक्येन धारणरूपाश्रयविधानं संभवति **तथापि** तस्य धारणे करणत्वाश्रयणे लक्षणापत्त्या तदपेक्षया संस्कार्यत्वाश्रयणेन संस्कारकधारणविधानेनैव दुर्वर्ण इति विधिसार्थक्य-संभवो ममापीत्याह—**विधिवैयर्थ्यस्य चेति।** धारणविशिष्टस्य तस्य फले करणत्वेन विधाने सति सर्वदैव सुवर्णसत्वे फलोत्पत्तिसिद्धेर्दुर्वर्ण इत्यस्य विधेर्वैयर्थ्यं तस्य परिहारात् नाश्रयापेक्षेत्यर्थः। **अविशिष्टेति।** स्तुत्यालम्बनार्थं, ततश्च समभिव्याहारमात्रेणैव साध्यसाधनभावावगतेर्न तदर्थं विधिकल्पनेति अयं भागः फलसमर्पको न तु स्तुतिलक्षणार्थमित्यर्थः। अत्र **प्रकाशकारै-**स्सुवर्णवासोधारणयोश्च—

> "धारयेद्बैणवं दण्डं शुभे रौक्मे च कुण्डले।
> न जीर्णमलवद्वासा भवेच्च विभवे सति।

इति स्मृत्युन्नीतविशेषविधिभ्यां उपसंहारात स्मृतेश्च स्नातकव्रतेषु पाठात् तेषां चतुर्थे "एतावता हैनसा वियुक्तो भवति" इत्यार्थवादिकपापक्षयार्थतोक्तेर्नित्यत्वादुभयार्थत्वाय फलोक्तिर्न काम्य-त्वापेक्षयेत्युक्तम्। ततश्चार्थवादिकफलसत्वेऽपि नेदङ्काम्यमपि तु नित्यमेव सद्यथाऽऽर्थवादि-काघक्षयार्थं तथाऽन्नत्यार्थवादान्तरसमर्पितफलार्थमपीति उभयार्थत्वं फलितं भवति। **तदसत्।** सामान्यप्रवृत्तस्मृत्युन्नीतविधिविशेषस्य विशेषश्रुतप्रत्यक्षविधिना सह स्पष्टत्वेनाश्रुतत्वे-नानाकाङ्क्षितत्वेन च उपसंहारानभ्युपमवत् समानन्यायेन प्रत्यक्षश्रुतविधेः सामान्यस्यापि स्मृत्यु-न्नीतविशेषविधिनोपसंहारानभ्युपगमस्यैव युक्तत्वात्। अत एव "रजस्वला च षण्डश्च" इति

सामान्यस्मृत्युन्नीतापनयविधेर्न दार्शपूर्णमासिकरजस्वलासंवादनिषेधेनोपसंहारः संभवतीति तत्स्मृति-मूलत्वस्यास्यां दर्शपूर्णमासगतश्रुतावसंभवात् रजस्वलान्तरसंवादाप्राप्तिमादायैव निषेधस्य क्रतावनु-पपत्तेस्तस्य पुरुषार्थत्वं स्वयमेव साधितं पूर्वाधिकरणे सङ्गच्छते ।

अपि च स्नातकव्रतानामेतद्व्यतिरिक्तानां फलोपपादनार्थमेतावता हैनसा इत्यर्थवादस्य तत्समर्पकत्वकल्पने आवश्यके सति तेनैवोपसंहारपक्षे फललब्धेः किमित्यत्रत्यार्थवादस्य स्तावकत्वं विहाय फलसमर्पकत्वमङ्गीकार्यमिति सर्वमेवात्रत्यार्थवादिकफलसाधनं सर्वेषामेव दत्तजलाञ्जल्या-पद्येत । अर्थवादसहितस्यास्य विधेस्तेन सहोपसंहारेऽपि तत्फलोपपत्तेर्नियमेनास्य फलप्रतिपादनं विना वैयर्थ्याभावात् । अतो नैतद्वाक्यविहितं सुवर्णधारणं स्नातकव्रतान्तर्गतसुवर्णधारणाभिन्नं, अपि तु प्रकरणान्तरन्यायेन भिन्नमेव स्नातकसाधारण्येन पुरुषार्थं, नाकरणे प्रत्यवायजनकमपि सत् उभयार्थं, प्रमाणाभावात् । स्नातकस्य परं तद्धारणे एतदर्थवादावगतं फलमकरणे पापमपीति उभयं फलमस्तु । न त्वन्येषां तदकरणे प्रत्यवायः किन्तु फलमेवेत्येव युक्तम् । अत एवैतदधि-करणारम्भे 'उत विशिष्टविधानरूपेण नित्यः पुरुषधर्मो विधीयत' इति संशयग्रन्थगतसिद्धान्तकोटौ उपक्षिप्तस्य वार्तिकगतनित्यपदस्य "धारयेद्वैणवं दण्डं" इति स्नातकव्रतत्वेन नित्यत्वस्मृतेः पुत्रजन्म-निमित्तवैश्वानरेष्टिवत् फलश्रवणेऽपि काम्यत्वाभावोक्त्यर्था नित्योक्तिरिति **न्यायसुधायां** व्याख्यानं सङ्गच्छते, स्नातकव्रतत्वेन सुवर्णधारणविशेषस्य नित्यत्वस्मृतेरसत्वात् । अस्य च विधीयमानस्य तद्धारणस्य तद्व्रतत्वाभावात् नित्यत्वमप्राप्तं काम्यत्वाभावविवक्षयोक्तमिति हि तस्यार्थः । अन्यथा अस्याश्श्रुतेस्तदुपसंहारे सति एतद्विहितधारणे स्वरसत एव नित्यत्वे सिद्धे किमनुपपन्नं नित्यत्वाभिधानं वार्तिककारीयं यदर्थं काम्यत्वाभावविवक्षया तत्समर्थ्येत । यदि तु नित्यत्वे विद्यमानेऽपि फलश्रवणे सति कथं नित्यत्वमित्याशङ्कापरिहारार्थं पुनर्नित्यत्वोक्तेर्भङ्ग्यन्तरेण प्रसाधन-मित्येतद्ग्रन्थाशयो वर्ण्येत तदा जातेष्टिवत् नित्यस्यापि फलश्रवणादुभयार्थत्वमित्येवावक्ष्यत्, न तु नित्यत्वोक्तिसमर्थनाय क्लिश्येत् । अतःफलश्रवणादनित्यस्यैवास्य नित्यत्वमुच्यमानं काम्यत्वाभाव-विवक्षया, न तु वास्तवं नित्यत्वमित्येव तत्तात्पर्यमवसीयते ।

किञ्च यथा प्रजापतिव्रतानां फलेन संयोग "एतावता हैनसा वियुक्तो भवति" इति, एवमत्रापि द्रष्टव्यमिति भाष्ये एतावता हैनसा युक्तो भवतीति पुरुषसंबन्धाद्दोषः कीर्त्यत इति प्रजापतिव्रताधिकरणभाष्ये दोषोक्त्या प्रजापतिव्रतानामकरणनिमित्तदोषपरिहारार्थत्वस्यैतावता कर्मणा कृतेन सता पापेनायुक्तो भवतीति वाक्यशेषार्थाभ्युपगमेन वक्ष्यमाणत्वात् सुवर्णधारणवासःपरि-धानयोः काम्यत्वशङ्कानिराससूचनार्था नोद्यन्तमादित्यमीक्षेतेत्यादि प्रजापतिव्रतविषयत्वेन संयोग-

(१३)—शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम्॥ ३१ ॥ होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात्॥ ३२॥ शेषश्च समाख्यानात्॥ ३३ ॥

अनारभ्यैवाधीतं "येन कर्मणेर्त्सेत्तत्र **जयान् जुहुयात्**" इति, कर्मणा ऋद्धिं स्वफला-

---

दृष्टान्तोक्तिरित्यर्थान्तरन्यासेन सूचयितुमाहेति **न्यायसुधायां**—तथा च स्मृतिः "न जीर्णमलवद्वासाः स्यात्"। "धारयेद्वैणवं दण्डं शुभे रौक्मे च कुण्डले" इत्यादिकोपपत्स्यत इति अधिकरणसमाप्तिगतं वार्तिकमवतारितम्। तदस्य स्नातकव्रतत्वे यथा प्रजापतिव्रतानां फलेन संबन्धेऽपि न काम्यत्वं तथा अस्यापि तत्संबन्धेऽपि न काम्यत्वमित्येवं दृष्टान्तदार्ष्टान्तिकभावपरत्वमुक्तमयुक्तमेव स्यात्। अतः स्नातकव्रतान्तर्गततत्स्मृत्युन्नीतविधिविशेषेणास्योपसंहारवचनं भाष्यवार्तिकन्यायसुधार्थानवधानतो निर्गतमित्येतत्सूचयितुमार्थवादिकमेव फलमिति पुरुषार्थतेत्युपसंहारग्रन्थे अकरणनिमित्तप्रत्यवायपरिहारस्य फलत्वनिवृत्त्यर्थमेवकारः प्रयुक्तः **पूज्यपादै**रित्यलं विस्तरेण। प्रयोजनं स्पष्टत्वान्नोक्तम्।

---

**शेषोऽप्रकरणे।**

पूर्वाधिकरणे अनारभ्याधीतानां पुरुषार्थत्वे साधिते तद्वैपरीत्येन निश्चितक्रत्वर्थानां जयादिहोमानां अनारभ्याधीतवाक्यविहितानामुपस्थितानां किं वाक्यात् सर्वकर्मार्थत्वमुत प्रधानसादेश्यरूपाल्लिङ्गात् आहवनीयसाध्यत्रऋध्यर्थकर्मार्थत्वमित्येवं चिन्तायाः प्रासङ्गिकीं सङ्गतिं सूचयितुं विषयं दर्शयति—**अनारभ्यैवेति**। **यद्यपि तैत्तिरीयशाखायां** चतुर्थाष्टके त्रयोदशसङ्ख्याकानां चित्तं च स्वाहेत्यादिजयाहोमानां, अष्टादशसङ्ख्याकानां अग्निर्भूतानामधिपतिरित्यादीनां अभ्यातानहोमानां, द्वाविंशतिसंख्याकानामृताषाडृतधामेत्यादिराष्ट्रभृद्धोमानां च सुवर्णधारणवत् आर्थवादिकमेव जयाख्यं फलं श्रूयते। तत्र च कर्मफलसमृद्ध्यभावकृतासुरपराजयपूर्वकं कर्मसमृद्धिकृतदेवजयस्यार्थवादे सङ्कीर्तितस्य द्वारत्वावगमात्तादृशद्वारसाधनतया येन कर्मणेर्त्सेत् तत्र जुहुयात् ऋध्नोत्येव तेन कर्मणेति विधिनाऽभ्यातानानामेव विधानं न जयादिहोमानामिति त एवोदाहर्तमुचितास्तथापि भाष्यकारोदाहृतत्वेन प्रामाण्यमभ्युपेत्य तदुक्तं जयाहोमविधायकमेव वाक्यमुदाहरति—**येन कर्मणेति**। एवं च जयाहोमवाक्यं अभ्यातानराष्ट्रभृद्धोमानामप्युलक्षणम्। अत एवा**धिकरणमालायां** तद्वाक्यान्युदाहृतानि। ऋधुवृद्धाविति श्नुविकरणात् ऋधुधातोस्सनि सन्यङोरिति द्वित्वे आप्ज्ञप्यृधामीत् इति सूत्रेण रपरे ईकारे अभ्यासलोपे च कृते लिटि ईर्त्सेदिति रूपमित्यर्थकरणेन सूचयति—**कर्मणामृद्धिमिति**। तत्तत्कर्मणां तत्तत्स्वफलसाधनताया जया-

धिक्यं **प्राप्तुमिच्छेदित्यर्थः।** अतश्च **यथावस्थितफलार्थं विनैव जयादीन् कर्माणि।** कर्मभ्यः **फलाधिक्येच्छायां तु जयादयः कर्माङ्गम्। तत्र च कर्मत्वस्य क्रतुव्यभिचरितत्वात् न तावत् जुह्वादिवत्तदुपस्थितिः। न च लौकिकस्य कर्मणः कृषिभोजनादेर्दृष्टार्थत्वेनादृष्टार्थ-जयादिग्राहकत्वायोगः। "रोहिण्यां कृषिकर्माणि कारयेत्" "पुरस्तात्कृषिकर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेत्" इत्यादिवदस्यापि निर्विघ्नपरिसमाप्त्यर्थत्वेन फलोपचयार्थत्वेन वा ग्रहणोपपत्तेः। न च तथाऽपि** जयादेराह**वनीयसाध्यत्वात्कृष्यादौ तदभावादनङ्गत्वं, जयादेरेव होमत्वेनाहवनीयप्रणयनप्रयोजकत्वोपपत्तेः।** न च **प्रधान-सादेश्यासम्भवादनङ्गत्वं,** अङ्गगुणविरोधन्यायेन **तदसम्भवेऽप्यङ्गत्वोपपत्तेः।**

---

होमादीन् विनापि सिद्धिसूचनद्वारा ऋधुधात्वर्थं जयाहोमविधिफलत्वेन दर्शयति— **स्वफलाधिक्यमिति।** तदेव स्पष्टयति--**अतश्चेति।** जयाहोमानां साक्षादेव कर्मसमृद्धिफल-त्वेन पुरुषार्थत्वभ्रमं निरस्यति—**कर्मभ्य इति।** कर्मणेति तृतीयया ऋध्यर्थत्वस्य कर्मणामे-वावगतत्वात् यच्छब्दोक्तस्यैव तत्रेति तच्छब्देन परामर्शेन लक्षितप्राधान्यया सप्तम्या कर्मणः प्राधान्यावगतेः तत्कर्माङ्गमेव ते। अत एवानारभ्यवादन्यायेन न प्रकृतिमात्रार्थत्वं, तस्याविशेष-प्रवृत्तकर्मणेति श्रुत्या बाधात्। तथा चैवंरूपैरङ्गैः प्रधानकर्मजन्यफलसमृद्धिजनकोपकारो जन्यत इत्यर्थः। तानि च काम्यानि अथवा नित्यान्यपीति तु वादान्तरम्। **जयादेरिति। तेषां** वैदिकत्वेन वैदिकहोमत्वावच्छिन्नेऽनारभ्याधीताहवनीयवाक्येनाहवनीयस्यैवाधिकरणतया नियमस्य द्वादशाध्यायद्वितीयपादाद्याधिकरणे वक्ष्यमाणत्वात् आहवनीयसाध्यत्वमित्यर्थः। गार्हपत्यादा-हवनीयप्रणयनस्य आहवनीयायतने संभवेऽपि तत्र कृषिकर्मणः प्रधानस्याननुष्ठानात् प्रधानैकदेश-त्वासंभवात् तद्रूपेण लिङ्गेन वाक्यबाधमाशङ्क्य निराकरोति—**न च प्रधानेति।** अङ्गानां प्रधा-नैकदेशत्वं गुणः। अङ्गानि च साक्षात् प्रधानाङ्गमित्येकदेशत्वरूपाङ्गगुणानुग्रहानुरोधेन प्रधानभूत-कृषिकर्माङ्गानां जयाहोमानां त्यागोऽयुक्तः। प्रत्युत तस्यैव न्यायसिद्धत्वान् स युक्त इत्याह— **अङ्गगुणेति।** **एतेनाङ्गगुणविरोधन्यायोद्भावनेन** जयाहोमाङ्गाहवनीयत्यागेनैव जयाद्यनुष्ठानात् कृष्याद्यङ्गत्वमित्येवं पूर्वपक्षमापाद्य "अविहिताधिकरणान्तरा एकान्तादाहवनीये कर्तव्या" इति सिद्धान्तवार्तिकं पदहोमादिवत् अधिकरणान्तरस्याविधानादाहवनीयत्यागे वैगुण्यापत्तिः स्यादेवेत्येवं तत्समाधानपरतया यद्व्याख्यातं **न्यायसुधाकृता तदपास्तम्।** अङ्गगुणैकदेशत्वत्यागेन तदङ्गाहव-नीयात्यागेपि अङ्गगुणविरोधन्यायेन पूर्वपक्षोपपत्तेः तदपरिहारात्। अत आहवनीयायतन एव तद्धो-मानुष्ठानकरणेऽपि तदङ्गत्वोपपत्तिरवभृथस्याब्देशेऽनुष्ठानेन एकदेशत्वाभावेऽपि सोमाङ्गत्वोपपत्ति-वदित्यर्थः। नन्ववभृथस्य अप्स्ववभृथेन चरन्तीत्यनेन वैदेश्यविधिवदिह तदभावात् बर्हिर्लवनादिवच्च

कृषिदेशेऽग्निनयनेन **समानदेशसम्भवाच्च।** वस्तुतस्तु **कृष्यादेर्दृष्टार्थतया विधेयत्वाभावेन प्रयोगविध्यभावादङ्गप्रधानयोरेकदेशत्व एव प्रमाणाभावः।** अस्तु वा तत्। **तथाऽपि तस्य** लिङ्गादिरूपप्रमाणत्वाभावेन **वाक्यसङ्कोचकत्वानुपपत्तेर्लौकिकवैदिकसाधारणसर्वकर्मार्थत्वमेव जयादीनामिति प्राप्ते—**

**अग्निमद्वैदिककर्मांशे तस्य परप्रयुक्ताग्नितत्प्रणयनोपजीवित्वं तदन्यकर्मांशे च तत्प्रयोजकत्वकल्पनमिति गौरववैरूप्यादिभिया कामश्रुतीनामाहिताग्न्यादिमात्रविषयत्ववत् जयादिविधिनैव स्वलाघवार्थम**भिमत्कर्मार्थतयैव **जयादिविधानान्नेतरकर्मार्थत्वम्** ॥ १२ ॥

---

संस्कारकर्मत्वाभावेन संस्कार्यद्रव्यदेशत्वावगतिनैराकांक्ष्यहेतुकप्रधानदेशाग्रहणायोगात् विधिं विना वैदेश्यस्य वैगुण्यजनकत्वापत्तेः कृष्याद्यङ्गत्वसिध्यन्यथानुपपत्त्या वैदेश्यस्यापि वैगुण्याजनकत्वकल्पनस्य चावैगुण्यापादकाहवनीयादिकमाकर्माङ्गताबोधनेनापि तद्विध्युपपत्तेरन्यथानुपपत्तेः क्षीणत्वादियोगात् सादेश्यस्योपकारसामर्थ्यापादकत्वनिमित्तसामर्थ्यरूपत्वेन लिङ्गत्वात्तेन वाक्यबाधस्स्यादेवेत्यत आह—**कृषिदेश इति।** अङ्गप्रधानयोरेकदेशकालकर्तृकत्वं देशादिघटितप्रयोगविधिना साङ्गप्रयोगविधानात् अवगम्यते। नचात्र रागतो वृत्त्यर्थतया प्राप्तस्य कृष्यादेर्विधानमस्ति। नवा तदर्थदेशस्य भूम्यादेर्वा। अतोऽविहितत्वेनार्थप्राप्तत्वेऽप्यनङ्गत्वात् प्रयोगवचनग्रहणानुपपत्तेः प्रयोगवचनाधीनाङ्गप्रधानैकदेशत्वं नैवापेक्षितमित्यविहितस्य वैगुण्यापादकत्वं नेत्याह—**वस्तुतस्त्विति।** प्रयोगाङ्गभूतदेशापेक्षप्रयोगविध्ययोगेऽपि अवश्यापेक्षितस्य देशादेर्दृष्टार्थत्वादविहितस्यापि लिङ्गेनाङ्गत्वोपपत्तेर्द्रव्यार्जनोपायनियमार्थकृष्यादिप्रयोगवाक्यग्रहणोपपत्तेः कृष्यादावप्यङ्गप्रधानैकदेशत्वसिद्धिरित्यभिप्रेत्याह—**अस्तु वा तदिति।** कृष्यादावश्यापेक्षितस्य दृष्टार्थस्याविहितस्य लिङ्गावगताङ्गभावस्य कृष्यादिप्रयोगवाक्यग्रहणोपपत्तियुक्तेरवश्यानपेक्षितदेशप्रतिग्रहादिकर्मस्वव्यापनात् तथाविधकर्मसु प्रयोगवाक्यग्रहणानुपपत्त्याऽङ्गप्रधानैकदेशत्वं दुरुपपादमेवेति **तथापीत्यनेन** सूचितम्। **लिङ्गादिरूपेति।** लिङ्गं हि सामर्थ्यरूपम्। तच्च मन्त्रादावर्थाभिधानयोग्यत्वं, नह्येवरूपं जयादिहोमेषु प्रधानैकदेशत्वरूपं नैजं तदस्ति। अङ्गत्वेनोपकारजनकतासामर्थ्यापादकत्वेनैकदेशत्वस्य तत्सामर्थ्यकल्पनं तु एकदेशत्वाभावेऽप्यङ्गानां प्रधानोपकारजनकताया दर्शनात् व्यभिचारीति न नियतत्वेन वाक्यस्य बाधकमित्यर्थः। **अग्निमत्कर्मार्थतयैवेति। अनेन** चाहवनीयरूपाधिकरणैकदेशत्वं यत्राङ्गप्रधानानां भवति तदङ्गत्वमेवाभिप्रेत्याग्निहोत्रादिहोमरूपप्रधानेषु तल्लाभेऽपि देवतोद्देशपूर्वकद्रव्यत्यागात्मकानां दर्शादियागानां ब्रह्मयज्ञदानादिरूपाणां च प्रधानानां होमरूपत्वाभावेनाहवनीयैकदेशत्वासंभवात् न

तादृशकर्माङ्गत्वं जयादीनामित्येवं वैदिकाहवनीयाधिकरणकप्रधानमात्राङ्गत्वं यत् **प्रकाशकारै**रुक्तं तद्-**पास्तम्**। यत्रैव जयादीनामाहवनीयप्रयोजकत्वकल्पनं नापतति तदङ्गत्वेनैव स्वलाघवार्थं जयादिविधि-प्रवृत्तिमात्राङ्गीकारेण दर्शादियागादि प्रधानाङ्गत्वोपपत्तौ आहवनीयाधिकरणरूपैकदेशसंभवदनुष्ठान-प्रधानमात्राङ्गत्वकल्पनेन शास्त्रसंकोचे मानाभावात्। अत एव **शेषश्च समाख्यानादि**त्येतदधिकरण-गुणसूत्रव्याख्याने "इतश्च होमानामेव जयादिश्शेषः यतस्समाख्यानुग्रहो भवति दर्शपूर्णमासादिषु हि अध्वर्युर्विद्यते तदङ्गभूतास्सन्त एते तत्कर्तृकतां प्रतिपद्यन्ते कृष्यादीनां तु ऋत्विगभावात्" इत्या-दिना **वार्तिके** दर्शपूर्णमासादियागाङ्गत्वं स्पष्टमेवोक्तं सङ्गच्छते। नहि दर्शपूर्णमासादिषु ह्यध्वर्यु-र्विद्यते अतस्तदङ्गभूतनारिष्ठादिष्वेवाध्वर्युकर्तृकत्वसंभवात् तादृशहोमानामेव जयादिश्शेषः इत्ययं वार्तिकार्थो भवतामपि संमतः। प्रधानहोमाङ्गत्वस्यैवाङ्गीकारात् कर्मजन्यसमृद्धेस्तेष्वेव संभवाच्च। एतद्दर्शपूर्णमासाङ्गत्वोक्त्यनुरोधेन 'इतश्च होमानामेव जयादिश्शेषः' इत्युपक्रमवार्तिकगतं होमानामिति पदं आहवनीयाधिकरणकोपलक्षणद्वारा होमपर्यन्तप्रधानमात्रपरमेव, न तु भवदभिमतप्रधानीभूतहोम-मात्रपरम्। अतश्चाहवनीयाप्रयोजकत्वकल्पनालाघवस्य यत्रैवाहवनीयस्तन्मात्राङ्गत्वस्वीकारेप्युपपत्ते-र्ब्रह्मयज्ञदानादिव्यावृत्तावपि अवश्यानुष्ठेयहोमरूपाङ्गकप्रधानदर्शयागाङ्गत्वे न काचित्क्षतिः। होमेषु परं प्रधानैकदेशत्वमपि अधिको गुणो लभ्यत इत्यस्तु नाम। न त्वेतावता तदनुरोधेन तन्मात्राङ्गत्वं नारिष्ठादिहोमाद्यङ्गानां समरूपविहारैकदेशानुष्ठानमात्रेण प्रधानैकदेशत्वस्यैवेहापि तदुपपत्तेश्चेति।

अत्र चाहिताग्नेराहवनीयप्रयोजकत्वकल्पनाभावेन तत्कर्तृककृष्यादिकर्मसु तदापत्तिर्नाशङ्क-नीयेति सूचनार्थं प्रणयनप्रयोजकत्वकल्पनाकृतवैरूप्यापत्तिपर्यन्तप्रदर्शनम्। तेन वैदिकत्वेनैषाम-विहिताधिकरणान्तराणामन्यत्र स्मार्ताग्न्यवप्राप्तेः यदाहवनीये जुह्वतीति वचनेनाहवनीयसाध्यत्वानु-रोधेनाहिताग्न्यधिकारकत्वम्; तत्रापि यथा परप्रयुक्ताहवनीयोपजीवित्वमपि लाघवात्कल्प्यते तथैव परप्रयुक्तप्रणयनोपजीवित्वमपीति यत्रैवाहिताग्नेः कर्मप्रयुक्तप्रणयनयुताग्निराहवनीयोऽङ्गत्वेनास्ति तत्कर्माङ्गमेव ते। अत एव यत्रानाहिताग्नेरेवाधिकारबोधकं वचनमस्ति तत्र वैदिकत्वेन प्राप्ताहवनी-याधिकरणत्वानामपि चतुर्होतृमन्त्रकरणककाम्यहोमानां लौकिकाग्निष्वेवानुष्ठानं षष्ठषष्ठपादाद्याधि-करणे वक्ष्यते। प्रकृते तु तादृशवचनाभावात् नानाहिताग्नेरेव अथवा पिण्डपितृयज्ञवदुभयाधिकार-वचनाभावात् नोभयोरधिकारः किन्तु आहिताग्नेरेव परप्रयुक्तप्रणीताहवनीयवत्कर्माङ्गत्वेनानुष्ठाने। एवं चैषामाध्वर्यवसमाख्याप्युपपद्यते। अन्यथा स्मार्तेषु लौकिकेषु वा तदभावात्तद्बाधः स्यादित्यर्थः।

न चाग्निसाध्यवैदिककर्ममात्रार्थत्वे कचिच्च यजमानादौ [चयनादौ] पुनस्तद्विधानवैयर्थ्यं, कर्म-जन्यफलसमृद्धिकामनाभावे सत्यननुष्ठानप्राप्तौ तदावश्यकत्वबोधनेन, अथवा आगन्तूनामन्ते निवेश-

(१४)—दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषस्स्यात् ॥ ३४ ॥
अर्थवादो वाऽनुपपातात्तस्माद्यज्ञे प्रतीयेत ॥ ३५ ॥

अनारभ्य "प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै स वरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति

---

न्यायेन एषामन्तेऽनुष्ठानप्राप्तौ पाठक्रमबोधकत्वेन वा तद्विधिसार्थक्योपपत्तेः। यत्र तु स्मार्ते कर्मण्येव जयादि प्रतिपद्यत इति स्मार्तं वचनं तत्तु तदङ्गत्वेनाप्राप्तानामङ्गत्वबोधकमेवेति तद्वचनादेव परप्रयुक्ते स्मार्ताग्नौ लौकिके वा संस्कृते तेषां न विरुद्ध्यतेऽनुष्ठानम्। एतदभिप्रायेणैवाहवनीयादिमत्सु प्रधानसादेश्यं लभ्यत इति शास्त्रदीपिकायामादिपदोपादानम्। एतेन जयादिहोमन्यायेन कूश्माण्डहोमानामनारभ्याधीतानां स्वतन्त्रपुरुषार्थानां वैदिकत्वेनाहवनीये प्राप्तेऽपि योऽपूत इव मन्येतेत्यादिवाक्यशेषबलादपूतमात्राधिकारिकत्वप्रतीतेः उभयाधिकारित्वेऽपि कर्माङ्गत्वाभावादेवान्यार्थप्रणीताहवनीयानुष्ठानाप्राप्तेराहवनीयप्रणयनप्रयोजकत्वकल्पने गौरवात् आहवनीयातिरिक्ताग्नावप्यनुष्ठानमाहिताग्नेरपि द्रष्टव्यम्। एवंस्थिते यत्रैव पुनस्तद्विधानं तत्कर्माङ्गत्वेनैव तेषां जयादीनामनुष्ठानप्रचारो न सर्ववैदिकेषु याज्ञिकानामित्यलं मूलं सातदश्यन्यायेन तत्प्राकरणिकवाक्यैस्सहानारभ्याधीतस्यास्योपसंहारभ्रम एवेति ध्येयम्। वस्तुतस्तूपसंहारपरत्वेऽनारभ्याधीतवाक्यवैयर्थ्यापत्तेः पूर्वोक्तविधया तत्सार्थक्यसंभवात्सर्वकर्माङ्गत्वेन तदनुष्ठानं युक्तमेव फलसमृद्धिकामनासत्त्वे इति दिक्।

---

## दोषात्त्विष्टिर्लौकिके

अनारभ्याधीतानां जयादिहोमानां वैदिककर्माङ्गत्ववत् इहापि सिद्धान्तस्य वक्ष्यमाणत्वात् तेन चास्यापि अनारभ्याधीतत्त्वेन बुद्धिस्थस्य प्रसङ्गादेव कर्तव्यस्य क्रत्वर्थत्वपुरुषार्थत्वान्यतरफलकस्य विचारस्य नासङ्गतत्वमित्यभिप्रेत्येह पूर्वपक्षोपयुक्तत्वात् उत्तराधिकरणे च सिद्धान्तोपयुक्तत्वादुपक्रमोपसंहारविशिष्टत्वेन विषयवाक्यमुदाहरति—अनारभ्येति। तैत्तिरीयशाखायाङ्काम्येष्टिकाण्डे असंबद्धत्वेनैव मध्ये आम्नानात् अनारभ्य श्रुतमित्यन्वयः। प्रजापतिर्वरुणाय प्रतिग्रहीत्रेऽश्वमानयत् अश्वं ददौ। सोऽश्वदाता प्रजापतिः स्वां देवतामश्वदाने संप्रदानत्वेनात्मीयदेवतारूपमार्छत प्रापत् अश्वं दत्वा वरुणग्रहं जलोदरव्याधिपर्यायं प्राप्तवान्। स प्रजापतिस्तेन व्याधिना पर्यदीर्यत परितो दीर्णोऽभूत् इत्युदाहरणवाक्यस्यार्थः। स्पष्टार्थमन्यत्। प्रतिग्रहस्य निमित्तत्वे तस्य प्रतिग्रहीतृनिष्ठस्वीकरणरूपस्य स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनाभिन्नसमर्पणरूपदानविधिनाऽप्राप्तस्य वृत्त्यर्थ-

**योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्" इति श्रुतम्।** प्रतिग्रहशब्दोऽत्र **दानपर इत्युत्तराधिकरणे वक्ष्यते।** ततश्च **यन्मिल्लदायादादिभ्यो लौकिकं दानं तत्सम्बन्धिनीयमिष्टिः किं वा ऽश्वदानमात्रसम्बन्धिनी किं वाऽग्निमत्कर्माङ्गभूताश्वदानसम्बन्धिनीति चिन्तायां-**अर्थवादानुरोधेन दानविषयत्वबदस्या इष्टेर्दोषनिर्घा-

---

तयैव रागतः प्राप्तस्य कर्ममध्ये क्रत्वर्थतया विधानाभावात् न तद्द्वारा क्रत्वर्थत्वं सिद्धान्तेऽस्या इष्टे, स्सिद्ध्येत इत्यत आह—**प्रतिग्रहशब्दोऽत्रेति।** अत्र च " दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषः स्यात् " इति सूत्रगततुशब्देन निरस्यतया आदौ कस्यचित् पक्षस्योत्थाने सूचिते सति **भाष्यकारेण** वैदिकाश्वदानमेव निमित्तमिति यस्सिद्धान्तपक्षस्तमेवादौ कर्तव्यतया सूचयित्वा मध्ये लौकिकाश्वदानस्यैव तेषान्निमित्तत्वमित्येवं तत्खण्डनेन द्वितीयं पक्षमभिधाय पुनस्सिद्धान्तपक्षस्साधितः। **वार्तिककृता** तु तुशब्दनिरस्यतया लौकिकवैदिकाश्वदानसाधारणाश्वदानमात्रस्य निमित्तत्वाङ्गीकारेणाद्यं पक्षमुक्त्वा लौकिकस्यैव निमित्तत्वमाश्रित्य पूर्वपक्षः कृतः। तदुभयमप्ययुक्तमित्यग्रे पूर्वपक्षोपपादनवेलायां सूचयिष्यते। अतस्सूत्रगततुशब्दस्य पूर्वाधिकरणसिद्धान्तमात्राक्षेपकत्वोपपत्तेः आदौ निरसनीयत्वेन पक्षान्तरप्रदर्शने प्रयोजनाभावाल्लौकिकस्य तस्य निमित्तत्वेनाद्यपूर्वपक्षकोटिः, द्वितीया वैदिकस्य तस्य निमित्तत्वेन सिद्धान्तकोटिरिति सूत्रकृता कोटिद्वयमेव प्राधान्येन प्रतिपादितं तदन्तरालत्वेनैवोपस्थितोभयनिमित्तत्वकोटिर्मध्य एव युक्ता कर्तुमित्यभिप्रेत्य स्वाभिमतत्रिकोटिकं संशयं दर्शयति-**ततश्चेति।** अश्वदानस्य निमित्तताया अद्याप्यनिर्णीतत्वेन वक्ष्यमाणरीत्या शेषित्वस्यापि संभवाभिप्रायेणा**श्वदानसंबन्धिनीत्युक्तम्,** द्रव्यदेवतासंबन्धेन निर्वपतिना यागलक्षणादिष्टिरिति च। सिद्धान्ते वैदिकाश्वदानस्य निमित्तत्वे 'येऽश्वदा उत वा सन्ति गोदा ये वस्त्रदास्सुभगास्तेषु रायः उच्चा दिवि दक्षिणावन्तो अस्तुर्य अश्वदास्सह ते सूर्येण " इत्यादिमन्त्रवर्णकल्प्याश्वदानविधिना पुरुषार्थत्वेन विहिते अश्वदानेऽपि निमित्तत्वापत्तेस्तत्रापि दातुरिष्टिप्रसक्तिनिवारणायाग्निमत्कर्माङ्गभूतत्वेनाश्वदानं विशेषितम्। यत् भाष्यवार्तिककाराभ्यां लौकिक एवाश्वदाने इयमिष्टिरिति पूर्वपक्षः प्राथम्येन नोक्तः तदयुक्तमित्युपपादयति—**अर्थवादानुरोधेनेति।** क्रत्वर्थत्वफलकसिद्धान्ताकोट्युपपत्त्यै अवश्यं प्रतिगृह्णीयादिति प्रतिग्रहवाचकस्य पदस्य दानपरताकल्पनार्थमुपक्रमगतार्थवादपर्यालोचनायां आवश्यकत्वे सति तत एव दोषनिर्घातार्थत्वप्रतीतौ सत्यामसंभावितदोषे वैदिकेऽश्वदाने नैव सर्वथेयमिष्टिः प्राप्नोतीति न केवलवैदिकाश्वदाननिमित्तकस्य तस्य न वोभयनिमित्तकस्य तस्योत्थानं संभवतीति दोषनिर्घातार्थत्वखण्डनेनैव भाष्यवार्तिकाद्युक्तप्रकारेण तत्पूर्वपक्षोत्थाने वक्तव्ये दोषात्त्विष्टिर्लौकिके स्यादिति सूत्रेण तदुत्तरत्वेन यल्लौकिकाश्वदान एवेयमिष्टिरिति पूर्वपक्षकरणं तन्न युज्येत। अतो दोष-

**तार्थत्वस्याप्यवगमात् दोषस्य च "न केसरिणो ददाति" इत्यनेनाविहितलौकिकविषयत्वात्**

---

निर्घातार्थत्वाङ्गीकारेण आदौ लौकिक एव सेति पूर्वपक्षं प्रापय्य दोषनिर्घातार्थत्वखण्डनेनोभयाश्वदाने सेति द्वितीयपूर्वपक्षकरणं युक्तमिति वतिप्रत्ययेन सूचितम्। सूत्रगतं दोषादिति पदं व्याचष्टे—**अस्या इष्टेरिति। अयमर्थः-यद्यपि** दोषस्य न दानविशेषणत्वं संभवति तस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात्। अतो विधीयमानेष्टिस्तुतिमात्रपरे दोषसंकीर्तने वैदिकेऽपि निमित्तं भवितुमर्हति **तथापि** "यस्योभावग्नी अभिनिम्रोचेत् पुनराधेयं तस्य प्रायश्चित्तिः" इत्यत्र हविरुभयत्वस्येवाग्निगतोभयत्वविशेषणस्याप्यविवक्षया अन्यतराग्न्यनुगमने प्रायश्चित्तप्राप्तावपि यथाविधेयाधानस्यानेकाग्न्युत्पादकत्वसामर्थ्यादेवोभयाग्न्यनुगमनस्यैव निमित्तत्वात् न तत्सिद्ध्यति, तथेहापीष्टिभावनायाः प्रयोजनापेक्षायां स्वर्गक्रतूपकारयोरनुपस्थितयोस्तत्वेन कल्पनापेक्षयाऽस्य दोषस्यार्थवादोपस्थितत्वेन प्रत्यासत्तेस्स्वरूपेण कर्मणस्तदनपेक्षया फलत्वेनास्यान्वयायोग्यत्वेऽपि पुरुषौपयिकं विधिसंबन्धार्हं निर्घातमपेक्षमाणस्यापनीयमानतया कर्मणा सह संबन्धकल्पनात् स एवैनं वरुणपाशान्मुञ्चतीत्युपसंहारेण च दोषनिर्घातस्य फलत्वप्रतीत्या विधेयेष्टिगतदोषनिर्घातार्थत्वसामर्थ्यात् दोषवद्दानस्यैव निमित्तत्वान्न वैदिके तत्सिद्ध्यति। अतो यत्र दोषस्तत्र तन्निर्घातःयत्र तन्निर्घातस्तत्रेष्टिरिति लौकिक एव प्राप्नोतीति तमेव निर्घात्यं दोषं वैदिके न संभवतीति व्यतिरेकसिद्ध्यै लौकिक एव दर्शयति—**दोषस्य चेति।** अत्र **वार्तिके** लौकिकाश्वदानस्य दोषजनकत्वे "न केसरिणो ददाति" "नोभयतोदतः प्रतिगृह्णाति" इति निषेधद्वयमुदाहृतम्। तत्रोत्तरस्य प्रतिग्रहनिषेधकत्वेऽपि दाननिषेधकत्वाभावात् प्रकृतानुपयोगेऽपि अत्र प्रतिग्रहपरत्वेऽपि पूर्वपक्षस्समर्थयितुं शक्यते इत्यभिप्रायेणाभ्युच्चयवादेन कथञ्चित्समर्थनीयत्वं मत्वा स्वयं तदुपेक्ष्याद्यमेव तद्वाक्यमुदाहरति—**न केसरिण इति।** अत्र **न्यायसुधाकृता** विश्वजित्प्रकरणेऽस्य वाक्यस्य समाम्नानात् तत्प्रकरणाम्नातसर्वस्वदानवाक्यशेषत्वे पर्युदासत्वोपपत्तेरस्य लौकिकाश्वदाननिषेधकत्वायोगमाशङ्क्य गुणवाक्यानामन्योन्यान्वयायोगात् लौकिकाश्वदानविषयत्वेनापि च केसरिवाक्योपपत्तेः वरणयेयजामहनिषेधवत् विषयप्राप्त्यै[1]गुणवाक्यानपेक्षणात् केसरिवाक्यस्य सर्वस्वदानवाक्यशेषत्वानुपपत्तेः धर्मत्वभ्रान्त्यादिनिमित्ताश्वदाननिषेधाच्च विकल्पानापत्तेः पर्युदासत्वायोगात् युक्तमेव प्रतिषेधत्वं **वार्तिककृता** असंभवत्पर्युदासप्रतिग्रहनिषेधवाक्यसाहचर्येण दृढीकृतमिति समाहितम् "तदकार्यत्वात्ततः पुनर्विशेषस्स्यात्" इति षष्ठाध्यायसप्तमपादाधिकरणे न केसरिण इत्यस्य सर्वस्वदानविध्येकवाक्यतया पर्युदासत्वाङ्गीकारेण अश्वभिन्नसर्वस्वदानस्य कर्तव्यताप्रतिपादनेन सह विरुद्धमित्यभिप्रेत्यात्र वार्तिककृता लिखितस्य न केसरिण इति

---

1. A. प्राप्तौ

**तदनुरोधेनास्या अपि लौकिकदानविषयत्वम्।** इदं हि वचनं **यत्रानियमेन** सामान्यतो विहितेऽश्वविषये **इच्छया प्रवृत्तिः यत्र वा नैव विहितं यथा मित्रदायादादिभ्यस्तद्विषयम्। अत एव यत्र विश्वजिदादौ सर्वस्वदानेऽश्वदानं** नियतं **तत्र तत्प्रकरणस्थेन वाक्यान्तरेणैव तस्य पर्युदासेऽप्यस्य** शाखान्तरीयवचनस्योक्तविषये **निषेधत्वमेव। अतस्तत्र निषेधबलेन** दोषावगतेस्तन्निर्घातार्थाया **इष्टेरपि तद्विषयत्वं भेदनहोमस्येव भेदनवद्दर्शपूर्णमासविषयत्वम्। अत एव दोषनिर्घातः फलं, अश्वदानं च निमित्तं, न तु शेषि। तथात्वे उक्तफलत्वानुपपत्तेः,** अव्यभिचरित**क्रतुसम्बन्धाभावाच्च।** यदि त्वस्या **दोषनिर्घातार्थत्वं नाभ्युपगम्यते ततो** यावच्छब्दसमभिव्याहारेणा**श्वदानस्योद्देश्यत्वावगतेस्तावच्छब्दसमभिव्याहृताप्राप्तेष्टेस्तदङ्गत्वा-पातान्निमित्तत्वानुपपत्तिः।** न हि **यावच्छब्दो निमित्तवाची, अपि तु** साकल्यवाची।

---

वाक्यस्य विश्वजित्प्रकरणपठितवाक्यातिरिक्तत्वेन शाखान्तरपठितस्यैवाङ्गीकार्यत्वौचित्येनैतद्वाक्य-प्रवृत्तिविषयं विविनक्ति—**इदं हि वचनमिति। सामान्यतो विहित इति।** यथाश्रद्धं दद्यादित्यादिनेति शेषः। **नियतमिति।** सर्वस्वान्तर्गतत्वेनेति शेषः। **दोषावगतेरिति। यद्यपि** रागप्राप्ताश्वदाननिषेधेनान्यनिषेधेनेव पापरूपदोषावगतिरेव भवेन्न तु वरुणग्रहाख्यदोषाव-गतिरिति नार्थवादसामञ्जस्यं **तथापि** वृणोति पापमित्यवयवयोगेन पापस्यैवार्थवादगत-वरुणपदेनाभिधानात् न बाधकमित्याशयः। न चाश्वदानस्य शेषित्वेऽपि क्रतूपयोगित्वेन तस्य शेषत्वोपपत्त्याऽनपेक्षितत्वेन दोषनिर्घातस्य फलत्वानुपपत्तिरित्याशङ्कां निराकरोति—**अव्यभिचरितेति।** अतोऽश्वदानस्य शेषिणो लोकेऽपि संभवे तच्छेषित्वेन फलाकाङ्क्षाया अशान्तेः स्वर्गादिफलकल्पकविश्वजिन्न्यायापवादेनेह **रात्रिसत्रन्यायस्यैव** प्राप्तेः युक्तमेव दोष-निर्घातस्य फलत्वमित्यर्थः। दोषनिर्घातार्थत्वानङ्गीकारेणास्या इष्टेर्नैमित्तिकत्वमङ्गीकृत्य यत् केवल-वैदिकाश्वदानेऽथवोभयाश्वदाने वा निमित्ते इयमिष्टिरिति **प्राचां** पूर्वपक्षकरणं तदयुक्तमिति सूचयितुं दोषनिर्घातस्य फलत्वावश्यकतोपपादकहेत्वन्तरकथनव्याजेन नैमित्तिकत्वं साधयति—**यदि त्विति। यावच्छब्दसमभिव्याहारेणेति।** विधेयेष्टिसंख्योपलक्षणभूतदानान्वय्यश्वगत-संख्याबोधकेति यावच्छब्दात् पूर्वं शेषः। तथा चान्यतः प्राप्तिसूचकेन यावच्छब्देन प्राप्त-संख्याविशिष्टाश्वकर्मकदानस्यान्यतः प्राप्तस्योद्देश्यत्वेनान्वये संभवति न निमित्तत्वेनान्वयो युक्त इत्यर्थः। नहि भेदनस्येवेह निमित्तत्वनिश्चयस्संभवतीति व्यतिरेकेण दर्शयति—**न हीति।** तत्र हि सप्तम्या निमित्तत्वस्य प्रतिपादनात् प्रकरणपाठेन क्रतोश्शेषितयोपस्थितत्वाच्च युक्तं निमि-त्तत्वमिह तु तदभावादपेक्षितशेषिपरत्वस्यैवापत्तिरित्यर्थः। **साकल्यवाचीति।** संख्येयेष्टि-विधानोपलक्षणीभूतसंख्याया अश्वगतायाः साकल्यापरपर्यायायाः अनियतरूपाया वाचीत्यर्थः।

न च यावत्तावच्छब्दाभ्यां **क्रियाद्वयस्य सम्बन्धमात्रावगतौ शेषित्वपक्षे आरादुपकारकत्वेन तन्त्रत्वापत्ते**स्तावच्छब्दार्थ**स्य प्राप्त्यभावेन विधेयत्वप्रसङ्गात् निमित्तत्वपक्षे च प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायेन** तावच्छब्दार्थस्य **प्राप्तत्वेनाविधेयत्वाद्विधिलाघवानुरोधेन निमित्तत्वावगतिस्सिद्धान्तेऽपि सुलभेति वाच्यं;** पक्षद्वयेऽपि **निमित्तानुरोधेन प्रधानानुरोधेन वाऽऽवृत्ति-**

---

**न्यायसुधो**क्तनिमित्तत्वावगतिप्रकारमनूद्य दूषयति—**न च यावदिति । तावच्छब्दार्थस्येति ।** तन्त्रेणेष्ट्यनुष्ठाने अश्वगतोपलक्षणीभूतसंख्यासमसंख्यत्वरूपस्य तावच्छब्दार्थस्येष्ट्यामभावात् अन्यत अप्राप्तेः विधेयत्वापात इत्यर्थः । **पक्षद्वयेऽपीति । अयमर्थः**—अनेकशेषिकं प्रयाजाद्यङ्गं यथा तन्त्रेण भवति तथैवानेकनिमित्तप्रयुक्तमप्यङ्गमनङ्गं वा तन्त्रेणैव प्राप्नोतीति । यथैवानेकब्राह्मणहननप्रयुक्तस्य प्रायश्चित्तस्य न्यायप्राप्ततन्त्रानुष्ठानबाधं द्वितीये द्विगुणव्रतं तृतीये त्रिगुणमित्यादिवचनान्तरेण स्वीकृत्य प्रतिब्राह्मणहननं निमित्तभेदेन प्राप्तप्रायश्चित्तावृत्तेः प्रतिप्रसवः, एवमिहापि तन्त्रानुष्ठानबाधेनानेनावृत्तिबोधकेन वचसा आवृत्तिप्रतिप्रसव एव स्वीकर्तव्यः नैमित्तिकत्वपक्षे । ततश्च शेषशेषिभावविधानपक्षेऽपि न्यायप्राप्ततन्त्रानुष्ठानबाधेनावृत्तिप्रतिप्रसवश्शक्यत एव विधातुमिति । अत एव पञ्चमाध्यायद्वितीयपादद्वितीयाधिकरणे यावतोऽश्वान् इति वाक्ये निमित्तविशेषणस्य यावत्त्वस्याविवक्षितत्वात्, नैमित्तिकगतस्य च तावत्वबहुत्वादेः पृष्ठशमनीयन्यायेनानुवाद्यगतत्वेनाविवक्षितत्वात् साहित्यबोधकवचनाभावेनानेकेष्वप्यश्वदानेषु प्रत्येकप्रयोगेणैव वारुणेष्टिकर्तव्यतावगमात् न सर्वेषां पुरोडाशानां श्रपणे साहित्यप्रसक्तिरिति तत्रत्यवार्तिकमप्राप्ततावच्छब्दार्थविध्यावश्यकत्वे सति एकपदोपादानप्रतीतसाहित्यानामेव पुरोडाशानां विधानेन दूषयिष्यत इति ।

**एतेन** यावत्तावच्छब्दाभ्यां सर्वाश्वव्याप्तिप्रतीतेः तस्याश्चाश्वानां संस्कार्यत्वाभावेन प्रतिसंस्कार्यावृत्तिन्यायेन संस्कारकर्मेष्ट्यावृत्त्या असंभवात् परिशेषादेवाश्वानां निमित्तत्वे सिद्धे "मृष्यामहे" इति न्यायेन दानसंबन्धित्वेन विशेषणाद्दानसंबन्ध्यश्वस्य निमित्तत्वात् प्रतिनिमित्तं आवृत्त्या एकदेशकालकर्तृकत्वन्यायप्राप्ततन्त्रबाधेन प्रतिप्रसूतया विशिष्टं नैमित्तिकमत्र विधेयमिति **प्रकाराकाराणामुक्तपास्तम्,** केवलाश्वानामपि द्वितीयया संस्कार्यत्वोपपत्तेः । प्रतिप्रधानावृत्तिन्यायेनैवावृत्त्युपपत्तेः निमित्तपरत्व एव मानाभावात् । **यदि** त्वश्वानित्यस्य प्रतिग्रहलक्षितधात्वर्थे कर्मत्वेनान्वयेऽपि **न** वारुणकपालयागं प्रत्युद्देश्यत्वमित्युच्येत **तदा**ऽश्वदानस्यैव शेषित्वोपपत्तेः न तावतापि निमित्तत्वपर्यवसानम् । निमित्तत्वेऽप्यश्वानां दानभावनायामेवान्वयेन लिङुक्तनिमित्तत्वस्य विशेष्यगामित्वेनान्वयस्य युक्तत्वेन **वार्तिकन्यायसुधास्वारस्येन** प्रतीयमानाश्वदान-

**प्रसक्तौ कालैक्येन तन्त्रत्वप्राप्तेस्तावच्छब्दस्य प्रतिप्रसवविधित्वावश्यंभावात्।** अत एव **"गृह्णीयात्" इति लिङः प्रयोजकत्वापरपर्यायहेतुत्वार्थत्वेऽपि हेतुत्वेऽपि तदुपपत्ते- र्निमित्तत्वनिश्चयो दुर्लभः।** प्रत्युता**पेक्षितत्वाच्छेषित्वमेव सिद्धान्ते स्यात्।** मम तु **दोषनिर्घातार्थत्वात्तन्निश्चय इति वैषम्यम्।** अतश्च **तद्बलेन लौकिक एवाश्वदाने आहिताग्नेः स्यादिति प्रथमःपक्षः॥**

द्वितीयस्तु—यस्तावद**र्थवादे जलोदरापरपर्यायो वरुणग्रहाख्यो दोषः स नैव प्रत्यक्षादिना वैद्यकसंहिताभिर्वाऽश्वदानजन्यतयाऽवगम्यते।** अथ—**मुख्यार्थबाधेऽपि पापमेव वृणोतीति व्युत्पत्त्याऽवयवयोगेन वरुणग्रहशब्देनोच्येत ततो वैदिकदानेऽपि कथञ्चित्त्यागाद्दुःख- दर्शनात्तदेव वरुणग्रहशब्देनोच्यताम्। इष्ट्याडम्बरविनोदेन च तद्दुःखशमनात्**

---

निमित्तत्वत्यागेन वैपरीत्येन तत्कल्पनस्यायुक्ततरत्वाच्च। अत उभयपक्षेऽप्यावृत्तिविधायकत्वा- ङ्गीकारगौरवं तुल्यमित्यनुशासनबलान्निमित्तत्वमेव भविष्यतीत्याशङ्कां परिहरति—**अत एवेति।** एवमनुशासनाविरोधे तुल्ये च गौरवे सति येन विशेषेण शेषित्वमेवापतति युक्ततया तं दर्शयति— **प्रत्युतेति।** एवं दोषनिर्घातस्य फलत्वास्वीकारे निमित्तत्वासिद्धिं प्रदर्श्य तस्य फलत्वे तु तेनैव निराकाङ्क्षतया शेष्यन्तरकल्पने प्रयोजनाभावादगत्या श्रुतस्याश्वदानस्य निमित्तत्वेनैवान्वयस्संभ- वतीति तन्निश्चयमाह—**मम त्विति।** **आद्यं पूर्वपक्षमुपसंहरति—अत इति।** दोषनिर्घात- रूपफलस्य वैदिकेऽप्रसक्तत्वबलेनेत्यर्थः। वैदिकवारुणयागद्रव्यप्रक्षेपस्याहवनीयाधिकरणत्वात् **आहिताग्नेः** इत्युक्तम्। तथा च मित्रदायादादिसंप्रदानके आहिताग्निना दृष्टार्थेऽश्वदाने कृते तथा विक्रयेऽपिस्वस्वत्वत्यागपरस्वत्वापादनसद्भावात् सकलो ददात्यर्थो वर्तत इति **वार्तिको**पपादित- रीत्या आहिताग्निकर्तृके विक्रयपूर्वके चाश्वदाने निमित्ते सति तस्येयमिष्टिर्नैमित्तिकीति प्रथमः पक्ष इत्यर्थः। येन दोषनिर्घातफलार्थत्वेन हेतुना लौकिक एवेत्युक्तं तन्निषिद्धत्वेन निषेधवाक्यप्रमित- पापरूपदोषनिर्घातार्थत्वस्यार्थवादादनवगमात् अर्थवादावगतजलोदरापरपर्यायवरुणग्रहदोषस्य च निषेधवाक्यप्रमितत्वाभावात् निषिद्धत्वसमानाधिकरणदोषजनकत्वस्य लौकिकेऽसंभवादयुक्तमित्यभि- प्रेत्य द्वितीयं पक्षमाह—**द्वितीयस्त्विति।** वरुणग्रहदोषजनकत्वं मा नाम बुद्ध्यतां; यदि प्रत्यक्षेण वैद्यकसंहिताभिर्वा कालान्तरभावित्वेन वा स दोषोऽश्वदानाद्भवतीत्यवगतं भवेत् तदा कथञ्चिदवगत- तादृशदोषनिर्घातः फलमपि कल्प्येत तदपिनास्तीत्याह—**यस्तावदिति।** अथ यन्निषेधावगतं दोषरूपं पापं फलं तदेव वरुणपदेनाभिधाय तन्निवृत्तिफलमर्थवादादवगम्यत इत्याशङ्कां रूढेर्योगा- द्बलीयस्त्वेन वरुणशब्देनावयवव्युत्पत्त्या पापाभिधानासंभवेन सुपरिहारामपि प्रतिबन्द्यापि परिहरति

'स एवैनम्' इत्यस्याप्युपपत्तेरस्या दोषनिर्घातार्थत्वे प्रमाणाभावाल्लौकिकमात्रविषयत्वानुपपत्ते-र्वाक्यसङ्कोचायोगेन सर्वविषयत्वम्। न च गृह्णीयादिति लिङा विहितत्वेनोक्तत्वा-द्विहितस्योपस्थितिः, उद्देश्यस्य विहितत्वेन विशेषणायोगात्। अतस्सर्वविषयत्वमिति प्राप्ते—

जयादिन्यायेनैव लौकिके फलकल्पना वैदिके नेत्येवं, विहितेऽप्यग्निरहिते तत्प्रणय-नादिप्रयोजकत्वमितरत्र नेत्येवं च वैरूप्यापत्तेर्विधिःस्वलाघवानुरोधेनैव स्वसङ्कोचं कामश्रुतिवदेवानुमन्यते। अतश्चाग्निमत्कर्मसम्बन्ध्यश्वदानमेवोद्देश्यम्। तदपि च न शेषितया, प्रवर्ग्यन्यायेनाश्वदानगतप्रयोजनवत्त्वजिज्ञासायामवश्योपस्थितक्रतोरेव शेषित्व-

---

—अथेति। प्रमाणाभावादिति। वरुणग्रहरूपदोषोत्पत्तौ प्रमाणाभावेन मुख्यार्थत्वासंभवेन शक्त्या तदर्थपरत्वायोगात् स्तुतिमात्रपरत्वमेव कथञ्चिद्दोषसंकीर्तनस्य वक्तव्यं, तच्चेत्थं वार्तिके उपपादितं—यथैव प्रजापतिर्वरुणेन गृहीत आसीत् तथाऽद्यत्वेप्यश्वप्रतिग्रहश्चेज्जातः स एव वरुणग्रहदोषो भवति; यथा च प्रजापतेर्वारुणीष्टिस्तत उन्मोचिन्यासीत् तथा अद्यत्वेऽप्यसौ उन्मोचिनी विज्ञायते तस्माद्वरुणगृहीतेनेव तद्विमोचनमवश्यकर्तव्येष्टिरित्येतावानर्थो विवक्षित इति। सुवर्णधारण-वद्वैदिकत्वसामान्यस्य स्थानाख्यस्य सन्निधिरूपतया वाक्येन बाधात् निमित्ते वैदिकत्वालाभेऽपि प्रकारान्तरेण तत्परिच्छेदमुत्तराधिकरणवार्तिकन्यायसुधोपपादितमाशङ्कते—न चेति। लिङेति। अयमर्थः। यद्यपि प्रतिगृह्णीयादित्ययं लिङ् निमित्तत्वोपयुक्तस्तथापि अप्राप्तस्य निमित्तत्वायोगात् प्रापकञ्च विना प्राप्त्ययोगात् आत्मना च वाच्यत्वेनोपस्थापितस्यापि विध्याख्यस्य प्रापकस्य विरोधि-निषेधाभावात् संभवेऽनुपस्थापितरागादिप्रापकाक्षेपायोगात् विधिप्राप्तस्यैव निमित्तत्वबोधनात् निमित्तत्वोपयुक्तस्यापि लिङोऽविशेषकत्वोपपत्त्या यावतोऽश्वान्विधिनियुक्तस्सन् दद्यादित्येवं विहिता-श्वदानस्य निमित्तत्वम्। यद्यपि विहितत्वं न निमित्तविशेषणं भवितुमर्हति तथापि दानमात्रस्य निमित्तत्वे वक्ष्यमाणवैरूप्यापत्तेः निमित्ततयोद्देश्यस्यापि दानस्य विशेषणाकाङ्क्षणात् हविरार्तिव-द्विशिष्टस्य निमित्तत्वमुपपद्यत एवेति अश्वदानमात्रस्य निमित्तत्वेऽपि निमित्तपर्यवसानानुपपत्त्यभावात् औत्तरकालीनाया वैरूप्यापत्तेः विशेषणाकाङ्क्षोत्थापकत्वानुपपत्तेर्हविरार्तिन्यायवैलक्षण्यात् न विहितत्वस्य विशेषणत्वम्। इतरथा वाक्यभेदापत्तेः इत्यभिप्रेत्य निराकरोति—उद्देश्यस्येति। ततश्च सर्वस्यापि निमित्तत्वात् अथवा दोषनिर्घातार्थत्वाभावे निमित्तनैमित्तिकभावसंबन्धनियमासिद्धेः संबन्धसामान्यप्रतीतौ च शेषशेषिभावस्याप्युपपत्तेः उभयोः शेषित्वमिति सूचयितुं सामान्येनोप-संहरति—अतस्सर्वेति। वैदिके नेत्येवमिति। अस्य वैरूप्यापत्तेरित्यनेनान्वयः। ततश्च

**कल्पनौचित्यात्।** अतश्चोपसद्वदेव **नाश्वदानस्य हेतुत्वं शेषितया। अपि तु निमित्ततयैव।** अस्तु वा **तत्।** **तथाप्यग्निमत्कर्मसम्बन्ध्यश्वदान एवेयमिष्टिः** ॥ १४ ॥

---

## (१५)–अचोदितं च कर्मभेदात् ॥ ३६ ॥ सा लिङ्गादार्त्विजे स्यात् ॥ ३७ ॥

---

वैदिकाश्वदाननिमित्तपक्षे कथञ्चिद्बुद्धिस्थक्रत्वर्थत्वसंभवेनात्यन्ताबुद्धिस्थस्वर्गकल्पनापादकपुरुषार्थत्वायोगात् लौकिकतन्निमित्तपक्षे क्रतुस्वर्गयोरत्यन्ताबुद्धिस्थत्वसाम्येपि साक्षात्समीहितत्वेन स्वर्गस्यैव कल्प्यत्वात् क्रत्वर्थत्वानुपपत्तेर्वैरूप्यापत्तिरित्यर्थः। **उपसद्वदेवेति।** यथोपसदां प्रवर्ग्यं प्रति न शेषितया हेतुत्वमित्येतावन्मात्रेण दृष्टान्तः। **यद्यपि** फलत्वज्ञानार्थं क्रतूपस्थितिरावश्यकी **तथापि** दीक्षणीयायामिव वाक्योपात्तं भवत्येवाश्वदाने शेषित्वमिप्रेत्याह—**अस्तु वेति।** तथापि लौकिकस्य दानस्य निषिद्धत्वेनाफलस्याङ्गानपेक्षणेनास्य तदङ्गतयाऽन्वयासंभवात् हिरण्यधारण इवेह वाक्यशेषोपात्तफलस्य फलत्वानुपपत्तेः स्वर्गादिकल्पनायामग्निप्रणयनप्रयोजकत्वकल्पनापत्तेः लाघवपरिशेषसहकृताव्यभिचरितक्रतुसंबन्धेन दानेन क्रतूपस्थितेर्ज्योतिष्टोमाद्यौपयिकाश्वदानस्य विशेष्यत्वावगतेः[1] परस्पराकाङ्क्षया दानद्वाराऽग्निमत्कर्माङ्गत्वमेव युक्तमिति **तथापीत्यनेन** सूचितम्।

---

### अचोदितं च कर्मभेदात्

अत्र चास्मिन्नेवोदाहरणे येन दानस्य निमित्तत्वेन शेषित्वेन वा हेतुनाऽग्निमत्कर्माङ्गत्वं पूर्वाधिकरणे साधितं तस्यैव हेतोः स्थिरीकरणार्थं दातुर्वा प्रतिग्रहीतुर्वेयमिष्टिरिति विचारारंभात्, तत्र च विधिगतप्रतिग्रहपरपदस्य निश्चितार्थस्य सन्दिग्धत्वाभावेन सन्दिग्धेषु वाक्यशेषादित्यनेन न्यायेन गतार्थत्वाभावात्, निश्चितार्थस्यापि चर्वादिशब्दादेर्लौकिकार्यप्रसिद्धिविवादे सत्येवार्यप्रसिद्धेर्वाक्यशेषानुगृहीताया बलीयस्त्वेनोदनाद्यर्थनिर्णयस्य त्रिवृच्चर्वश्ववालाधिकरणे करणेऽपीह कस्यापि प्रतिग्रहपदार्थे विवादाभावेन तदधिकरणविषयत्वानुपपत्तेः स्वातन्त्र्येणैवास्य विचारस्य कर्तव्यतावश्यकत्वेऽपि पूर्वाधिकरणसाधिताङ्गत्वेनैवाङ्गानां समानदेशकालकर्तृकत्वेनोपकारजनकत्वरूपालिङ्गात् दातुर्यजमानस्येयमिष्टिरिति सिद्धान्तस्य सिद्धत्वेन प्रतिग्रहीतुरिति पूर्वपक्षकोटेरनुत्थानमेवेत्यभिप्रायं पूर्वपक्षाकरणेन सूचयन् **सा लिङ्गादार्त्विजे स्यादिति** सिद्धान्तसूत्रगतलिङ्गपदस्योपक्रमोपसंहाररूपवाक्यसमभिव्याहारस्यैकार्थप्रतीतिजनकत्वरूपलिङ्गपरत्वं भाष्यकारोक्तं व्याख्यान्त-

---

1. A. शेषित्वावगतेः

सेयमिष्टिर्न **प्रतिग्रहीतुः अपि तु दातुरेव** उपक्रम**स्थार्थवादे प्रजापतेर्दातुरेव** प्रधानभूतस्य स **इत्यनेन परामर्शात् प्रजापतिरेव वरुणायाश्वं दत्वा स्वां देवतां सम्प्रदानरूपां वरुणं जलोदररूपेण प्राप्त इत्यर्थावगमात्तस्यैव तन्निर्मोकार्थमिष्टिकर्तृत्वावगतेरुच्चैस्त्वादिवदेवोपसंहारस्थप्रतिगृह्णीयादितिपदस्य** दातृव्यापारलक्षणार्थत्वात्। अथवाऽऽ**ख्यातेन साक्षा-**

---

रत्वेनाङ्गीकृत्य युक्त्यन्तरकथनव्याजेनाधिकरणान्तरत्वं प्रतिपादयन् सिद्धान्तेनैवोपक्रमते—**सेयमिष्टिरिति**। प्रतिगृह्णीयादिति प्रतिग्रहपरत्वे असन्दिग्धे सति सिद्धान्तकोटेरप्यनुत्थानं परिहरति—**उपक्रमेति**। उपक्रमे च श्रूयमाणानि स इति चत्वारि, तन्निरवपदित्यत्रानुषक्तमेकमिति पञ्च यानि पदानि तानि स इत्यनेनोक्तानि। यद्यपि प्रजापतेर्दानं प्रति कर्तृत्वेन न प्रधानभूतत्वं प्रत्युत वरुणस्यैव संप्रदानत्वेन प्रधानत्वं तथापि प्रथमान्तैस्तच्छब्दैः विभिन्नविभक्तिकत्वेन वरुणपरामर्शासंभवात् स्वस्यैव स्वं प्रति देवतात्वानुपपत्त्या स्वां देवतामार्च्छदित्यनुपपत्तेः यः प्रजापतिर्वरुणायाश्वं ददावित्येवं यच्छब्दप्रतिपाद्यत्वावेशेन प्राधान्यं विवक्षित्वोत्तरत्र तदा परामर्शस्तस्यैव युक्त इत्यभिप्रेत्याह—**प्रधानभूतस्येति**। उच्चैष्ट्वादिविधिषु ऋगादिपदस्य वेदैकदेशवाचिनो वेदपरोपक्रमवशात् वेदपरत्ववदेवेत्यर्थः। तथा च यद्यर्थवादाद्विधेर्बलवत्वं तथाप्यस्य विधेरुपक्रमालोचने सति अनुपसंजातविरोधित्वेन पूर्वज्ञानस्य निर्दोषतयैवोत्पन्नत्वात् तद्विरोधे सत्युत्तरज्ञानस्योत्पत्तुमेवासामर्थ्येन लब्धात्मकत्वाभावात् न तत्संभव इति तदनुरोधेनैव विधिगतेन पदैकदेशेन वर्तितव्यं तथा सति भिन्नवाक्यत्वेनानर्थक्यं प्ररोचकार्थवादाभावे तदाकाङ्क्षोपशमार्थं विधेरेव तत्कल्पनाऽऽपद्येत इत्यादि **श्रुतेर्जाताधिकारः** स्यादित्यधिकरणे प्रतिपादितं सर्वमत्र योजनीयमिति सूचितम्। दानकर्तुः प्रतिग्रहेऽपि हेतुकर्तृत्वात् समानकर्तृकत्वरूपशक्यसम्बन्धेन प्रतिग्रहधातोः दाने लक्षणेत्याह—**दातृलक्षणार्थत्वादिति**। प्रतिग्रहीतृदातृपदे विशेषणप्रधाने द्रष्टव्ये, तत्रैवानुपपत्त्या लक्षणायाः साफल्यात्। स्वतन्त्रस्य कर्तुः प्रयोजके हेतुसंज्ञके कर्तरि प्रयोजकव्यापारं प्रति स्वातन्त्र्यलक्षणकर्तृत्वसद्भावात्। तत्र च प्रयोज्यव्यापारनिरूपितप्रयोजकत्वाख्यहेतुत्वविवक्षायां हेतुत्वबोधार्थं हेतुमति चेति सूत्रविहितणिचः प्रयोगापत्तावपि हेतुत्वानपेक्षस्वातन्त्र्यलक्षणकर्तृत्वविवक्षायां ज्वलनाद्यनभिधानेऽपि तदपेक्षया काष्ठादीनां पाके कर्तृत्वविवक्षोपपत्तिवत् प्रयोजकव्यापारानभिधानेऽपि तदपेक्षया प्रयोज्यव्यापारे स्वतन्त्र्यविवक्षोपपत्तेः प्रयोजकव्यापाराभिधायिनो णिचः प्रयोगाभावेऽपि यः प्रतिग्रहं प्रयोजकव्यापारे स्वतन्त्रः सन् करोति स प्रतिगृह्णातीति शक्यते वक्तुमित्येवं मुख्ययैव वृत्त्या प्रतिग्रहशब्दोपपत्तेः नापि लक्षणेत्यभिप्रेत्य पक्षान्तरमाह—**अथवेति**। तत्रश्च षड्भिर्हलैः कर्षतीत्यत्र विलेखनरूपव्यापारस्य षड्हलोपादानसामर्थ्यात्

**त्प्रयोजकसाधारण्येन कर्तृमात्राक्षेपात्साक्षात्सम्भवे प्रयोजककर्त्रनाक्षेपेऽपि इष्टोपक्रमानु-**

---

विलेखितर्यसंभवे षण्णामेव विलेखितॄणां संविधानेन प्रयोजकः सन् तद्द्वारेण कृषेरपि कर्ता भवतीत्येवं कर्षतीत्युच्यते । एवमिहाप्यर्थवादेन प्रतिग्रहरूपप्रयोज्यव्यापारेण प्रयोजकव्यापराक्षेपप्रतीतेः प्रतिग्रहकर्तृत्वसामर्थ्याचरणात्मकप्रयोजकव्यापारद्वारा दानकर्ता प्रतिगृह्णातीत्युच्यत इत्यर्थः । प्रतिग्रहीतृव्यापारानुकूलव्यापारस्य प्रयोजकनिष्ठस्य प्रतिगृह्णीयादित्याख्यातेनानाक्षेपात्तं प्रति स्वातन्त्र्यकर्तृत्वविवक्षया यो दाता प्रतिगृह्णीयादित्येवं विवक्षिते प्रतिग्रहं यः कारयेदित्यर्थावगतेः इत्युक्तौ कारयेदिति वचनं प्रयोजकव्यापारमात्रविवक्षाविवरणतात्पर्यकं, न त्वाख्यातस्य णिजन्तत्वज्ञापनपरं, णिचः प्रयोगस्यैवाभावादिति द्रष्टव्यम् ।

अत्र च वार्तिके **श्रुतेर्जाताधिकारस्स्यादिति** वेदोपक्रमाधिकरणेन गतार्थत्वमाशङ्क्य तत्रोपक्रमसंकीर्तिता वेदा उपसंहारगतर्गादिशब्दैरनुवदितुं शक्यन्ते वेदैकदेशत्वादृगादीनां एकदेशेनैकदेशिलक्षणाया युक्तत्वात्, ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्य इत्यादौ केवलऋगादिशब्दानामृग्वेदादिलक्षणायास्संमतत्वात् । उपक्रमेऽपि अग्नेर्ऋग्वेद इत्यादिना वेदानामृगादिसंबन्धस्य कीर्तिततयाऽनत्यन्तपरित्यक्तोपक्रमार्थत्वाच्च युक्तमुपक्रमस्योपसंहाराविरोधित्वम् । इह तु प्रतिगृह्णातेः कथमपि दानक्रियायां प्रयोगादर्शनात् दानप्रतिग्रहयोश्च वेदऋगादिवदेकदेशैकदेशित्वाभावेनात्यन्तभेदाल्लक्षणानुपपत्तेः गृह्णातिश्रवणस्योपक्रमैकवाक्यतानुपपत्तिविशेषाशङ्कापनोदायाधिकरणान्तरमित्येकं परिहारं कृत्वा, **अथ वा** भाष्यान्तरे प्रतिग्रहीतुरिष्टिरिति सिद्धान्तकरणात् तज्जनितभ्रान्तिनिरासमात्रार्थं भाष्यकारेणाधिकरणान्तरत्वेन दर्शितमेतत्सूत्रद्वयं, न तु परमार्थतोऽधिकरणान्तरं; किं तु पूर्वाधिकरणे वैदिके दाने इयमिष्टिरिति सिद्धान्तिते ननु यज्ञेप्यचोदितमिदं कर्मभेदे सति निर्णयाशक्तेर्नियमेन वैदिकोपस्थित्यभावात् **अचोदितं च कर्मभेदादित्याशङ्क्य**[1] सा वैदिकत्वसामान्याल्लिङ्गात् आर्त्विजे ऋत्विक्संबन्धिनि दाने स्यादित्येवं **सा लिङ्गादार्त्विजे स्यादित्यु**त्तरसूत्रेण समाधीयत इति पूर्वाधिकरणशेषत्वमेवेति द्वेधा परिहृतम् ।

तत्र यथैवैकदेश्यैकदेशयोः अविनाभावसंबन्धादेवैकदेशेनैकदेशिलक्षणावत् दानप्रतिग्रहयोरप्यविनाभावदर्शनात् तेनैव संबन्धेन प्रतिग्रहेण दानलक्षणाया युक्तत्वात् **मैत्रायणीयशाखी**योपक्रमगतप्रतिग्रहपदस्य **तैत्तिरीयशाखो**पक्रमानुरोधेन दाने लक्षणायास्संमतत्वाच्च भाष्यान्तरभ्रम-

---

1. A. इति सूत्रेणाशङ्क्य

**रोधेन तदाक्षेपात्प्रतिग्रहं यः कारयेदित्यर्थावगतेर्विनैव लक्षणां दातुरिष्टिः। न चैवं तेन गतार्थत्वं,** मैत्रायणीय**शाखायां "स एषोऽश्वः प्रतिगृह्यते" इत्येवं प्रतिग्रहोपक्रमाया एवास्या आम्नानात् तद्वशेनोपक्रमस्थेऽप्यर्थवाद एव लक्षणेत्यधिकाराशङ्कायास्सत्त्वात्। तन्निवृत्तिस्तु - शाखान्तरे प्रतिग्रहीतुरिष्ट्यवगमेऽप्यस्यां शाखायां प्रबलोपक्रमे प्रमाणाभावेन लक्षणानुपपत्तेरेतद्वचनेन दातुरिष्टौ बाधकाभावात्।** दूरस्थकर्मा**नुवादेनोद्देश्यसम्बन्धानुपपत्तेरस्य कर्मान्तरविधायकत्वाच्च।** नामादीना**मुपस्थापकानामभावेन शाखान्तरन्यायाभावाच्च।** दातुरुपक्रमा**नुरोधेन वा मैत्रायणीयशाखास्थोपक्रमस्यापि प्रयोजककर्तृत्वाभिप्रायेण व्याख्यातुं शक्यत्वाच्च॥**

---

निरासमात्रतात्पर्यकत्वकल्पनस्यापि एतद्भाष्यस्वारस्यभङ्गाधायकत्वात् अयुक्तमेतत्परिहारद्वयमित्यभिप्रेत्य स्वयं विशेषाशङ्काबीजमन्यद्दर्शयति—**मैत्रायणीयेति**। ननु प्रतिग्रहीतुपक्रमवाक्यविहिताया एवेष्टेरिह विधाने सत्युपक्रमस्थदानपदस्य प्रतिग्रहपरत्वमेव युक्तमित्यत आह—**दूरस्थेति**। दूरस्थकर्मानुवादेन दानरूपोद्देश्यान्तरसंबन्धविधानेन प्रकरणान्तरन्यायात् कर्मान्तरत्वस्यैवापत्त्या दातृप्रतिग्रहीतृविकारिभेदेन भिन्नमिदमिष्टिद्वयमित्यर्थः। शाखान्तराधिकरणन्यायेन शाखाभेदेन विहिताग्निहोत्रहोमयोरिवाभेदाशङ्कां व्यावर्तयति—**नामादीनामिति**। तत्राग्निहोत्रनामैक्यात् कर्मैकत्वप्रत्यभिज्ञानेन न कर्मान्तरत्वमिह तु तदभावेनैक्यसिद्धिः। अतो यथैव प्रतिग्रहीतुपक्रमादेकार्थप्रतिपादकत्वरूपाल्लिङ्गात् ऋत्विक्कर्तृके आर्त्विजे प्रतिग्रहे निमित्ते स्यादित्येवं सूत्रानुसारात् प्रतिग्रहीतुरियं तथैव दातुपक्रमादपि तादृशलिङ्गात् ऋत्विकसंबन्धिनि दाने निमित्ते स्यादित्येवं सूत्रस्वारस्योपपत्तेः दातुरपीयमिष्टिः कर्मान्तरं भवतीत्यर्थः। **वस्तुतस्तु** प्रतिग्रहीतुरिष्टिपक्षे लौकिकेऽपि तदापत्तेः **अर्थवादो वाऽनुपपातात्तस्माद्यज्ञे प्रतीयेतेति** पूर्वाधिकरणसूत्रे यज्ञे प्रतीयेतेत्यनेन यज्ञसंबन्धिकर्मणीष्टिरिति सिद्धान्तप्रतिपादनविरोधापत्तेः प्रतिग्रहोपक्रमस्यैव दातुपक्रमाविरोधेन निर्णेयत्वं युक्तमित्याह—**दातृपक्रमेति**। तथा च **मैत्रायणीयशाखानुरोधेन तैत्तरीयशाखोपक्रम** एव वरुणायानयदित्यस्य वरुणात् प्रत्यगृह्णादिति अर्थकरणे चतुर्थ्यां अपादानत्वे दानार्थकनयतेः प्रतिग्रहे देवतामिति पदे चापादानत्वे लक्षणाङ्गीकारे बहूनां पदानां मुख्यार्थबाधापत्तेः तदपेक्षयैकत्र प्रतिगृह्णातावेव युक्ता साऽङ्गीकर्तुम्; अत एवानेन वेदोपक्रमाधिकरणस्य गतार्थत्वाशङ्कापि निरस्ता। अत्र बहूनां पदानां मुख्यार्थतालाभायैकस्मिन्पदे लक्षणाङ्गीकारेण भूयोनुग्रहस्य न्याय्यत्वेपि उच्चैर्ऋचेत्यत्रोपक्रमेऽपि एकस्मिन्नेव वेदपदे लक्षणाप्रसक्तौ उपक्रमोपसंहारयोर्मध्ये कतरत्पदं लक्षणावृत्तमाश्रयणीयमिति संदेहापनोदाय तदधिकरणारंभात्। अतो दातुपक्रमानुरोधेनैव प्रतिग्रहोपक्रमस्यान्यथातात्पर्यस्य पूर्वोक्तयुक्त्या वर्णयितुमुचितत्वात् दातुपक्रमानुरोधेन दातुरेवेष्टिः।

यद्यपि **शास्त्रफलं प्रयोक्तरीति** पूर्वपक्षसूत्रोत्तरेण **अन्यो वा स्यात् परिक्रयादिति सूत्रेण** तार्तीयसप्तमपादाधिकरणेऽङ्गानामृत्विक्कर्तृकत्वस्यैव वक्ष्यमाणत्वात् सिद्धान्तेऽप्यस्याः कर्माङ्गत्वादृत्विक्कर्तृकत्वमेव प्राप्नोति, तथापीतरयागरूपाङ्गानामिव द्रव्यत्यागरूपयाजमानपदार्थांशेन यजमानकर्तृकत्वाद्दातुर्यजमानस्येयमिति सिद्धान्तकरणे न बाधकम् ।

ये तूपक्रमापेक्षयोपसंहारस्यैव प्राबल्यं निरूपयन्तोऽर्वाचीनाः[1] अत्र कर्माङ्गत्ववशेनैवाङ्गानां प्रधानसमदेशकालकर्तृकत्वेनोपकारजननसामर्थ्यरूपाल्लिङ्गात् दातुरिष्टिः, न तूपक्रमप्राबल्येनेति कल्पयन्ति ते **पूज्यपादैः** अङ्गगतस्य समानदेशकालकर्तृकत्वेनोपकारजनकत्वरूपलिङ्गस्यानुपन्यासेनैव **परास्ताः**। कर्माङ्गत्ववशेन दातुरिष्टिः, दातुरिष्टिरिति च कर्माङ्गत्वमित्येवमन्योन्याश्रयप्रसङ्गात्। न हि दानस्योद्देश्यत्वाभावे कर्माङ्गत्वं सिद्ध्यति, प्रतिग्रहस्य सर्वत्रैव विहितत्वाभावे तस्य निमित्तत्वेन पूर्वाधिकरणे पूर्वपक्षस्यैवापत्तेः। अतो दानस्य विहितत्वेन यत्रैव फलकल्पनागौरवं नापतति तादृशदानस्यैवोद्देश्यत्वकल्पनया तद्द्वारा कर्माङ्गत्वं सिद्ध्यति। अत एवैतदधिकरणसिद्धं दातुरिष्टिरिति वक्ष्यमाणमालोच्यैव पूर्वाधिकरणप्रवृत्तिर्निबन्धकारैर्दर्शिता। न च ददातिः प्रतिग्रहपर्यन्तस्यापि विधायकः समाप्तेः शास्त्रार्थत्वादिति वाच्यं; प्रतिग्रहीतृनिष्ठस्वीकरणानुकूलस्य तत्समर्थाचरणरूपस्य समर्पणादेरेव ददातिनाभिधानेन तावतैव समाप्तेः शास्त्रार्थत्वोपपत्तौ रागप्राप्तस्य वृत्तिरूपस्य प्रतिग्रहस्य विधाने मानाभावात्। विस्तरेण च प्रतिग्रहस्याविधानेऽपि अर्थप्राप्तेऽपि प्रतिग्रहे विधीयमाना इतिकर्तव्यता तद्द्वारा तदवसानदानसंबद्धैवेति न तद्बलेनापि प्रतिग्रहस्य विधेयत्वमावश्यकमिति **वार्तिके** उपपादितं तत्रैव द्रष्टव्यम्।

किञ्च ज्योतिष्टोमे दीक्षोत्तरं द्वादशरात्रीर्दीक्षितो भृतिं वन्वीतेति विहितदक्षिणार्थद्रव्ययाचनरूपभृतिवननप्राप्ताश्वस्य "हयोऽसि मम भोगाय भव" इति मन्त्रपूर्वकप्रतिग्रहस्य यजमानानुष्ठेयत्वेन यजमानस्याप्यश्वप्रतिग्रहीतृत्वात् तद्द्वारापि कर्माङ्गत्वोपपत्तेः नियमेन दातुरिष्टिर्न सिद्ध्यति। न चात्राश्वस्वीकरणेऽपि न तस्य प्रतिग्रहरूपत्वमिति शङ्क्यं; "चन्द्रमसि मम भोगाय भवेत्याह यथादेव तमेवैनाः प्रतिगृह्णाति" इति प्रत्यक्षविधिना तस्य प्रतिग्रहरूपत्वोपपत्तेः। अतो दातुपक्रमप्राबल्येनैवात्र दातुरिष्टिरिति सिद्धान्तः। अत एव पूर्वस्मिन् लिङ्गे सिद्धान्तासाधकत्वमभिप्रेत्यैव पूर्वपदानां यथार्थमाञ्जस्येन वर्तमानानामुत्तरपदैः पूर्वपदाभिमुखैः सहैकवाक्यत्वलक्षणसंबन्धापादनसामर्थ्यरूपलिङ्गपरतया सौत्रलिङ्गपदव्याख्यान्तरं कृतं वार्तिक इत्यलं विस्तरेण॥ १६ ॥

---

1. माध्वाः

## (१६)—पानव्यापच्च तद्वत् ॥ ३८ ॥ दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषस्स्यात् ॥ ३९ ॥

अनारभ्यैव **"वि वा एष इन्द्रियेण (सोमपीथेनर्द्ध्यते) वीर्येणर्ध्यते यस्सोमं वमिति यस्सोमवामी स्यात्तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्"** इति श्रुतेष्टिरपि वैदिकस्यैव **सोमस्य वमने भवेत् न तु लौकिकस्य** वैरूप्यगौरवादिभयेन **जयादिहोमवदेवोभयार्थत्वस्य तावदनुपपत्तेः।** न चाश्वप्रतिग्रहेष्टिवद्दोषनिर्घातार्थत्वकल्पनया लौकिकमात्रविषयत्वशङ्का,

---

### पानव्यापच्च तद्वत्।

अनारभ्याधीतविधिविषयविचारप्रसङ्गात् अस्या अपीष्टेः तथाभूतायाः क्रत्वर्थ-पुरुषार्थत्वफलकविचारविषयत्वेन प्रकरणसङ्गतिं सूचयन् अतिदेशकरणादेवानन्तरसङ्गत्य-भावेऽपि बाधकाभावेन तामनुल्लिख्यैव विषयवाक्यमुदाहरति—**अनारभ्यैवेति**। अत्रा-**धिकरणमालायां** निर्वपेदित्यस्याग्रे श्यामाकमित्यपि पठितम्। "छन्दसि व्यवहिताश्च" इति सूत्रेण व्यवहितस्याप्युपसर्गस्य ऋध्यत इत्यनेनान्वये सतीन्द्रियवीर्ययोर्विगतऋद्धिता अर्थवादेनोच्यते। एवं च ऋध्यत इति पाठे विद्यमाने केषुचित् व्यृद्ध्यत इति पाठो वीत्यस्यान्वयेन तात्पर्यगत्या लिखित इति द्रष्टव्यम्।

**अत्र च** पानव्यापच्च तद्वदिति पूर्वपक्षसूत्रेणाश्वप्रतिग्रहेष्ट्यधिकरणपूर्वपक्षद्वयमतिदिश्य तथैव वैदिके निमित्ते इयमिष्टिरिति सिद्धान्तप्रतिपादनात् नाधिकरणान्तरारंभो **यद्यपि** युक्त**स्तथापि** तत्र येन दोषनिर्घातार्थत्वेन हेतुना पूर्वपक्षः कृतः सोऽत्र हेतुः **दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषः स्यादित्यत्र**त्योत्तरसूत्रेण सिद्धान्तस्य साधक इत्येवं वैषम्यमात्रप्रदर्शनतया तदारंभं सूचयन् पूर्वपक्षहेतोः पूर्वाधिकरण एव सिद्धत्वेन पूर्वपक्षस्यापि सिद्धवदभिप्रायेण तमप्रदर्श्यैव सिद्धान्तेनैवोपक्रमते—**वैदिकस्येति**। वमनस्योभयत्राप्यविहितत्वेनावैदिकत्वेऽपि वमनीय-सोमस्य लौकिकवैदिककार्यार्थत्वभेदेन तद्द्वारा वमनस्य तत्तद्रूपत्वं सूचयितुं **वैदिकस्यैव सोमस्येति** पदद्वयोपादानम्। तथा च **रसायनसेवनरूपेण** यत् सोमस्य पानं तद्वमनं लौकिकमित्यर्थः। सिद्धा-न्तोपक्रमव्याजेन तत्तत्पूर्वपक्षखण्डनकरणाच्च न केवलं पानव्यापच्च तद्वदिति सूत्रतद्वच्छब्देन पूर्वाधिकरणसिद्धान्तव्यवधानेन तदधिकरणपूर्वपक्षमात्रस्यैवातिदेशः। किं तु तत्रत्य-सिद्धान्तस्यापीति सूचयितुं तदधिकरणसिद्धान्तयुक्तीरेव दर्शयति—**वैरूप्यगौरवादीति**। **न चेति**। **अश्वदानस्य वरुणोदररूपदोषजनकतायाः** प्रत्यक्षविरुद्धत्वेन कदाचित्तदिष्टेस्तन्निर्घातार्थत्वासंभवेऽपीह

वमनजन्यस्यार्थवादिकस्येन्द्रियवीर्यनाशाख्यव्यृद्धिरूपस्य दोषस्य वैदिकसोमवमनेऽपि जायमानत्वात्। तन्निर्घातार्थत्वस्य प्रत्यक्षबाधितत्वाच्च। वैद्यके वमनार्थतयैव सोमपानविधानात्तस्येन्द्रियादिनाशकत्वानुपपत्तेश्च। अत इन्द्रियवीर्यव्यृद्धिपदेन लक्षणया क्रतुवैगुण्यस्यैवोपादानात् तन्निर्घातार्थत्वमेवास्या इष्टेर्युक्तम्। जायते च "मा मेऽवाङ्नाभिमतिगाः" इत्यादिमन्त्रवर्णात्सम्यग्जरणान्तस्यैव भक्षणस्य शेषप्रतिपत्त्यर्थत्वावगतेर्वमने क्रतुवैगुण्यम्। अतश्चाश्वदानवत् वमनस्य वैदिकत्वाभावेऽपीष्टेरग्निमत्क्रतुविशेषाङ्गत्वमविरुद्धम्॥ १६॥

(१७)—तत्सर्वत्राविशेषात्॥ ४०॥ स्वामिनो वा तदर्थत्वात्॥ ४१॥ लिङ्गदर्शनाच्च॥ ४२॥

वमनेन रसायनगुणाभावात् इन्द्रियवीर्यव्यृद्धिरूपदोषस्यानुभवितुं योग्यतासत्वात् तस्य च वैदिकसोमवमनेनानुत्पत्तेस्तद्दोषनिर्घातार्थायाः इष्टेर्लौकिकवमनमात्रविषयत्वं युक्तमेवेति विशेषाशङ्कैव शङ्कापदेन सूचिता। विवा एष इन्द्रियेण वीर्येणर्ध्यते यस्सोमं वमतीत्यर्थवादेन रसायनरूपेण सेवितस्य सोमस्य वमने सति तद्गुणाभावप्रयुक्तेन्द्रियवीर्यव्यृद्ध्युत्पत्तेरप्रतीत्या सोमवमनमात्रप्रयुक्ततद्दोषोत्पत्तेरवगतत्वेन लौकिकवमनस्येव वैदिकतद्वमनस्यापि दोषजनकत्वसाम्येनाशङ्कां परिहरति —वमनजन्यस्येति। लौकिकवमन एव गुणाभावाद्दोषसंभावनया या पूर्वसूचिताश्वदानवैलक्षण्येनाविशेषाशङ्का तामपि परिहरति—तन्निर्घातार्थत्वस्येति। वरुणोदरवैलक्षण्येनास्य दोषस्य वमनेनानुभवसंभवेऽपि तन्निर्घातस्येष्ट्याऽसंभवात् तदर्थत्वं प्रत्यक्षबाधितमिति लौकिकविषयत्वमेव सिद्ध्यतीत्यर्थः। अतश्च लोके दोषस्य तन्निर्घातस्य वाऽदर्शनेन तत्समाधानार्थमिष्टिविधानापेक्षाभावात्, वेदे च वैगुण्यस्य वक्ष्यमाणविधया वमने सति प्रसक्त्या तत्समाधानार्थमिष्टिविधाने अपेक्षितविधानोपपत्तेः इन्द्रियवीर्यव्यृद्धिपदेन क्रतुवैगुण्यस्यैवाभिधातुमुचितत्वात् वैदिकसोमवमन एवेष्टिरिति सिद्धान्तमाह—अत इति। पानमात्रेणैवोर्वरितसोमप्रतिपत्तिसिद्धेः वमनेन प्रतिपत्त्यनाशात् अवमनस्य विहितत्वाभावेनानङ्गत्वे सति तदभावकृतवैगुण्याप्रसक्तिं परिहरति —जायते चेति। सिद्धान्तमुपसंहरति—अतश्चेति। प्रयोजनमग्निमत्क्रतुविशेषाङ्गत्वमित्युक्त्यैव सिद्धान्ते तादृशक्रतुप्रयोगमध्ये आहिताग्नेरियमिष्टिरिति सूचितम्। तद्व्यतिरेकेण च लौकिके च सोमे पीते वान्ते सत्यपीयमिष्टिरित्येवं पूर्वपक्षे ज्ञेयम्॥

सैव किं याजमान एव वमने स्यादुत ऋत्विजोऽपीति चिन्तायां—ऋत्विग्वमनेऽपि प्रतिपत्तिविलोपादिना वैगुण्यस्यावश्यकत्वात्तत्समाधानार्थमियमिष्टिस्स्यादेवेति प्राप्ते—

इष्टिस्तावदियं क्रत्वङ्गत्वाद्यजमानेन कार्या ऋत्विग्भिर्यजमानद्रव्यस्य त्यक्तुमशक्यत्वात्, स्वद्रव्येण स्वाग्निषु करणे पुनः क्रत्वर्थत्वानुपपत्तेः, यजमानकर्तृकायां च न ऋत्विग्वमनस्य निमित्तता, "यस्सोमं वमिति" इति यच्छब्दबलेनेष्टेः वमनसमानकर्तृकत्वावगतेः तस्य चोपादेयविशेषणत्वेन विवक्षितत्वात्। अतश्च समानकर्तृकत्वबलाद्यद्यपीयमिष्टिर्नैमित्तिकी

॥ तत्सर्वत्राविशेषात् ॥

वैदिकसोमवमनस्य निमित्तत्वबलेन कर्मविशेषाङ्गत्वे सिद्धे तेनैव स्वामिकर्तृकत्वस्यैव प्राप्तेः यो वमति स निर्वपेदिति सामानाधिकरण्यावगतसमानकर्तृकत्वबलाच्च तत्कर्तृकस्यैव तस्य निमित्तत्वनिश्चये सति पूर्वपक्षायोगेऽपि समानकर्तृकत्वस्य निमित्तविशेषणत्वेनाविवक्षितत्वात् अन्यवमनेऽपीष्टेर्यजमानकर्तृकत्वोपपत्तेः, तद्विवक्षायामपि वा ऋत्विग्भिः स्ववमने स्वाग्निषु इष्टिकरणोपपत्त्या भवतु यजमानान्यवमनस्य निमित्तत्वमित्येवं पूर्वपक्षकोट्यसंभवमभिप्रेत्य तस्यामेवेष्टौ विचारप्रवृत्तिं दर्शयति—सैवेति। तत्समाधानार्थमित्यस्याग्रेऽपिः पूरणीयः, स्यादेवेत्यस्मात्पश्चात् यजमानस्य ऋत्विजाञ्चेति शेषः। अङ्गप्रधानानामेकदेशकालकर्तृकत्वस्यैकादशे वक्ष्यमाणस्यानुसरणेन सिद्धान्तं रचयति—इष्टिस्तावदिति। अन्यो वा स्यात् परिक्रयादिति न्यायप्राप्तमृत्विक्कर्तृत्वमसंभवेन वारयति—ऋत्विग्भिरिति। यत्तूक्तं समानकर्तृकत्वमविवक्षितमिति तत्परिहरति —तस्य चोपादेयेति। अयमर्थः। यस्सोमं वमति स निर्वपेदिति यत्तदोर्नित्यसंबन्धेन यच्छब्दाक्षिप्ततच्छब्दसंयोगात् वमनयागयोरेककर्तृकत्वावगतेः पश्चाद्यच्छब्देन प्रतीयमानस्य निमित्तत्वस्य समानकर्तृकत्वविशिष्टस्यैव कल्पनात् उभयत्ववदुद्देश्यविशेषणत्वाभावेनोद्देश्यस्वरूपान्तर्गतत्वेन विवक्षोपपत्तौ यजमानकर्तृकेनासंदिग्धेन नैमित्तिकयागेन पुनराधेयनिमित्तस्य पुनराधेयेनेवेहापि संदिग्धस्य निमित्तस्य निर्णयो युक्त एव। तथा च निमित्तत्वावगतेः प्राग्वमनाश्रयाभिन्नकर्तृकेष्टिभावनाविधाने वमनकर्त्रभेदस्योपादेयेष्टिकर्तृविशेषणत्वेनापि युक्तैव विवक्षेत्याशयः। अतश्चेति। समानकर्तृकत्वबलादित्यस्य सर्वथेत्यग्रिमेणान्वयः। अत्र वार्तिके अस्या इष्टेः क्रत्वङ्गत्वञ्चतुर्धोपपाद्य पञ्चमपक्षेण सिद्धान्तितं; तथा हि— भेदनहोमवन्नैमित्तिकीयमिष्टिः आरादुपकारकत्वेन क्रत्वर्था। अथ वा प्रतिपत्तिगतसम्यग्जरणपर्यन्तत्वनियमभ्रेषजनितफलव्यृद्धिसमाधानार्थत्वेन वमनकर्तृनिष्ठफलानुकूल्योग्यताजननविधया पुरुषार्था। अथ वा येनकेनचित् भक्षितेऽपि प्रतिपत्तिसिद्धेः प्रकृतैरेव वषट्कर्त्रादिभिर्भक्षयितव्यमिति नियमस्य भक्षयितृगतप्रयोजनापेक्षायां भक्षयितृ-

**क्रतूपकारिका,** यदि वा **अनैमित्तिक्येवार्थवादवशात्क्रतुवैगुण्यसमाधानार्था सती आरादुपकारिका,** यदि वा वमनस्य **जृम्भावदेवार्थिकं निमित्तत्वमङ्गीकृत्य तद्वदेवेयमिष्टिषष्ठ्य**

---

गतदृष्टसंस्कारार्थत्वावगतेः द्रव्यप्रतिपत्त्यात्मकस्यापि च द्रव्यसंस्कारस्य भक्षणकाल एव निर्वृत्तत्वेन सम्यग्जरणानपेक्षत्वात् , संयग्जरणपर्यन्तत्वनियमस्यापि भक्षयितृसंस्कारापेक्षत्वेन तादर्थ्यावगतेः संस्कारश्रेषे कर्तृवैगुण्यसमाधानेन कर्तृसंस्कारार्था। अथवा प्रधानाव्यवधानेन तदुत्पत्त्यपूर्वे जातेऽपि इतरोत्तराङ्गवत् फलापूर्वोत्पादने अस्यापि प्रतिपत्तेरुत्पत्त्यपूर्वसहकारित्वाभ्युपगमात् तस्याश्च पूर्वोक्तान्न्यायान्मन्त्रवर्णाच्च संयग्जरणपर्यन्तत्वावगतेःयस्मिन्सोमयागाभ्यासे वमनात् प्रतिपत्तिर्दुष्टा तज्जनितापूर्वस्य सहकार्यभावात् फलोत्पादनाशक्त्यवगमात फलापूर्वोत्पादनशक्त्याधानाख्यसंस्कारार्था ।

**अथवा** सम्यग्जरणपर्यन्तत्वानभ्युपगमेन वमने सत्यपि निषिद्धसेवनवद्विहिताकरणस्याप्यनापत्तेः दोषनिर्घातार्थत्वानाश्रयणात् जृंभानिमित्तमन्त्रोच्चारणवन्नैमित्तिकक्रतुयुक्तपुरुषसंस्कारार्थेति । तत्राद्यस्य पक्षस्य अर्थवादावगतवैगुण्यसमाधानस्य द्वारत्वानाश्रयणेनोपपादने क्रत्वर्थत्वस्यैव पूर्वाधिकरणसिद्धस्य व्याघातापत्तेरयुक्तत्वमभिप्रेत्य तस्य द्वारत्वाश्रयणेनैव क्रत्वर्थत्वपक्षस्य युक्तत्वं सूचयितुं तमेव भेदान्तरकथनव्याजेन निरूपयति—**यदि वेति**। आरादुपकारकेति पदं क्रतुयुक्तपुरुषसंस्कारार्थत्वपक्षातिरिक्तत्वेनोक्तानां संभवत्सन्निपत्योपकारित्वपक्षाणामप्युपलक्षणम् । एवं स्थिते अन्तिमस्यापि पक्षस्योपलक्षणविधया ज्ञातुं शक्यत्वेपि **स्वामिनो वा तदर्थत्वादिति** सिद्धान्तसूत्रगत**तदर्थत्व**पदेन सिद्धन्तपक्षत्वेन सूचितत्वं ज्ञापयितुं पार्थक्येनानुवदति—**यदि वा वमनस्येति** । जंजभ्यमानस्य शब्दतस्संस्कार्यपरत्वेन शब्दतो जृंभाया निमित्तत्वानवगमेऽपि विशेषणविधया प्रतीयमानं निमित्तत्वं आर्थिकम्। एवं यस्सोमं वमति तस्य सोमवामिन इत्यन्वयेन यच्छब्दस्योद्देश्यसमर्पकत्वेऽपि विशेषणविधयैवार्थात्तत्प्रतीतिमभिप्रेत्यार्थिकमित्युक्तम् । पूर्वेषु पक्षेषूपपादकहेत्वनुपन्यासेनैव सिद्धान्तपक्षातिरिक्तत्वस्य सूचनात् अस्य सिद्धान्तपक्षत्वं दृढीकर्तुं तदर्थत्वादिति सौत्रहेतूपपादनाय **षष्ठ्येत्युक्तं**, सोमवामिन इति षष्ठ्येत्यर्थः ।

अत्र च **यद्यपि** न सोमवमनात् विहिताकरणं नापि प्रतिषिद्धसेवनमापद्यत इति कृत्वा दोषनिर्घातार्थतामिष्टेरनाश्रित्य निमित्ते कर्माङ्गं तदपि यच्छब्देन पुरुषस्योपात्तत्वात् **जंजभ्यमानन्यायेन** प्रकरणगतपुरुषसंस्कारत्वेनाध्यवसीयते, **तदापि याजमानास्स्युरित्यनेनैतत्कर्तृकता** वमनसमानविषयत्वाच्च यजमानवमनमेवेत्येवं **वार्तिकग्रन्थे** एतत्सिद्धान्तपक्षोपपादनं दोषनिर्घातार्थतामनङ्गीकृत्यैव **स्पष्टं** कृतमित्यभिप्रेत्य **पूज्यपादैरपि** दोषनिर्घातद्वारानुक्त्यैव यदेतत्पक्षकथनं तदस्य प्राणापानावेवात्मन्धत्ते

**क्रतुयुक्तपुरुषसंस्कारिका, सर्वथा यजमानवमन एव स्यात्।** ऋत्विग्वमने तु सामान्यविहितं **यजुर्भ्रेषनिमित्तप्रायश्चित्तम्॥ १७॥**

---

इत्यर्थवादपदस्यापि अर्थवादमात्रत्वेन द्वारसमर्पकत्वे मानाभावात् जंजभ्यमानमन्त्रानुवचनवत् द्वारानपेक्षमेव क्रतुयुक्तपुरुषधर्मत्वं युक्तमित्येतत्तात्पर्येण। नहीष्टेर्दोषनिर्घातार्थत्वाभावे लौकिकसोमवमनकर्तृसंस्कारार्थत्वस्यापि आपत्त्या क्रतुयुक्तपुरुषधर्मत्वमेवेति सिद्धान्तसिद्ध्यसंभवः। जयादिहोमवदाहवनीयप्रणयनप्रयोजकत्वशक्तिकल्पनालाघवानुरोधेन एकस्यैव क्रतुफलोभयप्रयोज्यत्वकृतवैरूप्यापत्तेश्चार्थवादिकस्य फलस्यासंभवे अक्लृप्तस्वर्गफलापूर्वसंबन्धिपुरुषसंस्कारार्थत्वकल्पनापेक्षया क्लृप्तक्रत्वपूर्वसंबन्धिपुरुषसंस्कारार्थत्वस्यौचित्येनैव प्राप्तत्वात्। अत एव पूर्वाधिकरणे **दोषात्तु वैदिके स्यात् अर्थाद्धि लौकिके न दोषः स्यादिति** सिद्धान्तसूत्रेण दोषनिर्घातार्थत्वेन क्रत्वर्थत्वोपपादनं न तत् पारमार्थिकं, अस्मिन्नधिकरणे **स्वामिनो वा तदर्थत्वादिति** सूत्रेण स्वाम्यर्थत्वस्य प्रतिपादनात्। किंतु यत् पूर्वपक्षिणा दोषनिर्घातार्थत्वबलेनार्थवादसिद्धेर्न लौकिके इष्टिरुच्यते तदर्थवादस्य दोषनिर्घातार्थत्वतात्पर्यकल्पनेन। तत्तु विपरीतं वैदिक एव साधकम्। **वस्तुतस्तु** नार्थवादस्य दोषप्रतिपादकत्वं स्तुतिमात्रपरत्वादित्यभिप्रायेणैव ज्ञेयम्।

वस्तुतस्त्वत्र **न्यायसुधाकृता** स्पष्टार्थमेव पूर्वलिखितवार्तिकग्रन्थं भङ्क्त्वा दोषनिर्घातार्थत्वानाश्रयणेन जंजभ्यमानमन्त्रानुवचनवत् क्रतुयुक्तपुरुषधर्मत्वपक्षाश्रयणे **दोषात्तु वैदिके स्यादिति** पूर्वाधिकरणसिद्धान्तसूत्रप्रतिपादितदोषनिर्घातार्थत्वप्रतिपादनविरोधापत्तेः, इन्द्रियेण वीर्येणेत्यनियतानेकदोषकीर्तनस्य प्रधानफलोपलक्षणार्थत्वावगतेः वरुणग्रहवदनुपपत्त्यभावात्, सोमपीथव्यृद्धिसंकीर्तने च योग्यानुपलब्धिविरोधस्य शङ्कितुमप्यशक्यत्वात्, हिन्वमे गात्रेत्यादिमन्त्रप्रकाश्यत्वान्यथानुपपत्त्या 'सम्यग्जरणस्यानुष्ठेयत्वावगतेर्वमने सति विहितसम्यग्जरणाकरणनिषिद्धसेवनापत्त्योरपरिहार्यत्वाद्वमनस्य दुष्टत्वावगतेः, दोषस्य च निर्हरणापेक्षत्वात् दोषनिर्घातार्थत्वेन चेष्टेरपेक्षितपुरुषसंस्कारार्थविधिसंभवे अनपेक्षितसंस्कारान्तरार्थं विध्ययोगेन न्यायविरोधापत्तेश्च, वाक्यशेषावगतदोषनिर्घातद्वारैव क्रतुयुक्तपुरुषधर्मत्वं युक्तमित्युक्तम्। तदप्यङ्गीकृत्य यजमानवमने तद्दोषनिर्घातार्थं प्रायश्चित्तरूपतया यजमानस्येष्टिप्राप्तावप्यृत्विग्वमनेऽस्याः अप्राप्तेः क्रतुवैगुण्यं कथं परिहर्तव्यमित्याकांक्षायामाह—**ऋत्विग्वमने त्विति**। यजमानवमनेऽस्याः प्राप्तया वैगुण्यसमाधानार्थं प्रायश्चित्तान्तरानपेक्षासूचनद्योतकेन तुशब्देन दोषनिर्घातद्वारताङ्गीकारस्सूचितः। **सामान्यविहितमिति**। भुवस्स्वाहेत्याग्नीध्रीये होतव्यमिति सोमप्रकरणे यजुर्भ्रेषे सामान्यविहितं प्रायश्चित्तं कर्तव्यमित्यर्थः। एतच्चाध्वर्योस्तत्पुरुषाणां च वमन एव प्रायश्चित्तं न तु सर्वर्त्विग्वमने।

(१८)—सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥ निरवदानात्तु शेषस्स्यात् ॥ ४४ ॥ उपायो वा तदर्थत्वात् ॥ ४५ ॥ कृतत्वात्तु कर्मणस्सकृत्स्याद्द्रव्यस्य गुणभूतत्वात् ॥ ४६ ॥ शेषदर्शनाच्च ॥ ४७ ॥

शेषभूतसोमवमनप्रसङ्गात् किमाग्नेयादौ कृत्स्नस्य पुरोडाशादेर्यागसाधनता होमश्च, उत द्व्यवदानादेरेव तत् पुरोडाशादिस्तु तत्प्रकृतिः उत कृत्स्नः पुरोडाशादिर्यागसाधनं

---

होत्रादिचतुष्टयवमने भूरिति गार्हपत्ये होमस्य, उद्गात्रादिचतुष्टयवमने भुव इत्याहवनीये होमस्य, ब्रह्मादिचतुष्टयवमने सुवरित्याहवनीयहोमस्य च सर्वसाधारणवचनान्तरैः तत्तद्वेदपुरस्कारेण प्रायश्चित्तान्तरस्य विधानादित्यपि केचित् ।

---

॥ सर्वप्रदानं हविषस्तदर्थत्वात् ॥

वैदिकस्य यजमानकर्तृकस्य सोमवमनस्य निमित्तत्वेऽभिहिते देवतोद्देशेन ग्रहपात्रे चमसपात्रे वा गृहीतस्य सोमस्य सर्वस्य होतव्यत्त्वाच्छेषाभावेन पानानुपपत्तेस्तद्वमनस्य निमित्तता न युक्तेति पूर्वाधिकरणसिद्धान्ताक्षेपेण प्रत्यवस्थातुं तत्तुल्यन्यायपुरोडाशविचारात् अनन्तरसङ्गतिरित्येवं न्यायसुधाकृदुपपादितामाक्षेपिकीं सङ्गतिमस्मिन्नधिकरणे शेषकार्याणामपि प्रधानयागस्येव पुरोडाशप्रयोजकत्वस्यापि पक्षान्तरेण पूर्वपक्षकोटौ निवेशस्य वार्तिके स्वयं च दर्शयिष्यमाणत्वात् तस्मिन् पक्षे आक्षेपासंभवेनायुक्तमिति सूचयितुमत्रैव विशेषरूपेण सर्वपक्षसाधारणीं प्रासङ्गिकीं सङ्गतिमाह—शेषभूतेति । वमनस्य हविः शेषविषयत्वात् तत्प्रसङ्गेन हृदयमागतस्य शेषस्य सदसद्भावः करिष्यमाणपञ्चमचरणसमाप्तिगहविः शेषविचारौपयिकत्वेनात्र चिन्त्यत इत्यर्थः । द्व्यवदानवाक्यस्य आग्नेयादितद्धितश्रुत्या विरोधाविरोधविचारद्वारा सर्वस्य पुरोडाशस्य प्रक्षेपोऽङ्गमथवा द्व्यवदानमात्रस्य सोऽङ्गमिति शेषविचारपर्यवसानेन विरोधाविरोधप्रकरणसङ्गतिर्लक्षणसङ्गतिश्च स्पष्टत्वान्नोक्ते । अत्र कृत्स्नस्य पुरोडाशस्य यागसाधनत्वमित्येवं वार्तिककारादिसंमतस्य पक्षस्यैव मुख्यसिद्धान्तत्वसूचनायान्ते संशयकोटौ उपक्षेपणीयत्वात् पूर्वपक्षेऽपि कृत्स्नस्यैव तस्य यागसाधनत्वोक्तेर्विशेषाभावशङ्कानिवृत्त्यर्थं विशेषं दर्शयति—होमश्चेति । अत्र चाग्नेयादितद्धितैरष्टाकपालादीनां देवतार्थत्वावगमात्तस्य च त्यागं विनानुपपत्तेः यागकल्पकत्वेऽपि मानसत्यागस्य हस्तादिनोपादाय देशान्तरे प्रक्षेपं

**होमस्तु द्व्यवदानस्यैवेति चिन्तायां**—उत्पत्तिवाक्ये **कृत्स्नस्यैव साधनत्वप्रतीतेर्न तावत् द्व्यवदानस्यैव यागसाधनत्वम्।** न हि **"चतुरवत्तं जुहोति" इत्येतदुत्पत्तिवाक्यं, तथात्वे आग्नेयादिवाक्ये द्रव्यदेवताद्यनेकगुणविधाने वाक्यभेदापत्तेः।** अतश्चोत्पन्न**शिष्टत्वेन पुरोडाशावरुद्धे यागे चतुरवत्तविधानानुपपत्तेश्चतुरवत्तवाक्ये जुहोतिना यागमनूद्य अवदा-**

---

विनाऽनभिव्यक्तेः, यथाच देवदत्तायेदं न ममेति स्वस्वत्वनिवृत्तिपरस्वत्वापादनसङ्कल्पो मानसं दानं, एवंविधशब्दोच्चारणं वाचिकं, देवदत्तहस्ते प्रक्षेपः कायिकं, त्रिविधदानपर्यवसानं च विना न देवदत्तीयत्वसिद्धिः, तथा त्यागस्यापि लोके त्रैविध्यप्रसिद्धेः त्रिविधत्यागानन्तरमेव ग्रहदेवतापूजादौ देवतास्वामित्वप्रसिद्धेः प्रक्षेपस्यापि त्यागान्तर्भावात्। अनन्तर्भावेऽपि वा प्रक्षेपान्तस्यैव देवदत्तोद्देन द्रव्यत्यागस्य द्रव्यदेवतान्वयापादकत्वात आग्नेयादिचोदनयैव प्रक्षेपविध्यवगतेः, तस्य चाहवनीयाश्रयत्वविधानात् अग्निमुखा वै देवा इत्यर्थवादाच्च समस्तस्याहवनीये प्रक्षेप इत्येवं प्राचीनैराद्यः पूर्वपक्षः उपपादितः। **तत्र** यागसाधनत्वेनान्विते द्रव्य एव शब्दतो देवताया गुणत्वप्रतीत्या वैपरीत्येन द्रव्यस्य तदर्थत्वायोगात्, इतरथा देवतार्थस्य द्रव्यस्य यागार्थत्वानुपपत्तेः। प्रत्युत देवतायाः कारकत्वेन पौर्णमास्यधिकरणे उपपादितरीत्या साक्षाद्भावनान्वयस्यैव व्युत्पन्नत्वेन द्रव्यान्वयस्याप्यभावात् द्वयोरपि द्रव्यदेवतयोर्यागद्वारा भावनान्वयिनोः स्वतः कथमपि परस्परं गुणप्रधानभावस्य केवलप्रधानभावस्यानुपपत्तेर्यावत एव द्रव्यभागस्य यागसाधनत्वं तावत एव देवतार्थत्वसंभवेत नियमेन देवतार्थत्वहेतुना सर्वप्रक्षेपपूर्वपक्षासंभवेनास्वरसं मनसि निधाय पूर्वपक्षिमते यागहोमयोरभेदात् प्रक्षेपान्तयागस्वरूपसाधनत्वेनैव सर्वप्रक्षेपोपपत्तिं सूचयन् कृत्स्नस्यैव यागसाधनत्वोपपादनेनैव पूर्वपक्षमाह—**उत्पत्तिवाक्ये** इति। द्वेधा ह्यत्र भाष्यकृत्सिद्धान्तोपपत्तिः–यदाग्नेयवाक्येनाष्टाकपालस्यापाततस्साधनत्वेऽवगतेऽपि चतुरवत्तं जुहोति इत्यनेनोपस्तरणाभिघारणसंस्कृतद्विरवखण्डिरूपस्य चतुरवत्तस्य होमसाधनताविधायकेनोपसंहारेण द्व्यवदानमाग्नेयं करोतीत्येवमेकवाक्यताश्रयणेन चतुरवत्तवाक्यमेवोत्पत्तिवाक्यमिति तस्यैव होमसाधनत्वात् न सर्वप्रक्षेपः। **अथवा** व्रीहीणां पुरोडाशप्रकृतित्वेनेव द्व्यवदानप्रकृतित्वेनैव यागसाधनत्वाग्नेयत्वयोरुपपत्तेः न तदनुरोधेन सर्वप्रदानमिति। तामनूद्याद्यां दूषयति—**नहीति**। आग्नेयवाक्ये यागविध्यनङ्गीकारेणात्रैव यागविधिमङ्गीकृत्याग्नेयवाक्यस्योपसंहारेणास्योत्पत्तिविधित्वं नहीत्यर्थः। द्वितीयां दूषयन्नेव पूर्वपक्षे चतुरवत्तवाक्यार्थं दर्शयति—**अतश्चेति**। यदाह्युत्पत्तिवाक्ये पुरोडाशस्य साधनत्वमध्यवसितं तदाऽनुपपत्त्या व्रीहीणां प्रकृतित्वेन तत्कल्प्यते, इह तु प्रत्युत आग्नेयवाक्ये वाक्यभेदपरिहाराय यागविधित्वाङ्गीकारे सति साक्षात्पुरोडाशस्यैव तदवगतौ बाधाभावेनोत्पन्नशिष्टद्व्यवदानानुरोधेन

नाख्यस्संस्कार एव "निर्मन्थ्येनेष्टकाः पचन्ति" इतिवत् विधीयते। न हि यागाद्धोमो भिद्यते येन जुहोतिना नानुवाद इत्याशङ्क्येत। जुहोतिचोदितानामपि "स एष यज्ञः पञ्चविधः" इत्यादौ यजिनाऽनुवादात्। यजतिचोदितानां च प्रयाजादीनां "अभिक्रामं जुहोति" इति जुहोतिनाऽनुवादाच्च। यागहोमयोर्भेदे प्रयाजानूयाजगृहमेधीययागादौ प्रक्षेपे प्रमाणाभावाच्च। अतो यागहोमयोरभेदात् युक्तो जुहोतिना यागमनूद्य प्रदेयपुरोडाशसंस्कारकतया अवदानविधिः। अतश्च कृत्स्नस्यैव पुरोडाशस्यावदानेन संस्कार्यत्वात् पुनःपुनरवदाय याग इति ज्योतिष्टोमवद्यागाभ्यासेऽपि न दोषः।

---

न तत्प्रकृतित्वं शक्यं कल्पयितुमिति—उत्पन्नशिष्टत्वेनेत्यनेन सूचितम्। व्रीहिवाक्यानुपपत्तिवत् चतुरवत्तवाक्यानुपपत्तिं परिहर्तुमुद्देश्यविधेयभावं तत्र दर्शयति—चतुरवत्तवाक्य इति। निर्मन्थ्येनेति। इष्टकोद्देशेन पाकविधानसामर्थ्यादेव निर्मन्थ्यपदोपात्तविशेष्यभूताग्नेः प्राप्तावपि निर्मन्थनरूपसंस्कारस्यैवाग्निद्वारा विधानं तद्वदित्यर्थः। यत्त्ववदानाख्यसंस्कारविधाने जुहोतिना हूयमानद्रव्यानुपादानात् न द्रव्योद्देशेन होमार्थमवदानोपायविधिस्संभवतीति भाष्ये दूषणं वार्तिककारीयं पूर्वपक्षे तत्परिहारं सूचयन् वाक्यार्थमुपसंहरति—अतो यागेति। होमोद्देशेनावदानसंस्कारविधावपि आनर्थक्यतदङ्गन्यायेन सामर्थ्यात् पुरोडाशद्वारकत्वोपपत्तेः प्रदेयपुरोडाशस्यावदानोपायेन प्रक्षेपसिद्धिरित्यर्थः। ननु द्व्यवदानस्येतिकर्तव्यतात्वेन विधाने एकेन द्व्यवदानेन युगपत् सकलहोमासंभवात् अवदानोपायविधानेपि नेष्टसिद्धिरित्याशङ्कां अवदानहोमावृत्तिस्वीकारेण परिहरन्नाह—अतश्च कृत्स्नस्यैवेति। द्व्यवदानाभ्यासपूर्वकहोमाभ्यासविध्यभावेऽपि होमार्थद्रव्यस्य सर्वस्य होमार्थत्वेन द्व्यवदानोपायविधिरेवानुपपन्नस्सन् उपेयोपाययोरभ्यासकल्पक इत्यर्थः। अत्र प्रकाशकारैस्सोमयागे तत्तदिन्द्रवाय्वादिभिन्नदेवताकविधिबलात् देवतोद्देशद्रव्यत्यागयोर्भेदेऽपि इह सर्वस्यैवाग्नेयार्थत्वेन सकृत्त्यागेऽपि प्रक्षेपमात्र एव द्व्यवदानमात्रोपायविधानात् प्रक्षेपमात्रस्यैव द्व्यवदानाभ्यास इत्युक्तं तदस्मिन् पूर्वपक्षे भाष्यकारमत इव यागहोमयोरभेदस्य पूर्वमुपपादितत्वात् चतुरवत्तवाक्ये च जुहोतिना प्रक्षेपान्तयागस्यैवाभिधानेन तदुपायतया द्व्यवदानविधानेऽर्थात् त्यागविशिष्टप्रक्षेपाभ्यासस्यैवापत्तौ प्रक्षेपस्येव देवतोद्देशद्रव्यत्यागयोरपि अभ्यासापत्तिर्दुर्वारैवेति अयुक्तमिति सूचयितुं ज्योतिष्टोमवदभ्यसितव्यो होम इति वार्तिकगतहोमशब्दतात्पर्यं वर्णयन्निव सदृष्टान्तं यागाभ्यासमेवाह—ज्योतिष्टोमवदिति। अपिना प्रक्षेपाभ्याससमप्रमाणकत्वं यागाभ्यासस्य सूचितम्। अत एव न्यायसुधाकृता कृत्स्नस्यापि हविषो यागार्थत्वे गुणभूतद्रव्यकार्त्स्न्यानुरोधेन प्रधानभूतयागावृत्त्ययोगमाशङ्क्य कृत्स्नहविषो देवतात्वान्व-

वस्तुतस्तु **सर्वं पुरोडाशं पुनःपुनरवदाय सकृदेव हृदयादिवत् याग** इत्यपि शक्यं वक्तुम्। शेषकार्याणि **स्विष्टकृदादीनि तु प्रकृते विद्यमानशेषाभावाद्धविरन्तराक्षेपकाणि।** तद्वाक्यस्थ-

---

यान्यथानुपपत्त्या यागाभ्यासेऽवगते ज्योतिष्टोमवदभ्यस्तस्यैव यागस्य फलापूर्वसाधनत्वात् प्राधान्यं, न तु सकृत् कृतस्य, येन प्रधानावृत्तिरापद्येतेति परिहृतम्। ततश्च स्पष्टमेव यागाभ्यासपर एव पूर्वलिखितवार्तिकग्रन्थो व्याख्यातः। स्पष्टतरमेव च **शास्त्रदीपिकायाम्**—न चाभ्यासमन्तरेण सकलपुरोडाशसाधनको यागश्शक्यते द्व्यवदानेन कर्तुमित्यर्थादभ्यस्यते सोमयागवदिति ग्रन्थेन यागाभ्यास उक्त इति सर्वग्रन्थविरुद्धा प्रक्षेपमालाभ्यासोक्तिः। **एतेन** कृत्स्नस्य हविषो यागार्थत्वेऽपि द्व्यवदानरूपैकदेशस्यैव प्रक्षेपविधानात् न होमाभ्यास इति वार्तिककारीयसिद्धान्तकरणमपास्तम्। आग्नेयादिवाक्यस्य होमपर्यवसायित्वात् तस्य चोत्पत्तिवाक्यत्वेन बलीयस्त्वात् तदर्थसम्पत्त्यर्थं होमाभ्यासस्यापि युक्तत्वादिति भावः। यदि तु सोमयागे भिन्नदेवताकत्वेन तदभ्यासेपीह संप्रतिपन्नदेवताकत्वेन तन्त्रेण यागानुष्ठानात् न यागाभ्यास इत्यभिप्रायस्तर्हि तेनैव न्यायेन प्रक्षेपस्यापि सान्नाय्यवत्तन्त्रत्वोपपत्तेः प्रक्षेपमालाभ्यासस्यापि अनापत्तिं **प्रकाशकारमते** सूचयन् प्राचीनोक्तं सर्वयागाभ्यासपक्षमेव दूषयितुं पक्षान्तरमाह—**वस्तुतस्त्विति।** एकस्यां जुह्वां नानाद्व्यवदानेन सर्वपुरोडाशधारणासंभवस्य सहायान्तरेण धारणोपपत्त्या परिहारं सूचयितुं हृदयादिवदित्युक्तम्। सर्वहोमे स्विष्टकृदिडाप्राशित्रशंयुवाककालभक्षचतुर्धाकरणानां शेषकार्याणां लोपापत्तिं परिहरति—**शेषेति।** द्व्यवदानमात्रस्यैव होमे पुरोडाशशेषस्य विद्यमानत्वेन "एकदेशं चोत्पत्तौ विद्यमानसंयोगात्" इति चातुर्थिकन्यायेन भवति शेषकार्याणामप्रयोजकत्वं; तदभावे तु न्यायागतं तत्प्रयोजकत्वं नैव केनचित् बाध्यत इत्यपेक्षावशात् हविरन्तरमुत्पादनीयमिति भावः। **अत्र** च स्विष्टकृदाद्यर्थं पुरोडाशान्तराण्युत्पाद्येरन्निति वार्तिकगतबहुवचनान्तपुरोडाशान्तरपदोपादानाभिप्रायं विवृण्वता **न्यायसुधाकृता** सान्नाय्ये द्व्यवदानमात्रेऽपि दधिपयस्त्वाविनाशात् सर्वप्रक्षेपाभावस्तथा द्रव्यस्य शेषकार्याङ्गत्वात् एकाङ्गस्य चान्याङ्गत्वायोगात् पञ्चानां शेषकार्याणामर्थे पुरोडाशपञ्चकमुत्पादनीयमित्युक्तं; तन्निरासाय—**हविरन्तरेति** हविरुपादानं कृतम्। **तस्यायमाशयः**—यद्यपि द्व्यवदानहोमेन पुरोडाशाकारनाशवत् तेन दधिपयस्त्वस्य न नाशस्तथाप्यश्वशफपरिमितस्यैव तस्य देवतार्थत्वात् त्यागसाधनत्वात् सर्वप्रक्षेप एवोत्पत्तिवाक्यार्थसंपत्तिर्नान्यथा। तथैवापरपक्षे षण्णाङ्गवां पयसा निष्पादितस्यैव दध्नस्तत्परिमाणयुतस्य पयसश्चैव देवतार्थत्वात् यागसाधनत्वात् सर्वप्रक्षेप एवोत्पत्तिवाक्यार्थसंपत्तिरिति तुल्यत्वात् न तत्र सर्वप्रक्षेपाभावेन शेषकार्यं तयोरनाक्षेपो युक्तः। एवं प्राथमिकशेषकार्यानुरोधेनावश्यके पुरोडाशान्तरे **कांस्यभोजिन्यायेन** महत्परिमाणस्यैव संपादने बाधकाभावात् तेनैवेतरशेषकार्योपकार-

शेषशब्दस्तु अवशिष्टवचनत्वासम्भवात् 'आज्येन शेषं संस्थापयति' इतिवत् अन्यपरः। दृष्टश्च शेषशब्दोऽन्यत्रापि 'ततश्शेषेण विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते' इति गौतमस्मृतौ स्वर्गारम्भकसुकृतातिरिक्तसुकृतपरः। न हि स्वर्गारम्भकसुकृतशेषेण देहान्तरप्राप्तिः, अन्यत्रान्यस्य व्यापारायोगात्। अतस्तत्र शेषशब्दोऽन्यवाच्येवेति प्रकृतेऽपि हविरन्तरमेव पूर्वसदृशं शेषशब्दवाच्यं भवति। अस्तु वा शेषकार्यानुरोधात् यस्य कस्य-

---

लब्धेर्न स्वातन्त्र्येण तत्प्रयोजकत्वकल्पनं प्रमाणवत्। इतरथा तस्मात्तस्मात् पुरोडाशात् तत्तच्छेषकार्यकरणानन्तरमवशिष्टस्य प्रतिपत्तिसाकाङ्क्षत्वापत्तेः। अतो वार्तिकस्थः पुरोडाशशब्दः पुरोडाशापुरोडाशसमुदाये गौणस्सन् हविर्मात्रपरतया विवक्षित इति हविरन्तरस्याक्षेपकाणीति एकावयविगतोपयुक्तावयवान्यावयवत्वाख्यावशिष्टवाचिनां तत्तद्वाक्यगतशेषशब्दानां स्वतन्त्राक्षेपे प्राप्तामनुपपत्तिं परिहरति—**तद्वाक्यस्थेति**। वाक्यत्वेन रूपेणानुगमं कृत्वा शेषशब्दस्याप्यैक्यविवक्षया एकवचनान्तशेषशब्दप्रयोगः कृतः। **आज्येनेति**। पूर्वं त्वाष्ट्रं पात्नीवतमालभेतेति विहितपशुद्रव्यकयागस्य पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति वाक्येन पर्यग्निकरणान्तपर्यवसानविधानानन्तरं आज्येन शेषं संस्थापयतीति श्रुतवाक्येन पूर्वस्मिन्नेव कर्मणि पर्यग्निकरणोत्तरं उत्सृष्टस्य पशोः स्थाने आज्यविधिः। ततश्च पर्यग्निकरणोत्तरमुत्सृष्टपशुस्थानीयेनाज्येन द्रव्येण कर्मशेषं समापयेदित्यर्थो, न तु कर्मान्तरविधिस्तथात्वे शेषसंस्थाशब्दयोरनुपपत्तेरित्येवं पूर्वपक्षं प्रापय्य, पर्यग्निकरणवाक्येन केवलं देवतानिरपेक्षोत्सर्गविधाने उत्पत्तिवाक्यावगतदेवतान्वयावगतिबाधापत्तेः देवतासंबन्धेन त्यागापरपर्यायोत्सर्गविध्यवश्यंभावेनाग्निमविशसनद्वारकहृदयादिलोपेऽपि यागस्यानुष्ठितत्वात् न तत्समाप्त्यपेक्षास्तीति अगत्या पात्नीवतपदानुषङ्गेण पात्नीवतमाज्यं कुर्यादिति वाक्यार्थपर्यवसानात् कर्मान्तरमेव। शेषसंस्थाशब्दौ च पूर्वयागः पर्यग्निकरणमात्रे संस्थापितस्सशेष इव तदनन्तरमयमाज्यद्रव्यकः पत्नीवद्दैवत्य एव क्रियमाणस्तत्रैव शेषसमापनमिव भवतीत्येवं सादृश्यादुपपादनीयौ। अथ वा पूर्वोक्ताविकान्यपरो वा शेषशब्द इति नवमान्त्ये सिद्धान्तितं तद्वदिहाप्यन्यपर इत्यर्थः। **अन्यवाच्येवेति**। स्वर्गारंभकसुकृतान्यसुकृतवाच्येवेत्यर्थः। अस्मिंश्च पक्षे निष्पादितस्य पुरोडाशान्तरस्याग्नेयत्वहविष्ट्वयोरभावादाग्नेयस्य सतश्चतुर्धाकरणविधानस्य हविश्शेषभक्षणविधानस्य चानुपपत्तेः अपरितोषेण शेषशब्दमवशिष्टवाचिनमनुरुद्ध्यैव पक्षान्तरमाह—**अस्तु वेति**। यद्यप्यस्मिन् पक्षे पूर्वसिद्धान्तपक्षयोरप्यसर्वप्रदानात् शेषकार्याणामपि प्रधानाङ्गपुरोडाशादेव निष्पत्तेर्न प्रयोजने विशेषः तथापि यदा प्रधानवाक्यादशेषप्रदानप्रसक्तौ सत्यां शेषकार्यवाक्यवशेनैव शेषास्स्थाप्यन्ते तदा यथैव प्रदानं तस्य हविषः प्रयोजकं एवं स्विष्टकृदादीन्यपीति तदर्थावदाननाशदोषापहारेष्वपि स्विष्टकृद्यागे यस्य सर्वाणीत्यनेन वाक्येनाज्यविधानेऽपि तदन्यशेषकार्यार्थे

स्विष्टकृतस्यैकस्य हविःशेषस्थापनं, इतरेषां तु सर्वहोम एव। तथा च तद्विषयमेव मध्यपूर्वार्धवाक्यमिति प्राप्ते

न चतुरवत्तवाक्येनावदानविधिः "द्विर्हविषोऽवद्यति" इत्यनेनैव प्राप्तेः। अनेनैव विधानेऽपि वा निष्ठाप्रत्ययोपादानवैयर्थ्यप्रसङ्गेनावदानसंस्कृतस्यैव द्रव्यस्य विधेयत्वाच्च। अतश्च यागानुवादेनावत्तस्यैव हविष्ट्वेन विधेयत्वादुत्पत्तिवाक्येऽष्टाकपालपदं पशुसोमवत् प्रकृतिद्रव्यविधायकम्। अतश्च कृप्तावदानस्यैव यागसाधनत्वादवशिष्टस्यानुनिष्पन्नप्रतिपत्तिपरिशेषकार्याणीति भाष्यकारः।

---

प्रधानवदेव हविरन्तरमुत्पादयेत्; यदा पुनः प्रधानचोदनाकृतस्यैव शेषस्य स्विष्टकृदादीनि ग्राहकाणि भवन्ति तदा तेषां परप्रयुक्तद्रव्योपजीवनात् अप्रयोजकत्वे सति नाशादिष्वक्रिया सिद्धा भवतीति वार्तिकोक्तस्तद्विशेषो द्रष्टव्यः। पक्षोक्तस्यैव तस्याग्रहे तु उत्तराधिकरणे वक्ष्यमाणं प्रयोजनं सूचयितुमेकस्येत्युक्तम्। तत्राप्याग्नेयस्यैव चतुर्धाकरणविधिना तदनुरोधेन तस्य स्थापने आवश्यके इतरेषामर्थेऽपि लाघवात्तस्यैव स्थापनमिति भावः। अत्र च पुनः पुनरवदाय सोमवद्यागाभ्यास इति पूर्वपक्षे पुनः पुनर्द्व्यवदानग्रहणसंभवेऽपि षष्ठचतुर्थपादाद्याधिकरणरीत्या प्रथमतोऽविकलावयविपुरोडाशस्य मध्यपूर्वार्धसंभवेऽपि द्वितीयादिद्व्यवदानेषु विकलस्य पुरोडाशस्य तयोरसंभवात् मध्यात् पूर्वार्धादवद्यतीति वचनविहितमध्यपूर्वार्धोपादानकत्वबाधापत्तेर्यद्वार्तिककृता "उपायो वा तदर्थत्वात्" इति गुणसूत्रव्याख्यायां "शक्यते ह्यङ्गुष्ठपर्वमात्रैः मध्यपूर्वार्धोद्धृतैः द्विशः प्रवृत्तैरवदानैः संस्कृत्य संस्कृत्य निश्शेषं हविः प्रदातुं" इत्युक्तं प्रतिद्व्यवदानं मध्यपूर्वार्धोद्धृतत्वमयुक्तमेवेति सूचयन् शेषकार्यार्थे पुरोडाशान्तरोत्पादनपक्षे तद्वाक्यानुपपत्तेरपरिहार्यत्वेपि अस्मिन् पक्षे मध्यपूर्वार्धवाक्यार्थोऽप्युपपद्यत इत्याह—**तथाचेति**। यद्धविःशेषस्थापनं तद्धविःपरमेव मध्यपूर्वार्धोपादानकगृहीतद्व्यवदानहोमविध्यादिकं न तु तद्व्यतिरिक्तहविः परमपीति तदितरेषां सर्वप्रक्षेप इत्येवाद्यः पूर्वपक्ष इत्यर्थः। अधिकरणारम्भे त्रिकोटिकसंशयप्रदर्शनावसरे तृतीयकोटेरन्तिमत्वेन सिद्धान्तपक्षत्वावगतावपि द्वितीयकोटेराद्यकोटिवत् सर्वथा न पूर्वपक्षकोटित्वमपि तु मतभेदेन सिद्धान्तकोटित्वमिति ज्ञापयितुं अधिकरणपूर्वपक्षसमाप्तिं दर्शयति—**इति प्राप्त इति**। यदि होमानुवादेन परंपरया अवदानविधिर्भवेत्तदा न संस्कारस्यावृत्त्या संस्कृतस्य सर्वस्य हविषः प्रदानं स्यान्न त्वेतदस्तीत्याह—**न चतुरवत्तेति**। अवत्तसंस्कृतस्येत्यत्र मूले अवत्तेति भावे क्तः, अस्मिन् सिद्धान्ते चतुरवत्तस्य भूतभाव्युपयोगाभावेन संस्कार्यत्वानुपपत्तेः सक्तुपदोत्तरद्वितीयाया इव अस्या अपि करणत्वलक्षणया चतुरवत्तस्य साधनत्वेन विधानमभिप्रेत्याह—**हविष्ट्वेनेति**। **प्रकृतिद्रव्यविधायकमिति**। **यथैव व्रीहिसोमपश्वादीनां**

वार्तिककारस्तु—**न यागहोमयोरभेदः** याज्ञिकानां **देवतोद्देशपूर्वकद्रव्यत्यागे प्रक्षेपाङ्के यजिपदप्रयोगात्, देवतोद्देशद्रव्यत्यागप्रक्षेपेषु समप्रधानेषु जुहोतिपदप्रयोगात्, प्रक्षेपाङ्क-क्रियाद्वयवृत्तिजातिर्यागत्वं क्रियात्रयवृत्तिजातिश्च होमत्वमिति** तयोर्भेदात्। अत एव **न यजिना अङ्गभूतोऽपि प्रक्षेपः शक्त्योच्यते। अपि तु** प्रमाणान्तर**लभ्य एव**। तदत्राग्नेयादि-

---

व्रीहिभिर्यजेतेत्यादिवाक्यबोधितयागार्थत्वं परंपरया पुरोडाशादिप्रकृतिद्वारमेव आग्नेयादिवाक्यबोधि-ताग्नेयत्वाद्यपि द्व्यवदानादिप्रकृतिद्वारमुपपद्यत एवेति नाग्नेयत्वस्य यागसाधनत्वस्य वाऽनुपपत्तिरिति पशुसोमवदित्युक्त्या सूचितम्। एवं च हविरन्तरोत्पत्त्यादिक्लेशोऽपि नापद्यत इति सूचयति—**अवशिष्टस्येति**। अत्र च द्व्यवदानवाक्येनाग्नेयवाक्यस्योपसंहारोपपत्तेः पुरोडाशस्य द्व्यवदानप्रकृतित्वेन विधानोपपत्तेश्च पूर्वपक्ष एव खण्डितत्वात् केवलं द्व्यवदानस्य साधनत्वेन विधानमेव भाष्यसिद्धान्तोपपत्तिमूलमित्यभिप्रेत्य तदेव वार्तिककारमतोपपादनव्याजेन दूषयितुं यागहोमयोरभेदे सति जुहोतिना यागमनूद्य तत्साधनतया द्व्यवदानविधिस्संभवेन्न त्वेतयोरभेदोऽस्ती त्युपपादयति—**वार्तिककारस्त्विति**। "यजतिचोदनाद्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्, तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकस्स्यात्" इति चातुर्थिकसूत्राभ्यां यागहोमयोर्लक्षणं पार्थक्येन सूत्रकारेणैव करिष्यते तथापि,

> यागादिशब्दानन्येष्वेव लोकोऽर्थेषु यथोचितान्।
> प्रयुङ्क्तेऽत्रापि तेऽर्थास्स्युः सूत्रेष्वपरिभाषिताः॥
> यथा चैव गवादीनां प्रयोगादर्थनिर्णयः।
> यागादीनां तथैवेति किं तत्र परिभाष्यते॥

इत्येवं चतुर्थे वार्तिककृतैव परिभाषारूपलक्षणकरणस्य प्रयोजनाभावेन दूषितत्वात् याज्ञिकप्रसिद्धप्रयोगभेदेनैव तदर्थभेदं दर्शयति—**याज्ञिकानामिति**। एवं च यजति जुहोति ददातीत्यपर्यायधातुनिष्पन्नाख्यातरूपशब्दान्तरात् भवनाभेदसिद्ध्यर्थं यागहोमयोर्भेदमभिप्रेत्याह—**तयोर्भेदादिति**। यद्यपि वार्तिके देवतोद्देशपूर्वकद्रव्यत्यागमात्र एव यजिपदस्य व्यवहार उक्तः न तु प्रक्षेपाङ्कत्वपर्यन्तमपि, तथापि तत्कल्पस्यानुपदमेव दर्शयिष्यमाणत्वात् तेन विना वार्तिक-मतानिर्वाहमभिप्रेत्य देवतोद्देशपूर्वकद्रव्यागे शक्तिमात्राभिप्रायमेव तावन्मात्रे व्यवहारप्रदर्शकं वार्तिकं नतु प्रक्षेपाङ्कत्वविशिष्टताबोधनिरासाभिप्रायमिति सूचयन्नाह—**अत एवेति**। **प्रमाणान्तरेति**। तथा च कचिदाक्षेपेण कचित् प्रत्यक्षवचनेन प्रक्षेपस्याङ्गत्वेन प्राप्तेः अन्यलभ्यत्वान्न तत्र **शक्तिरित्यर्थः**। यावता विनाऽष्टाकपालस्याग्नेयत्वं न संभवति तावत एव देवतोद्देशपूर्वस्य

द्रव्यत्यागमात्रस्यानुमानं, न तु प्रक्षेपस्यापि तं विनाप्याचारतःशुचौ देशेऽष्टाकपालं निधाय देवता-मुद्दिश्यायं न ममेति सङ्कल्पसंभवात्। अत एव पूर्वसङ्कल्पाचरणस्य मिथ्यात्वापत्तेः न पुनर्यजमान-स्वत्वसंबन्धः। एवं च **भक्षार्थो वा द्रव्ये समत्वादित्येतत्पादान्त्यसिद्धान्तसूत्रे** ऋत्विक्साम्येन द्व्यवदानावशिष्टपुरोडाशे यजमानस्यास्वत्वं प्रतिपादितं नैव विरुद्ध्यते। इतरथा भाष्यसिद्धान्ते द्व्यवदानमात्रस्यैव यागसाधनत्वेन देवतायै समर्पणात् अवशिष्टे देवतास्वत्वाभावे सति यजमान-स्वत्वाभावोक्त्यनुपपत्तेः। तथा तत्सूत्रविवरणपरेण "कुतः? दानस्याभावात्। कथमभावः? प्रभवता हि शक्यं नाप्रभवता। कथं पुनरप्रभुत्वं? संकल्पितं हि यजमानेन देवतायै एतदिति। न च देवतायै संकल्पितेन शिष्टाः स्वेनेव व्यवहरन्ति" इत्यादिभाष्ये तथा पुरोडाशस्याग्नये संकल्पितस्य नेष्टे यजमान इति चतुर्थाधिकरणभाष्ये च वक्ष्यमाणेन चास्वत्वेनास्य विरोधापत्तेश्च। नहि द्व्यवदानमात्रं देवतार्थं, त्यागस्तु सर्वस्य हविषः, त्यागकृतैव च स्वत्वनिवृत्तिः न देवतासंबन्धकृता। अतोऽवशिष्टे यजमानस्यास्वत्वमुपपद्यत एवेति युक्तं, त्यागस्येह प्रत्यक्षतोऽश्रवणात् देवतासंबन्धकरणविधिनैवा-क्षेप्यत्वेन यावता विना देवतासंबन्धानुपपत्तिः क्षीयते तावन्मात्रत्यागस्यैवाक्षेपणीयत्वापत्त्या शेषपरित्यागाक्षेपकत्वानुपपत्तेः।

न च निर्वापवेलायामेव चतुर्मुष्टिपरिमितस्य मानसो वाचिको वा त्याग आवश्यकः; इतरथा विशेषाग्रहणात् केभ्यो व्रीहिभ्यो द्व्यवदानं निष्पत्स्यते केभ्यो नेति विज्ञानाभावे यानेव न त्यजेत्तेभ्य एव कदाचिदवदीयेतेति तत्र त्यक्तानामदानात् अत्यक्तानां च दानात् अयथाश्रुत-करणापत्तेरिति वाच्यम्। निर्वापकाल एव य एवाष्टाकपालनिर्वृत्त्यर्थं देवतोद्देशेन निरुप्तास्तेषां सर्वेषां दातव्यत्वेन प्राप्तौ सत्यां येषामेव न दानं तत्र प्रक्रान्तापरिसमापनदोषपरिहारार्थं सर्वप्रदानप्राप्तावपि द्व्यवदानशास्त्रालोचनेन द्व्यवदानमात्रस्य देवतार्थत्वे सति अष्टाकपालनिर्वृत्त्यर्थेषु चतुर्षु मुष्टिषु ये द्व्यवदाननिर्वृत्त्यर्थास्तानग्नये जुष्टं निर्वपामि तेषां मध्ये येभ्यो द्व्यवदानं भविष्यति तावन्तो न ममेति त्यागोपपत्तेः सर्वत्यागे प्रमाणाभावात्। अतोऽनसि स्थितेषु व्रीहिषु न यजमानस्यास्वत्वं तथा द्व्यवदानावशिष्टपुरोडाशेऽपि नास्वत्वमिति तत्सूत्रानुपपत्तिर्भाष्य-सिद्धान्ते दुरुद्धरैवेति समस्तस्यैव त्यागे न्यायप्राप्ते सति प्रक्षेपोऽनेन विधीयते इत्याह—**तदत्रेति**। **यद्यपि** चतुरवत्तसंस्कारकत्वेन प्रक्षेपमात्रमनेन वाक्येन विधीयते न तु जुहोत्यन्तर्गतौ देवतोद्देशद्रव्य-त्यागांशावपि तयोराग्नेयाद्युत्पत्तिवाक्येनैव प्राप्तिसम्भवेन यस्य द्रव्यस्य त्यागदेवतोद्देशाख्यमंशद्वय-मवगतं तादृशाष्टाकपालावयवचतुरवत्तसंस्कारकतया प्रक्षेपमात्रविधाने लाघवात्। तत्राश्रावण-प्रत्याश्रावणाभ्यां जुहूस्थद्व्यवदानं यागायोद्यतं क्रियते। तस्मिन्नेव क्षणे यजमानेन जुहूस्थद्व्यवदानेन सह पात्रीस्थस्य पुरोडाशस्य देवतायै त्यागोऽध्वर्युणा प्रक्षेपश्च कर्तव्य इति एकस्यैव यागस्य

**वाक्ये यागमात्रानुमानेऽप्यङ्गभूतस्य प्रक्षेपस्याप्राप्तत्वाच्चतुरवत्तवाक्येनैव** वत्तोद्देशेन **तद्विधानम्। अत एव तत्र द्वितीयाऽप्युपपद्यते। यागे त्वष्टाकपालः कृत्स्न एव हविः,** प्रक्षेपस्तु

---

प्रचयरूपजुहोत्यवस्थया द्व्याकारतां प्राप्तस्य रूपान्तरमेव प्रक्षेपः प्रधानत्वेन प्राप्नोति। इतरथा प्रतिपत्तित्वेन कर्मान्तरत्वस्वीकारे पश्चादनुष्ठानापत्त्या युगपत् त्यागप्रक्षेपयोस्तदनुपपत्तेः तथापि फलवाक्ये यजेरेव फलसंबन्धात् प्राधान्यात् प्रक्षेपस्याङ्गत्वेनैव विधानं युक्तमित्यभिप्रेत्याह—**अङ्गभूतस्येति**। नहि होमद्रव्यस्यैकमात्राश्रितत्वेन प्राधान्यमिति नियमः, तस्य फलसंबन्धाधीनत्वात्। अतो होमस्य प्रोक्षणादिवत् प्रधानद्रव्यसंस्कारकत्वेनाङ्गत्वमेव युक्तम्। इतरथा प्रक्षेपस्य प्रधानत्वात्, दर्शपूर्णमासादिषु जुहोतिव्यवहारस्य सौर्ये च प्रधानानामनतिदेशेन[1]प्रक्षेपाभावस्य चापत्तेरित्यर्थः। यद्यपि दशमे कृष्णलपेटिकायां चतुरवत्तस्यैव विशिष्टस्योद्देश्यत्वं स्वयं निष्कृष्यते तथापि प्राचीनमर्यादया उपस्तरणाद्यभिप्रायेण चतुः पदस्यानुवादत्वमङ्गीकृत्यावत्तमात्रस्योद्देश्यत्वं दर्शयति—**अवत्तोद्देशेनेति**। निर्वापवेलायामेव देवतोद्देशत्यागात्मकयागस्य निर्वृत्तत्वात् यागोत्तरकालीन एवायं प्रक्षेपः संस्कार इति केषांचिन्मतनिराकरणायाह—**प्रक्षेपस्त्विति**। **अयमर्थः**—यदि निर्वापकाल एव यागनिष्पत्तिस्तदा तदुत्तरं द्रव्यनाशादौ सति षाष्ठिकद्रव्यान्तरोत्पादनप्रतिपादनविरोधापत्तेः व्रीहिभिरेवानदनीयावस्थैर्यागकरणे उत्पत्त्यवगतपुरोडाशसाधनत्वबाधापत्तिश्च। अतो निर्वापकालेऽग्नये दास्य इत्येवं प्रतिश्रवणफलकमानसत्यागेन यथेष्टविनियोज्यत्वलक्षणस्वत्वनिवृत्तावपि अन्यपरिग्रहप्रतिबन्धार्हत्वलक्षणस्वाम्यानपगमात् रक्षितस्य निरुप्तस्य द्रव्यस्य प्रक्षेपकाल एव यागनिष्पत्तिः।

तत्रायं क्रमः-अध्वर्युणा जुह्वाञ्चतुरवत्तं संपाद्याग्नयेऽनुब्रूहि इति पुरोनुवाक्यार्थं होत्रे प्रैषदानानन्तरं आहवनीयदक्षिणदेशातिक्रमणे कृते तिष्ठतोदङ्मुखेन पुनराश्रावयेति आग्नीध्रं प्रति देवतायै द्रव्यं दातुमाभिमुख्येन यजमानं श्रावयेति आश्रवणप्रैषे च दत्ते सति यदध्वर्युणा आश्रावयितव्यत्वेनोक्तं तद्यजमान तवाश्रावितमस्त्वित्यर्थकास्तु श्रौषडिति प्रत्याश्रावणप्रैषो यजमानायाग्नीध्रा दातव्यः। ततोऽध्वर्युरग्निं यजेति होत्रे प्रैषं दत्वा होता यजमानस्य देवतास्मरणोपजननाय याज्यापाठे क्रियमाणे यदैव तदन्ते वषट्कारः पठ्यते तदैव वषट्कृते जुहोतीति वचनात् प्रक्षेपङ्करोति। तदैव च वषट्कारानन्तरकाले होत्रा पठितयाज्यानूवाक्याभ्यां स्मारितदेवतोद्देशेन यजमानेनाग्नय इदं न ममेति कर्तव्यत्यागसमानकालीनत्वमध्वर्युकर्तृकप्रक्षेपरूपप्रतिपत्तेर्लभ्यते। सोऽयं त्यागो निर्वापकालीनप्रतिश्रवणनिष्पन्नयागादन्यत्राविनियोज्यत्वसंकल्परूपत्यागापेक्षः। यथाश्रुतेतिकर्तव्यताकत्व-

---

1. A. मनतिदेशस्य

त्यागसमकालीनस्तदुत्तरकालीनो वा द्व्यवदानस्य प्रतिपत्तिः। अत एवात्र जुहोतिना उद्देशत्यागयोरुत्पत्तिवाक्यादेव प्राप्तेर्लक्षणया प्रक्षेप एव प्रतिपाद्यते। एवं च यत्र प्रकृतौ

---

सिद्धयर्थत्वेनार्थवादेन यद्यपि त्यागप्रक्षेपयोः एककालत्वं, तथापि वषट्कृते जुहोतीति विहितकालीनप्रक्षेपेणैव यागकालोपलक्षणात् तन्निष्पत्त्यैव च यागनिष्पत्त्युपलक्षणावगतेः, प्रक्षेपानिष्पत्तौ यागस्याप्यनिष्पत्त्यवगमेन प्रक्षेपस्याप्रयोजकत्वेऽपि यागस्य प्रयोजकस्य सत्त्वात् प्रक्षिप्यमाणद्रव्यनाशादिषु द्रव्यान्तरागमो नानुपपन्नः। अत एव स्विष्टकृदादीनां निष्पन्नयागोत्तरभावित्वेन मुख्यस्य प्रयोजकस्य यागस्य कर्तव्यत्वाभावात् नोत्तरार्धादिनाशे द्रव्यान्तरोत्पत्तिः। तदेतत् सर्वमभिसंधाय त्यागसमानकालीनेत्युक्तम्। प्रक्षेपस्य सर्वान्त्यांशत्वोक्तिविरोधापत्तेः त्यागप्रक्षेपयोः नात्यन्तैकक्षणत्वेऽभिनिवेष्टव्यमिति एकक्षणोपपादनपरपूर्ववार्तिकास्वरसप्रदर्शकन्यायसुधाग्रन्थालोचनेन परमसिद्धान्तमाह—तदुत्तरकालीनो वेति। प्रतिपत्त्यनर्हतापादकभाव्युपयोगित्वाभावेन प्रक्षेपस्य प्रतिपत्तित्वकल्पनापेक्षया त्यक्तस्य समस्तहविषः का प्रतिपत्तिरित्यपेक्षिताकीर्णकरतापरिहारार्थत्वेन द्व्यवदानमात्रांशे प्रक्षेपविधिरितरशेषकार्यविधिवत् प्रवृत्त आकाङ्क्षितविधिर्दृष्टार्थश्च भवतीति तस्य प्रतिपत्तित्वनिर्वाहाय त्यागोत्तरत्वमेव युक्तम्। अत एव यागे प्रक्षेपस्य दृष्टार्थतालाभाय प्रक्षेपविधीनामुत्तरकालमेव प्रवृत्तेस्तस्याङ्गत्वेनाप्यन्त्यकोटिनिविष्टत्वमेव। जुहोतिचोदनाचोदितेषु होमेषु तु प्रक्षेपान्तस्यैव फलसंबन्धात् प्रधानत्वेनाप्यन्त्यकोटिनिविष्टत्वेऽपि आनुषङ्गिकप्रक्षेपस्य चतुरवत्तवाक्येन प्रतिपत्तिरूपतया विधानमिति वार्तिकसिद्धान्ते उपपादिते तदनभिमतमप्यर्थविशेषमापाद्यत्वेन सूचयति—एवं चेत्यादिना। अयमर्थः—प्रक्षेपस्य यागाभिव्यक्त्यर्थत्वरूपाचारस्य तावत्प्रामाण्यं वार्तिककृताप्यङ्गीकृतमेव। अभिव्यञ्जकस्य च प्रक्षेपस्य यत्र यजिपदश्रवणं तत्र तादृशाचाराद्यजिपदस्य प्रक्षेपाङ्गक एव शक्तिग्रहात् तत्र श्रुतयजिरेव स्वोपस्थापनानुपपत्त्या आक्षेपको वक्तव्यः। इतरथा प्रयाजेषु प्रक्षेपप्रापकप्रमाणाभावे आहवनीयाप्राप्तेः। न हि प्रयाजादिषु उपांशुयाजादौ वा चतुरवत्तवाक्यसदृशं वाक्यान्तरमुपलभ्यते। यत्तु अनारभ्याधीतं चतुरवत्तं जुहोतीति वचनं न तच्चतुर्गृहीतोद्देशेन होमविधायकं तथात्वे उपांशुयाजाज्यभागोत्तरप्रयाजद्वयेषु जुह्वा चतुर्गृहीतप्राप्त्यभावेन होमानापत्तेः। अतोऽत्र चतुर्गृहीतस्य साधनत्वेन होमोद्देशेन विधानमभिप्रेत्यैव चतुर्थाध्यायाद्यपादान्त्याधिकरणे अष्टावुपभृति गृह्णातीत्यत्र अष्टपदस्य चतुष्कद्वयलक्षणा वार्तिककारादिभिस्साधयिष्यते। न हि प्रयाजादिषु होमत्वाभावे चतुर्गृहीतस्य साधनत्वेनापि प्राप्तिर्वक्तुं शक्यते। अस्तु वोत्तरपादाद्याधिकरणवार्तिके चतुरवत्तवाक्यस्योपांशुयाजे प्रवृत्तिलिखनात् चतुस्संस्कृतद्रव्यमात्रपरं चतुरवत्तपदमङ्गीकृत्य

**विकृतौ वा प्रत्यक्षवचनेनातिदेशेन वा प्रक्षेपप्राप्तिस्तत्र नाक्षेपः प्रक्षेपस्य। अन्यत्र तु प्रयाजादौ प्रमाणान्तराभावाद्यत्र न प्राप्तिस्तत्र यजिनैवाक्षेपः, तदङ्गक एव शक्तिग्रहात्।**

---

पयोयाग इवोपांशुयाजे तद्वाक्येनैव तल्लाभोऽथवा तदधिकरण एव भाष्ये लिखितादुपांशुयाजप्रकरण-पठिताच्चतुर्गृहीतं जुहोतीति संस्कारकतया होमविधायकवाक्यान्तरात् तत्र तल्लाभस्तथापि प्रयाजेषु तल्लाभो दुरुपपाद एव। तावतापि तयोः प्रधानमात्रविषयत्वेनाङ्गेष्वप्रवृत्तेः। अत एव जुह्वा जुहोति अभिक्रामं जुहोति इत्याद्यपि वाक्यजातं न प्रक्षेपप्रापकं तस्यापि होमानुवादेन गुणविधायकत्वात्।

**एतेन** प्रयाजादिषु होमत्वाभावेनाहवनीयाप्राप्तेस्तासामग्निः प्रकृतितः प्रयाजवदिति सूत्रगत-प्रयाजवदिति दृष्टान्तो न युज्येतेत्याशङ्क्य चतुरवत्तादिवाक्यैः प्रक्षेपाधिक्यविधानात् होमत्वापत्तेः न कोपि दोषोऽस्तीति परिहारकरणं **न्यायसुधाकृतोऽपास्तम्**। यथा प्रयाजाः प्रकृतितः प्राप्यन्ते तथाऽग्निरित्येवमग्निसामानाधिकरण्येनैव तद्दृष्टान्तस्य तदधिकरणभाष्यवार्तिकादिव्याख्याततत्वेन तदनुपपत्त्यापादनस्यायुक्तत्वात्। चतुरवत्तवाक्यस्य प्रधानाग्नेयादियागेषु आधिक्येन प्रक्षेपविधायक-त्वेऽपि प्रयाजादिषु तदितरवचनानुपलंभेन होमत्वापत्तौ मानाभावात्। अत एतादृशेषु प्रक्षेपाङ्गक एव यजिपदशक्तिग्रहानुरोधेन यजिरेव प्रक्षेपाक्षेपको वक्तव्योऽर्थवादाभावे विधिरिव प्राशस्त्यस्य। प्रापकवचनान्तरसत्वे तु अर्थवादसत्वे विधिः प्राशस्त्यस्येव नाक्षेपकः प्रयोजनाभावात्। न चार्थवादसत्वेऽभ्युदयशिरस्कत्वस्येवेह तदभावे आक्षेपेणैव प्रक्षेपप्राप्तौ निष्प्रयोजनो विशेषविधि-रिति शङ्क्यम्। विकृतावाक्षेपप्रतिबन्धद्वारा प्रक्षेपाङ्गाहवनीयप्रणयनादीनामतिदेशे सति तदाश्रित-गुणकामप्रवृत्तिप्रयोजनस्याभिक्रमाधिकरणे **कौस्तुभ** एवोक्तत्वात्। आक्षेपप्रवृत्तेः पूर्वमेव प्रक्षेप-वचनप्रवृत्त्यङ्गीकारेण द्व्यवदानमात्रविषयप्रक्षेपविधानद्वारा फलतः इतरावयवप्रक्षेपव्यावृत्ति-प्रयोजनसिद्धेश्च। आग्नेयाद्युत्पत्तिवाक्येषु प्रत्यक्षयजिश्रवणात् तत्पदशक्त्या प्रक्षेपाक्षेपे प्रमाणा-भावेन द्रव्यदेवतासंबन्धस्य याभ्यां देवतोद्देशत्यागाभ्यां विनानुपपत्तिः तावन्मात्रानुमापकत्वेऽपि प्रक्षेपाक्षेपकत्वाभावात् तत्प्राप्त्यसंभवाच्च।

अत एव **यत्प्रकाशकारैः बालप्रकाशग्रन्थे** आचारादेव प्रयाजादिषु प्रक्षेपप्राप्तिमुपपादयद्भिः आचारात्प्रक्षेपप्राप्तिखण्डनपरैतदधिकरणशास्त्रदीपिकाविरोधपरिहाराय "यत्तु शास्त्रदीपिकायां सर्व-प्रदानाधिकरणे नन्वाचारादेव होमप्राप्तिमाशङ्क्याचारस्य स्वतः प्रामाण्याभावात्, श्रुतिकल्पनस्य प्रत्यक्षश्रुतिसत्वेऽनुपपत्तेराचारप्रमाणकत्वे तस्य प्रकृतिविकृतिसाधारणत्वात्, विकृतिष्वप्युपदेशेनैव होमप्राप्तेः प्रत्यक्षत एव होमरूपद्वारलाभात् आहवनीयादीनां पवमानेष्ट्यादिषूपदेशादेवा-

पात्नीवतादौ तु **देवतासम्बन्धेनोद्देशत्यागयोरेव कल्पनात्** पर्यग्निकरणान्ताङ्गरीतिविधानेन **च प्रक्षेपानतिदेशान्न प्रक्षेपः।** गृहमेधीयादौ तु **आज्यभागपुनश्श्रवणाद्यजिश्रवणाद्वा तत्करणमिति विशेषः।** **अतश्च कृत्स्नस्यैव पुरोडाशस्य देवतायै त्यागादुपयुक्तस्य च द्रव्य-**

---

**यश्च स्वकालत्वादिति** न्यायेन प्रतिसंभवात् **तासामग्निः प्रकृतितः प्रयाजवदिति** सूत्रेणाग्नीनां प्रकृत्यतिदेशतः प्राप्तेरुपपादितस्य विरोधापत्तेश्चेति दूषितं तत् चतुरवत्तहोमविषयमेव तस्यैव चतुरवत्तोद्देशेन होमविधायकत्वेन प्रत्यक्षश्रुतित्वात्। चतुर्गृहीतवाक्यस्य होमविधायकत्वाभावेन प्रत्यक्षश्रुतित्वानुपपत्तेश्च। अत एव **तासामग्निरिति** सूत्रप्रतिपादितमग्नीनामतिदेशप्राप्तत्वमपि चतुरवत्तहोमस्यातिदेशतः प्राप्त्यभिप्रायकमेवेत्युक्तम्, तदप्याचारस्य यजिपदशक्तिनिर्णायकताद्वारैव प्रापकत्वाभिप्रायेणैव ज्ञेयम्। इतरथा पात्नीवतयागादौ पर्यग्निकरणपुनर्विधिना तदुत्तराङ्गविषयेऽतिदेशलोपेऽपि उपदेशरूपाचारप्रमाणप्रवृत्तिप्रतिबन्धे मानाभावात् प्रक्षेपप्राप्तेर्दुर्वारत्वापत्तेः। अत एव पूज्यपादैराचारात्प्रक्षेपप्राप्तिमनभिप्रेत्यैव प्रत्यक्षयज्यश्रवणादेव हेतोः तत्र तदप्राप्तिरचिरेणैवाभिधास्यते। अतो नाचारादेव प्रयाजादिषु तत्प्राप्तिः। अपि तु तन्मूलकनिर्णीतशक्तिकश्रुतयजिपदमहिम्नैवेत्येव **पूज्यपादा**भिसंहितं युक्तमिति।

यत्तु प्रक्षेपाभावेऽपि पात्नीवतयागादिषु यागस्वरूपसिद्धेर्न प्रक्षेपो यागस्वरूपान्तर्गतः किं तु देवतोद्देशपूर्वो द्रव्यत्याग एवेति **प्रकाशकारै**रुक्तं तत्परिहरति—**पात्नीवतादाविति**। न वयं यागस्वरूपान्तर्गतं सर्वत्र प्रक्षेपं वदामः येन प्रक्षेपाभावे पात्नीवतादिषु यागस्वरूपानिष्पत्तिः शङ्क्येत अपि तु यत्र यजिपदश्रवणं तत्र वृद्धव्यवहारात् प्रक्षेपान्तबोधानुरोधात् प्रमाणान्तराभावे यजिनैव तदाक्षेप्यमिति। इह तु प्रत्यक्षयज्यश्रवणात् प्रक्षेपान्तस्य नियमेन बोधे मानाभावात् आग्नेयादिवाक्यश्रुतद्रव्यदेवतासंबन्धस्येव त्यागान्तमात्राक्षेपकत्वेनैव निर्वाहे प्रक्षेपाक्षेपे नैव किंचित्प्रमाणमिति तदभावेऽपि सिद्ध्यत्येव त्यागस्वरूपमित्यर्थः। एवं प्रयाजादिष्विवोपदेशेन प्रक्षेपस्याप्राप्तिं प्रदर्श्यातिदेशेनापि तां दर्शयति—**पर्यग्निकरणेति**। कथं तर्हि 'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुं' इत्युत्पत्तिवाक्यावगतद्रव्यदेवतासंबन्धानुमिते यागे त्यागान्तमात्रस्यैवानुमानात् उपदेशेनाज्यभागपुनश्श्रवणकृतापूर्वत्वाच्चातिदेशेन च प्रक्षेपाप्राप्तौ तदनुष्ठानमित्याशङ्कां परिहरति—**गृहमेधीयादाविति**। "कस्मा इमं होष्याम इति मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवत् तं मरुद्भ्यो गृहमेधिभ्यो जुहुवुः" इत्याद्युपक्रमकतैत्तिरीयवाक्यसन्दर्भेण होमस्याज्यभागौ यजतीतिवत् पुनः श्रवणात्; **अथ वा** मरुतो गृहमेधिनो यजतीति वाक्यस्यापि पाठेन यजेः प्रत्यक्षश्रवणेन तेनैवाक्षेपात उपदेशेन तत्प्राप्तिर्युक्तैवेत्यर्थः।

**दानस्य प्रक्षेपेण प्रतिपत्तिः। उत्तरार्धदेश्च स्विष्टकृदिडादिना। न च त्यक्तस्य स्विष्टकृते पुनस्त्यागानुपपत्तिः। वचनवशेन त्यक्तस्यापि पुनस्स्वीकारेण त्यागोपपत्तेः।** अतोऽस्ति शेष **इति सिद्धम्॥ १८॥**

---

**यद्यपि** चतुस्संस्कृतमात्रपरचतुरवत्तपदस्यानर्थक्यभिया न प्रधानमात्रापूर्वसाधनलक्षकत्वमपि तु प्रक्षेपस्य विधेयस्य प्रक्षिप्यमाणप्रतिपत्तिजनकत्वसामर्थ्यात्, यावत् प्रकृताङ्गप्रधानसाधारणप्रक्षिप्यमाणद्रव्यविषयकत्वनिर्णयेन लिङ्गात् प्रकरणबाधोपपत्तेः प्रकरणस्यैकदेशेनानुग्रहसंभवाच्च। तदनुरोधेन च चतुरवत्तपदमपि अङ्गप्रधानापूर्वसाधनद्रव्यमात्रपरमेवेति **वार्तिकतन्त्रन्यायसुधा**दिग्रन्थतात्पर्यं वर्ण्यते तदापि आद्यप्रयाजत्रयार्थे जुह्वामेव चतुर्गृहीतस्य सत्वादुपांशुयाजे चतुर आज्यस्य गृह्णातीति तत्प्रकरणपठितवाक्यान्तरात् चतुर्गृहीतस्य प्राप्तावप्युत्तरप्रयाजद्वयानूयाजादिषु वाक्यान्तरस्य प्रापकस्याभावे उद्देशप्राप्त्यर्थमनारभ्याधीतवाक्येनैव तत्प्राप्तिर्वक्तव्या, न च तत्र होमत्वाभावे तत्प्राप्तिर्युज्यते। **यदि** तु नानेन प्रयाजद्वयानूयाजेषु चतुर्गृहीतप्राप्तिः। किंतु आतिथ्यागतानूयाजाभावहेतुमूलिकया अष्टपदस्य चतुष्कद्वयलक्षणयैव तत्प्राप्तिरित्युच्यते, **तावता**प्युपस्तरणाभिघारणसंपादनीयस्यैव चतुरवत्तस्यावत्तवाक्ये उद्देश्यत्वेनाज्यद्रव्यकेषु तयोरभावे उद्देश्यतावच्छेदकरूपानाक्रान्तत्वात् नावत्तवाक्येन होमप्राप्तिरिति तेषु प्रक्षेपप्राप्त्यर्थमुपपादितक्लेशाश्रयणङ्कर्तव्यमेवेति भावः।

ननु—देवब्राह्मणराज्ञाञ्च विज्ञेयं द्रव्यमुत्तमम्। इत्युपक्रम्य
साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात्।

इति वचनेन उत्तमसाहसदण्डोक्तेर्देवतार्थे त्यक्ते यजमानस्यास्वत्वाच्च पुनर्ग्रहणासंभवे कथं स्विष्टकृते पुनस्त्याग इत्यभिप्रायेण **वार्तिकसिद्धान्ते** प्रसक्तामाशङ्कामनूद्य परिहरति—**न चेति**। दण्डोक्त्यन्यथानुपपत्त्या देवतोद्देशेन त्यक्तं न पुनरादेयमित्यनुमितनिषेधस्य सामान्यरूपस्योत्तरार्धात् स्विष्टकृते समवद्यतीति प्रत्यक्षश्रुत्या सङ्कोचकल्पनात् उत्सृष्टवापीकूपादिजलस्येव पुनर्ग्रहणोपपत्तेः सर्वत्यागपक्षेऽपि स्विष्टकृद्यागोपपत्तिरिति परिहाराशयः। पञ्चमचरणसमाप्तिपर्यन्तं करिष्यमाणशेषविचारौपयिकत्वमस्याधिकरणविचारस्याधिकरणारम्भे सूचितं तदुत्तराधिकरणारम्भार्थमनुसंधत्ते—**अतोऽस्ति शेष इति**। प्रयोजनं पक्षोपपादनेनैव सुज्ञातमपि उत्तराधिकरणसूत्रचतुष्टयेनाभिधास्यमानत्वान्नोक्तम्।

---

(१९)—अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात् ॥ ४८ ॥ संस्कृतत्वाच्च ॥ ४९ ॥ सर्वेभ्यो वा कारणाविशेषात्संस्कारस्य तदर्थत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥

अत्र भाष्यकारेण शेषकार्याणामर्थकर्मत्वादेकस्मादेव हविषश्शेषकार्याणि कर्तव्यानीति पूर्वपक्षयित्वा प्रतिपत्तित्वं प्रसाध्य सर्वेभ्य इति सिद्धान्तितम्। तत् चतुर्थ एव तादृग्विषये प्रतिपत्तित्वस्य साधयिष्यमाणत्वात्पुनरुक्तत्वापत्तेः पूर्वाधिकरणप्रयोजनार्थान्येतानि सूत्राणीति वार्तिककारो व्याचख्यौ। यदि पूर्वाधिकरणे शेषकार्याणां हविरन्तराक्षेपकत्वं पूर्वपक्षे तदा स्पष्टमेव प्रयोजनम्। यदा तु शेषकार्यानुरोधेन शेषस्यापत्तं तदा तेषां परप्रयुक्तद्रव्योपजीवित्वेनाप्रयोजकत्वेप्यर्थकर्मत्वेन तुषोपवापकपालवच्छेषस्य गुणभूतत्वाद्गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वादुपादेयविशेषणत्वेन तद्गतसङ्ख्याया विवक्षितत्वाच्चैकस्मादेव करणं शेषकार्याणाम्। "सकृत्सकृत्" इति वीप्साश्रवणं तु "चतुर्थे चतुर्थेऽहन्यहीनस्य" इतिवत् प्रयोगान्तरविषयम्। सिद्धान्ते तु विद्यमानशेषत्वाख्यचातुर्थि-

---

॥ अप्रयोजकत्वादेकस्मात् क्रियेरन् ॥

अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात्, संस्कृतत्वाच्च, सर्वेभ्यो वा कारणाविशेषात् संस्कारस्य तदर्थत्वात्, लिङ्गदर्शनाच्चेति यैश्चतुर्भिस्सूत्रैः भिन्नाधिकरणता भाष्ये दर्शिता तानीत्यभिप्रेत्याह—**एतानीति**। पुनरुक्तत्वापत्तेरित्यस्याग्रे उपेक्ष्येत्यध्याहारः। **स्पष्टमेवेति**। समस्तस्य हविषः प्रक्षेपश्शेषकार्याणामर्थे हविरन्तराक्षेप इति शेषशब्दस्यान्यवाचिताङ्गीकारे पूर्वपक्षे प्रयोजनं सिद्धान्ते तु न तदिति स्पष्टमेवेत्यर्थः। **अन्याय्यत्वादिति**। सर्वान् शेषानवदाय संप्रतिपन्नदेवताकत्वेन सहानुष्ठानात् प्रधानावृत्तावप्रसक्तायां दूषणान्तरमाह—**उपादेयेति**। अर्थकर्मत्वेन द्रव्यस्य गुणत्वे सति एकस्यैवावदानात् पूर्वपक्षे सकृत्सकृदिति वीप्सानुपपत्तिः लिङ्गदर्शनाच्चेति सिद्धान्तगुणसूत्रेण प्रदर्शिता। तां कस्मिंश्चित्प्रयोगे सकृत् कस्मिंश्चित्प्रयोगे सकृदित्येवं प्रयोगान्तरविषयत्वोपपत्त्या सदृष्टान्तं परिहरति—**चतुर्थ इति**। चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यत्र वीप्साश्रवणात् एकवारमहीनचतुर्थेऽहनि षोडशिनं गृहीत्वा पुनरपि चतुर्थाच्चतुर्थेऽष्टमेहनि ग्रहीतव्य इति पूर्वपक्षं प्रापय्याष्टमस्याहीनापेक्षिकचतुर्थत्वासंभवात् वीप्सायाश्चाहीनान्तरप्रयोगाभिप्रायकत्वेनाप्युपपत्तेः न पुनर्ग्राह्यमिति दशमे सिद्धान्तितं तद्वदित्यर्थः। **शेषत्वाख्येति**। उत्पत्तौ येन संयुक्तं तदर्थं तच्छ्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिः स्यात् इति प्रतिपत्ति-

कन्यायेन प्रतिपत्तिकर्मत्वादविवक्षितसङ्ख्यशेषाख्यसंस्कार्यानुरोधेन सर्वेभ्यः करणम्। वीप्सा चोपपन्नतरा ॥ १९ ॥

## (२०)—एकस्माच्चेत् याथाकाम्यमविशेषात् ॥ ५२ ॥ मुख्याद्वा पूर्वकालत्वात् ॥ ५३ ॥

परप्रयुक्तद्रव्योपजीविनोऽर्थकर्मणश्च तुषोपवापादेरर्थेऽनेकपुरोडाशीयकपालानां मध्ये

---

कर्मत्वोपपादनपरचातुर्थिकसूत्रे शेषत्वादिना विनियोगस्य हेतुत्वेनोक्तेर्विद्यमानशेषत्वरूपेण चातुर्थिकन्यायेनेत्यर्थः। वीप्सेति। अनुपस्थितप्रयोगान्तरापेक्षयोपस्थितैकप्रयोगगततत्तदवदानाभिप्रायेणैव तदुपपत्तिर्युक्तेति तरपा सूचितम्।

यत्त्वत्र न्यायसुधाकृता निष्पन्ने प्रधाने तच्छेषद्रव्ये प्रतिपत्तिसंस्कारस्य वैयर्थ्याशङ्कोत्तरत्वेनोक्तं—यथा हविषः प्रधानार्थत्वात् प्रधानापूर्वसाधनत्वयोग्यत्वसिद्ध्यै प्रधानात् प्राक् संस्कारार्थवत्ता, तथा निष्पन्नेऽपि तदीयस्य हविषः अशुचिस्पर्शादिनोपघाते क्रतुवैगुण्यात् निष्पन्नस्यापि प्रधानापूर्वस्य गुरुशुश्रूषणादिनिष्पन्नस्य संतोषस्य कुतश्चिदपराधात् नाशवत् नाशापत्तेः तदीयत्वनिर्वृत्त्यै प्रतिपत्त्यपेक्षाशान्तेरावश्यकत्वात् यथैव सर्वस्य प्रक्रान्तस्य समाप्तेः क्रियान्तरेणाभिव्यञ्जनीयत्वेन ज्योतिष्टोमसमाप्तिरुदवसानीयया, सत्रसमाप्तिः पृष्ठशमनीयेन, संस्थाजपेन सर्ववैदिककर्मसमाप्तिः उद्यापनेन च व्रतसमाप्तिः अभिव्यज्यते, तथा द्रव्यस्य क्रत्वर्थत्वेन निर्वापादिना प्रक्रान्तस्य क्रत्वर्थत्वसमाप्तिः प्रतिपत्त्याभिव्यञ्जनीयेत्यर्थवत्त्वसिद्धिः। एतत्त्वस्माभिः तन्त्रसारे चतुर्थे विस्तरेण प्रतिपादितमित्युक्तम्। तदशुचिस्पर्शादेः क्रतुवैगुण्यजनकत्वे मानाभावेन जातापूर्वनाशकत्वानापत्तेः समाप्तेरेवापेक्षितत्वे प्रमाणाभावात् तदभिव्यञ्जकत्वकल्पनेनार्थवत्त्वस्यायुक्तत्वादुपेक्षणीयमिति चतुर्थ एवाभिधास्यते। अतस्तदधिकरणवक्ष्यमाणरीत्या प्रतिपत्तिसंस्कारस्य दृष्टार्थत्वेऽपि तज्जन्यनियमादृष्टस्योत्पत्त्यपूर्वोत्पत्त्यनुकूले यागनिष्ठयोग्यताजनन एवोपयोगान्न वैयर्थ्यम्। अत एव प्रतिपत्तिनियमलोपात् वैगुण्यमित्युक्तं शास्त्रदीपिकायामिति ध्येयम्।

---

### ॥ एकस्माच्चेद्याथाकाम्यमविशेषात् ॥

यदत्र प्राचीनैः कृत्वाचिन्तया सर्वप्रदानाधिकरणपूर्वपक्षप्रयोजनविचारस्य पुरोडाशकपालेऽर्थवत्त्वं दर्शितं तत्रैवायं विचारो युक्तः, न तु पूर्वपक्षप्रयोजनमाश्रित्य तत्कथनस्य व्यर्थत्वादित्यभिप्रेत्य परप्रयुक्तद्रव्योपजीविकर्मप्रसङ्गेन असङ्गतिं परिहरन् तत्रैव विचारं दर्शयति—परप्रयुक्तेति।

**एकस्मिन् कपाले गृह्यमाणे**ऽनियमप्राप्तावाग्नेयस्य मुख्यत्वेन **प्रथमोपस्थितत्वात्तदतिक्रमकारणाभावेन तदीयकपालस्यैव ग्रहणम्। ग्राह्यतावच्छेदकं च प्रथमोपस्थितत्वं न त्वाग्नेयत्वम्। अतो विकृतावन्यविकारस्य तत्त्वे तदीयमेव कपालं ग्राह्यम्। यत्त्वत्र मूले** सङ्गतिलोभेन **कृत्वाचिन्तया यदा शेषकार्यानुरोधेन यस्य कस्यचित्स्थापनं तदा कस्येत्यपेक्षायां मुख्यस्येति सिद्धान्तितम्। तदाग्नेयवेलायां शेषकार्याणामबुद्धिस्थत्वाच्छेषस्थापनाक्षेपानुपपत्तेश्शेषकार्यानुष्ठानवेलायां चान्त्यस्यैवोपस्थितत्वेन तस्यैव स्थापनापत्तेरुपेक्षितम्।**

---

तुषोपवापकर्मणस्संस्कारकर्मत्वे हि यावत्कपालगतसंस्कारार्थं सर्वेषामेव ग्रहणं स्यात् तदा कस्य पुरोडाशस्येति संशयानुपपत्तिरतोऽर्थकर्मणश्चेत्युक्तम्। अत एव तुषोपवापं प्रत्युपादीयमानत्वेन विवक्षितैकसंख्यतत्कपालोपादाने प्राप्ते कस्येति संशय उपपन्न इत्यर्थः। **अनियमप्राप्ताविति।** पुरोडाशकपालस्य संस्कार्यत्वाभावेनामुख्यत्वात् मुख्यानुग्राह्यत्वरूपस्य **मुख्यं वा पूर्वं चोदनाल्लोकवत्** इति द्वादशाधिकरणोक्तमुख्यत्वनियमन्यायस्याप्रवृत्तेर्वसन्ताय कपिञ्जलानालभेतेत्यत्र त्रीननुपादाय चतुर्णामुपादानासंभवात् तैरेव त्रिभिर्बहुत्वोपपत्तौ नाधिकानां ग्रहणमित्येवं **प्रथमं वा नियम्येत कारणादतिक्रमः स्यादि**त्येकादशाधिकरणस्यापीह प्रथमपुरोडाशकपालोपादानं विनापि द्वितीयपुरोडाशकपालोपादानसंभवेनाप्रवृत्तेश्च यस्य कस्याप्येकतरस्य कपालस्योपादानमित्येवमनियमपूर्वपक्षप्राप्तावित्यर्थः। **आग्नेयस्य मुख्यत्वेनेति।** यद्यपि तुषोपवापकाले आसादितानि कपालानि सर्वाणि मिलितानि सन्ति कपालोपधानोत्तरमेव एतावन्त्याग्नेयस्येति निश्चय इति न ततः पूर्वभाविनि तस्मिन् आग्नेयसंबन्धित्वेन कपालविधारणं संभवति तथापि मिलितेषु मध्ये यदेकस्य पृथक्कृत्य ग्रहणं तदाग्नेयस्यैव मुख्यत्वादुपस्थित्या तस्यैवेति निर्धारणबुद्ध्या तुषोपवापानुष्ठानं कर्तव्यमित्याशयः। तत्फलञ्चास्यैवाग्नेयार्थत्वेनोपधानं कदाचिदेतन्नाशे आग्नेयार्थत्वेनैव पुनस्संपादनम्। **याज्ञिकाचारोऽप्येवमिति। सङ्गतिलोभेनेति।** शेषकार्याणामेव पूर्वप्रकृतत्वात् तत्रैव विचारकरणे विशेषत उपस्थितस्यात्यागादनुपस्थितसंग्रहापत्त्यभावात् अवान्तरसङ्गतिलोभेनेत्यर्थः। **अन्त्यस्यैवेति। एतेन** प्रधानप्रयुक्तस्यैव हविषः शेषस्थापनाक्षेपात् प्रयोजकप्रधानोपस्थितिक्रमेण तद्धविरुपस्थितिस्तत्क्रमेण च तच्छेषा अप्युपस्थिताः। तत्र पूर्वशेषातिक्रमेणोत्तरशेषप्रतीक्षणायोगात् तत्स्थापनाक्षेपानुपपत्तेः मुख्यशेषस्थापनाक्षेप इति **न्यायसुधाकाराद्युक्तमपास्तम्।** प्रधानप्रयुक्तहविःशेषस्थापनाक्षेपेऽपि प्रधानोपस्थितिक्रमस्य तद्धविः शेषाक्षेपोपजीवकत्वकल्पने मानाभावाद्यस्यैव प्रधानप्रयुक्तस्य हविष उपस्थितिद्वारा शेष उपस्थितः तदाक्षेपेणैव शेषकार्यविध्यनुपपत्तेः क्षीणत्वोपपत्तौ अन्त्यप्रधानप्रयुक्तहविः शेषाक्षेपस्यापि युक्तत्वादिति भावः। एतच्चतुर्थाकरणवद्यागातिरिक्तविषयम्। तत्र तदनुरोधेनाग्नेयशेषस्थापनस्य प्रागेव सूचितत्वादिति ध्येयम्। एवं **मुख्याद्वा पूर्वकालत्वादिति** सिद्धान्तसूत्रगतमुख्यशब्दस्यापाततो भाष्यवार्तिकन्यायसुधास्वारस्य-

तत्रत्यमुख्यपदं वा प्रथमोपस्थितपरं, ततश्च यस्यैव यत्र प्रथमोपस्थितिराद्यस्यान्त्यस्य वा तस्यैव तत्र ग्रहणमिति न्यायशरीरार्थः ॥ २० ॥

---

## (२१)—भक्षाश्रवणाद्दानशब्दः परिक्रये ॥ ५४ ॥ तत्संस्तवाच्च ॥ भक्षार्थो वा द्रव्ये समत्वात् ॥ ५६ ॥ व्यादेशाद्दानसंस्तुतिः ॥ ५७ ॥

आग्नेयस्य पुरोडाशस्य चतुर्धाकृतस्य "इदं ब्रह्मण इदं होतुः" इत्यादिमन्त्रवर्णकल्पितो विभागरूपो व्यादेशश्श्रुतः स किं दक्षिणारूपतया परिक्रयार्थस्सन् ऋत्विक्संस्कारार्थः उत

---

मनुगृह्याग्नेयपरत्वं प्रकाशकारैर्यदुक्तं तन्निरस्य सूत्रभाष्यादिग्रन्थानां मदुक्तरीत्यैवमपि तात्पर्यं वर्णनीयमित्याह—तत्रत्यमिति। अत्र प्रकाशकारैर्यदा प्रधानोपस्थितिक्रमेण हविः शेषोपस्थितिः तत्र पूर्वशेषातिक्रमेणोत्तरशेषप्रतीक्षणायोगात् तत्स्थापनाक्षेपानुपपत्तेः मुख्यशेषस्थापनाक्षेप एवेति प्रथमं वेत्येकादशाधिकरणन्यायप्रवृत्तिरविहता। कपिञ्जलेष्वपि हि प्रयोगकाले त्रयानुष्ठानं पूर्वमुपस्थितमतिक्रम्य न बहुत्वविधिर्यातीत्येव न्यायस्वरूपं नान्यदित्युक्तम्। तेषां मते पुनरत्र सूत्रेण तथैव सिद्धान्तकरणे पौनरुक्त्यापत्तिः स्पष्टमेव दूषणम्। मम तु तत्रोपस्थितस्य प्रथमस्यैव ग्रहणे प्रतिपादितेऽपीह प्रथमत उपस्थितमात्रस्य प्रथमस्यान्त्यस्य वापि ग्रहणमित्यर्थभेदप्रतिपादनात् न तदापत्तिर्दूषणमिति न्यायशरीरार्थ इति पदेन सूचितम्।

---

### ॥ भक्षाश्रवणात् ॥

परप्रयुक्तद्रव्योपजीविकर्मप्रसङ्गेन तुषोपवापसाधनीभूतपुरोडाशकपालोपादानविशेषे कथंचित् सर्वप्रदानाधिकरणपूर्वपक्षौपयिकतया चिन्तिते पुनः पुरः स्फूर्तिक एव शेषकार्यविषयो विचार इति प्रसङ्गादेतद्विचारारम्भे स्पष्टत्वात्सङ्गतिमनभिधायैव विषयवाक्यं दर्शयति---आग्नेयस्येति। आदिपदेनेदमध्वर्योरिदमग्नीध इति मन्त्रद्वयं गृह्यते। इदंशब्दनिर्दिष्टस्य पुरोडाशद्रव्यस्य ब्रह्मादिभ्यो विभजनाभावे षष्ठ्युपात्तब्रह्मादिसंबन्धान्वयानुपपत्तेः ब्रह्मण इत्यादिनिर्देशेन समर्पणरूपविभागाक्षेप इत्यभिप्रेत्याह— मन्त्रवर्णेति। पूर्वत्र मन्त्रवर्णे विभागस्यैवाम्नानात् विभागाक्षेपे उक्तेप्यादेशसमाख्याया विभज्यादेश इत्यवयवार्थप्रदर्शनार्थं व्यादेशस्य विभागरूपत्वमुक्तम्। स किमिति। सिद्धान्तेपि ऋत्विङ्नियमांशेन भक्षणस्य ऋत्विक्संस्कारकत्वाङ्गीकारेणाविशेषा-

भक्षणरूपतया प्रतिपत्त्यर्थस्सन् शेषसंस्कारार्थ इति चिन्तायां—भक्षस्याश्रवणात् 'ब्रह्मणः' इत्यादिषष्ठीश्रुत्या च वासिष्ठादिवत् ब्रह्मादीनां स्वामित्वावगमात्तस्य च दानमन्तरेणानुपपत्ते-स्तस्य च त्यक्तेऽपि पुरोडाशे स्विष्टकृद्वदेव स्वीकारकल्पकत्वोपपत्तेस्सोमचमसवत् ऋत्विक्संस्कारार्थं दक्षिणादानविधिरेवात्र कल्पयते। अत एव "एषा वै दर्शपूर्णमास-योर्दक्षिणा" इत्यपि लिङ्गमुपपद्यते। अतः परिक्रयार्थ इति प्राप्ते—

सकलस्यैव पुरोडाशस्याग्नये त्यक्तत्वादनीशो यजमानो न शक्नोत्यन्यांस्तेन परिक्रेतुम्। अतस्तव मते पुनस्स्वीकारो दानमानतिश्चेत्यनेककल्पना। स्विष्टकृति तु यागस्य श्रुतत्वात् स्वीकारकल्पनेऽपि न दोषः। अतो वरं भक्षणकर्तृत्वमेव सम्बन्धसामान्यवाचिषष्ठ्या अर्थं परिकल्प्यापेक्षितशेषप्रतिपत्तिरूपं भक्षणमेव ब्रह्मादिकर्तृकं मान्त्रवर्णिकविधिना विधीयते। अवश्यं चानतिरप्यनेन भक्षणोपयोगिन्येव जननीया न तु गृहसुवर्णादिवत्क्रियान्तरो-पयोगिनी अयोग्यत्वात्। अतश्चावश्यकत्वाद्भक्षणमेव सम्बन्धघटकत्वेन कल्प्यते न क्रियान्तरं समर्पणादिगौरवात्। अतश्च ब्रह्मसम्बन्धिसमर्पणमेव शेषप्रतिपत्तिः। तेन तु गृहीत्वास्वयमन्यद्वारा वा भक्षणं सम्पादनीयमित्यप्यपास्तम्। आवश्यकभक्षणस्यैव

---

शङ्कां निरसितुं परिक्रयार्थः स्यादित्युक्तम्। तथा चेदं समर्पणं परिक्रयार्थं सत् ऋत्विङ्-निष्ठानतिरूपसंस्कारार्थमित्यर्थः। समर्पणस्य समर्पणीयद्रव्यगततृप्तिजनकत्वलिङ्गेन भक्षणार्थत्वा-वगमात् तद्द्वारा पुरोडाशप्रतिपत्त्यर्थत्वात् भक्षणाश्रवणेऽपि न परिक्रयार्थत्वं स्यादित्याशङ्कां परिहर-न्नाह—षष्ठीश्रुत्येति। तथा च षष्ठ्याःस्वामित्वप्रतिपादकतया तृप्तिजनकत्वलिङ्गस्य बाधात् आनत्यर्थत्वेऽपि लिङ्गस्यात्यन्तबाधाभावाच्च न भक्षणद्वारकत्वमात्रेण प्रतिपत्त्यर्थत्वमित्यर्थः। कथं पुरोडाशैकदेशमात्रेणानतिजननासमर्थेन परिक्रयः स्यादित्याशङ्कां परिहरति— **सोमचमसवदिति**। तथा **सोमचमसमिति** दशमतृतीयपादाधिकरणे सोमचमसस्य ब्रह्मभागनिवर्तकत्वमुत सर्वर्त्विक्-दक्षिणानिवर्तकत्वमित्येवं संशयपूर्वकविचारकरणात् यथैव सोमचमसस्यानत्यसमर्थस्यापि भृतित्वमङ्गीकृतं तथेहाप्युपपद्यत इत्यर्थः। ननु षष्ठ्याः स्वामित्वार्थकत्वेऽपि दृष्टार्थत्वस्यान्यतर-नियमेन लाघवस्यापेक्षितविधित्वस्य चोपपत्तेः अनेन द्रव्यविभागेन दानद्वारा होत्रादीन् संस्कुर्यादिति विधिकल्पनं विहाय होत्रादिरिदं विभक्तं भक्षयेदिति विधिकल्पनायामेव किं नियामकमित्यत आह —**अवश्यं चेति**। दक्षिणात्वेन दीयमानस्य पुरोडाशैकदेशस्योपकारजननेनैवानतिकरत्वात् अन्ने च स्वभावेनैव भक्षणद्वारोपकारकत्वस्य दृष्टत्वात्, प्रत्युत तदभावे क्षणेनैव कालान्तरे तस्यानुपभोग्यतयाऽनुपकारकत्वस्यैवापत्त्या गृहसुवर्णादिवदन्यक्रियान्तरद्वारा तदनुपपत्तेरन्ततो गत्वा आवश्यकत्वेनानत्यर्थभक्षणे कल्प्यमाने प्रथमत एव तस्य भक्षणद्वारा शेषार्थत्वकल्पनं युक्तं, न तु

**तत्कर्तृकस्य** प्रतिपत्तित्वोपपत्तौ **क्रियान्तरकल्पने गौरवात्। दक्षिणाश्रुतिस्त्वानुषङ्गिकानति-साधनत्वादर्थवादः ॥ २१ ॥**

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां**
**तृतीयाध्यायस्य चतुर्थः पादः.**

---

मध्ये दक्षिणार्थत्वेन दानसाधनत्वस्यापि गौरवापत्तेरित्यर्थः—**तत्प्रतिपत्तित्वोपपत्ताविति।** **यद्यपि** ब्रह्मादीनामपि तृप्तिजननात् भक्षणद्वारैव द्रव्यस्य ब्रह्माद्युपकारकत्वमेवास्तु न द्रव्यप्रति-पत्त्यर्थत्वमपि। तथा च ग्रहनयनेनापि ग्रहे भक्षणेन तदुपकारसिद्धेः नान्तः प्रयोगं भक्षणसिद्धि-**स्तथापि** अपेक्षितद्रव्यप्रतिपत्त्यपेक्षया भक्षणस्य द्रव्यार्थत्वे संभवति नानपेक्षितब्रह्मार्थत्वकल्पनं युक्तम्। प्रतिपत्तिमपेक्षमाणेन द्रव्येण प्रयुक्तं भक्षणं नान्तरीयकतया भवति ब्रह्माद्युपकारकमिति तत्कर्तृनियमांशेन तेषां तृप्तिः फलमिति मुख्यतया द्रव्यसंस्कारकत्वेन विधीयमानं भक्षणमन्तः-प्रयोगमेवानुष्ठेयम्। अत एव द्वादशे सायमारण्याशनवत् इडादिशेषभक्षोऽपि ज्योतिष्टोमाङ्गेषु दर्शपूर्णमासविकारेषु अतिदेशतः प्राप्तः पयोव्रतं ब्राह्मणस्येति विहितपयोव्रतेन निवर्त्यत इति पूर्वपक्षं प्रापय्य शेषभक्षस्य द्रव्यप्रतिपत्त्यर्थत्वेन क्रतुयुक्तपुरुषसंस्कारार्थव्रतादन्यत्वात्, अन्यो-पकारकेणान्योपकारकस्यानिवृत्तेः न तन्निवर्तकत्वमिति **नानार्थत्वादिति** सूत्रेण सिद्धान्तितम्। अतो न द्रव्यप्रतिपत्तिरूपसंस्कारव्यतिरेकेण केवलं ब्रह्माद्युपकारकत्वमिति **बौधायनीयानां** चतुर्धाकृतस्य परिक्रयार्थत्वमङ्गीकृत्य दक्षिणादानरूपेणानुष्ठानं तदेतदधिकरणपूर्वपक्षमूलमित्युपेक्ष्यमित्याशयः। एतेन प्रयोजनमपि व्याख्यातम्।

**इति श्रीपूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीखण्डदेवान्तेवासि-**
**कविमण्डनशंभुभट्टविरचितायां भाट्टदीपिका-**
**प्रभावल्यां तृतीयाध्यायस्य चतुर्थः पादः**
**तेन च पूर्वार्धं समाप्तम्**

---

# तृतीयाध्यायस्य पञ्चमः पादः

(१)—आज्याच्च सर्वसंयोगात् ॥ १ ॥ कारणाच्च ॥ २ ॥ एकस्मिन् समवत्तशब्दात् ॥ ३ ॥ आज्ये च दर्शनात्स्विष्टकृदर्थवादस्य ॥ ४ ॥ अशेषत्वात्तु नैवं स्यात्सर्वादानादशेषता ॥ ५ ॥ साधारण्यान्न ध्रुवायां स्यात् ॥ ६ ॥ अक्तत्वाच्च जुह्वां तस्य च होमसंयोगात् ॥ ७ ॥ चमसवदिति चेत् ॥ ८ ॥ न चोदनाविरोधाद्धविः प्रकल्पनाच्च ॥ ९ ॥ उत्पन्नाधिकारात्सति सर्ववचनम् ॥ १० ॥ जातिविशेषात्परम् । अन्त्यमरेकार्थम् ॥ १२ ॥

उपांशुयाजप्रयाजाज्यभागानूयाजादिद्रव्याणां जौहवादीनां स्विष्टकृदिडादीनि शेषकार्याणि

---

॥ आज्याच्च सर्वसंयोगात् ॥

पूर्वपादे शेषकार्याणि शेषप्रतिपत्त्यर्थानीति स्थिते शेषचिन्तनप्रसङ्गादेव पादान्तरारंभे सति भाष्यकारादिभिर्यदुपांशुयाजाज्यापादानक एव शेषविचारो दर्शितः तस्याज्याच्च सर्वसंयोगादिति पूर्वपक्षसूत्रे सर्वस्याप्याज्यस्यापादानत्वप्रतीतेरुपलक्षणत्वं सूचयन् प्रसक्ताज्यमात्रापादानकशेषकार्यविषयमात्रमुदाहरणत्वेन दर्शयति—**उपांशुयाजेति**। परिगणनेन पत्नीसंयाजाज्याद्वाचनिकेडासत्त्वेन तद्व्यावृत्तौ सूचितायां आदिपदं पार्वणहोमद्रव्यसंग्रहार्थं चतुर्धाकरणस्याग्नेयार्थत्वेन प्राशित्रहरणस्य पुरोडाशसंयुक्तत्वेन श्रवणान्न विचारविषयत्वमिति सूचयितुमाह —**स्विष्टकृदिडादीनीति**। आदिपदेन शंयुवाककालभक्षस्य संग्रहः "देवा वै स्विष्टकृतमब्रुवन् हव्यं नोवहेति सोऽब्रवीद्वरं वृणे भागो मेऽस्त्विति वृणीष्वेत्यब्रुवन् सोऽब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यति" इति वाक्यशेषसहितविधिना स्विष्टकृतो हव्यवहनकर्तृत्वेन स्वस्वहविरुत्तरार्धापादानकद्रव्यदानप्रतीतेरग्निदेवताकहविरुत्तरार्धादिवोपांशुयाजाद्याज्यस्यापि तत्तद्देवताकस्य तेन वहनस्य कृतत्वात्तदुत्तरार्धादपि द्रव्यग्रहणमावश्यकमित्यभिप्रायेण स्विष्टकृदर्थे शेषग्रहणे प्रमाणवाक्यं

कर्तव्यानि उत नेति चिन्तायां—"उत्तरार्धात्सकृत्सकृत्समवद्यति" "सर्वेभ्यो हविर्भ्यः समवद्यति" इत्यादिवचनेभ्यः "वेद्यां हवींष्यासादयति" इतिवदङ्गप्रधानसाधारणहविरर्थत्वप्रतीतेः कर्तव्यानीति प्राप्ते—

**यत्तावदेषां तत्तद्यागेष्वसाधारणं प्रयाजानूयाजेषु जौहवाद्येकदेशरूपं आज्यभागोपांशुयाजेषु च वाचनिकं ध्रौवापादानकं** चतुर्गृहीतं **तस्य** तत्तद्यज्या**क्षिप्तप्रक्षेपरूपविशेषप्रतिपत्तिसत्त्वात्, "**चतुर्गृहीतं **जुहोति" इति भाष्यकारोदाहृतोपांशुयाजावान्तरप्रकरणस्थवाक्यादेव**

---

दर्शयति—**उत्तरार्धादिति**। इडावदानमप्याज्यात् कर्तव्यमित्यर्थे प्रमाणमाह—**सर्वेभ्य इति**। **इतिवदिति**। हविःपदसङ्कोचे मानाभावात् तत्रत्यं हविःपदं हविर्मात्रपरं तद्वदिहापीत्यर्थः। **एकदेशरूपमिति**। यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति वाक्यविहितं जौहवमाज्यमवयवशः-प्रयाजत्रयसाधनमित्येकैकस्मिन् प्रयाजे एकदेशरूपमित्यर्थः। एवमनूयाजत्रयार्थे औपभृतमप्यवयवशःसाधनत्वादेवैकैकस्मिन् एकदेशरूपमादिपदेनोक्तम्। **चतुर्गृहीतमिति**। जुह्वां होमार्थः इति शेषः। **तत्तद्यजीति**। सर्वप्रदानाधिकरणदर्शितरीत्येति शेषः। अनारभ्याधीतस्य चतुर्गृहीतवाक्यस्य चातुर्थिकन्यायेन प्रतिपत्तिविधायकतानिराकरणेन साधनतया चतुर्गृहीतविधायकत्वाङ्गीकारात्। "इह पुनर्होमसंयोगश्चतुर्गृहीतं जुहोति" इति भाष्यलिखितं यदि तदेव वाक्यं तस्य प्रतिपत्तिविधायकत्वासंभवेन शेषाभावोपपादकत्वायोगात् वाक्यान्तरत्वेनैव विरोधपरिहारं सूचयन् अस्य प्रक्षेपरूपप्रतिपत्तिविधायकत्वमाह—**चतुर्गृहीतं जुहोति इति**। **यद्यपि** वाक्यान्तरत्वकल्पनाभावेऽपि चतुर आज्यस्य गृह्णातीत्युपांशुयाजप्रकरणाधीतवाक्यविहितचतुर्गृहीतसाधनत्वानुरोधेनापि सर्वस्य होमप्राप्तेः शेषाभावोपपादनसंभवोऽस्त्येव। अत एव समिष्टयजुर्होमे ध्रौवशेषस्य साधनत्वेन विधानाश्रयणेनार्थकर्मत्वस्वीकारपक्षे सुतरां शेषाभावो **वार्तिके** उक्तः। नहि तदानीमपि सशेषहोमे किञ्चित्प्रमाणमस्ति। अत एव भाष्यलिखितमप्येतद्वचनं स्पष्टतया प्रतिपत्तिविधायकमिति हेतोरेवोपेक्ष्य चतुरवत्तपदस्य चतुः संस्कृतद्रव्यमात्रपरताभिप्रायेण चतुरवत्तं जुहोतीत्येव उपांशुयाजाज्यप्रतिपत्तिविधायकत्वेनापि निस्सन्दिग्धमुदाहृतं **वार्तिके**। तन्मूलञ्चा**वत्तत्वाच्च जुह्वां तस्य च होमसंयोगादिति** सिद्धान्तसूत्रे जुह्वां गृहीतस्य होमसंयोगोपपादनपरेऽवत्तत्वादिति हेतूपादानम्। अतश्चतुर्गृहीतस्य साधनत्वेऽपि समग्रेणैव तेन होमोपपत्तेः शेषाभावसंभवात् न वाक्यान्तरत्वकल्पना युक्ता, **तथापि** दशमाष्टमपादगतसाप्तदश्यवन्नियम्येतेत्यधिकरणवक्ष्यमाणरीत्या वार्तिककारमते चतुरवत्तस्योपस्तरणादिसंस्कृतस्यैवोद्देशेन होमस्य चतुरवत्तवाक्येन विहितस्य उपस्तरणाद्यभाववति उपांशुयाजाज्ये अप्राप्तेस्तदर्थं वाक्यान्तरकल्पनं आवश्यकमेव। अत एव **शास्त्रदीपिकाया-**

तत्सत्त्वाद्वा न सामान्यविहितविद्यमानशेषोपक्षीणस्विष्टकृदादिप्रतिपत्तिग्राहकता। अत एव यत्र प्रयाजशेषाभिघारणादौ विशिष्यैव तद्विधानं तत्रागत्याऽवयवशस्तयोस्समुच्चयः। न चैवमाग्नेयस्यापि विशिष्य चतुर्धाकरणभक्षणरूपप्रतिपत्तिविधानात् स्विष्टकृदाद्यकरणापत्तिः, तत्र भक्षणस्य कल्प्यत्वेन तस्यापि विलम्बोपस्थितिकत्वेन तुल्यत्वात्। नापि तत्तदुपादानभूतध्रौवाज्यात् स्थाल्याज्याद्वा तत्करणं, तयोः "सर्वस्मै वा एतत्" इत्यादिवाक्यायज्ञादिरूपकरिष्यमाणकार्यार्थत्वस्याप्यवश्यंभावेनाकीर्णकरत्वाभावात्। न चाकीर्णकरत्वाभावेऽपि आज्यैळा(डा)वन्मध्य एव प्रतिपत्तिः, तत्राग्रे स्थाल्याज्यस्य पिष्टलेपफलीकरणाद्युपयोगसत्त्वेऽपि वचनादेव पत्नीसंयाजावयवशेषस्यैव प्रतिपत्त्युपपत्तावपि प्रकृते तादृश-

---

मुपांशुयाजे नावत्तवाक्याद्धोमप्राप्तिः, किंतु चतुर्गृहीतवाक्यादेवेति दशमे वक्ष्यते। अतो युक्तमेव वाक्यान्तरत्वमुक्तमिति ध्येयम्। यदि शेषकार्यविधिः कथञ्चित् शेषसाकाङ्क्ष एवावतिष्ठेत् तदाऽगत्या आज्यशेषोऽपि तदनुरोधेन स्थाप्येत न तु तदस्ति तस्य पुरोडाशादिशेषैरपि निराकाङ्क्षत्वसंभवात् इत्यभिप्रेत्याह—**न सामान्येति**। अत एव यत्र विशेषविषयके शेषविधौ नान्यतो नैराकाङ्क्ष्यं तत्र प्रक्षेपप्रतिपत्तेर्यदशेषविषयत्वं तस्य संकोचः स्वीक्रियेतैवेत्याह—**अत एवेति**। तद्विधानं, प्रक्षेपप्रतिपत्तिसत्त्वेन तदपेक्षाभावेऽपि प्रतिपत्त्यन्तरविधानमित्यर्थः। **तयोरिति**। न चैवं चतुर्धाकरणभक्षणव्यतिरिक्तानां प्रतिपत्तीनामविशेषप्रवृत्तविधित्वानुपपत्त्या समुच्चयसंभवेऽपि चतुर्धाकरणभक्षस्याग्नेयमात्रविषयत्वात्तेनैव निश्शेषप्रतिपत्तिसिद्धौ स्विष्टकृदादीनामन्यविषयत्वापत्त्या आग्नेयविषयत्वं न स्यादित्याशङ्कामनूद्य परिहरति—**न चेति**। **कल्प्यत्वेनेति**। चतुर्धाकरणस्य विशेषविषयत्वेऽपि भक्षणस्येहाश्रुतत्वेन व्यादेशान्यथानुपपत्त्या कल्प्यत्वस्य साधितत्वात् सामान्यविहितानामपीडाभक्षणादीनां प्रतिपत्तिरूपत्वस्य प्रत्यक्षश्रुतत्वेन एतत्प्रवृत्तेः पूर्वमश्रुतभक्षणकल्पकविधेः प्रवृत्त्यसंभवेनास्याः प्राबल्येन सामान्यप्रतिपत्तिबाधकत्वं, विलम्बोपस्थितेरुभयत्रापि तुल्यत्वादित्यर्थः। **यज्ञादीति**। आदिपदेनाज्यस्थालीस्थाज्येन यत् ध्रुवादिपूरणङ्कार्यं तस्यापि संग्रहः। तथा च यस्तत्तदुपांशुयाजाद्याज्यशेषत्वेन स्थितो भवेत् तस्य प्रतिपत्त्यपेक्षा स्यादपि। न हि ध्रुवायामाज्यस्थाल्यां वा तदीयत्वेन शेषोऽस्ति, सर्वार्थत्वेन स्थितत्वात्। अतो न प्रतिपत्त्यपेक्षशेषोऽत्रास्तीति भावः। नन्वापराग्निकहोमेषु आज्यस्थालीगताज्यस्यैव करणत्वनियमात् पत्नीसंयाजपिष्टलेपफलीकरणहोमयोरापराग्निकत्वेनाज्यस्थालीगताज्यस्यैव प्राप्तेः पत्नीसंयाजोत्तरं पिष्टलेपफलीकरणहोमानुष्ठानेन तत्रोपयोक्ष्यमाणेऽपि तदाज्ये सति पत्नीसंयाजाव्यवधानेन करिष्यमाणेडायां प्रतिपत्त्यपेक्षस्याशेषभूतस्यापि तस्य ग्रहणं तथैव ध्रौवाज्यस्थालीगताज्ययोरपि मध्ये स्विष्टकृदादिकार्यार्थं ग्रहणमस्त्वित्याशङ्क्य परिहरति—**न चाकीर्णेति**। **पत्नीसंयाजावयवशेषेति**। हविरभिघारणानुरोधेन प्रयाजाज्य-

**वचनाभावेन साधारणद्रव्यस्य प्रतिपत्त्ययोग्यत्वात्। न च सर्वकार्यान्ते** क्रमं बाधित्वाऽपि **प्रयोजनवशेन तत्करणं, समिष्टयजुरादिविशिष्ट**प्रतिपत्त्यन्तर**विधानेन तत्र तदप्राप्तेः। अतश्शेषाभावान्न शेषकार्याणि॥ १॥**

---

स्यावयवशः प्रक्षेपवदिहापि पत्नीसंयाजार्थत्वेन स्थितस्याज्यस्थालीगताज्यस्यावयवश एव पत्नीसंयाजार्थं ग्रहणोपपत्त्या उर्वरिततदवयविभूतशेषेणेडोपपत्तावपि वचनाभावेऽन्यार्थस्य प्रतिपत्त्ययोग्यत्वमित्यर्थः। वस्तुतस्तु पत्नीसंयाजशेषत्वेन रूपेण इडायामाज्यग्रहणविधेरभावादाज्यस्थालीगतपत्नीसंयाजावयविभूतशेषग्रहणे मानाभावात् नास्यां तच्छेषस्य ग्रहणं युक्तं, किन्त्वाज्यस्थालीगतस्येतरार्थे इवेडार्थेऽपि तस्य भिन्नस्यैव ग्रहणं; तस्यैव चेडासंस्कृतस्य द्रव्यस्यास्तु नाम भक्षणं प्रतिपत्तिरिति ध्येयम्। **क्रमं बाधित्वेति।** यद्यपि पाठक्रमवशात् प्रधानयागानन्तरं स्विष्टकृदाद्यनुष्ठानं प्राप्तं **तथापि** सर्वहविः संस्काररूपप्रयोजनानुरोधप्राप्तार्थक्रमेण तं बाधित्वोपांशुयाजाज्यप्रतिपत्त्यनुरोधादन्तेऽनुष्ठानं भवत्वित्याशङ्कार्थः। **समिष्टयजुरादीति। यद्यपि** समिष्टयजुर्जुहोतीति विहितस्य होमस्य ध्रौवसाधनकस्यार्थकर्मत्वमेव प्राप्नोति न प्रतिपत्तिकर्मत्वमिति तदन्त एव शेषकार्यानुष्ठानं प्राप्येतैवेत्याशङ्क्य 'सर्वस्मैवा एतद्यज्ञाय गृह्यते' इति तैत्तिरीयवाक्येन सर्वयज्ञार्थत्वेन विनियुक्तस्य यजतिचोदनाचोदितेषु साधनत्वेन प्राप्तावपि जुहोतिचोदनाचोदिते समिष्टयजुर्होमे साधनतया प्राप्त्यभावात् नार्थकर्मत्वमित्यवशिष्टध्रौवप्रतिपत्त्यर्थत्वमेव तस्य। एवं च कृतार्थस्य सर्वस्यैव प्रतिपत्त्यपेक्षस्य प्रतिपत्तिविधानं स्वभावादेव कृत्स्नविषयं भवतीति तयैवापेक्षाशान्तौ इतरप्रतिपत्तीनां बाध एवेति **वार्तिके** साधितं **तथाप्येतत्** ध्रुवया समिष्टयजुर्जुहोतीति ध्रौवप्रापके **आपस्तम्बवचने** सत्येव युक्तमन्यथा ध्रौवस्य सर्वस्मैवेति वाक्यान्तरेणाप्राप्तौ प्रतिपत्तित्वस्याप्यनुपपत्तेः। एवं च यद्यपि तद्वचने ध्रुवाया एव साधनत्वमिति न प्राधान्यं तथापि ध्रुवायां साधनत्वविधानबलादेव तदीयकार्यान्तराभावज्ञापनद्वारा व्यर्थावस्थानसंभावनयाऽपेक्षितप्रतिपत्तिसमर्पकत्वेन दृष्टार्थत्वे संभवत्यर्थकर्मत्वस्यायुक्तत्वात् ध्रौवाज्यस्य प्राधान्यमङ्गीकृत्य प्रतिपत्तित्वमेवेत्यभिप्रेत्याह—**प्रतिपत्त्यन्तरेति।** यद्यपि जुह्वा इव होमसाधनत्वमात्रं ध्रुवायाः प्रतीयते तच्च तद्गताज्यस्य स्विष्टकृदादिशेषकरणेन तस्याः रिक्ततापादनेनैव सिद्ध्यतीति न समिष्टयजुषस्तत्प्रतिपत्तित्वसाधकं **तथापि** ध्रुवाया ग्रहणे आवश्यके सति तद्गताज्येनैव उपादानलाघवानुरोधेन समिष्टयजुर्होमोपपत्तावाज्यान्तरग्रहणे मानाभावादस्यैव प्रतिपत्तित्वेन ध्रुवासाधनत्वस्य तद्गताज्यस्याकीर्णकरतापरिहारस्य चोपपत्तेर्नेतरशेषकार्याणां क्रमबाधो न्याय्य इति भावः। पक्षद्वयोपपादनेनैव प्रयोजनं स्पष्टमिति सूचयितुं सिद्धान्तमुपसंहरति—**अत इति।**

---

## (२)—साकंप्रस्थाय्ये स्विष्टकृदिडं च तद्वत् ॥

**दर्शपूर्णमासयोः "साकंप्रस्थायीयेन यजेत पशुकामः" इत्यत्र सहत्वं फलाय विधीयते। तस्य च "आग्नेयेन प्रचर्याग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामेत्" इति वाक्येन सान्नाय्याङ्गभूतमभिक्रमणमा**श्रयत्वेनोच्यते, **कुम्भ्यौ निरूपकत्वेन, अन्यत्सर्वमनूद्यते। वाक्यभेदश्च न,** निपातत्वाद्विशिष्ट**भावनाविधानाद्वेत्युक्तं द्वितीये।** तदत्र **सान्नाय्याङ्गतया**

---

**॥ साकं प्रस्थायीये ॥**

**आश्रयत्वेनोच्यत इति।** आहवनीयं प्रति सान्नाय्याङ्गभूतमध्वर्युकर्तृकमभिक्रमणं अर्थतः प्राप्तं; तत्रैव च कुंभीसाहित्यमात्रस्यैव विधानं प्राप्नोति तथापि प्राप्तस्याप्यभिक्रमणस्येहोद्देश्यत्वेनानुवाद आश्रयतालाभार्थमित्येवं अपूर्वतया विधानाभावात् **उच्यत** इत्युक्तम्। नन्वभिक्रमणोद्देशेन कुंभीनां तत्साहित्यस्य च विधाने वाक्यभेद इत्याशङ्कापरिहारायाह—**न निपातत्वादिति।** सह शब्दस्य निपातत्वेन तात्पर्यग्राहकत्वेन तृतीययैव लक्षिते साहित्ये प्रकृत्यर्थकुंभीनां अन्वयव्युत्पत्तेः कुंभीसाहित्यस्यैकस्यैव विधानान्न तदापत्तिरित्यर्थः। अध्वर्युणा हि आहवनीयदेशं प्रति औदुंबरपात्रहस्तैश्चतुर्भिर्ब्राह्मणैस्सह दधिपयः कुंभीचतुष्टयं गृहीत्वा सान्नाय्ययागार्थं गन्तव्यः; तदानीमाग्नेयप्रचारस्य पूर्वमेव सिद्धत्वात् जुहूपभृतोः स्रुचोरपि तद्देशं प्रति नयने तयोर्होमार्थत्वाभावेन प्रयोजनाभावात् यत्र क्वचन स्थापने प्राप्ते स्वपुरुषत्वेनाग्नीध्र एव तत्प्राप्तेरित्यभिप्रेत्यान्यत्सर्वमनूद्यत इत्युक्तम्। ततश्चाभिक्रमणाश्रितं कुंभीनिरूपितं यत्साहित्यं विहितं तदेव साकंप्रस्थायीयपदेन विशेषणप्रधानेनोच्यमानं फलोद्देशेन विधीयत इति द्वितीयतृतीयपादे **दाक्षायणयज्ञाधिकरणे** उक्तमित्यर्थः।

**एतेन** यजेतेत्यनुवादबलात् यागस्यैवाश्रयत्वप्रतीतेः तत्र कारकभावेन कुंभीनामेव योग्यतयाऽन्वयसंभवात् कुंभीनामेव यागाश्रितानां फलार्थं विधानापत्तौ तत्राश्रयतो धर्मातिदेशे सति कुंभीनां संमार्गाभावेपि औदुंबरपात्राणां चासादनसंमार्गादिसंस्कारानुष्ठाने वाजिनीं त्वेति मंत्रस्य वाजित्वेत्यूहेन पात्रेषु प्रयोग इति **रुद्रदत्तोक्तमपस्तम्।** कुंभीनिरूपितसहत्वस्यैव साकंपदवाच्यस्य फलार्थं विधानप्रतीत्या साक्षात् कुंभीनां तदसंभवात् साहित्यस्य च यागे करणत्वेनायोग्यस्य प्रकृततत्संबन्धानुपपत्तेः प्रत्युताभिक्रमणवाक्येऽभिक्रमण एव तत् साहित्यबोधनात् अभिक्रमणस्यैवाश्रयत्वेनाश्रयतो नित्यसान्नाय्याङ्गानां अतिदेशासंभवात् ऊहाप्रसक्तेः। अतश्चाभ्युदितेष्टिवत् प्राकृतस्य वैकृतप्रयोगमात्रान्तरमित्युपदेशत एव धर्माणां प्रातियोज्ञिकैकदेशिसंमता युक्ता।

स्विष्टकृदादिशेषकार्याणि कर्तव्यानि न वेति चिन्तायां—अभिक्रमणे कुम्भीसाहित्येऽप्याहवनीयदेशं गत्वा चतुरवत्तमादायैव होमानुष्ठानाच्छेषसद्भावेन कर्तव्यानीति प्राप्ते—

नात्रापूर्वमभिक्रमणमाश्रयः, भेदकप्रमाणाभावात्; अपि तु सान्नाय्यप्रक्षेपाङ्गभूतमेव। तादृशाभिक्रमणकर्तुः कुम्भीनां साहित्यं च कर्त्रभिक्रमणकालीननयनसंस्कार्यत्वं नान्यत्। नयनमपि च नेदमपूर्वं, अपि तु दृष्टार्थत्वलाभाय स्रुक्त्यागानुवादाच्चोक्तप्रक्षेपाङ्गभूतस्रुग्दण्डनयनमेव। अतश्च कुम्भीनामुक्तसंस्कार्यत्वान्यथानुपपत्त्याऽभिषवयुक्तपूतीकवत् स्रुक्कार्यप्रक्षे-

---

अत एवाभिक्रमणस्य यागार्थत्वाद्यजेतेत्ययमपि अनुवादो नानुपपन्नः। अत एव यत्राग्निष्टोमस्तोत्रस्य न विशिष्योपस्थितिस्तत्र तस्याश्रयत्वासंभवेन तद्द्वारा यजेतेत्यनुवादानुपपत्तेः रेवत्यधिकरणकवारवन्तीयसाम्नो न फलार्थविधानं रेवतीवाक्ये स्वीकृतम्। अपि तु कर्मान्तरमेव। एतदभिप्रायिकैव तदधिकरणे यागस्याश्रयत्वोक्तिश्शास्त्रदीपिकादिग्रन्थेषु। अतो न कुंभीनां साक्षात् यागाश्रयकत्वमिति सिद्धे जुहूबाधाभावाशयेन संशयपूर्वकं पूर्वपक्षमाह—तदत्रेति। पूर्वाधिकरणे उपांशुयाजादिषु शेषसद्भावकारणं नासीदिह तु तस्यैव नित्यसान्नाय्यप्रयोगान्तरमातत्वात्तदङ्गत्वेन चतुरवत्तमात्रस्यैव होमप्राप्तावविशिष्टभागेन तदङ्गभूतानि शेषकार्याणि कर्तव्यानीत्येवं विशेषाशंकानिरासायेदमधिकरणमिति पौनरुक्त्यपरिहारस्सान्नाय्याङ्गतयेत्यनेन सूचितः। अवदायैवेति। ततश्चाहवनीयं प्रत्यभिक्रमणे अध्वर्युणा क्रियमाणे कुम्भीसाहित्यानुरोधेन स्वयमेव कुंभीनां नयनं कर्तव्यमिति यावदाहवनीयदेशं प्रति प्राप्तव्यं तावत्पर्यन्तमन्यथानुपपत्त्याऽग्नीध्रे स्रुचौ देये। तद्देशप्राप्त्युत्तरं तु पुनरप्यग्नीधः स्रुचावुपादाय जुह्वां कुंभीभ्यो द्विरवत्तमादाय होमः कर्तव्यः तथाच सिद्धः कुंभीषु शेष इत्यर्थः। भेदकप्रमाणाभावादिति। प्रकृतप्रत्यभिज्ञानाप्राकृत एवाभिक्रमणे वाक्यस्य कुंभीसाहित्यविधायकत्वात् अनुपस्थित्यनन्यपरत्वाभावेन प्रकरणान्तराभ्यासरूपभेदकप्रमाणयोरभावादित्यर्थः। यजमानकर्तृकस्य प्रधानयागस्याभिक्रमणं विनापि सिद्धेः आहवनीयदेशे प्रक्षेपार्थमध्वर्योस्तदावश्यकमिति सामर्थ्यादङ्गत्वमभिप्रेत्य प्रक्षेपाङ्गभूतमेवेत्युक्तम्। दृष्टार्थत्वेति। आहवनीयदेशप्रापणरूपदृष्टप्रयोजनार्थत्वादित्यर्थः। स्रुकृत्यागेति। स्रुचौ प्रदायेति त्यागानुवादात् यदेव नित्ये सान्नाय्ये जुहूनयनं तदेवेदं जुहूस्थानापत्तिफलकमिति प्रतीतेर्नापूर्वमित्यर्थः। अभिषवयुक्तेति। पूतीकाविधावभिषवसंस्कारमात्राम्नानेऽपि तत्संस्कारस्य यागसाहचर्यात् तत्संस्कार्यत्वान्यथानुपपत्त्या पूतीकानां यागार्थत्वमिवेत्यर्थः। तत्स्थस्येति। जुहूकार्यकारित्वेन तत्स्थानापत्तेर्यया विधया जुह्वा द्व्यवदानस्य समग्रस्य प्रक्षेपाख्यं कार्यं कृतं तयैव विधया कुंभीभिः कर्तव्यमिति समग्रस्यैव

पार्थत्वावगत्या तत्स्थस्य हविषोऽपि द्व्यवदानवत् प्रक्षेपप्रतिपाद्यत्वावगतेस्सर्वहोमाव-सायान्न साकंप्रस्थायीयप्रयोगे सान्नाय्यस्य शेषकार्याणि ॥ २ ॥

---

## (३)—सौत्रामण्यां च ग्रहेषु ॥ १४ ॥ तद्वच्च शेषवचनम् ॥ १५ ॥

सौत्रामणी नाम पशुयागाः। तत्रातिदेशप्राप्तदेवतासंस्कारार्थे पशुपुरोडाशे द्रव्यतया पयोग्रहास्सुराग्रहाश्च विधीयन्ते इति दशमे सूत्रभाष्यकाराभ्यां वक्ष्यते। तदत्र स्थानापत्त्या पुरोडाशाङ्गं स्विष्टकृदिडं कर्तव्यमेव। न च ग्रहशब्दस्य नामातिदेशकत्वाज्ज्यौतिष्टोमिकशेष-कार्यातिदेशशङ्का। ग्रहशब्दस्य प्रायणीयपदवन्नामातिदेशकत्वानुपपत्तेरिति प्राप्ते—

---

कुंभीस्थस्य होमः प्राप्त इति भावः। अत्र च प्रपूर्वकस्थाधातोर्भावे घञि आतो युक्चिण्कृतो रिति सूत्रेण युकि कृते सति प्रस्थायशब्दे निष्पन्ने ततश्शेषाधिकारीयछप्रत्ययस्येयादेशः कर्तव्यः। ततश्च साकंप्रस्थानसंबन्धिपरसाकंप्रस्थायीयेनेति पदपाठस्साधुः नतु साकंप्रस्थाय्येति ज्ञेयम् ॥

---

॥ सौत्रामण्यां च ग्रहेषु ॥

पशुयागा इति। आश्विनसारस्वतसुत्रामदेवताका इति शेषः। अत एव सुत्राम्ण एकदेशेन देवतात्वात् वैश्वदेवपदवत् सौत्रामणीति नामेत्यर्थः। दशम इति। तेषु पशुयागेषु ऐन्द्रवारुणसावित्राः पशुपुरोडाशाः अपूर्वा अङ्गत्वेन विहिताः, ते चातिदेशप्राप्तपशुपुरोडाश-यागापेक्षया न कर्मान्तरं; अपि तु तदीयपुरोडाशद्रव्येष्वेवाभ्युदितेष्टिवत् देवतान्तरमात्र-विधाने सति उपपादकीभूतयागापेक्षायामन्यस्य प्रयाजादेः पुरोडाशद्रव्यकत्वाभावेन तद-संभवात् पशुपुरोडाशयागस्यैव प्रधानदेवतासंस्काररूपप्राकृतकार्यबाधेनापि तदुपपादकत्वं कल्प्यते। ये तु "यत्पयोग्रहाश्च सुराग्रहाश्च गृह्यन्ते" इत्यनेन सुरापयोद्रव्यका ग्रहा विहितास्तेषामप्यु-त्पत्तिशिष्टपश्ववरोधेनाश्विनादिदैवत्यत्वासंभवात् पशुपुरोडाशयाग एव विनियोगः। ततश्च विभिन्न-द्रव्यदेवतासंबन्धद्वयादुत्पन्नवाक्यशिष्टात् प्रयाजैकादशत्वन्यायेन पशुपुरोडाशयागस्याभ्यास इति दशमप्रथमपादे वक्ष्यते। तत्रैव पुरोडाशयागे पुरोडाशद्रव्येणेन्द्रवरुणसवितृदेवताभिश्चावरोधात् गृह्यमाणसुरापयोद्रव्ययोराश्विनादिदेवतानां च निवेशायोगेन सुरापयोद्रव्यकाश्विनादिदेवताकं कर्मान्तरमेवेदं पुरोडाशयागकार्यापन्नं विधीयत इति वार्तिककारमतमुपपादयिष्यते। तद-पेक्षया भेदं दर्शयितुं सूत्रभाष्येत्युक्तम्। यद्यपि चरकसौत्रामण्यां राजसूयाङ्गभूतायां सुराग्रहत्रिकस्य पयोग्रहत्रिकस्य च विकल्पो दृश्यते न समुच्चयः, तथापि स्वर्गार्थं विहितायां कौकिलसौत्रामण्यां

**न तावदत्रावशिष्टश्शेषोऽस्ति । "यथागृहीतान् ग्रहान् ऋत्विज उपाददते** उत्तरेऽग्नौ **पयोग्रहान् जुह्वति दक्षिणेऽग्नौ सुराग्रहान्" इति वचनेना**नवदायैव **होमावगमात् ।** न च **"उच्छिनष्टि न सर्वंहुतं जुहोति" इति वचनेन हुतशेषावगतेश्शेषकार्यकरणं, तस्य "ब्राह्मणं परिक्रीणीतोच्छेषणस्य पातारं यदि न विन्देत् वल्मीकवपायामवनयेत् ततोऽप्यवशिष्टं शतातृण्णायां विक्षारयन्ति" इति विशिष्य प्रतिपत्त्यन्तरविधानेनातिदेशिक**प्रतिपत्तिबाधात् । **वल्मीकवपा वल्मीकच्छिद्रम् । शतातृण्णा शतच्छिद्रा कुम्भी । इदं च सूत्रभाष्यकार-**

---

पूर्वलिखिततैत्तिरीयवाक्याच्च समुच्चयमभिप्रेत्य सुराग्रहाः पयोग्रहाश्चेत्युक्तम् । तत्रैतेषां ग्रहाणां पृथक् प्रकल्पनमात्रात्मकत्वात् चमसवत् सर्वहोमाप्राप्तेः पूर्ववैषम्यमित्यधिकाशङ्कानिरासायाधिकरणान्तररचनामभिप्रेत्य पूर्वपक्षमाह— **तदत्रेति** । यद्यपि तस्मिन्नेव पुरोडाशयागे द्रव्यदेवतान्तरविधानपक्षे दर्शपूर्णमासातिदेशेनैव सर्वधर्मप्राप्तौ स्विष्टकृदादीनामपि प्राप्तिरुपपद्यत एव **तथापि** स्थानापत्तिं विना संस्कारोहायोगाशङ्कापरिहारं सूचयितुं स्थानापत्त्येत्युक्तम् । **पुरोडाशाङ्गम्** पुरोडाशसंस्कारकत्वेनाङ्गमित्यर्थः । **स्विष्टकृदिडमिति** । पशुपुरोडाशयागस्येडान्तत्वादुत्तरभाविनोश्चतुर्धाकरणशंयुवाकभक्षप्रतिपत्त्योरप्राप्तावपि प्राशित्रहरणभक्षस्य तत्पूर्वभाविनोऽवश्यं प्राप्तेः **स्विष्टकृदिडमिति** तस्याप्युपलक्षणं द्रष्टव्यम् । **उत्तरेऽग्नाविति** । सौत्रामण्यां पाशुकी वेदिः तत्रोत्तरवेद्यां प्रणीत आहवनीयः उत्तरोऽग्निः । तस्या एवोत्तरवेदेर्दक्षिणतो हस्तमात्रं त्यक्त्वा कृते खरपदवाच्ये स्थण्डिले दक्षिणाग्नेरेकदेशात् प्रणीतोऽग्निर्दक्षिणोऽग्निरित्यर्थः यथागृहीतानिति पदं व्याचष्टे—**अनवदायैवेति** । तथा च यथा गृहीतास्तथैवानवदायैवाश्विनमध्वर्युः सारस्वतं ब्रह्मा ऐन्द्रं प्रतिप्रस्थाता इति वचनविहितैस्तत्तदृत्विग्भिरशेषाणामेव होमाच्छेषाभाव इत्यर्थः । पूर्वपक्ष्यभिमतमधिकाशङ्काबीजान्तरमनुवदन् दूषयति—**न चेति** । तथा चोच्छिनष्टीति विधिनोच्छेषणस्य विधाने सत्यर्थप्राप्त एव निषेधः स्तुत्यर्थमनूद्यत इति स्पष्टमेव शेषस्सिद्ध्यतीत्याशङ्कार्थः । **प्रतिपत्तिबाधादिति** । **एतेन** सोमे दुर्बलसमाख्यानिमित्तस्य भक्षस्य वषट्कर्तुः प्रथमभक्ष इति प्रत्यक्षोपदिष्टभक्षणे समुच्चयवत् इहापि द्वयोः प्रतिपत्त्योः समुच्चय इत्य**पास्तम्** । तत्र समाख्यानिमित्तभक्षस्य विषयान्तराभावेन समुच्चयसंभवेऽपीह प्रकृतौ शेषकार्यविधेरुपपन्नत्वेन सावकाशायाः प्रतिपत्तेः औपदेशिकविशेषविहितप्रतिपत्त्यन्तरेण बाधस्यैवापत्तेः । एवं पुरोडाशद्रव्यस्थानापत्त्या सुरापयोद्रव्ययोः शेषकार्यसदसद्भावविचारसंभवेऽपि वार्तिककारमते पुरोडाशद्रव्यस्थानापत्त्यभावात् शेषकार्यसंभावनाया अप्यसंभवात् कथमत्र तत्सद्भावाशङ्कातन्निरासौ योजनीयावित्याशङ्कां परिहर्तुमाह—

**मताभिप्रायेणोक्तम्।** यदा तु **वार्तिकोक्तरीत्या** देवतासंस्कारार्थं **यागान्तरमेव सुरापयोद्रव्यकं विधीयते तदाऽप्यौषधद्रव्यकत्वपयोद्रव्यकत्वाभ्यां दार्शपौर्णमासिकविध्यन्तस्याष्टमे** वक्ष्यमाणत्वेन **स्विष्टकृदादिप्राप्तावपि पूर्ववदेव तदभाव इत्यधिकरणं व्याख्येयम्॥ ३ ॥**

---

## (४)—द्रव्यैकत्वे कर्मभेदात्प्रतिकर्म क्रियेरन् ॥ १६ ॥ अविभागाच्च शेषस्य सर्वान् प्रत्यविशिष्टत्वात् ॥ १७ ॥ ऐन्द्रवायवे तु वचनात् प्रतिकर्म भक्षस्स्यात् ॥ १८ ॥

सर्वपृष्ठायामिष्टौ **"इन्द्राय राथन्तराय निर्वपति इन्द्राय बार्हतायेन्द्राय वैरूपाय" इत्यादि-**

---

यदा त्विति। **देवतासंस्कारार्थमिति।** प्रधानपशुयागदेवतास्मरणार्थमित्यर्थः। **अष्टम इति।** अष्टमद्वितीयपादाद्याधिकरण इति शेषः। स्विष्टकृदादीत्यादिपदेन प्राशित्रहरण-चतुर्धाकरणभक्षयोः पुरोडाशप्रतिपत्तित्वेनाप्राप्तावपि हविः पदोक्त[1]द्रव्यसंस्काराणामिडाशंयुवाक-कालभक्षाणामुपादानम्। **एतेनास्मिन्नपि** वार्तिकमते पुरोडाशयागस्थानापत्तित्वेनातिदेशमभि-प्रेत्य पुरोडाशविकृतितयेडान्तत्वस्यातिदेशेन शंयुवाककालभक्षस्य निवृत्तिः। प्राशित्रभक्षस्तु भवतीति **प्रकाशकारोक्तं निरस्तं** वेदितव्यम्। अङ्गापेक्षायां अङ्गघटितसादृश्यस्यैव पुरस्स्फूर्ति-कत्वेन स्थानापत्त्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वेनौषधद्रव्यकत्वपयोद्रव्यकत्वेन सर्वप्रकृतिभूतदार्शिकविध्यन्तस्यैव स्वयं प्रतिपादयिष्यमाणत्वादिति भावः।

---

### ॥ द्रव्यैकत्वे कर्मभेदात् ॥

पूर्वाधिकरणैस्त्रिभिश्शेषकार्याणामपवादविषये विवेचिते ततोऽन्यत्र स्थितानां तेषामेव एकादशे कर्तुं योग्यापि तन्त्रावापचिन्ता प्रसङ्गादेवेह क्रियत इति प्रासङ्गिकीं सङ्गति-मभिप्रेत्याधिकरणविषयं दर्शयति—**सर्वपृष्ठायामिति।** वार्तिकोक्तरीत्या इन्द्राय राथन्तराय निर्वपति इन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्वरायेन्द्राय रैवतायेति वाक्येन निर्वपतिपदानुषङ्गसहितेनान्योन्यनिरपेक्षचतुर्थ्यन्तपदोपात्ततत्तद्देवताभिः षड्भिर्निर्वपतिपदोपस्थापित-निरूप्यमाणद्रव्याणां षण्णां संबन्धप्रतीतेः लक्षणया षड्यागा विधीयन्ते। तेषां य इन्द्रियकामो

---

1. A. पदोपात्त

**षड्ढविष्कायां षड्भ्योऽपि निरुप्य** सहावघात**पेषणे कृत्वा प्रकृतिवत् विभागे प्राप्ते** तमकृत्वा **वचनादेकमेव रथचक्रमात्रं पुरोडाशं कृत्वा "समन्ततः पर्यवद्यति" इति वचनेन समन्ततः पर्यवदाय प्रधानानि क्रियन्ते।** अत्र **समन्तत इत्येव कर्मभेदतात्पर्यग्राहकम्। अन्यथा**

---

यो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदिति वचनेन फलार्थे विनियोगः। तेषां च सर्वपृष्ठापदं नामधेयं षाडहिकपृष्ठस्तोत्रसाधनरथन्तरादिषट्सामस्तूयमानेन्द्रदेवताकत्वप्राप्तेस्तत्प्रख्य-न्यायात् इत्यभिप्रेत्य **सर्वपृष्ठायामित्युक्तम्। सहावघातेति।** प्रकृतौ आग्नेयाग्नीषोमीयद्रव्ययोः पृथङ्निर्वापे कृते सहावघ्नन्ति सह पिंषन्तीति वचनेन यथा सहावघातपेषणे भवतः, एवमेवेहाति-देशेन ते सह कृत्वा संयवनान्ते प्रकृतिवदेव तत्तद्देवत्यपुरोडाशविभागे प्राप्ते येषां शाखीयानां भेदेन षट्पुरोडाशानुष्ठानं तेषामिह तन्त्रत्वसिद्धान्तकोट्यसंभवात् विचारानुपपत्तावपि येषां शाखी-यानां विभागाकरणेन रथचक्रमात्रो द्वादशकपालः पुरोडाशो भवति वैश्वदेवत्वायेति वचनेन एक-स्यैव द्वादशकपालपुरोडाशस्यानुष्ठानं तद्विषयत्वेन विचारोपपत्तिं सूचयितुमाह—**तमकृत्वेति।** अत्र च **वार्तिके** अन्योन्यनिरपेक्षचतुर्थ्यन्तपरिकल्पितैः षड्भिर्द्रव्यदेवतासंयोगैः देवतान्तरावरुद्धे च यागे देवतान्तरासंभवात् गुणेन भेदकेन षट्कर्माणीत्येवं षडपि द्रव्यदेवतासंबन्धाः पृथक् श्रूयमाणाः पृथक् पृथक् यागकल्पकाः। अथवोत्पत्तिशिष्टो देवतान्तरलक्षणो गुणो वा तत्कल्पक इत्युक्तं, तदनुपपन्नमेवेति सूचयन् स्वयङ्कर्मभेदे साधकमुपन्यस्यति—**अत्रेति। अयं भावः**—न हि इन्द्राय राथन्तराय निर्वपतीत्याद्युत्पत्तिवाक्यानि भवितुमर्हन्ति **तैत्तिरीय**शाखायां य इन्द्रियकामो वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेत् एता एव देवताः स्वेन भागधेयेनोपधावति ता एवास्मिन्निन्द्रियं वीर्यं दधति यदिन्द्राय राथन्तराय निर्वपति यदेवाग्नेस्तेजस्तदेवावरुन्धे यदिन्द्राय बार्हताय यदेवेन्द्रस्य तेजस्तदेवावरुन्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्तदेवावरुन्धे, यदिन्द्राय वैराजाय यदेव धातुस्तेजस्तदेवावरुन्धे, यदिन्द्राय शाक्कराय मरुतां तेजस्तदेवावरुन्धे यदिन्द्राय रैवताय यदेव बृहस्पतेजस्तदेवावरुन्धे इत्येवं पाठेन यदिन्द्राय राथन्तरायेति सन्दर्भस्य सर्वस्य यदष्टाकपालो भवतीत्यादेरिवार्थवादत्वस्यैव प्रतीत्या सार्थवादकस्य य इन्द्रियकाम इति पूर्वसन्दर्भघटितवाक्यस्यैव सर्वपृष्ठोत्पत्तिविनियोगविधित्वात् तत्र द्रव्यदेवतासंबन्धाभावे तद्भेदहेतुककर्मभेदे मानाभावात्। एवं चोत्पत्तिवाक्ये द्रव्यदेवतयोरनाम्नानेन तदपेक्षायामेता एव देवतास्स्वेन भागधेयेनेत्येतच्छब्दो-पात्तदेवताविशेषापेक्षया यदिन्द्राय राथन्तरायेत्याद्यर्थवादैस्समर्पिता देवता एकवाक्योपादानात् अदृष्टार्थत्वाच्च समुच्चयेनान्वीयन्ते। द्रव्यं च द्वादशकपालो रथचक्रमात्र एक एव पुरोडाश इति क्व द्रव्यदेवतासंबन्धस्यानेकत्वं? क्वा अन्यतमदेवताया उत्पत्तिशिष्टत्वं? अग्नये कृत्तिकाभ्य इतिवत् भिन्नचतुर्थ्युपात्तयोरग्निकृत्तिकादेवतयोरिव रथन्तरेन्द्रपदाभ्यां भिन्नचतुर्थ्यन्ताभ्यामुपात्तयो-

**"अग्नये कृत्तिकाभ्यः" इतिवत्कर्मैकत्वे सकृदवदानापत्तेः।** याज्याभेदाद्वा **कर्मभेदः। तत्र च** स्विष्टकृदिडादि प्रधानभेदात्प्रत्येकं **भवति।** न च **द्रव्यैकत्वात्तन्त्रता, अवदानप्रदेशभेदेन**

---

देवतयोस्समुच्चयस्य त्वयाप्यङ्गीकारेण तथैवेतरचतुर्थ्युपात्तदेवतान्तराणामपि एकस्मिन् कर्मणि एकवाक्योपादानेन विनापि चकारं तदुपपत्तेः।

अस्तु वा यदिन्द्राय राथन्तरायेत्यादीनां विधित्वं, तावतापि द्वादशकपालप्रकृतिद्रव्यनिर्वापे-ऽतिदेशप्राप्त एव तत्तद्देवतासंबन्धविधानोपपत्तेः उपपादकीभूतयागापेक्षायां पूर्ववाक्यनिर्दिष्ट-यागस्योपपादकत्वोपपत्तेः न गौरवापादककर्मान्तरविधायकत्वं युक्तमाश्रयितुम्। अतः प्रकारान्तरेण कर्मभेदस्यासिद्धेः समन्ततः पर्यवदानविधानबलादेव तत्सिद्धिः। द्व्यवदानं हि तत्तद्द्रव्य-त्यागानन्तरं होमरूपप्रतिपत्त्यर्थमुपादानरूपं समन्ततो विधीयमानं तत्तत्पुरोडाशावयवानां पृथक् पृथक्यागसाधनतातात्पर्यग्राहकं सत् तत्तद्देवताभेदेन निर्वापभेदं निरूप्यमाणद्रव्यदेवतासबन्ध-भेदं च ज्ञापयतीति निर्वपतिपदानुषङ्गेण तेषामेव विधित्वमाश्रित्याऽथवा तत्कल्पितं विध्यन्तरं वाऽऽश्रित्य भेदेनैव यागविधायकत्वं युक्तमिति सर्वाः समन्तत इत्येवेत्येवकारेणाग्नये कृत्तिकाभ्य इति दृष्टान्तोपादानेन सूचितम्। अत एवैतयेत्येतच्छब्दो विनियोगविधावाम्नातोऽस्या उत्पत्ति-विध्यन्तरविहितत्वं सूचयन् समञ्जसो भवतीति। **याज्याभेदाद्वेति।** अत्र चाभित्वा शूरेत्येका, त्वामिद्धि हवामह इति द्वितीया, यद्याव इन्द्रेति तृतीया, पिबा सोममिति चतुर्थी, कदाचनस्तरी इति पञ्चमी,[1] रेवतीर्नस्सधेति षष्ठी, इत्येवं क्रमेण षण्णामृचां कल्पसूत्राम्नातव्यत्यासेन पुरोनुवाक्यात्वेन याज्यात्वेन चाम्नानं यागभेदज्ञापकमन्यथैकस्य यागस्य षट्संख्याकानां तासां वैयर्थ्यापत्तेरित्यर्थः। **स्विष्टकृदिडादीति।** आदिपदेन प्राशित्रहरणं, तत्रापि तन्त्रावृत्तिविचारोपपत्तेः। यत्तु शास्त्रदीपिकागतं स्विष्टकृदिडमिति पदं प्राशित्रशंयुवाककालभक्षचतुर्धाकरणोपलक्षणमिति **प्रकाश-**कारैर्व्याख्यातं, तत्र तत्तत्पुरोडाशावयवानां षण्णामेव हविष्ट्वेऽपि भक्षविधौ हविषः कर्मत्वेनापादा-नत्वाभावे सति तत्तदवयवरूपहविश्शेषस्य तन्त्रेण भक्षेऽपि बाधकाभावात् प्रत्येकानुष्ठानकर्तव्यता-पूर्वपक्षहेतोस्ससंबन्धिकार्थप्रतिपादकोत्तरार्धादिशब्दोपात्तसंस्कार्यत्वेन भिन्नद्रव्यत्वरूपस्याप्रसक्त्या पूर्वपक्षविषयत्वासंभवेन शंयुवाककालभक्षस्योदाहरणत्वायोगात् चतुर्धाकरणस्याग्नेयविकारे कथञ्चि-ददतिदेशेऽपि ऐन्द्राग्नविकारभूतायां सर्वपृष्ठायामप्रातेश्चायुक्तमित्युपेक्ष्यम्। **प्रधानभेदादिति।** ततश्चातिदेशानां भेदात् यथाप्रकृति प्राप्तौ प्रत्येकमेव भवतीत्यर्थः। ननु एकादशे **एकद्रव्ये**

---

1. A. प्रोष्ठ-पुरो-इति पञ्चमी.

**तत्तदुत्तरार्धादीनां भेदात्। न च संस्कारवाक्यानां परस्परान्वये प्रमाणाभावेनोत्तरार्धस्यावदानप्रदेशप्रतियोगिकत्वाभावात्प्रकरणेन हविः प्रतियोगिकत्वप्रतीतेस्तस्य च पुरोडाशैक्येन साधारणत्वाद्द्रव्यैकत्वमिति वाच्यं, तत्तद्देवतायै चतुर्मुष्टिपरिमितस्यैव निरुप्तस्य हविष्ट्वेन पुरोडाशस्यात्र हविःप्रकृतितया** हविष्ट्वाभावात्। **न च** तथाऽपि **हविषस्संसृष्टत्वेन साधारणत्वाद्यागकाले इन्द्राय राथन्तराय यन्निरुप्तं तत्तस्मै न ममेति प्रत्येकं सङ्कल्पेऽपि संसृष्टोत्तरार्धादेरगृह्यमाणविशेषत्वात्तन्त्रत्वं शेषकार्याणामिति वाच्यम्। तथाऽपि "न ह्यत्रानूयाजान्" इतिवत् "द्विरैन्द्रवायवस्य भक्षयति द्विर्ह्येतस्य वषट्करोति" इत्यनेन प्रदानभेदस्य शेषकार्यभेदे हेतुत्वावगमात्तदन्यथाऽनुपपत्तिकल्पितव्याप्तिबलेन भेदोपपत्तेरिति प्राप्ते—**

**"तेन ह्यन्नं क्रियते" इतिवत् विधौ लटो** भूतकाल**लक्षणापत्तेरपेक्षितस्तुतिमात्रपरत्वावसायात् गमकमात्रस्य च न्यायप्राप्ततन्त्रत्वबाधकत्वानुपपत्तेस्सकृदेव शेषकार्याणि। 'न**

---

**संस्काराणां व्याख्यातमेककर्मत्वमिति** चतुर्थपादाधिकरणे अवरक्षोदिवस्सपत्नं वध्यासमिति मन्त्रस्य तत्तत्प्रकाराणामवघातशब्दवाच्यत्वात् प्रतिप्रधानावृत्तिन्यायेन प्रतिप्रहारं मन्त्रावृत्तिरिति पूर्वपक्षं प्रापय्य प्रहाराभ्याससहितभावनायां तण्डुलनिष्पत्त्यर्थायां मन्त्रस्य करणत्वात्तस्याश्च तण्डुलनिष्पत्तिपर्यन्तमेकत्वान्नावृत्तिः। किन्तु सर्वादौ सकृदेव मन्त्रपाठ इति सिद्धान्तितम्। ततश्चैकविषयाणां सन्निपातिनां तन्त्रत्वमुक्तं भवति। तेन न्यायेनैव द्रव्यविषयाणां प्रतिपत्तिसंस्काराणामपि भवतु तन्त्रत्वमित्याशंक्य परिहरति—**नचेति**। स्विष्टकृदिडाप्राशित्रेषु उत्तरार्धदक्षिणार्धमध्यशब्दैरवदेयत्वेन संस्कार्योपादानात् तेषां च ससंबन्धिकत्वेन प्रतिसंबन्ध्यपेक्षायामवदानप्रदेशस्यैव तत्त्वेनान्वयकल्पनात् तस्य च भेदेनोत्तरार्धादीनामपि भेदान्न संस्कार्यभूतद्रव्यैकत्वम्। ततश्च संस्कार्यभेदान्न तन्न्यायप्रवृत्तिरत्रेत्यर्थः। **हविष्ट्वाभावादिति**। तथा च समन्ततः पर्यवदानोपलक्षितानां पुरोडाशगततत्तद्देवताकावयवराशीनां षण्णामेव हविष्ट्वात् तत्संबन्धिनामेवोत्तरार्धादीनां संस्कार्याणां भेदात् न तन्त्रतेत्याशयः' **तथापीति**। यद्यपि द्विर्वषट्कारहेतुरैन्द्रवायवसम्बन्धिभक्षमात्रस्यैवं द्वित्वं साधयेत्तत्रैव तदुपादानात्, तथापि वषट्कारगतद्वित्वहेतोः सामान्यरूपस्य भक्ष इव न्यायतौल्यादन्यत्रापि प्रतिपत्त्यन्तरे गमकविधया प्रवृत्तेर्वक्तुं शक्यत्वेनेहापि प्रतिवषट्कारं तत्तत्प्रतिपत्तिभेदः स्यादेवेत्यर्थः। **भूतकालेति**। यथा वर्तमानान्नकरणत्वं होमसाधने शूर्पे बाधितं तथैव भक्षादिगतद्वित्वसंपादनकाले वषट्कारगतद्वित्वस्य पूर्वमतीतत्वेन वर्तमानत्वासंभवात्तद्धेतुत्वं बाधितमित्यनुपपत्त्या भूतकाललक्षणापत्तिरित्यर्थः। **स्पष्टमन्यत्**।

ह्यत्र' इत्यत्र तु लक्षणाभावाद्धेतुविधित्वमिति विशेषः। ऐन्द्रवायवे तु **वचनादेव भक्षावृत्ति-रिति वैषम्यम्** ॥ ४ ॥

---

**यत्तूक्तं**, समन्ततः पर्यवदानोपलक्षितानामेव हविष्ट्वमिति तदयुक्तं; नह्यत्र होमार्थावदानान्वयानुपपत्त्या हृदयादिवत्तत्तदवयवानां हविष्ट्वं संसर्गेणान्यत्र स्थितानामपि निर्वापसंबद्धदेवतान्वयविरोधापत्त्या तावतामेव हविष्ट्वकल्पनोपपत्तेः। अतस्समन्तत इति वाक्येन होमार्थावदानाय या मध्यपूर्वार्धकल्पना सा न कृत्स्नपुरोडाशापेक्षया, अपि तु पुरोडाशीयप्रागादिभागापेक्षयेत्येतावन्मात्रं बोध्यते, न तु तेषामेव हविष्ट्वं, न वा मध्यपूर्वार्धरूपापादानदेशद्वयबाधेन तत्स्थानपत्त्या एकस्मिन्नेव देशेऽवदानविधानं वा। अतः प्रागादिभागस्य हविष्ट्वाभावात् तेन रूपेण त्याज्यद्रव्योपलक्षकत्वासंभवे तत्तद्देवतायै निरुप्तत्वेनैव धर्मेणोपलक्षितानां सर्वत्रैव संसृष्टानां सर्वावयवानां पुरोडाशगतानां सर्वयागसाधनत्वादगृह्यमाणविशेषत्वेन तदीयोत्तरार्धस्य तन्त्रत्वाच्छेषकार्यतन्त्रतायुक्तैवेति।

अत्रानन्तरमैन्द्रवायवे तु वचनात् प्रतिकर्म **भक्षः स्यादिति** सूत्रान्तरम्। तच्च **भाष्यकारेण** यद्यपि सोमेऽवचनात्भक्षो न विद्यते इत्युत्तराधिकरणेन सामान्येन भक्षविचारं कृत्वा तद्गतसकृद्द्वित्वविचारविशेषस्य कर्तुमुचितत्वेऽपि पूर्वाधिकरणापवादतया शीघ्रतरोपस्थितिमभिप्रेत्य पूर्वाधिकरणन्यायेन द्रव्यैकत्वेन सकृद्भक्षे प्राप्ते द्विरैन्द्रवायवस्य भक्षयतीति वचनात् द्विर्भक्षणमिति सिद्धान्तकरणेनाधिकरणान्तरत्वेन व्याख्यातम्। तद्वचने सति पूर्वपक्षानुपपत्तेः वचनाभावे तु सकृदेवेति तद्व्यतिरेकफलस्य **मनोतायां तु वचनादविकारस्स्यादिति** मनोताधिकरणे संभवेऽपीह पूर्वाधिकरणेनैव सिद्धेरन्यत्रापि तत्फलप्रतिपादनजिज्ञासानुदयेन व्यर्थमेव न्यायान्तरत्वेन तद्भेदकरणमित्येवं वार्तिककृता दूषितम्। न च द्वित्वस्य प्रयोगभेदाभिप्रायकत्वं युक्तं, तथात्वे तद्गतबहुत्वस्यापि पक्षे प्राप्तत्वेन नित्यवत्तदनुवादानुपपत्तेः उत्तराधिकरणन्यायेन भक्षस्य त्वदुक्तरीत्या द्वित्वस्यापि च प्राप्तेः सर्वांशेऽनुवादत्वापत्त्या समस्तवाक्यवैयर्थ्यापत्तेश्च। अतस्सर्वपृष्ठाधिकरणपूर्वपक्षे द्विर्ह्येतस्य वषट्करोतीति लिंगस्य साधकतयोपन्यासः कर्तव्यः। तस्य च दृष्टान्तत्वेनोक्तस्य परिहारार्थत्वेनैतत् सूत्रं पूर्वाधिकरणशेषतयैव उत्तराधिकरणकरिष्यमाणसोमभक्षसामान्यविचारस्मारकतया व्याख्येयमित्युक्तं **वार्तिके**। तदभिप्रायेण तत्सूत्रार्थं सूचयितुमाह—**ऐन्द्रवायवे त्विति**। **वस्तुतस्तु** यदि सर्वपृष्ठाधिकरणपूर्वपक्षसाधकत्वेनैतल्लिङ्गं तत्र गुणसूत्रेण सूत्रकृताभिहितं स्यात्तदा सूत्रेणैव तदनुभाष्य परिहारो वक्तव्यः स्यात् अन्यत्र तथैव दृष्टत्वात्। न त्वेतत्सूत्रेणोपन्यस्तमित्ययुक्तमिव **वार्तिककारस्यापि** व्याख्यानमिति सूचयितुमिति वैषम्यमिति **वैषम्यपदोपादानम्**।

(५)—सोमेऽवचनाद्भक्षो न विद्यते ॥ १९ ॥ स्याद्वाऽन्यार्थदर्शनात् ॥ २० ॥ वचनानि त्वपूर्वत्वात्तस्माद्यथोपदेशं स्युः ॥ २१ ॥ चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वात् ॥ २२ ॥

ज्योतिष्टोमे उत्पत्तिशिष्टोऽपि **सोमोऽभिषवादिसंस्कारविधिबलाद्रसप्रकृतिः। रस एव तु ग्रहचमसादिपात्रवृत्तिरिन्द्रवाय्वादिदेवतासम्बन्धाद्धविरिति सर्व एव त्यज्यते।** अस्य

---

ततश्च सर्वपृष्ठावैलक्षण्यं द्रव्यैकत्वेऽपि वचनादस्तीति वैषम्यमात्रं सूत्रकृता सुहृद्भावेनोक्तमिति भावः।

---

### सोमेऽवचनात्

पूर्वसूत्रे ऐन्द्रवायवे तु वचनात् भक्षावृत्तिरुक्ता। सा भक्षसामन्यसत्वे उपपद्यते। स एव नास्तीत्याक्षेपकरणात् भक्षसदसद्भावविचारस्य नासङ्गतत्वमित्यभिप्रेत्य विचारविषयं दर्शयति—**ज्योतिष्टोमे इति।** अत्र च प्राचां ग्रन्थेषु सूत्राणां स्वारस्येन शेषाभावादेव न भक्षणं; सत्यपि वा शेषभक्षणरूपप्रतिपत्तेरविधानात् न तत्। सत्यपि वा विधाने यत्रैव प्रत्यक्षवचनं तत्रैव तत् नान्यत्रेत्येवं पूर्वपक्षप्रकारमुक्त्वा प्रत्यक्षवचनातिरिक्तानां तत्तत्समाख्यानामपि तत्र प्रमाणत्वात् सर्वप्रमाणायातः सर्वेषामेव सोमे भक्ष इति सिद्धान्तितम्। तत्र शेषसद्भावप्रमाणसत्वे तदभावापादनेन भक्षाभावपूर्वपक्षायोगात् तत्तद्वचनानामपि स्वारसिकार्थालोचने पूर्वपक्षासाधकत्वात्। अत एव सिद्धान्तस्यैव सिद्धेर्व्यर्थ एव पूर्वपक्षकरणाभिनिवेशः इत्यभिप्रायेण सर्वप्रदानाधिकरणन्यायसिद्धार्थकथनव्याजेन पूर्वपक्षासंभवं दर्शयति—**उत्पत्तिशिष्टोऽपीति।** ननु ग्रहैर्जुहोति चमसैर्जुहोतीति वाक्ययोर्गृह्यते चम्यते इति कर्मव्युत्पत्त्या द्रव्याभिधानेन त्यक्तस्य प्रतिपत्त्यपेक्षासत्वात् तृतीयाया द्वितीयार्थलक्षणामङ्गीकृत्य तदुद्देशेन सर्वत एव होमरूपप्रतिपत्तिविधानात् शेषाभाव इत्याशङ्कानिरासायाह—**अस्य चेति।** प्रत्यक्षश्रुतद्वितीयान्तपदोपस्थापितार्थोद्देशेनाल्पवाक्ये होमविधिसंभवे न ग्रहचमसवाक्ययोः प्रकृतिप्रत्ययांशे क्लिष्टकल्पनया प्रतिपत्तिविधित्वाङ्गीकरणं युक्तमिति भावः। **अत एव** तत्तद्ग्रहचमसरूपपात्रस्थितस्तैव रसस्य इन्द्रवाय्वादिदेवतासंबन्धेन तत्तत्पात्राणां करणत्वेन प्राप्तत्वात् अनुवादत्वमङ्गीकृत्य होमांश एव विधानेनोत्पन्नस्याल्पवाक्येनाल्पोद्देशेन विनियोगविधिरित्यप्यपास्तम्। तत्तत्पात्रस्थस्यापि रसस्य ज्योतिष्टोमप्रकरणविशेषविहितप्रचरण्या स्रुचापि होमप्राप्तेस्तत्तत्प्राप्त्यभावेनानुवादत्वासंभवे विशिष्टविधित्वापत्तेस्तस्य उत्पत्ति-

च "अल्पं जुहोति" इति वचनेनाल्पोद्देशेन प्रक्षेपरूपप्रतिपत्तिविधिद्वयं वदानवत्। तत्र च 'ग्रहैर्जुहोति' इत्यादिना पात्रविधिरिति स्थितिः। अतच्छेषसत्त्वात् भक्षणं तत्प्रतिपत्तिः। तत्प्रमाणं च समाख्या वचनं च। तत्र समाख्या तावत् "प्रैतुहोतुश्चमसः प्रब्रह्मण" इत्यादिका वेदे। याज्ञिकानां 'सोमचमस' इत्यादिका। अदनार्थस्य चमेर्धातोरधिकरणवाचके औणादिकेऽसच्प्रत्यये कृते चमसशब्दनिष्पत्तेः। सोमश्चम्यतेऽस्मिन् इति व्युत्पत्त्या सोमभक्षणसाधनत्वावगतेस्तत्समाख्याकल्पितश्रुत्या होत्रादिकर्तृकभक्षणस्य सोमप्रतिपत्त्यर्थत्वसिद्धिः। यदि तु उणादयोऽव्युत्पन्नाः इति पक्षाश्रयणं, तदा चमसशब्दस्य पात्रे रूढत्वेन योग्यतयैव होतृचमसादिसम्बन्धो भक्ष्यभक्षकत्वादिसम्बन्धेनैवेति तया भक्षणसिद्धिरविकला। अतश्च होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां स्वस्वचमसेषु समाख्यया भक्षः। सदस्यपक्षे तस्यापि स्वचमसे। वचनं त्वग्रे निरूपयिष्यते ॥ ५ ॥

---

(६)—उद्गातृचमसमेकश्श्रुतिसंयोगात् ॥ २३ ॥ सर्वे वा सर्वसंयोगात् ॥ २४ ॥ स्तोत्रकारिणां वा तत्संयोगाद्बहुश्रुतेः ॥ २५ ॥ सर्वे तु वेदसंयोगात्कारणादेकदेशे स्यात् ॥ २६ ॥

---

विधित्वायोगात्। अतोऽल्पवाक्यस्यैवोभयविधित्वं ग्रहादिवाक्यानां तु गुणविधित्वमाश्रयितुं युक्तमित्यभिप्रेत्याह—तत्र चेति। शेषसद्भावेऽपि भक्षणे प्रमाणाभावरूपं पूर्वपक्षहेतुमनायासेन दूषयति—तत्प्रमाणं चेति। इत्यादिकेति। प्रोद्गातुः प्रयजमानस्येत्यस्यादिपदेन संग्रहः। औणादिके इति। "अत्यविचमितमिनमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच्" इत्युणादिसूत्रेणेत्यर्थः। ततश्च चमसाध्वर्युकर्तृकहोमशेषस्य होत्रादीनां दशानां चमसिनां भक्षणं समाख्यया सिद्धमित्याह—अतश्चेति। अत्र च वचनानि त्वपूर्वत्वात् तस्माद्यथोपदेशं स्युः चमसेषु समाख्यानात् संयोगस्य तन्निमित्तत्वादिति सूत्रद्वयेन वचनसमाख्ययोर्भक्षप्रमाणत्वेन निरूपितयोर्मध्ये समाख्याप्रमाणस्य एकस्य प्रदर्शने कृतेऽवश्यवक्तव्यं वचनरूपं प्रमाणमग्रे यद्यपि निरूपयिष्यते, तथाप्यपेक्षितत्वात् समाख्याप्रमाणप्रदर्शनाव्यवधानेनैव तत्प्रदर्शनं कर्तुमुचितमपि यन्न कृतं तत् समाख्याप्रमाणप्रसङ्गागततद्विशेषविचारस्य पुरःस्फूर्तिकतया मध्ये करिष्यमाणस्य सङ्गतिं सूचयितुमित्यभिप्रेत्यैतदधिकरणमेतावदपर्यवसितं वचनप्रदर्शनाधिकरणेनान्तमेन पर्यवसितं भविष्यति इत्यैकाधिकरण्यं तावत्पर्यन्तं ज्ञेयमित्येतद्भङ्ग्यन्तरेण दर्शयति---वचनन्त्विति।

**तत्रैव "प्रैतु होतुः" इत्यादिमन्त्रे प्रोद्गातॄणां" इति श्रुतम्।** तेन किमुद्गातैवैक-**स्तच्चमसभक्षणे विनियुज्यते उतोद्गातृप्रस्तोतृप्रतिहर्तारस्त्रय इति चिन्तायां—प्रातिपदिक-श्रुत्या उद्गातैव।** न च **बहुवचनानुरोधेनास्य सर्वतोमुखादावुत्कर्षः, प्रातिपदिकस्य वा लिङ्गसमवायेन त्रितयपरत्वं, योगेन वा उत्कृष्टगानकारित्वेन तत्त्रितयपरत्वं कल्प्यतामिति-वाच्यं; उद्गातृशब्दस्य प्रचुरप्रयोगेणोद्गीथापरपर्यायसामद्वितीयभागरूपोद्गानकर्तरि रूढत्वात्**

---

अत्र दश चमसिनो मूल एवोक्ताः। तथा होतृप्रशास्तृब्राह्मणाच्छंसिनेष्टृपोतृच्छावाकाग्नीध्रा-स्सप्तहोतृकाः वषट्कर्तारः। क्वचिदृतुग्रहे यजमानोऽपि। केवलं होमकर्तारश्चमसाध्वर्यवः। होमाभिषवोभयकर्तारोऽध्वर्युप्रतिप्रस्थातृनेष्टून्नेतार इत्यपि वक्ष्यमाणविवक्षयाऽवधेयम्।

---

॥ **उद्गातृचमसमेकस्य श्रुतिसंयोगात्** ॥

शाखान्तरे प्रैतु होतुश्चमस इति मन्त्रपाठपर्याये प्रोद्गातुरित्येकवचनान्ते पठिते विचारा-संभवात् तद्योग्यं शाखान्तरे बहुवचनान्तेन पठितवाक्यमुदाहरति— **प्रोद्गातॄणामितीति**। अत्र **भाष्यकारेण उद्गातृचमसमेकः श्रुतिसंयोगात्। सर्वे वा सर्वसंयोगात्। स्तोत्रकारिणो वा तत्संयोगात्। बहुत्वश्रुतेः। सर्वे तु वेदसंयोगात् कारणादेकदेशः स्यात्।** इति सूत्रचतुष्टयानुरोधेन एक एवोद्गाता स्वचमसं भक्षयेदुत सर्वेऽपि षोडशर्त्विजः सयजमानाः हारियोजन इव, उत स्तोत्रकारिण उद्गातृप्रस्तोतृप्रतिहर्तारस्त्रय एव, उत सुब्रह्मण्यसहितास्ते त्रय इति संशयं कृत्वा कोटित्रयेण पूर्वपक्षत्रयं कृत्वा चतुर्थः पक्षस्सिद्धान्तत्वेनोक्तः। **वार्तिककारेण** तु भाष्योक्तं चतुर्थपक्षं सिद्धान्तत्वेनायुक्तं मत्वा तृतीयपक्ष एव सिद्धान्तत्वेन दर्शितः। तत्र भाष्योक्तसिद्धान्तस्यायुक्तत्वं सिद्धान्तवेलायां स्फुटीकरिष्यते। अतस्तृतीयपक्षस्यैव सिद्धान्त-त्वमङ्गीकृत्य द्वितीयपक्षस्यातिफल्गुत्वादेवानुपन्यसनीयतां चाभिप्रेत्य द्विकोटिकमेव संशयमाह— **तेन किमिति।** तादृशश्रुतमन्त्रगतसमाख्याकल्पितवचनेनेति तेनेत्यस्यार्थः। यत्तु प्रकृतावेव लक्षणया अर्थपरत्वे संभवति बहुवचनस्य बाधे प्रमाणाभावात् उद्गातृशब्देन सयजमानाष्षोडशर्त्विजो लक्ष्यन्त इति सर्वेषां तच्चमसे भक्ष इति द्वितीयपूर्वपक्षोपादानं तदत्यन्तमयुक्तम्। गानकारित्व-योगेन त्रिष्वेव प्रकृतिप्रत्यययोर्मुख्यार्थत्वे संभवति सर्वलक्षणायां मानाभावादित्येवं सुनिरस्यताभि-प्रायेणाशङ्काकोटावनुद्भाव्य लक्षणानङ्गीकारेणोत्कर्षपक्षं लक्षणाङ्गीकारेणावयवयोगेन वा तृतीयपूर्वपक्षं चाशङ्क्य परिहरति—**नचेति। गुणे त्वन्याय्यकल्पनैकदेशत्वादिति** पाशाधिकरणसिद्धान्त-सूत्रेण गुणे अन्याय्यकल्पना युक्ता न प्रधाने इत्यर्थकेन सामान्यतोऽन्याय्यकल्पनामात्रस्यैव

**गुणभूतबहुवचनानुरोधेन त्वदुक्ताया**स्त्रिविधाया **अप्यन्यथान्यकल्पनायाः पाशाधिकरणन्याये-नानुपपत्तेः।** न **ह्युत्कर्षायोग एव तदधिकरणविषयः, प्रकरणबाधापादकतयोत्कर्षायोगे श्रुतिबाधापादकलक्षणाद्ययोगस्य सुतरां तदधिकरणविषयत्वात्। अतो बहुवचनमेव व्यत्ययानुशासनादिरीत्या एकत्वलक्षणार्थं व्याख्येयम्।** न **चैकत्वलक्षणायां जहत्स्वार्थता-पत्तेः प्रातिपदिक एवाजहत्स्वार्थता युक्तेति केषांचिदुक्तं युक्तं, मुख्यत्वप्राधान्याभ्यां प्राति-पदिके जघन्यवृत्त्यङ्गीकारे निरस्ते जहत्स्वार्थतायाः फलमुखत्वेना**दोषत्वात्। न च प्रति हर्त्रादि**कर्मण्यपि तत्प्रतिपादकवाक्येषु च औद्गात्रं कर्म काण्डं वेति समाख्यानात्** तत्कर्तर्यपि **प्रतिहर्त्रादावुद्गातृशब्दस्य शक्त्यैव प्रयोगोपपत्तेरनेकार्थकस्योद्गातृशब्दस्य बहुवचनानुरोधेन 'निषद्योद्गातारस्स्तुवते' इत्यादिवत् त्रितयपरत्वं, अविशेषाद्वा ससुब्रह्मण्यचतुष्टयपरत्वं वा किं न स्यादिति वाच्यं, अनेकशक्तिकल्पनाभियोद्गानकर्तृवाचकस्यैवोद्गातृपदस्य लक्षणा-दिनाऽपि क्वाचित्कसर्वविषयप्रयोगोपपत्तेः। अत एव मुख्योद्गातुरेव कर्म मुख्यमौद्गात्रं तद्वेदसंयोगाच्चान्यत्राप्यौद्गात्रशब्दः उद्गातृशब्दश्च गौण इति द्रष्टव्यम्।** अतः **पाशाधि-करणन्यायेनोद्गातैवैकः पिबेदिति प्राप्ते—**

---

व्यतिरेकेणायुक्तत्वस्य प्रदर्शनात् उत्कर्षायोगस्येव लक्षणाद्ययोगस्यापि पाशाधिकरणविषयत्वमस्त्येवेति तत्सिद्धान्तेनैवात्र पूर्वपक्षकरणं युक्तमित्यभिप्रेत्याह—**त्रिविधाया** अपीति। तदेवोपपादयति —**न हीति।** प्रकृतिप्रत्ययार्थयोरन्यतरस्य मुख्यार्थबाधेन एकत्र लक्षणावश्यंभावे प्रकृतावेव तद्यु-क्तमित्यत्र यत् **प्रकाशकारै**रुक्तं विनिगमकं तदनूद्य दूषयति—**न चैकत्वेति। अदोषत्वादिति।** इतरथा जहत्स्वार्थतापत्त्या प्रकरणबाधेनाप्युत्कर्षापत्तेरनिवारणादिति भावः। अधुना भाष्यवार्तिक-कारीयसिद्धान्तयुक्तिमनूद्य दूषयति—**न च प्रतिहर्त्रादीति। तत्तत्कर्तरीति।** उद्गीथाख्यसाम-भागगानकर्तरीव प्रस्तावप्रतिहाररूपद्वितीयतृतीयभागगानकर्तरि प्रतिहर्तर्यपीत्यर्थः। यद्यप्यौद्गात्र-प्रवचनसंबन्धावान्तरसामान्येनोद्गातृशब्दस्य प्रतिहर्त्रादौ लक्षणैव **भाष्यादिषु** दर्शिता न शक्तिस्तथापि लक्षणायाः प्रागेव दूषणे कृते शक्त्यभिप्रायेणापि तदीयसिद्धान्तोपपत्तिराशङ्किता नैव विरुद्ध्यते। तथा चानेकशक्तिकल्पनायां गौरवापत्तेः प्रचुरप्रयोगेणोद्गीथकर्तर्येव रूढत्वेनान्यत्र लक्षणाऽऽश्र-यितुमुचितापि प्रकृते सा पाशाधिकरणन्यायेन प्रागेव निरस्तेत्यभिप्रेत्य पूर्वपक्षमुपसंहरति—**अतः पाशेति।** एवमुद्गातृशब्दस्योद्गीथकर्तरि रूढस्यापि बहुवचनानुरोधेन लाक्षणिकत्वमप्यङ्गीकृत्य ससुब्रह्मण्यानामपसुब्रह्मण्यानां वा त्रयाणां भक्ष इति भाष्यवार्तिकसिद्धान्तयुक्तिखण्डने पूर्वोक्तप्रकारेण पूर्वपक्षवेलायां कृते तदनभिप्रेतप्रकारेण स्वयं सिद्धान्तमारचयति—**नोद्गातृ-**

नोद्गातृशब्दस्य ऋत्विग्विशेषे शक्तिः। क्लृप्तावयवयोगेनैवोत्कृष्टगानकर्तृमात्रवाचित्वे-नोपपत्तावतिरिक्तशक्तिकल्पनायां प्रमाणाभावात्। प्रचुरप्रयोगस्याहवनीयेऽग्निपदवन्निरूढ-लक्षणयाऽप्युपपत्तेः। न चात्र रथकारादिशब्दवदवयवार्थं विहाय ऋत्विग्विशेषे प्रयोगः, येनातिरिक्ताऽपि शक्तिः कल्प्येत। न चोद्गायतिरप्युद्गीथवाच्येवेति नियमः "उद्गायतीनामरविन्दलोचनम्" इत्यादावन्यत्रापि प्रयोगात्। अत एव पङ्कजादिशब्दस्य मण्डूकादौ प्रयोगाभावेन योगरूढिकल्पनायामपि प्रकृते न तत्कल्पना, अपि त्वग्निशब्दवन्निरूढलक्षणैव। अतश्च तात्पर्यग्राहकसत्त्वे लाक्षणिकार्थग्रहणेऽपि प्रकृते "अग्निमुपनिधाय स्तुवीत" इतिवत् मुख्यार्थसम्भवे लाक्षणिकार्थग्रहणायोगाद्बहुवचनानुरोधाच्च "निषद्योद्गातारः" इतिवत् प्रकृतापूर्वीयगानकर्तृणां त्रयाणामेव ग्रहणम्। न सुब्रह्मण्यस्य भाष्यकारोक्तस्यापि, गानकर्तृ-

---

शब्दस्येति। येनेति। क्लृप्ता हि रूढिः योगं बाधते—यथा रथकारशब्दादौ। इह तु योगपरित्यागेन प्रयोगादर्शनात्[1] न केवलायास्तस्याः योगबाधकत्वं संभवतीत्यर्थः। यत्त्वत्र उद्गीथशब्दस्य भावार्थकयक्प्रत्यान्तस्य सामद्वितीयभागे रूढत्वं न तत् प्रकृतिभूतोद्गायतेः द्वितीयाभक्तिवाचितां विनोपपद्यत इत्यर्थादवश्यमुद्गायतेरुद्गीथभागमात्रवाचित्वं स्वीकर्तव्यमिति प्रकाशकारैरुक्तं तदनूद्य—

उद्गायतीनामरविन्दलोचनं व्रजाङ्गनानां दिवमस्पृशद्ध्वनिः।
दध्नश्च निर्मन्थनशब्दमिश्रितो निरस्यते येन दिशाममङ्गलम्॥

इति भागवतदशमस्कन्धान्तर्गतषट्चत्वारिंशाध्यायगतषट्चत्वारिंशश्लोके गानकर्तर्यार्षप्रयोगदर्शना-दयुक्तमिति दूषयति—न चोद्गायतिरिति। तात्पर्यग्राहकसत्त्वे इति। यथा यद्युद्गाता-ऽपच्छिन्द्यादित्यादौ प्रतिहर्त्राद्यपच्छेदनिमित्ते नैमित्तिकान्तरविधानरूपं तात्पर्यग्राहकमस्ति तत्रोद्गातृ-शब्दस्य निरूढलक्षणैवाङ्गीक्रियेतैवेत्यर्थः। गानकर्तृत्वाभावादिति। तथा च गानकर्तृ-त्वाभावेनैव प्रोद्गातृपदेनाग्रहणादेव सुब्रह्मण्यस्य केवलं सुब्रह्मण्यानिगदपाठिनो व्यावृत्तिसिद्धौ प्रोद्गातृपदे लक्षणायां नयनस्य सदस्येव मण्टपे करणेन तद्गतदृष्टार्थत्वानुरोधेन सदस्स्थितभक्षणा-र्थत्वनिश्चयेन तत्र स्थितानामेवावान्तरसामान्यविशेषात् लक्षणेति क्लेशोऽपि नापद्यत इत्यर्थः। अत्र च सर्वे भक्षयेयुरिति द्वितीयपूर्वपक्षत्यागेन सिद्धान्ते चोद्गातृपदे रूढिपरिग्रहेणेह लाक्षणि-

---

1. A. योगापरित्यागेन प्रयोगदर्शनात्.

त्वाभावात्। मूलग्रन्थान्यथाकरणं तु युक्त्यनुरोधेन न दोषः। सिद्धान्तेऽन्यथात्वाभावादिति ध्येयम्॥ ६॥

## (७)—ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् ॥ २७ ॥ हारियोजने वा सर्वसंयोगात् ॥ २८ ॥ चमसिनां वा सन्निधानात् ॥ २९ ॥ सर्वेषां तु विधित्वात्तदर्था चमसिश्रुतिः॥ ३० ॥

भक्षे **समाख्या प्रमाणमुक्ता, वचनमिदानीमभिधीयते** "यथाचमस**मन्यांश्चमसांश्च-मसिनो भक्षयन्ति अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते**" इति **श्रुतम्।** तत्र लिप्साश**ब्देनोपक्रमस्यार्थवादानुरोधात्, लिप्सामात्रग्रहणेऽदृष्टार्थत्वापत्तेश्च लक्षणया भक्षण-मभिधीयते।** तच्च **हारियोजने वक्ष्यमाणविधया वषट्कारनिमित्तं होमाभिषवनिमित्तं च**

कार्थप्रतिपादकत्वमित्येतद्भङ्गेन च यत्प्राचां ग्रन्थान्यथाकरणं तत्सिद्धान्तपक्षाविरोधेन न दोषावह-मित्याह—**मूलग्रन्थान्यथेति** ।

### ॥ ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानात् ॥

मध्ये भक्षणप्रमाणसमाख्यागतविशेषचिन्तां समाप्य यदवशिष्टं भक्षे प्रमाणत्वेन निरूपणीये वचनमुपस्थितं निरूप्यत इत्येवं सङ्गतिप्रदर्शनायाह—**भक्ष इति**। अत्र च हारियोजनवाक्ये सर्वशब्देन चमसिमात्राणामेव तद्भक्षणं विधीयते, किं वा सर्वर्त्विजामिति विचारप्रयोजनं ग्रावस्तुतो होतृपुरुषस्य चतुर्थस्यापि भक्षसदसद्भावरूपं यत्तदेव पूर्वपक्षिणा **ग्रावस्तुतो भक्षो न विद्यतेऽनाम्नानादिति** सूत्रेण प्रतिज्ञायते, न तु तदेवाधिकरणविचारविषयः सुब्रह्मण्यस्यापि ग्रावस्तुत इव चमसित्वा-भावेन तथाविधप्रयोजनसंबन्धात्। अतस्तत्रत्यं ग्रावस्तुत इति पदं सुब्रह्मण्यस्याप्युपलक्षणमित्यभि-प्रेत्य भक्षप्रमाणभूतवचनेषु हारियोजनवाक्यमपि भक्षे भवति प्रमाणमिति सूचयितुं तदर्थविचार-मेवाधिकरणविषयत्वेन दर्शयति—**यथाचमसमिति**। **हारियोजनस्येति**। हरिरसि हारि-योजन इति मन्त्रेण गृह्यमाणो ग्रहो हारियोजनशब्दस्यार्थः। यद्यस्मिन् वाक्ये भक्षणविधिः स्यात् तदैतद्वचनं भक्षे प्रमाणं भवेत् न त्वेतदस्ति भक्षस्याश्रवणादित्याशङ्कां परिहर्तुमाह—**तत्र लिप्सेति**। अश्वप्रतिग्रहेष्टिन्यायप्रवृत्तिं सूचयितुं **उपक्रमस्थेत्युक्तं**। यथाचमसमिति पूर्वतनोऽर्थवादः। यद्यनेन वचनेन प्रमाणान्तरप्राप्तभक्षणानुवादेन सर्वकर्तृकत्वमात्रं विधीयते तदापि प्रस्तुताधिकरण-विचारसंभवेऽपि भक्षणविधानमयुक्तमित्यतो वाक्यतात्पर्यं विविनक्ति—**तच्चेति**। अस्मिंश्च भक्षान्तरविधाने वषट्कारनिमित्तभक्षापेक्षया होतुर्होमाभिषवनिमित्तभक्षापेक्षया होमाभिषवकर्तु-

**यद्यपि प्राप्तं, तथाऽप्यत्र विशिष्टोद्देशे वाक्यभेदापत्तेर्भक्षान्तरमेव सर्वकर्तृविशिष्टं विधीयते,** अथवा **हारियोजनावान्तरप्रकरणे पाठात्तदीयभक्षानुवादेनैव** "पुरस्तादैन्द्रवायवस्य **भक्षयति सर्वतः परिहारमाश्विनं भक्षयति" इत्यादिवत् गुणमात्रं विधीयते।** विशेषधर्मपुरस्कारेण **कर्तृविधानाच्च नैककर्त्रवरोधे कर्त्रन्तरविधानानुपपत्तिशङ्का।** सर्वथा **वाचनिकः कर्तृविशेषः। तदिह सर्वपदं किं चमसिमात्रपरं किं वा प्रकृतसर्वर्त्विक्परमिति चिन्तायां —सर्वशब्दस्य सर्वनामत्वादुपस्थितपरामर्शित्वावगतेश्चमसिनामेव च पूर्वमुपस्थितत्वात्तेषामेव ग्रहणमिति प्राप्ते—**

---

रुन्नेतुश्च भक्षान्तरानुष्ठानापत्तिरित्यस्वरसाद्विशिष्टोद्देशं परिहरन् पक्षान्तरमाह—**अथवेति।** तथा च भक्षमात्रस्योद्देश्यत्वेऽपि हारियोजनप्रकरणपाठात्तदीयस्यैवोद्देश्यतापर्यवसानान्न विशिष्टोद्देशप्रयुक्तवाक्यभेदाद्भक्षणान्तरप्राप्तिरित्यर्थः। **पुरस्तादिति।** अत्र चाद्यवाक्ये होमाभिषववाक्यप्राप्तभक्षणानुवादेन नैन्द्रवायवमैत्रावरुणाश्विनभक्षणापेक्षयाऽध्वर्योः प्राथम्यरूपगुणविधिः। त्रयाणामप्यध्वर्युणैव क्रमेण श्रुतत्वान्निमित्तक्रमेणैव मैत्रावरुणाश्विनापेक्षया तस्य प्राथम्यसिद्धेः। न वा प्रतिप्रस्थात्रपेक्षयाऽध्वर्योस्तद्विधिः। आद्ये वषट्कारेऽध्वर्योरेव प्रथमं होमेऽपि द्वितीयवषट्कारोत्तरमध्वर्युप्रतिप्रस्थात्रोस्सहहोमानुष्ठानानन्तरं विधानेन तदीयभक्षस्य प्रथमहोमाव्यवधानेनाननुष्ठानाद्द्वितीयहोमानुष्ठानोत्तरमध्वर्युकर्तृकस्य भक्षस्य स्वहोम्यप्रतिनिग्राह्यशेषसंपातावनयात् प्रतिप्रस्थातृकर्तृकस्य भक्षस्य च प्राप्तौ क्रमापेक्षायास्सत्त्वादिति वाच्यम्। तत्क्रमस्यापि प्रधानपुरुषक्रमेणैव सिद्धेः। अन्यथाऽऽश्विनग्रहेऽपि प्रतिनिग्राह्यस्याध्वर्युणा सह प्रतिप्रस्थात्रापि होमानुष्ठानात् प्राथम्यविध्यभावेऽध्वर्योः प्राथम्यानापत्तेः। अतो **यद्यपि** सामान्यविहितवषट्कर्तृप्राथम्यबाधार्थं विशेषतोऽत्र प्राथम्यविधानं संभवत्येव **तथापि** सर्वतः परिहारमित्याश्विनवाक्ये सर्वदिगन्वयसमभिव्याहारात् इहापि पुरस्तात्पदस्य अग्रवाचित्वाश्रयणेन प्रकरणप्राप्तैन्द्रवायवादिसंबन्धभक्षणोद्देशेनाग्रे निधानरूपो गुण एव विधीयते। सर्वतःपरिहारमित्यत्रापि शिरसस्समन्तात् प्रदक्षिणं परिभ्राम्येत्यर्थेन न सर्वतो भ्रमणं तद्वदिहापीत्यर्थः। अत्र च सर्वभक्षविधिसाम्ये कुत्र भक्षविधिः क्व वा गुणविधिरित्यग्रे दृढीकरिष्यते। ननु वषट्कारकर्त्राद्यवरोधे कथं तस्मिन्नेव भक्षणे सर्वकर्तृविधिरित्याशङ्कां हारियोजनसंबन्धविशेषपुरस्कारेण सर्वकर्तृविशेषविधानात् एतदतिरिक्तविषये ग्रहान्तरे वषट्कारकर्त्रादिनिवेशोपपत्तेः नैकभक्षासंभवमूलकभक्षान्तरविधानप्रसक्तिरित्येवं परिहरति —**विशेषपुरस्कारेणेति।** भक्षणान्तरविधाने तस्मिन्नेव वा भक्षे कर्तृविधाने सर्वेषां भक्षप्राप्तेर्भवत्येवैतद्वचनं भक्षे प्रमाणमिति सूचयितुं वाक्ये विधेयांशमुपसंहरति—**सर्वथेति। चमसिन इति।**

चमसिशब्दस्यान्यचमसेषु एकैकस्यैव चमसिनो भक्षणं न्याय्यं अत्र तु चमसिनामन्येषां च सर्वेषामेव तत् युक्तमित्येवं स्तुत्यवलम्बनत्वेनैवोपपत्तेर्न पुनस्सर्वपदसङ्कोचकत्वम्। अतश्च परमसर्वेण व्यवहारासम्भवादावश्यकेन प्रकरणादिनैव प्रकृतकर्मकरमात्रग्रहणोपपत्तौ पुनश्चमसिभिर्विशेषणे प्रमाणाभावः। न चैवं पत्न्या अपि ग्रहणापत्तिः, मेषीवदेव पुंलिङ्गेन तस्या ग्रहणानुपपत्तेः। चमसाध्वर्यूणां तु याज्ञिकाचाराभावादेवाग्रहणमिति ध्येयम्। न हि ऋत्विज एव सर्वशब्देन ग्राह्या इत्यत्रान्यत्किञ्चित्प्रमाणमस्ति ॥ ७॥

---

## (८)—वषटाराच्च भक्षयेत् ॥ ३१ ॥

सोम एव "वषट्कर्तुः प्रथमभक्षः" इति श्रुतम्। तत् किं भक्षान्तरवचनं किं वा समाख्यादिप्राप्तभक्षानुवादेन प्राथम्यमात्रविधिरिति चिन्तायां—भक्षान्तरत्वे प्रमाणाभावात्प्राथम्यमात्रविधिः। न च वषट्कर्तुरपि विधेयत्वे वाक्यभेदः वषट्कारे निमित्ते भक्षो-

---

होतृब्रह्मादेरित्यर्थः। मेषीवदेवेति। प्रास्मा इति पुंलिङ्गानुरोधेन तन्मन्त्रस्य न मेष्यां प्रवृत्तिः तथा सर्वे इति पुंस्त्वविशिष्टसर्वकर्तृविधानात् न तच्छब्दस्य पत्न्यां प्रवृत्तिरित्यर्थः। एवं मीमांसान्यायेन चमसिव्यतिरिक्तयावत्कर्मकरपरत्वे सर्वशब्दस्य स्थिते चमसाध्वर्यूणां यद्भक्षाननुष्ठानं याज्ञिकानां तदयुक्तमेवेत्यन्वयप्रदर्शनव्याजेनाह—चमसाध्वर्यूणामिति। तदेवायुक्तत्वं न्यायविरोधे आचारस्य निर्मूलत्वमभिप्रेत्य दर्शयति—नहीति। वस्तुतस्तु भक्षाणां कर्तृनियमांशेन करिष्यमाणकर्मोपयोगिकबलाधानार्थत्वस्यापि तत्र तत्रोक्तेर्वक्ष्यमाणत्वाच्च चमसाध्वर्यूणां हारियोजनग्रहाभ्यासानन्तरं सुत्यासमाप्तेरग्रे कर्मकरणाभावेनानियतप्राप्त्यभावे नियमविषयत्वानुपपत्तेः युक्तमेव तेषां सर्वपदेनाग्रहणमिति ध्येयम्।

---

### ॥ वषट्काराच्च भक्षयेत् ॥

पूर्वं द्व्यन्तराधिकरणे सोमे भक्षसत्त्वे वचनं प्रमाणमिति यदुक्तं तदेव लिप्सावचनापेक्षया अन्यद्वचनमिदं प्रमाणं भवितुमर्हतीति निरूपणेन सङ्गतिं सूचयितुमाह—सोम इति। वषट्कर्ता होत्रादिः, असङ्गतत्वव्यावृत्तिरेवकारेण सूचिता। यत्तु समाख्याप्राप्तभक्षोद्देशेन विधानमुक्तं पार्थसारथिना तल्लिप्सावचनप्राप्तभक्षस्याप्युद्देश्यत्वोपपत्तेः उपलक्षणमिति सूचयितुं समाख्यादीत्यादिपदोपादानम्। भक्षोद्देशेन प्राथम्यविधिवत् वषट्कर्तृविधाने वाक्यभेदः तत्परिहाराय तत्कर्तृकभक्षस्योद्देश्यत्वस्वीकारे विशिष्टोद्देशप्रयुक्ततदापत्तिः इत्याशङ्कां परिहरति—वषट्कारे इति। यो भक्षस्तत्र चेद्वषट्कर्ता तदा प्रथममिति वाक्यार्थकल्पनया सप्तदश वैश्यस्येतिवत् वषट्कारकर्तुरपि

**देशेन प्राथम्यविधानात्। रथन्तरे निमित्ते ग्रहोद्देशेनैन्द्रवायवाग्रत्वविधिवच्च विजातीयानेकोद्देशे वाक्यभेदाभावात्।** अतश्च यत्र **चमसे हारियोजने वाऽध्वर्य्वादेरन्यस्य वषट्कर्तुश्च समाख्यया होमाभिषवाभ्यां लिप्सावचनेन वा भक्षप्राप्तिस्तत्र वषट्कर्तुः प्रथमं भक्षस्ततोऽन्यस्येति वचनार्थ इति प्राप्ते—**

---

षष्ठ्या उद्देश्यत्वाभिधानेऽप्यनीप्सितत्वेन रूपेण तदभिधाने विशेषणे वषट्कारे निमित्तत्वपर्यवसानान्न वाक्यभेदद्वयप्रसक्तिरित्यर्थः। एतेन विशिष्टानुवाददोषापत्त्या अत्र प्राथम्यविध्यसंभवस्य ग्रहैकत्वाधिकरणन्यायेनैव सिद्धेः व्यर्थमेतदधिकरणमित्याशङ्कानिरासाय यत्र न विशिष्टानुवादसंभवः यथा विविदिषावाक्ये विविदिषोद्देशेनानेकयज्ञादिविधौ वाक्यभेदात् यज्ञाद्यनेकपदार्थविशिष्टभावनान्तरमेव विधेयत्वेन प्रसक्तं तन्निराकरणार्थमिदम्। एकस्मिन् विविदिषन्तीति पदे विविदिषामुद्दिश्याख्यातोपात्तभावनाविधानासंभवादिति—प्रकाराकाराणां कल्पनमपास्तम्। स्वयमेवाधिकरणारंभे भक्षमात्रस्योद्देश्यत्वेन वषट्कर्तृश्च निमित्तत्वेनान्वयस्य प्रतिपादनात् विशिष्टानुवादस्यैवाप्रसक्तेः तदाशङ्कापरिहारयोर्निष्प्रयोजनत्वात्। प्रत्युत विविदिषावाक्ये एकप्रसरताभङ्गभयेन भावनाविध्यनङ्गीकारे वाक्यभेदापादितकर्मान्तरस्यैवापत्तेः तत्परिहारार्थमगत्या एकप्रसरताभङ्गप्रसक्तिनिवारणस्यैव साधनीयत्वावश्यकत्वेन तदर्थमेतदधिकरणारम्भस्य वक्तुमनुचितत्वाच्च। यथाचात्र नैकप्रसरताभङ्गप्रसक्तिः तथेहैवोपपादयिष्यते पूज्यपादैः। यत्तु समाख्यादिप्राप्तभक्षोद्देशेनेति ग्रन्थे आदिपदेन समाख्यातिरिक्तस्यापि प्रमाणस्य भक्षप्रापकत्वं सूचितं तत्रापि होमाभिषवनिमित्तत्वेन यत्तत्प्रापकप्रमाणं तन्न ग्राह्यमसंभवादिति सूचयितुं लिप्सावचनमेवादिपदेन ग्राह्यमिति दर्शयति—**अतश्च यत्रेति।** न तावद्धोमाभिषवनिमित्ते भक्षे वषट्कर्तुः प्राथम्यविधिस्संभवति। स ह्यध्वर्युप्रतिप्रस्थातुन्नेतृनेष्टृणां प्रसज्यते। तत्र होतृप्रशास्तृब्राह्मणाच्छंसिनेष्टृपोतच्छावाकाग्नीत्राणां सप्तहोतृणामेव वषट्कारविधानाद्यत्र यस्य तावन्न वषट्कार इति न तन्निमित्तभक्षे स निमित्तं भवितुमर्हति। यत्र त्वैन्द्रेऽतिग्राह्ये नेष्टुर्होमाभिषवनिमित्तो भक्षस्तत्र होतुरेव वषट्कारेण तस्य तदभावात् न तत्रापि निमित्तसंभवः। यत्रापि स्वचमसे नेष्टुः वषट्कारस्तत्रापि चमसाध्वर्य्योरेव होमकर्तृत्वान्न होमाभिषवनिमित्तभक्षस्तस्य प्राप्नोतीति न सर्वथा होमाभिषवनिमित्ते भक्षे वषट्कारनिमित्तप्राथम्यविधिः, अपि तु यत्र प्रशास्तृचमसादौ अध्वर्य्वादेः होमाभिषवनिमित्तो भक्षः प्राप्यते प्रशास्त्रादीनामेव च वषट्कारो विहितः समाख्यानिमित्तस्तद्भक्षोऽपि तत्र, यत्र वा हार्योजनग्रहे सर्वेषामेव भक्षप्राप्तिः होता च वषट्कर्ता तत्र चान्यकर्तृकभक्षापेक्षया वषट्कर्तुः प्राथम्यविधानं क्रियत इति भावः।

अत्र च प्राचां ग्रन्थेषु यो वषट्कर्तुः भक्षः स प्रथममिति पूर्वपक्षे वाक्यार्थवर्णने भक्षपदस्य वषट्कर्तृपदार्थान्वयसापेक्षत्वेन व्यपेक्षालक्षणसामर्थ्याभावात् प्रथमपदेन समासानुपपत्तिः।

यदि च भवति वै प्रधानस्य सापेक्षस्यापि समास इत्यपवादात् सापेक्षेणापि भक्षपदेन प्रथमपदस्य समासोपपत्तिरित्युच्येत **तथापि** प्राथम्यविधाने भक्षमात्रस्य सोमवन्निमित्तत्वासंभवात् वषट्कार एव रथन्तरवन्निमित्तं वक्तव्यम्। तथाच वषट्कारनिमित्तकं प्राथम्यं भक्ष इत्यर्थात् वषट्कारनिमित्तसापेक्षस्य प्रथमशब्दस्य भक्षपदेन समासानुपपत्तिः। यदि त्वेतद्दोषपरिहाराय वषट्कारस्योद्देश्यभक्षविशेषणत्वमङ्गीकृत्य जृंभावदार्थिकं निमित्तत्वमुच्येत, तदा विशिष्टानुवादकृतवाक्यभेददोषापत्तिः। यद्यत्र भक्षणमात्रेण वषट्कर्तुः अनेन च भक्षस्य नियमेनाक्षेपस्स्यात्तदाऽन्यतरानुवादेनैव वाक्यार्थपूर्तेर्न तद्विशिष्टानुवादापत्तिर्भवेत्। न त्वेतदस्ति। अतोऽन्यतरानुवादे सर्वभक्षाणां सर्ववषट्कर्तृव्यापाराणां वा प्राथम्यापत्तेः तद्व्यावृत्तये वषट्कर्त्रन्वये विशिष्टोद्देशापत्तेः विधेयप्राथम्यविशेषणत्वे प्रथमपदस्य तत्सापेक्षस्य भक्षपदेन समासायोगात् न भक्षोद्देशेन प्राथम्यविधानं युक्तं, एकप्रसरताभङ्गापत्तेः। अपितु विशिष्टभक्षान्तरविधिरेवेति सिद्धान्तितम्। **तदयुक्तं**; विशेषणविशेष्ययोरन्यतरस्यापि नित्यसापेक्षत्वे सति समासोपपत्तेः वैयाकरणैरभ्युपगमात्। इहोद्देश्यविधेययोरन्यतरं प्रति वषट्कर्तुर्विशेषणताङ्गीकारेऽपि समासानुपपत्तिप्रयुक्तैकप्रसरताभङ्गापादनस्यायुक्तत्वात्। नित्यसापेक्षत्वाभावेऽपि षष्ठ्यन्तस्य प्राचां मते भावनातिरिक्तेऽपि अन्वयाङ्गीकारात् वषट्कर्तुर्भक्षान्वयस्य व्युत्पन्नत्वे सुतरामिह नित्यसापेक्षत्वेनापि परस्परान्वयव्युत्पत्तेः वक्तुं शक्यत्वात् अव्युत्पन्नान्वयनिबन्धनदूषकताया विशिष्टानुवादेप्यप्रसक्तेः।

**वस्तुतस्तु** वषट्कर्तुर्नोद्देश्यविशेषणत्वं न वा विधेयप्राथम्यविशेषणत्वं अपि तु निमित्तत्वेन प्राथम्यकर्तव्यतारूपभावनान्वयित्वमेव। यथैव सप्तदश वैश्यस्येत्यत्र षष्ठ्या निमित्तत्वमेवोच्यत इति वैश्यकर्तृकत्वे निमित्ते सामिधेन्युद्देशेन साप्तदश्यविधिः। अथवा षष्ठ्यन्तस्य परस्परान्वयेन वैश्यसंबन्धिसामिधेन्युद्देशेनैव तद्विधिः। अथवा सामिधेनीरनुब्रूयादिति अनुवादतात्पर्यग्राहकबलात् वैश्योद्देशेनैव स्वस्वामिकसामिधेनीवत्त्वसंबन्धेन तद्विधिः। अत एवाद्यपक्षे शाब्दमेव निमित्तत्वं वैश्यस्य, इतरयोश्च वैश्याभावे साप्तदश्याननुष्ठानादार्थिकं तदित्यभिप्रेत्यैव **नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषादित्येत**दध्यायषष्ठपादाधिकरणसूत्रे वैश्यनिमित्तकसाप्तदश्यस्य नैमित्तिकत्वेन व्यवहारः करिष्यते; तथैवेहापि तत्प्रकारत्रयेण वषट्कर्तुर्निमित्तत्वेनान्वयोपपत्तेर्न कोऽपि वाक्यभेदः। न वा समासानुपपत्तिः।

**यत्त्वत्रान्तिमप्रकारेणेह** वषट्कर्तुद्देशेन प्राथम्यविधाने भक्षानुवादायोगः समाख्याप्राप्तस्य भक्षस्य प्रकरणविपरिवृत्त्यभावेन प्रकरणप्राप्तद्वारकतामादाय तदसंभवात्। प्रत्यक्षविधिकृता हि विपरिवृत्तिरधिकाराख्यानुवादहेतुर्भवति। न चेह समाख्याकल्पितो विधिः प्रत्यक्षः। अत एव

'प्रथमभक्षः इति समासरूपे एकस्मिन् पदे एकांशेनोद्देश्यत्वे एकांशेन विधेयत्वे चाङ्गीक्रियमाणे एकप्रसरताभङ्गापत्तेः कर्मान्तरमेवेदम्। न च तस्मिन् दूषकताबीजाभावः, सामर्थ्यभङ्गस्यैव तद्बीजत्वात्। तथा हि—सर्वत्रोद्देश्यविधेयभावस्थले उद्देश्ये विधेयान्वयात्पूर्वमुद्देश्यस्योद्देश्यत्वेन क्रियान्वयोऽवश्यं वक्तव्यः। अत एव "यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्"इत्यपि सङ्गच्छते। प्राथम्यं तत्त्वेन प्रथमं क्रियान्वयः अन्यस्यातिप्रसक्तत्वात्। तदत्र यत्र भिन्नपदस्थले यागेन स्वर्गं भावयेदित्यादौ तत्तत्पदात्पदार्थोपस्थित्यनन्तरं स्वर्गस्योद्देश्यत्वेन यागस्य च विधेयत्वेन क्रियान्वये प्रथमावगते पश्चादेव विधेयस्य यागस्योद्देश्ये स्वर्गेऽन्वय इति स्थितिः, तद्वदेवाप्येकपदस्थले भक्षे प्राथम्यान्वयात्पूर्वं भक्षस्य क्रियान्वयोऽभ्युपगन्तव्यः। ततश्च क्रियान्वयात्पूर्वं भक्षप्राथम्ययोर्विशेषणविशेष्यभावा-

---

पुरस्तादैन्द्रवायवं भक्षयति इत्यादौ विशिष्टानुवाददोषादैन्द्रवायवमात्रोद्देशेन पुरस्तादित्यादिगुणविधौ होमाभिषवनिमित्तप्रत्यक्षभक्षविधिकृतविपरिवृत्तिप्राप्तभक्षानुवादो युक्तः। अतो न भक्षानुवाद इति प्रकाशकारैरुक्तम्; तन्न, दूरस्थस्य शब्दत उद्देश्यत्वेऽपि वषट्कर्तृपदसमभिव्याहारसहकृतपरिशेषप्रमाणेन समाख्याप्राप्तस्यैवोद्देश्यत्ववत् भक्षसामान्येनोपस्थितस्यापि तस्य तेनैव प्रमाणेन विशेषतः समाख्याप्राप्तत्वेनानूद्यमानस्य संबन्धविशेषनियामकत्वोपपत्तौ बाधकाभावात्। अतो विशिष्टानुवादैकप्रसरताभङ्गापादकसमासानुपपत्त्योरसंभवान्न सिद्धान्तासिद्धिस्संभवतीत्यभिप्रेत्य स्वयमेकप्रसरताभङ्गस्य दूषकताबीजं सापेक्षत्वमुपेत्यैकार्थीभावलक्षणसामर्थ्यभङ्गापत्तेरेव तद्बीजत्वं सूचयन् सिद्धान्तमारचयति—प्रथमभक्ष इति। उद्देश्यस्य प्रथमतः क्रियान्वयित्वेनैव प्राथम्यमभिप्रेत्य यदनुमानवादवार्तिककारिकायामुद्देश्यलक्षणं कृतं तदनुकूलत्वेन दर्शयति—अत एवेति। तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणं इत्यस्योत्तरार्धं द्रष्टव्यम्। विशेषणविशेष्यभावेति। विस्तरेणार्थवादचरणे हेत्वधिकरणे रथन्तरपादाद्याधिकरणवार्तिकानुसारेण कौस्तुभे उक्तं तत्रैव द्रष्टव्यम्। अत्र प्रकाशकारैस्सिद्धान्ते समासवत् समासव्यतिरिक्तेऽपि एकस्मिन् प्रकृतिप्रत्ययात्मके पदे स्वार्थबोधे समाप्तं वाक्यं वाक्यान्तरेणान्वीयत इति न्यायतौल्यात् समास इव च सामर्थ्यस्य प्रत्ययविधावप्यपेक्षणात् तद्विघातापत्तेरपि तुल्यत्वात् प्रकृतिप्रत्ययार्थावन्योन्यान्वितावेव सन्तौ पदार्थान्तरेणान्वीयेते। नैकैकोऽन्योन्याननन्वितः। अत एव धात्वर्थभावनयोरन्योन्यान्वितयोरेव पश्चात् द्रव्यान्वयो नामान्वयः फलान्वयश्च न धात्वर्थमात्रस्य भावनामात्रस्य वेतरान्वितस्य पश्चात् परस्परान्वयः। एवं च विविदिषावाक्येऽपि विविदिषोद्देशेन यज्ञाद्यनेकपदार्थविशिष्टभावनान्तरस्य नैव विधानं एकप्रसरताभङ्गापत्तेः। यदि त्वत्रैकप्रसरताभङ्गापत्तिमवज्ञायैव भावनान्तरविधानमाश्रीयते तदा वषट्कर्तृवाक्ये प्राथम्यविध्यापादनं दुरुद्धरमेवापद्येतेत्युक्तम्। तदेकप्रसरताभङ्गापत्त्या भावनान्तर-

नवगमादेकार्थीभावलक्षणसामर्थ्यभङ्गादपरिपूर्णस्य समासपदस्य पदान्तरेणाख्यातेनाप्यन्वयायोगात्। यद्यपि चास्मन्ते वैयाकरणवत् विशिष्टार्थवाचकत्वं न सामर्थ्यं तथाऽपि क्रियान्वयात्पूर्वं विशिष्टार्थबोधकत्वमेव तदिति बोध्यम्। अत्र च क्रियाभिन्नं विधेयं बोध्यम्। क्रियात्मके विधेये तदन्वयात्पूर्वमुद्देश्यस्य तत्त्वेन क्रियान्वयस्य वक्तुमशक्यत्वात्। अत एव "विविदिषन्ति यज्ञेन" इत्यादौ विविदिषोद्देशेन यज्ञादिभावनाविधानेऽपि न क्षतिः। अतश्चैकप्रसरताभङ्गभिया भक्षान्तरमेव विधेयम्।

---

विधानायोगस्येव कर्मान्तरत्वपक्षे प्रकृतभावनाविधानपक्षेऽपि वा विविदिषायास्सर्वथैवोद्देश्यत्वेनैवान्वयात् विशिष्टभावनाविधानायोगस्यापि तुल्यत्वात् एतद्वाक्यार्थानुपपत्तेरयुक्तमिति सूचयन् भावनाविधानस्वीकारेऽपि एकप्रसरताभङ्गस्य दूषकतावीजमेव नास्तीत्येवावश्यवक्तव्यं दर्शयति—**अत्र चेति**। **अयमर्थः** विशिष्टार्थबोधकैकपदे अंशद्वयेन निविष्टयोरर्थयोर्विशेषणविशेष्यभावेनान्वितत्वरूपैकार्थीभावलक्षणसामर्थ्यस्य सर्वत्रापेक्षितस्य विविदिषन्तीत्यत्रापि नैव त्यागः, विविदिषारूपोद्देश्यस्य क्रियायामेव कर्मत्वेन दध्ना जुहोतीत्यत्रेवान्वयस्वीकारेणान्यत्रान्वयाभावे विविदिषाकर्मकार्थप्रतिपादकत्वाविघातात्। अतश्च स्वर्गकामादिवाक्यसाधारण्येन सर्वत्राप्यधिकारवाक्ये स्वर्गादिकर्मकयागकरणकभावनाविधाने सति पश्चादेव यागस्वर्गगतसाध्यसाधनभावावगतिरेवमिहापि यज्ञाद्यनेककरणकविविदिषाकर्मकभावनाविधानेन वाक्यभेदाभावे पश्चादेव विविदिषायज्ञादीनां साध्यसाधनभावावगतिः सुलभेति नैकप्रसरताभङ्गः। एवं सति लाघवादेवैकपदोपात्ततया वाक्यभेदपरिहारेणानेकप्रकृतभावनाविधानलाभेन यज्ञान्तरभावनान्तरविधानमाश्रयणीयमिति। एतत् प्रकरणान्तराधिकरण**कौस्तुभ** एव द्रष्टव्यम्। विस्तरभयान्नोच्यते। अत एव "न सुरां पिबेत्" इत्यत्र सुराकर्मकपानभावनां रागतः प्राप्तामुद्दिश्य निवारणाविधाने एकपदत्वेऽपि नैकप्रसरताभङ्गः भावनान्तराभावेन भावनाया उद्देश्यत्वेनान्वयासंभवात्। किन्तु निवारणाप्रयोज्यकृतेरेव प्रथमबोधे विशिष्टरूपेण विधेयत्वमेव। उद्देश्यत्वव्यवहारस्तु प्राप्ताप्राप्तविवेकफलीभूत औत्तरकालिक एवेति ध्येयम्। प्रकृते तु क्रियावाचकपदातिरिक्तैकपदेनैवोद्देश्यविधेयभागद्वयसमर्पणात्। तत्र यदि क्रियान्वयात् पूर्वमेव भक्षपदस्य प्रथमपदेन सह विशेषणविशेष्यभावः तदोद्देश्यत्वहानिः। यदि तु तत्सिद्ध्यर्थं पूर्वं क्रियान्वयाश्रयणं तदा प्रथमभक्षपदयोरैकार्थ्यभङ्गः इति वैषम्येण न प्राथम्यविधानं भक्षोद्देशेन, किन्तु भक्षान्तरविधानमेव युक्तमित्युपसंहरति—**अतश्चेति**। एवमेकस्मिन् पदे विधेयोद्देश्यभावरूपविधाद्वयायोगे स्थिते कथं लोहितवसना ऋत्विजः प्रचरन्तीत्यत्र ऋत्विग्गतवसनोद्देशेन लौहित्यविधानं एकस्मिन् युज्यत इत्याशङ्क्य ऋत्विगुद्देशेन लोहितवसनत्वं प्राकृतशुक्लांबरकार्यं विधीयते न लौहित्यमात्रमिति समाहितं—**प्रकाशकारैः**। तत् बहु-

अत एव 'लोहितोष्णीषा.' इत्यादावतिदेशात्पूर्वमेव लोहितोष्णीषविशिष्टकर्तार एव प्रचारोद्देशेन विधीयन्ते विशेषणमात्रविधिफलका इति तत्र तत्र एकप्रसरताभङ्गपरिहारप्रकारो वक्ष्यते। अतश्च प्रकृते एकप्रसरताभङ्गभिया प्राथम्यस्य पूर्वकर्मण्यनिवेशाद्गुणादेव वषट्कर्तृप्राथम्योभयविशिष्टं भक्षान्तरमेव विधीयते सोमसंस्कारार्थम्। तत्र च यागार्थत्वेन

---

व्रीह्युपात्तान्यपदार्थस्य विधेयकोटौ अनिवेशेन समासार्थविधानानुपपत्तेः वार्तिकादिषु संपूर्णसमासार्थविध्यङ्गीकारेणैव 'एकं साम तृचे क्रियत' इत्यत्र तृचविधानाङ्गीकारेण एकप्रसरताभङ्गपरिहारस्य दर्शितत्वात्। तथात्वेऽपि वा धात्वर्थस्य प्रचारस्योद्देश्यत्वेन विधेयत्वेन वाऽन्वयाभावेनात्यन्तपारार्थ्यापत्तेः अयुक्तमिति लोहितवसनवाक्यसदृशवाक्यान्तरार्थप्रदर्शनेन सूचयन् तत्रैकप्रसरताभङ्गपरिहारप्रकारमाह—**अत एव लोहितेति**। बहुव्रीहिणोपात्ता ये कर्तारः त एव विधीयन्ते धात्वर्थोद्देशेन। **ऋत्विज** इति पदमेवानुवादः। तथाचोष्णीषवाक्ये प्रकृतौ उष्णीषसामान्यस्यैवाभावे तज्जन्यकार्याभावेन तत्स्थानापन्नतया शुक्लांबरस्थानापन्नतया वा लोहितोष्णीषत्वविधानस्यासंभवादगत्या लोहितोष्णीषविशिष्टकर्तृविधिरावश्यकस्तथेहापि उपपन्न एव तद्विधिरिति न लोहितवसनत्वमात्रविधिर्युक्तः। तत्रोभयत्रापि यावन्मात्रांशे अन्यतः प्राप्तिस्तदवशिष्टस्यैव फलतो विधानमित्यर्थः।

अत एवैकं साम तृचे क्रियत इत्यत्र तृच इति समासार्थस्य त्रित्वविशिष्टर्चस्तोत्रोद्देशेन तदीयसामोद्देशेन वा विशेषणमात्रफलकविधानवत् वषट्कर्तृवाक्येऽपि प्रथमभक्ष इति विशिष्टसमासार्थविधानं प्राथम्यमात्रफलकं स्यादित्याशङ्क्य तत्र साम्नो ऋक्संबन्धस्य नियततया प्राप्तेः विशेष्यांशेऽनुवादसंभवेऽपीह वषट्कर्तुः स्वचमसातिरिक्तेषु ग्रहेषु चमसेषु च भक्षस्य नियततया प्राप्त्यभावेनानुवादासंभवात् अप्राप्तत्वेनागत्या विशिष्टविधिफलकमेव समासार्थविधानमङ्गीकर्तव्यमिति न प्राथम्यमात्रफलकत्वासिद्धिरिति यत्समाहितं **वार्तिके** तदपि समासार्थपर्यन्तविध्यङ्गीकारेणैव संगच्छत इति भावः।

**एतावत्त्विह चिन्त्यम्।** यदाग्नेय इत्यादितद्धिते अग्निदेवतायाः कारकत्वेन प्रथमतो भावनान्वयस्य तत्र तत्र पूज्यपादैरभिहितत्वात् तद्धितोत्पत्तौ देवताविशिष्टद्रव्यानभिधाने कथं न सामर्थ्यभङ्ग इति। ननु जंजभ्यमानस्योद्देश्यत्वेन तद्विशेषणीभूतजृंभायाः संस्कार्यत्वासंभवेन मुख्योद्देश्यत्वायोगेऽपि गौणनिमित्ततारूपोद्देश्यताश्रयणात् भवत्वार्थिकं निमित्तत्वं, इह तु सिद्धान्ते वषट्कर्तुरुद्देश्यत्वाभावात् कथं निमित्तत्वं वषट्कारस्येत्यत आह—**तत्र चेति**। परप्रयुक्तवषट्कारस्यैव कर्तुरुपलक्षणत्वेत्वेन भक्षानुरोधेन वषट्कारस्यासंपाद्यत्वात् यदा भक्षस्तदा वषट्कार इत्येवमुपादेयत्वासंभवे

वषट्कारस्य क्लृप्तत्वात्कर्तुरुपलक्षणमात्रत्वेनार्थान्निमित्तत्वावगतेर्वषट्कारनिमित्तकमिदं भक्षणं ग्रहेषु चमसेषु चाऽविशेषात्सिद्धं भवति ॥

---

## (९)—होमाभिषवाभ्यां च ॥ ३२ ॥

इदमपरं भक्षस्य निमित्तं "हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि (भक्षान्) भक्षयन्ति" इत्यत्र हविर्धानादीनां सर्वेषां गुणानां विध्यन्तरादर्थाच्च प्राप्त-

---

यदा वषट्कारस्तदा प्रथमभक्ष इत्येवं वाक्यार्थपर्यवसानात् आर्थिकनिमित्तत्वावगतिरित्यर्थः। पूर्वपक्षे समाख्याप्राप्तभक्षोद्देशेन प्राथम्यमात्रविधानात्तस्य च चमसेष्वेव संभवात् चमसेष्वेव प्रथमं वषट्कर्तुर्भक्षः एवं हार्योजनग्रहभक्षेऽपि। सिद्धान्ते तु चमसेषु वषट्कर्त्रा एकं भक्षं कृत्वाऽपरोऽपि भक्षस्समाख्या-निमित्तः कर्तव्यः। ऐन्द्रवायवादिषु तु प्रथममेवैको वषट्कर्तुः, सति वचने द्वितीयोऽपीति प्रयोजनं सिद्धान्तप्रयोजनकथनमात्रेण दर्शयति—ग्रहेषु चमसेष्विति। हारियोजनग्रहे तु प्रत्यक्षोपदेशादि-त्यधिकरणान्ते वक्ष्यते।

---

॥ होमाभिषवाभ्यां च ॥

सोमभक्षे वचनान्तररूपप्रमाणसद्भावनिरूपणेनास्य सङ्गतिं सूचयति—इदमपरमिति। हविर्धाने इति। उत्तरवेद्याः प्रतीचीनसदोमण्टपात् प्राचीने हविर्धानसंज्ञके मण्टपे ग्रावभि-स्सोममभिषुत्याहवनीयात् प्रणीते उत्तरवेदिस्थे आहवनीये हुत्वा ततः प्रतीचीं पुनः पर्यावृत्त्य सदोमण्टपे भक्षान् हुतावशिष्टसोमरसान् भक्षयन्तीति वचनार्थः। सर्वेषां गुणानामिति। हविर्धानाधिकरणत्वग्रावकरणकत्वाभिषवाहवनीयाधिकरणकत्वहोमानां पञ्चानां गुणानां विध्यन्त-रात् प्राप्तिः। होमपूर्वभावित्वमभिषवे भक्षपूर्वभावित्वं होमे सदोऽधिकरणत्वं प्रत्यगभिमुखत्वं गमनं चेत्येवं पञ्चानां तु गुणानामर्थात् प्राप्तिः। नहि हुतस्याभिषवः संभवति, रसस्यैव होमात्। न वा होमात् पूर्वं भक्षः, हुताशिष्टस्यैव प्रतिपत्त्यपेक्षस्य भक्षणप्रतिपत्तिविधानात्। नापि होत्रादीनां सदसि कर्मप्रवृत्तेर्वषट्कारसमाख्यानिमित्तभक्षार्थं सदो विना सोमानयनमन्यदेशे संभवति। न वा तस्य च नयनं अध्वर्यादीनां गमनमन्तरेण संभवति। अतोऽर्थात् गुणचतुष्टयस्य प्राप्तेस्सदोमण्ट-पस्य होमदेशात् प्रत्यक्त्वादेव प्रत्यगभिमुखत्वस्यापि अर्थात्प्राप्तत्वान्न विधेयत्वमित्यर्थः। ननु हारि-योजने सर्वेषामेव भक्षकर्तृत्वेन होमाभिषवकर्तुरपि तत्र प्राप्तिरित्याशंकामनूद्य हारियोजने होमाभिषव-

त्वात्केवलं होमाभिषवसमानकर्तृकत्वं भक्षमात्रेऽप्राप्तं विधेयम्। यद्यपि च हारियोजनादौ होमाभिषवसमानकर्तुरपि भक्षणं प्राप्तं, तथाऽप्यवयुत्यानुवादे वाक्यवैयर्थ्यापत्तेस्तस्य विधेयता। सा च न पूर्वविहितभक्षेषु, सर्वेषोत्पत्तिशिष्टविशेषविहितकर्त्रन्तरावरोधात्। अतश्च होमाभिषवसमानकर्तृकं भक्षणान्तरमेवेह विधीयते, कर्तृरूपगुणानुरोधेन वाऽवेष्टिवत् वषट्कारभक्षस्यैव प्रयोगभेदमात्रम्। न चोत्पत्तौ नियामकाभावः। प्राथम्यस्यैवोत्पत्त्यन्वयिनो वषट्कारवाक्ये नियामकत्वात्। प्राथम्यस्यापि प्रयोगान्वये तु कर्मान्तरमेवेति ध्येयम्। अत्र च होमेऽभिषवसमानकर्तृकत्वस्याध्वर्यवसमाख्याबलादेव प्राप्तेः प्रधानान्वयस्याभ्यर्हितत्वाच्च भक्ष एवाभिषवसमानकर्तृकत्वं होमसमानकर्तृकत्ववद्विधीयते। होमाभिषवयोश्च क्लृप्तफलकत्वाद्वषट्कारवदेवार्थान्निमित्तत्वम्। तयोस्समुच्चितयोर्निमित्ततेति

---

समानकर्तारस्तद्भिन्नाश्च कर्तारः प्राप्ताः। तत्र येऽभिषवहोमकर्तारस्तानादायास्यानुवादत्वे स्वीक्रियमाणेऽवयुत्त्यानुवादत्वापत्त्या दूषयति—यद्यपीति। अवयुत्यानुवादत्वापत्तिभिया विधेयत्वस्वीकारे वषट्कारभक्षहारियोजनभक्षसमाख्याभक्षेषु त्रिष्वपि होमभिषवसमानकर्तृत्वविधिरेवास्त्वित्याशङ्कां दूषयति—सा च नेति। कर्त्रन्तरेति। हारियोजनग्रहे सर्वकर्तृत्वेनोत्पत्तिशिष्टेनावरोधात् होमाभिषवयोस्समाख्यया अध्वर्युकर्तृकत्वात् तत्समानकर्तृत्वेन प्राप्तस्य अध्वर्युमात्रकर्तृत्वस्य न निवेशस्संभवति, तदन्यभक्षेष्वपि तत्तत्समाख्याप्राप्तकर्तृत्वेनावरोधादपि तथा। वषट्कारनिमित्तभक्षेऽपि होमाभिषवकर्तृत्वविधौ वषट्कर्तुः क्वापि होमाभिषवकर्तृत्वाभावात् अन्योन्यविरोधादेव न निवेश इति त्रिषु न तत्कर्तृविधिस्संभवतीत्यर्थः। अतश्चेति। अनिविशमानगुणादित्यर्थः। तथा पूर्वविहितभक्षभावनानुवादेनाभिषवकर्तृकत्वस्य होमकर्तृकत्वस्य च विधानाद्वाक्यभेदापत्तेरपि भक्षान्तरमित्यपि होमाभिषवसमानेत्यनेन सूचितम्। अवेष्टिवदिति। यदि ब्राह्मणो यजेतेत्यादिनाऽवेष्टिप्रयोगभेदस्तद्वदित्यर्थः। प्रयोगान्वयित्वे इति। तस्य पूर्वकालरूपत्वेन प्रयोगान्वयित्वे इत्यर्थः। कर्मान्तरमेवेति। उभयत्रापि उत्पत्त्यपेक्षणे विनिगमनाविरहात् उत्पत्तिविशिष्टकर्मान्तरप्रयोगविधानमित्यर्थः। क्लृप्तफलत्वादिति। तेन विशिष्टस्य कर्तृत्वेनाङ्गतया विधानाभावात् भक्षप्रयोज्यतानुपपत्तेः परप्रयुक्तयोस्तयोरुपलक्षणत्वेनार्थान्निमित्तत्वमित्यर्थेन तयोरङ्गत्वेन विधानेऽपि न विधेरवकाश इति सूचितम्। अत एव तयोश्शब्दतो निमित्ततया उद्देश्यत्वाभावेन तद्विशेषणत्वेन साहित्याविवक्षायोगात् प्रत्युतोपादीयमानकर्तृविशेषणत्वादेकवाक्योपादानावगतविवक्षितसाहित्ययोरेव होमाभिषवयोर्निमित्तत्वमर्थादित्याह—तयोश्चेति। षष्ठे चतुर्थपादे होमाभिषवभक्षणं च तद्वदित्यधिकरण इति शेषः। अधिकरण-

षष्ठे वक्ष्यते। अतश्च यो यत्राभ्यासे होमाभिषवोभयकर्ताऽध्वर्युः प्रतिप्रस्थाताऽन्यो वा ग्रहे चमसे वा स तत्र भक्षयेत् ॥ ९ ॥

---

(१०)—प्रत्यक्षोपदेशाच्चमसानामव्यक्तःशेषे ॥ स्याद्वा कारणभावादनिर्देशश्चमसानां कर्तुस्तद्वचनत्वात् ॥ ३४ ॥ चमसे चान्यदर्शनात् ॥ ३५ ॥

अथ यत्रैकस्मिन् पात्रेऽनेकेषां भक्षकर्तॄणां, एकस्मिन् कर्तरि वाऽनेकेषां वषट्कारहोमाभि-

---

विचारप्रयोजनसूचनतात्पर्येण सिद्धान्तमुपसंहरति—अतश्च यो यदिति। तथा च पूर्वपक्षे अध्वर्युप्रतिप्रस्थातृउन्नेतृनेष्टॄणां होमाभिषवोभयकर्तॄणां मध्ये आद्यानां त्रयाणां हारियोजनग्रहे सर्ववचनेन भक्षप्राप्तावपि तद्व्यतिरिक्ते ग्रहे चमसे वा वषट्कारसमाख्यारूपकारणद्वयाभावान्नैव भक्षः। चतुर्थस्य नेष्टुस्तु स्वचमसे समाख्यावषट्काराभ्यां भक्षप्राप्तावप्यैन्द्राग्निग्राह्ये ग्रहत्वेन समाख्याया अभावात् होतुश्च वषट्कर्तृत्वेन वषट्कारस्याप्यभावात् नैव भक्षः। सिद्धान्ते तु होमाभिषवनिमित्तसत्वात् भवत्येव चतुर्णामप्येवं विषये भक्ष इति प्रयोजनमित्यर्थः।

---

॥ प्रत्यक्षोपदेशाच्चमसानामव्यक्तः शेषः ॥

पूर्वाधिकरणेषु भक्षकारणे उक्ते उपस्थितत्वात् तद्बाधसमुच्चयौ वक्ष्यमाणतत्क्रमोपयोगितया विचार्येते इत्येवं प्रसङ्गसङ्गतिं सूचयन् विषयमाह—अथेति। अनेकेषामिति। यथा हारियोजनपात्रे एकस्मिन् बहूनां कर्तॄणां समवाये इत्यर्थः। एकस्मिन् पात्र इति। एकस्मिन् कर्तरि कारणसमवाये बाधाभ्युच्चयचिन्तनस्येव एकपात्रे अनेककर्तृसमवाये समानन्यायात्तच्चिन्तनसंभवमभिप्रेत्याह। यथावोद्गातृयजमानब्रह्मसदस्यचमसेषु चमसिनामुद्गात्रादीनां वषट्कर्तुर्होतुः प्राप्तौ समवाय इत्यर्थः। अत एवात्र चमसाध्वर्यूणां होमकर्तृत्वाद्धोमाभिषवकर्तॄणामत्राप्राप्तेरनेकेषामित्यस्यैकभिन्नानामित्यर्थः। तेन द्वयोरपि समवायोपलक्षणमेतत् द्रष्टव्यम्। यथा वा होत्रादीनां सप्तानां स्वस्वचमसेषु समाख्यया होमाभिषवाभ्यां चाध्वर्योर्भक्षस्य प्राप्तौ यद्यपि तेषां स्वस्वचमसेषु वषट्कारोऽप्यस्ति भक्षस्य कारणं तथा ऋतुग्रहे तन्निमित्तस्य होमभिषवनिमित्तस्य च सावकाशत्वेन परस्परं बाध्यबाधकभावासंभवात् वषट्कर्तुः प्रथमभक्ष इति प्राथम्यविधानाच्च समुच्चयस्यावश्यकत्वाच्च न विचारविषयत्वमिति भावः। एकस्मिन् कर्तरीति। यथा होतृमैत्रावरुणादीनां

**षवसमाख्यादिकारणानां, समवायस्तत्रैकशेषप्रतिपत्त्यर्थत्वाद्भक्षाणां विकल्पे,** प्रत्यक्षशिष्टानामपि **वषट्कारादिभक्षाणां** सामान्यविहितत्वात् **कल्प्ययाऽपि समाख्यया विशेषनिष्ठया** प्रमेयबलाबल- **न्यायेन बाधाद्भक्षविषयत्वावगतेर्भिन्नविषयत्वे वा प्राप्ते—**

"अल्पं **भक्षयति" इति वचनेन कृत्स्नस्य शेषस्यैकभक्षणप्रतिपाद्यत्वासम्भवादेकेन भक्षणेन प्रतिपादितेऽपि शेषेऽवशिष्टशेषस्य भक्षणान्तरेण प्रतिपत्तिसम्भवात्**, प्राथम्यविधेश्च **समुच्चयः। नन्वेवं कर्तृभेदेनानेकेषां भक्षाणां पृथगनुष्ठानेन समुच्चयोपपत्तावपि यत्रैकस्मिन्नेव कर्तरि कारणानेकत्वं तत्र प्रयोगविध्यवगतसाहित्यसम्पत्त्यर्थं तन्त्रत्वोपपत्तेर्न पृथगनुष्ठानेन समुच्चयः। वस्तुतस्तु—समाख्यायाः ब्रह्मोद्गातृयजमानसदस्यचमसेषु** कारणान्तरेणै- **तत्कर्तृकभक्षस्याप्राप्तत्वात्तद्विधायकश्रुतिकल्पकत्वेऽपि होतृकचमसेषु वषट्कर्तृत्वेनैव तेषां तत्र भक्षस्य प्राप्तत्वात्** क्लृप्तप्रवृत्तिनिमित्ततया **न विधिकल्पकत्वावकाशः। एवं हारि- योजनेऽपि तेषां कारणान्तरेण न भक्षप्राप्तिस्तत्प्राप्तिफलक एव सर्वत्वविधिरिति न तत्रापि**

---

सप्तहोतृकाणां स्वस्वचमसेषु प्रत्येकं समाख्यावषट्कारनिमित्तयोस्समवाय इत्यर्थः। **अत्राप्यने-** केषामित्येकनिक्षमात्रपरमेव ज्ञेयम्। तेन वषट्कारादीनां द्वयोर्द्वयोस्समवायसंभवेऽपि **त्रयाणामेक-** स्मिन् कर्तरि तदसंभवात् न विरोधः। आदिपदेन लिप्सावचनसंग्रहः। अत एव होमाभिषवयो- रेककर्तरि निमित्तान्वयेन निमित्तान्तरेण सह समवायोऽपि एतद्विषय एव। अन्यत्र तदप्रसक्तेः। **तत्रैकशेषेति।** एकशेषपदे कर्मधारयसमासः। विकल्प इत्यस्य प्राप्ते इत्यनेनान्वयः। पूर्व- पक्षान्तरमाह—**प्रत्यक्षशिष्टानामिति। सामान्यविहितेति।** ग्रहचमसादिसामान्येन विहित- त्वादित्यर्थः। **प्रमेयबलाबलेति। एतेन** वषट्कारादिनिमित्तानां क्लृप्तकल्प्यत्वकृतबला- बलसद्भावेन न समाख्यया बाध इति सिद्धान्तयुक्तिः **पार्थसारथिसूचिता परास्ता।** एवं स्थिते ऽल्पवचनबलादेव सिद्धान्तमाह—**अल्पमिति।** यावद्वषट्कारादिवाक्यैरुत्पन्नानां भक्षाणां सामर्थ्यात् सोमसंस्कारार्थत्वं कार्त्स्न्येन कल्प्यते तावत् पूर्वमेवाल्पवाक्येनाल्पसंस्कारकतया विनियोगे कृते एकदाऽल्पस्य भक्षणे कृते पुनरवशिष्टस्य प्रतिपत्त्यपेक्षस्य भक्षणान्तरप्रतिपत्तेरावश्य- कत्वात् समुच्चय एवेत्यर्थः। **प्राथम्यविधेश्चेति।** द्वितीयभक्षणस्यैवाभावे कोट्यन्तराभावादेव तदपेक्षया भक्षविशेषे प्राथम्यविधिरन्यथानुपपन्न एव स्यादित्यर्थः। **कारणान्तरेण वषट्कारा-** दिरूपेणेत्यर्थः। यजमानादिरेतच्छब्दार्थः। **तत्र च**मसेष्वित्यर्थः। **क्लृप्तेति।** वषट्कारभक्षणेन समाख्यायाः प्रवृत्तिनिमित्तस्य क्लृप्तत्वादित्यर्थः। शुक्रामन्थिप्रचारकाले हि होतृवषट्कारे सर्व- चमसहोमो भवति। तत्र होतृब्रह्मोद्गातृयजमानसदस्यचमसानां होतृकर्तृकवषट्कारानुवषट्- कारयोर्होमः। प्रशास्त्रादिचमसेषु तु होतृकर्तृकप्रथमवषट्कार एव होमः। नानुवषट्कारे।

कारणद्वयस्यैकस्मिन् कर्तरि समवाय इति चेन्न, मैत्रावरुणादिहोतृकचमसेषु वषट्कारात्तेषामिव होतुरपि वषट्कर्तृत्वाद्धोतृचमससाधारण्येन चाध्वर्योरपि होमाभिषवकर्तृत्वाद्धोत्रादीनामपि तद्भक्षणप्राप्तेर्विशिष्य तत्तच्चमस इत्येवंविधसमाख्यायास्तत्तत्कर्तृकभक्षणान्तरविधिमन्तरेणानुपपत्तेः। अत एव तन्त्रानुष्ठाने विधिफलाभावेन तन्त्रत्वमपि न। न चैवमप्येकस्मिन्नेव कस्मिंश्चिदभ्यासे समाख्यानिमित्तभक्षकरणमात्रेण समाख्योपपत्तौ न चमससाध्याभ्यासमात्रे तदापत्तिः। समाख्याकल्प्यश्रुतावविशेषात्प्रकृतापूर्वसाधनचमसस्थसोमसंस्कारार्थत्वेन तत्तत्कर्तृकभक्षणस्य विधेयत्वेन सर्वत्रैव चमससाध्याभ्यासे तत्प्राप्तेः अतस्सर्वस्यैवैकपात्रे कर्तृभेद इवैककर्तरि कारणभेदेऽपि युक्तो भक्षणस्य पृथगनुष्ठानेन समुच्चयः। यद्वा हारियोजने तु मास्तु समुच्चयः। याज्ञिकानुष्ठानं चेत्तर्हि तेनास्तु सः॥ १०॥

---

ततः प्रैतु होतुश्चमस इत्यादिसंप्रैषः। ततः प्रशास्त्रादिचमसेषु पुनरभ्युन्नीय प्रशास्त्रादिवषट्कारानुवषट्कारयोर्होमः। ततो भक्ष इत्यनुष्ठानक्रमे प्रशास्त्रादीनां स्वस्वचमसेषु वषट्काराद्यथा भक्षणप्राप्तिः, तथा होतुरध्वर्योश्च तेषु चमसेषु वषट्कर्तृत्वेन होमाभिषवकर्तृत्वेन भक्षणस्य प्राप्तेरयं मैत्रावरुणोऽयं प्रशास्तुश्चमस इति असाधारणमैत्रावरुणादिसंबन्धेन समाख्या स्ववैयर्थ्यपरिहारार्थं भक्षणान्तरविधिकल्पिका भवत्येव। अन्यथा वैयर्थ्यापत्तेरित्याशयेन परिहरति— **मैत्रावरुणादीति।** **विधिफलाभावेनेति।** अत एव सान्नाय्यादौ तत्तद्भिन्नद्रव्यकयागभेदज्ञापनरूपं भिन्नं फलं लभ्यते। तत्र तन्त्रत्वेऽपि न क्षतिरिहतु एकसोमरसप्रतिपत्तेर्भक्षणरूपायास्तन्त्रानुष्ठाने विधिद्वयस्य वैयर्थ्यमिति वैषम्यमिति भावः। **तत्प्राप्तेरिति।** इतरथा एकाभ्यासीयहुतावशिष्टसत्वे चमसे अभ्यासान्तरार्थं सोमरसान्तरसंसर्गासंभवात् अभ्यासान्तरे तत्साध्यत्वानापत्तेरित्यर्थः। **मास्तु समुच्चय इति।** अप्राप्तभक्षाणामेव सर्वपदेन ग्रहणात् कारणान्तरप्रयुक्तभक्षाप्राप्तेः न समुच्चय इत्यर्थः। **याज्ञिकानामिति।** प्राप्ताप्राप्तभक्षाणां सर्वेषामेव सर्वपदेन ग्रहणात् कारणान्तरसमवायाद्यथा हारियोहने होतुर्वषट्कारभक्षस्तथा सर्वान्तर्गत्या द्वितीयभक्षसत्वात् समुच्चयः। एवमुन्नेत्रादीमपि होमाभिषवकर्तृत्वात् सर्वान्तर्गतेश्च भक्षद्वयप्राप्तेस्समुच्चयः। चमसानामभावादेव न तन्निमित्तस्तृतीयो भक्ष इत्यर्थः। एवं सत्यपि निमित्तद्वयसन्निपाते तन्त्रेण नैमित्तिकानुष्ठानस्य न्यायसिद्धत्वमङ्गीकृत्य सकृदेव भक्षानुष्ठानमधुना याज्ञिकाः कुर्वन्ति तदा द्विरनुष्ठानेन समुच्चयरूपं न प्राप्यत इत्यभिप्रेत्य **चेच्छब्दः** प्रयुक्तः।

---

(११)—एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥ ३६ ॥ होता वा मन्त्रवर्णात् ॥ ३७ ॥ वचनाच्च ॥ ३८ ॥ कारणानुपूर्व्याच्च ॥

**भक्षसमुच्चये चिन्तितेऽधुना प्रसङ्गात्तत्क्रमो निरूप्यते।** तत्रैकस्मिन् पात्रे कर्तृभेदेन भक्षभेदे "वषट्कर्तुः प्रथमभक्षः" इति वचनात् "होतेव नः प्रथमः पाहि" इत्यादिमन्त्रवर्णाच्च

---

॥ एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेत् ॥

अत्र पूर्वपक्षस्य फल्गुतया सुनिरस्यतां मत्वा आशङ्काव्याजेनैव सूचनीयत्वात् सिद्धान्तेनैवोपक्रमते—**तत्रैकस्मिन्निति**। अत्र एकपात्रे क्रमादध्वर्युः पूर्वो भक्षयेदित्याद्यसूत्रेण पूर्वपक्षमभिधाय, **होता वा मन्त्रवर्णात्, वचनाच्च, कारणानुपूर्व्याच्चेति** सूत्रत्रयेण हेतुत्रयप्रतिपादनेन सिद्धान्तः कृतः, तत्र यस्तृतीयेन सूत्रेण वषट्कृते जुहोतीति वषट्काररूपस्य निमित्तस्य प्रथमत उत्पत्तेस्तेनैव क्रमेण भक्षे क्रम इत्येवं निमित्तप्राथम्यरूपो हेतुरुक्तः, सोऽयुक्तः। जातेष्टेर्निमित्तोत्पत्त्यव्यवधानेन न्यायतः प्राप्तस्यापि अनुष्ठानस्य शेषिविरोधेन बाधात् जातकर्मानन्तरमेवानुष्ठानस्येवेहापि वषट्काराव्यवधानेन प्राप्तस्यापि भक्षस्य होमरूपशेषिविरोधेन हुतशिष्टप्रतिपत्तिजनकत्वरूपसामर्थ्यभङ्गापत्तेश्च बाधेन होमानन्तरमेवानुष्ठानापत्तेः। होमानन्तरं तु होमरूपनिमित्तस्यापि वषट्काररूपनिमित्तस्येव तदानीं समानतयोपस्थितत्वेन वषट्कारस्यैव प्राथम्यनियमानुपपत्तेः। **वस्तुतस्तु वषट्काररूपनिमित्तोपस्थितेर्नष्टत्वादेतत्कालीनहोमनिमित्तोपस्थितेः** सत्वात् साद्यस्के 'सह पशूनालभत' इति विहितस्य सहत्वस्य सवनीयस्थानगत्वेनैव वक्ष्यमाणस्यानुरोधेन उपस्थिततरसवनीयरूपाकरणप्राथम्यस्येवेहापि होमनिमित्तभक्षप्राथम्यस्यैव प्राप्तिरापद्येत। अत एव वचनमनादृत्य कारणानुपूर्व्यमात्रेणैवैतदधिकरणसिद्धान्तकरणमेकदेशिनामपास्तम्। अतस्सूत्रोपात्तमपि कारणानुपूर्व्यहेतुमुपेक्ष्य वचनस्यैव मुख्यहेतुत्वं मन्त्रवर्णस्याप्यभ्युच्चयहेतुत्वं युक्तमित्याशयेन हेतुद्वयमेव दर्शयति—**वषट्कर्तुः प्रथम इति। होतेवेति।** होतेव नः प्रथमः पाह्यस्य देवमध्वोरभिमाते मदायेत्यस्य "अध्वर्यवश्चकृवांसो मधूनि प्रवायवे भरत चारुशुक्रं" इति पूर्वार्धम्। अध्वर्यवो भवन्तः सोमाज्यादिद्रव्यं सिद्धं कृतवन्तः तच्च वायवे ददत त्वं च वायो देवेभ्यः पूर्वं होतेव प्रथमः सोमं पाहि पिबेति तात्पर्यके संपूर्णेऽमन्त्रे यजमानवक्तृके होतेवेत्युपमानत्वेन होतुर्निर्देशात् होतुः प्रथमं भक्षः प्रतीयते।

**वषट्कर्तुस्तन्निमित्तः प्रथमो भक्षः।** न च **होमकर्तुरध्वर्योर्हस्ते पात्रसत्त्वादर्पण**प्रत्यर्पण-कल्पने **गौरवापत्तेस्तस्यैव न्यायेन भक्षप्राथम्यावगतेस्तदपेक्षया च वषट्कर्तुः प्राथम्य-विधानेऽपूर्वविधित्वापत्तेस्समाख्यानिमित्तभक्षापेक्षयैव तेन प्राथम्यविधिर्नियमविधि-लाघवानुरोधेन युक्त इति वाच्यं,** नियामकन्यायप्रवृत्तेः **पूर्वमेवैतस्य वचनस्य प्रवृत्तत्वेन नियमविधित्वानपायान्नयायेन सङ्कोचानुपपत्तेः। अतो वषट्कारनिमित्तं प्रथमं भक्षः।**

---

**यत्तु प्रकाशकारैः**—होतेव नः इत्यर्धस्य दशक्षिपो युञ्जते बाहू अद्रिं सोमस्य या शमिता वा सुहस्ता इत्युत्तरऋक्पूर्वार्धेन सह मेलनेनैकमन्त्रत्वमङ्गीकृत्य इन्द्रस्तुतिपरत्वमाश्रितम्, तदभि-युक्तानां तादृशे मन्त्रत्वाप्रसिद्धेः वेदभाष्यादौ तथाऽदर्शनाच्चायुक्तमित्युपेक्ष्यम्।

**यदप्यधिकरणमालायां** ऋत्विजोऽध्वर्युं संबोध्य एवं प्रार्थयन्ते—यथा होताऽस्मत्तः पूर्वं भक्षयित्वा शेषप्रदानेनास्मान् पालितवात् तथा त्वमपि पाहीत्येतन्मन्त्रार्थप्रदर्शनं, तदेतद्व्याख्याने होतुः प्रथमभक्षस्य शब्दादुपपत्त्यसंभवात् पूर्वप्रदर्शितेन वेदभाष्ये कृतेनार्थेन विरोधाच्च **नादर्तव्यम्।** आदिपदेन "एते वदन्ति शतवत्सहस्रवच्चाभिक्रन्दन्ति हरितेभिरासभिः विष्ट्वी ग्रावाणस्सुकृतस्सुकृत्यया होतुश्चित्पूर्वे हविरद्यमाशते" इति ग्रावस्तुतिपरो मन्त्रवर्णो गृह्यते। अत्रापि होतुरपि यत् प्रथमं हविरद्यं अदनीयं तत्कण्डनवेलायां ग्रावाण एव प्रथममाशते इत्यर्थतात्पर्ये होतुर्यत् प्रथममदनीयमिति सिद्धवदनुवादात् होतुः प्रथमं भक्ष इति प्रतीयते। तथा चानयोर्मन्त्रवर्णयो-र्होतृपदं वषट्कर्तृमात्रपरं, नतु केवलं होतृपरं, प्राथम्यनिमित्तस्य वषट्कर्तृत्वेनैव वचने उपादानात्। अत एव मैत्रावरुणस्यापि वषट्कर्तृत्वेन प्राथम्यसंभवो वक्ष्यत इत्यर्थः। ननु वचने सति कथमध्वर्योः प्रथमं भक्ष इति पूर्वपक्षोत्थानमित्याशङ्कां वारयन् पूर्वपक्ष्यभिमतं वचनार्थमाशङ्क्य निराकरोति—**न च होमकर्तुरिति। अर्पणप्रत्यर्पणेति।** वषट्कर्तुरध्वर्य्वाद्यपेक्षया प्रथमं भक्षणेऽध्वर्युणा स्वहस्तस्थं पात्रं वषट्कर्त्रे अर्पणीयम्। पुनस्तेन वषट्कर्त्रा अध्वर्यवे तद्भक्षार्थं प्रत्यर्पणीयं इति गौरवापेक्षाया अध्वर्युणैव सौकर्याय प्रथमं भक्षः कर्तव्य इत्यर्थे लाघवमित्यर्थः। **न्यायप्रवृत्तेरिति।** यदि ह्यत्र यथैव निगदेषु परप्रेषणार्थत्वरूपालिङ्गात् सर्वथा पक्षे अप्राप्तमुपांशुत्वं उपांशु यजुषेति वाक्येन विधीयते, ततोऽपूर्वविधित्वस्यैवापत्तेः निगदातिरिक्तयजुष्येव नियमः क्रियते; तथै-वाध्वर्युप्राथम्ये यदि लिङ्गादि प्रमाणं भवेत् तदाऽपूर्वविधित्वमेव कथमप्यप्राप्त्या आपद्यते। न त्वेत-दस्ति। किन्तु लाघवरूपन्यायादेव। ततस्त्वस्य पूर्वप्रवृत्त्यङ्गीकारेणानियतप्राप्तिमादाय नियमविधित्वं ममाप्युपपद्यत एवेत्यर्थः। एवं प्राचीनमर्यादया वषट्कारनिमित्तभक्षस्य प्राथम्यमिति सिद्धान्तिते

मैत्रावरुणादिचमसेषु **सवनमुखीये ऐन्द्रप्रदाने होत्रा वषट्कारान्मित्रावरुणादिभ्यश्च प्रदाने मैत्रावरुणादिभिर्वषट्कारात्। वषट्कर्त्रनेकत्वे तु प्रदानक्रमेणैव** क्रमः। **वषट्कर्तृभक्षानन्तरं च होमाभिषवोभयकर्तृसत्त्वे तस्य भक्षः तन्निमित्तभक्षस्य वाचनिकत्वात्।** ततो **दुर्बलसमाख्याप्रमाणकः। होमाभिषवकर्तृकभक्षाभावे तु तदनन्तरं** भिन्नकर्तृक**समाख्याप्रमाणक एव।** समानकर्तृके **तु होमाभिषवकर्तृकभक्षाभावे द्विरनुष्ठानमात्रं न** क्रमाभिव्यञ्जकं **किञ्चित्। तत्सत्त्वे तु पूर्वोक्त एव क्रम इति ध्येयम्॥ ११॥**

## (१२)—वचनादनुज्ञातभक्षणम्॥ ४०॥ तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्॥ ४१॥ तत्रार्थात्प्रातिवचनम्॥ ४२॥

अन्यमपि तदनुक्तं विशेषं दर्शयति—**मैत्रावरुणादिष्विति।** सवनमुखीयेषु प्रथमतस्सर्वेऽपि चमसा ऐन्द्राश्चमसाध्वर्युणा हूयन्ते, तत्र च होतुर्वषट्कारः। तन्मध्ये ये होतृकाणां मैत्रावरुणादीनां चमसास्तेष्वभक्षितेषु सशेषेष्वेव पुनस्सोममभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते। तस्मिन् होमे मैत्रावरुणादीनामेव वषट्कारः। तत्रानेकेषां वषट्कर्तॄणां मध्ये वषट्कर्तृवचनेन प्राथम्यनियमासंभवात् प्रदानक्रमेण तत्तद्वषट्कर्तृभक्षप्राथम्यनियम इत्यर्थः। **तत इति।** यथाऽत्रैव होतृकचमसेषु अध्वर्योर्भक्षानन्तरं होतृकाणां सामाख्यानिको भक्ष इत्यर्थः। **भिन्नकर्तृकेति।** यथा ब्राह्मणाच्छंसिशस्त्रानन्तरं होत्रादिचमसेषु ब्राह्मणाच्छंसिनो वषट्कारनिमित्तभक्षानन्तरं होमाभिषवकर्तुः प्रतिप्रस्थातुः वाचनिकभक्षनिषेधात् तदभावे होत्रादीनां कर्त्रन्तराणां सामाख्यानिको भक्ष इत्यर्थः। **समानकर्तृकेति।** यथा ब्राह्मणाच्छंसिचमसे प्रतिप्रस्थातुर्होमाभिषवकर्तृत्वेऽपि पूर्ववत् भक्षनिषेधात् तन्निमित्तभक्षाभावे तस्य समाख्याप्राप्तभक्षान्तरानुष्ठानमात्रमित्यर्थः। **क्रमाभिव्यञ्जकमिति।** एकेनैव कर्त्रा निमित्तद्वयप्रयुक्तभक्षद्वयानुष्ठाने कारणानुपूर्व्येण क्रमसत्त्वेऽप्यनयोः कतरः पूर्वमनुष्ठित इत्येवं विशेषनियतक्रमकारणस्याभिव्यञ्जकस्य तदानीमभाव एव, यदि तु होमाभिषवनिमित्तो विजातीयो भक्ष आपतति तदा नियतक्रमकारणानां वषट्कारहोमाभिषवसमाख्याकारणानां भिन्नतयोपलब्धेः अस्त्येव तदभिव्यञ्जकमिति भावः। वस्तुतस्तु समानकर्तृके मध्ये होमाभिषवभक्षाभावे न्यायतः तन्त्रेणैवानुष्ठानोपपत्तेः द्विरनुष्ठाने प्रमाणाभावः। अत एव तन्त्रानुष्ठाने विधिफलाभावेन तन्त्रत्वमपि नेति पूर्वाधिकरणोक्तमपि **चिन्त्यम्।** मध्ये होमाभिषवभक्षसत्त्वे आग्नेयकृष्णग्रीवयागयोः तन्त्राप्रवृत्तेरिव इहापि तदप्रवृत्तेस्तदुत्तरं भक्षप्राप्त्यर्थं समाख्याविधेस्सार्थक्येन वैयर्थ्याभावात् तन्त्रन्यायबाधकत्वायोगात्। याज्ञिकाचारोऽप्येवमिति ध्येयम्।

इदं च भक्षणं "नानुपहूतेन सोमः पातव्यः" इति वचनादनुज्ञाप्यैव। तदपि न लौकिकेन शब्देन अपि तु आम्नानवशात् "उपहूत उपह्वयस्व" इत्यनेनैव मन्त्रेण। तत्रापि लिङ्गेन वाक्यं बाधित्वा विभज्यैवैकोऽनुज्ञापनेऽपरश्चानुज्ञायाम्। निषेधबलाच्चानुज्ञापनानुज्ञयोर्विधिकल्पना, मन्त्रबलाच्च। तत्राप्यर्थक्रमेण पाठक्रमं बाधित्वा "उपह्वयस्व" इति प्रथममनुज्ञाग्रहणे, "उपहूतः" इति पश्चादनुज्ञादाने विनियोक्तव्यम्॥ १२॥

---

## (१३)—तदेकपात्राणां समवायात् ॥ ४३ ॥

सेयमनुज्ञा यस्यैकस्मिन्नेव पात्रे भक्षप्रसक्तिस्तस्यैव ग्राह्या, दृष्टार्थतालाभात्, भागा-

---

### ॥ वचनादनुज्ञातभक्षणं ॥

अत्र 'वचनादनुज्ञातभक्षणं' 'तदुपहूत उपह्वयस्वेत्यनेनानुज्ञापयेल्लिङ्गात्' 'तत्रार्थात् प्रतिवचनं' इति सूत्रत्रयेण पृथगधिकरणरचनया प्राचीनैर्यावानर्थ उपपादितस्तावतोऽर्थस्य पार्थक्येन प्रतिपादने विशेषमपश्यन् एकहेलयैवात्रैवाधिकरणे उत्तरसूत्रद्वयमनुल्लिख्यैव तमर्थं दर्शयति ---इदं च भक्षणमित्यादिना। उपह्वयस्वेति प्रथममिति। तथा च उपह्वानमनुज्ञां कुरुष्व। उपहूतः अनुज्ञातस्त्वमित्यर्थः। स्पष्टार्थमन्यत्।

---

### ॥ तदेकपात्राणां समवायात् ॥

पूर्वमवश्यकर्तव्यत्वेनोक्तयोरनुज्ञापनानुज्ञयोर्यस्य पूर्वं भक्षः स पश्चाद्भक्षयितृभिः अनुज्ञातो भक्षयेत् न तु पश्चाद्भक्षकः पूर्वभक्षयितृभिरनुज्ञात इति विशेषं दर्शयितुमधिकरणान्तरमिति सूचयति—सेयमिति। अत्र च सूत्रे तच्छब्देन तत्रार्थात् प्रतिवचनमित्यव्यवहितपूर्वसूत्रगतप्रतिवचनपदार्थानुज्ञादानपरामर्शो कर्तुं योग्येऽपि सौत्रसमवायादिति पदसूचितदृष्टार्थत्वादिरूपात्रत्यसिद्धान्तहेतोस्तत्रासंभवात् प्रतिवचनसूत्रपूर्वभाविनि तदुपहूत उपह्वयस्वेत्यनुज्ञापयेल्लिंगादिति सूत्रे विद्यमानस्य व्यवहितस्यैवानुज्ञापनस्य परामर्शो युक्तः। तत्रैव तस्य सिद्धान्तहेतोर्योग्यतया लाभात् इत्यभिप्रेत्य ग्राह्येत्युक्तम्। यद्यपि वक्ष्यमाणविधया अनुज्ञानस्यापि तद्वदेव दृष्टार्थत्वं तथापि बलवत्प्रमाणेन प्राक्प्रवृत्तस्यानुज्ञाग्रहणमेव द्रागुपस्थितमिति तत्रैव कृतो विचारः फलतोऽनुज्ञादानविषयोऽपि पर्यवस्यतीति भावः। सोमे 'न सोमेनोच्छिष्टा भवन्ति' इति वचनेनोच्छिष्टदोषाभावेनोच्छिष्टकरणेनापराधाभावेऽपि प्राक्माने सति समं स्यादश्रुतत्वादिति न्यायप्राप्तात् समभागादधिकस्यापि एक-

धिक्यादिप्रसङ्गनिमित्तकलहशङ्कानिवृत्त्यर्थत्वात्। उपायान्तरेणापि तन्निवृत्तावस्य नियम विधित्वात्। अन्यस्यानुज्ञाने त्वदृष्टार्थत्वमपूर्वविधित्वं दोषः। अत एव यत्रैकस्मिन् पात्रे एक एव भक्षयिता तत्र नैवानुज्ञाग्रहणम्। एवमन्तिमस्यापि भक्षयितुर्नानुज्ञाग्रहणं प्रयोजनाभावात्। याज्ञिकास्त्वाचरन्ति॥ १३॥

---

(१४)—याज्यापनयेनापनीतो भक्षः प्रवरवत्॥ ४४॥ यष्टुर्वा कारणागमात्॥ ४५॥ प्रवृत्तत्वात्प्रवरस्यानपायः॥ ४६॥

ज्योतिष्टोमे ऋतुयाज्यासु हौत्रप्रवचनाम्नातासु अन्त्या याज्या होतुरपनीय यजमानस्य विकल्पेन विधीयते "यजमानस्य याज्या सोऽभिप्रेष्यति होतरेतद्यजेति स्वयं वा निषद्य

---

विषये पक्षे प्रसक्तेस्तन्निमित्तामर्षनिरासद्वाराऽनुज्ञाग्रहणस्य दृष्टार्थता लभ्यत इत्यभिप्रेत्याह— भागाधिक्येति। अत एवानुज्ञादानविधिरपि प्राक्प्रवृत्तैकपात्रविषयभक्षप्रवृत्तिप्रतिबन्धकानुचित-कलहनिमित्तशिष्टविगर्हणनिवृत्तिद्वारा दृष्टार्थ एवेति ज्ञेयम्। अन्तिमस्यापीति। प्रयोजना-भावसाम्यात् अन्तिमपदं उत्तरोत्तरभक्षकर्त्तुरुपलक्षणम्। तथाचोत्तरोत्तरेण भक्षकेन पूर्वभक्षयितृभ्यः अनुज्ञाग्रहणं न कर्तव्यं प्रयोजनाभावादित्यर्थः। याज्ञिकास्त्विति। एकपात्रे अनेकभक्ष-प्रसक्ताविवैकैकपात्रे पार्थक्येन कर्तॄणां भक्षप्रसक्तावप्यन्त्यस्याप्यनुज्ञाग्रहणानुज्ञादाने आचर-न्तीत्यर्थः।

---

॥ याज्यापनयेनापनीतो भक्षः प्रवरवत्॥

होमाभिषवसमाख्यानिमित्तभक्षाविव वषट्कारभक्षो न केवलमृत्विजामेवापितु यजमानस्या-पीति प्रसङ्गादुच्यत इति प्रासङ्गिकीं सङ्गतिमभिप्रेत्य विचारविषयं दर्शयति—ज्योतिष्टोम इति। हौत्रप्रवचनेति। होत्रा क्रियमाणं हौत्रं तच्च तत् प्रवचनं काण्डं च तत् हौत्रप्रवचनं तत्राम्ना-तास्वित्यर्थः। अत्र च ऋतुग्रहेषु मधुमाधवेत्यादि द्वादशमासनामकदेवत्येषु द्वादशानामाम्ना-तानां याज्यानां पाठार्थं समस्तज्योतिष्टोमार्थं पूर्वकृतवरणापेक्षयाऽदृष्टार्थं वरणान्तरं यजमान-सप्तमानां होत्रादीनामाम्नातम्। तासु याज्यासु अन्त्या सहस्यदेवत्या यजमानस्य विकल्पेन विधीयत इत्यर्थः। तत्र सोऽभिप्रेष्यतीति होत्रे प्रत्यर्पणपक्षे यजमानाद्याज्यापनयेऽपि यजमाने वषट्कार-भक्षयोः कथमपि प्राप्त्यभावात् तदपनयाभावपूर्वपक्षस्य तदपनयसिद्धान्तस्य चासंभवेन विचारा-नुपपत्तेः समाख्याप्राप्ताद्धोतुरपनीय यजमानेन स्वयं पठनीयेति द्वितीयपक्ष एव होतरि वषट्कार-

यजति" इति। तत्र स्वयं याज्यापाठपक्षे वषट्कारभक्षयोस्स एव कर्ता [उत] होता वेति चिन्तायां—षष्ठीश्रुत्या यजमानस्य याज्यामात्रं श्रुतं न वषट्कारः तस्य "याज्याया अधि वषट्करोति" इति वचनेन याज्यातो भेदात्। अतश्च वषट्कारे समाख्यानिमित्तो होतैवेति तन्निमित्तो भक्षस्तस्यैव। यत्तु "स्वयं वा" इति वचनं तत् न तावद्यागकर्तृत्वविधायकं तस्य प्रधानवाक्यादेव सिद्धेः। नापि यागप्रकाशकवषट्कारप्रयोक्तृत्वविधायकं विध्यन्तरत्वे वाक्यभेदापत्तेः। अत आद्यवाक्येन यजमानस्य याज्यायां विहितायां द्वितीयेन प्रैषकर्तृत्वविधानात् प्रैषार्थकर्तृत्वानुपपत्तेरेव याज्याविकल्पप्राप्तेर्यागकर्तृत्वस्य च याज्याप्रयोक्तृत्वमात्रेणाप्युपपत्तेस्तृतीयमर्थवादः। 'निषद्य' इत्यपि याज्यायां निषण्णत्वस्य सामान्यविधित एव प्राप्तत्वादनुवादः। "अनवानं यजति" इति तु याज्यान्तरविषयमिति प्राप्ते—

आख्यातश्रवणात्, वाशब्दानुपपत्तेश्च तृतीयमेव विधायकं आद्यं त्वर्थवादः। अतश्च

---

भक्षयोः प्राप्तिसंभवात्तत्रैव पक्षे विचारमाह—तत्र स्वयमिति। अधिवषट्करोतीति। अधिरुपर्यर्थः। ननु यजमानस्य याज्येत्येतावन्मात्रेण वषट्कारापनयासंभवेऽपि स्वयं निषद्येति वाक्ये श्रूयमाणस्य यागकर्तृत्वस्य स्वामिन एव प्रधानविधिना विहितत्वेन प्राप्तेर्विधानायोगात् अन्यस्य याज्यायामिव यागे पक्षेप्यप्राप्ततया नियमविधित्वस्याप्यनुपपत्तेर्यजिपदेन लक्षणया यागप्रकाशकत्वोक्त्या तत्र स्वामिनः कर्तृत्वविधानस्यापि प्रयोगविधिनैव प्राप्तत्वेन विधातुमशक्यत्वात् प्रयोगविधिप्राप्तस्यैव स्वामिकर्तृत्वस्य समाख्यया होतुः प्राप्त्याऽपोदितस्य पुनः प्रतिप्रसवः क्रियत इत्येव वाच्यम्, न हि तद्यागप्रकाशकत्वं केवलयाज्यायाः, अपि तु सवषट्कारस्यैव। तस्यैव हविःप्रदानोपलक्षणार्थत्वात्। एवं च याज्यावाक्येऽश्रुतस्यापि वषट्कारस्य यजमाने यागप्रकाशनप्रतिप्रसवविध्यनुपपत्त्या स्यादेवापनय इति सिद्धान्तमूलमाशङ्क्य परिहरति—यत्त स्वयं वेति। विधित्वे सति प्रतिप्रसवत्वं स्यात्। तदेव तु पूर्ववाक्येन भिन्नवाक्यतापातादयुक्तम्। अतः पूर्ववाक्यद्वय एव विधित्वमप्यङ्गीकृत्य प्राप्तार्थत्वेन तृतीयस्य स्वयं वाक्यस्यार्थवादत्वं साधयन् तद्वाक्यगतपदचतुष्टयार्थस्यान्यतः प्राप्तिमुपपादयति—अत आद्येति। सामान्यविधित एवेति। सामान्यत एव सर्वेषामेव यजमानादीनामुपविश्यैव स्वस्वकार्यकरणविधानात् विशेषतश्च होतुर्धिष्ण्याग्निसमीपे उपविश्य याज्याप्रयोक्तृत्वविधानात् तत्स्थानापत्त्या यजमानस्यापि तत्प्राप्तिरित्यर्थः। यदप्यनवानं यजतीति वचनविहितैकश्वासतारूपानवानेन यागप्रकाशकत्वस्य विधानात् तस्य च याज्यावषट्कारयोः भिन्नकर्तृत्वेऽयोगात् वषट्कारस्यापि होतुरपनय इति सिद्धान्तबीजम्, तदपि परिहरति—अनवानमिति। वाशब्दानुपपत्तेश्चेति। सोऽभिप्रेष्यतीति वाक्यगततच्छब्देन यजमानस्य

**याज्यान्तेन वषट्कारेणैव मुख्ययागकर्तृत्वाद्वषट्कारोऽपि तस्यैव, याज्यावषट्कारयोस्समानकर्तृत्वस्यानवानत्वस्य च बाधापेक्षया वषट्कारे होतृकर्तृकत्वमात्रस्यैवैकस्य समाख्याप्रमाणकस्य बाधौचित्याच्च। एवं चाद्यस्यापि विधित्वे न कश्चिद्दोषः** अतश्च **वषट्कारनिमित्तो भक्षोऽपि तस्यैव ॥ १४ ॥**

---

परामर्शात् यजमानेनैव स्वकर्तृत्वबाधेन स्वयाज्यायां होतृकर्तृत्वस्य प्रैषद्वारा विधानकरणप्रतीतेः यजमानस्य पक्षे प्राप्तेर्विकल्पासंभवात् वाशब्दानुवादानुपपत्तिरित्यर्थः। किञ्चानुवादस्यानर्थक्यादन्यतरस्य प्रैषविध्यर्थवादत्वे वक्तव्ये यत्रैव स्तुतेस्सामञ्जस्यं संभवति तत्रैवाद्यवाक्ये तत्कल्पनं युक्तं यजमानस्यैव वक्तुमुचितापि होत्राप्युक्ता याज्या प्रैषद्वारा यजमानस्यैव सा भवतीति स्तुतेः संभवात् नतु स्वयं वेत्यस्मात् प्रैषद्वारकहोतृस्तुतिसंभवः। प्रत्युत होतृकर्तृत्वेन विधेयेन स्वयं कर्तृत्वस्य पक्षे बाध एव। अतःपूर्ववाक्यमेवार्थवादः इत्येवकाराद्यपदाभ्यां सूचितम्। अर्थवादत्वे होतृकर्तृत्वबाधस्यैव प्रसक्तौ विकल्पानापत्तिं परिहरन्नाह—**एवं चेति**। आद्यवाक्यस्य याज्यमात्रविधायकत्वेन तावन्मात्र एवोत्तरवाक्यद्वयेन विकल्पितहोतृयजमानोभयकर्तृविधानेऽपि याज्यावषट्कारगतसमानकर्तृत्वस्यानवानस्य चानुग्रहेण वषट्कारान्तयाज्यापरत्वावगतिः सुलभैवेति न वषट्कारापनयानापत्तिरूपः कश्चिद्दोष इत्यर्थः। अतो वषट्कारान्तयाज्याप्रयोक्तृत्वात् यजमानस्यैव तन्निमित्तो भक्षो न तु होतुरिति सिद्धान्तप्रयोजनकथनेनोपसंहरति—**अतश्चेति**। अत्र च याज्यापनयेनापनीतो भक्षः प्रवरवदिति पूर्वपक्षसूत्रे पूर्वपक्षोपपादकतया यथा होतुर्याज्यापनये प्रकृष्टं वरणं नापनीयते तथा भक्षोऽपीत्यर्थकं प्रवरवदिति दृष्टान्तोपादानं यच्च तद्वैलक्षण्यप्रदर्शनार्थं **'प्रवृत्तत्वात् प्रवरस्यानपाय'** इति सिद्धान्ते गुणसूत्रं तदुभयमपि प्रवरदृष्टान्तस्यायुक्तत्वेन तद्वैषम्यप्रदर्शने प्रयोजनाभावात् प्रवृत्तत्वादिति हेतोश्चानुपपन्नत्वादयुक्तमित्युपेक्षितं पूज्यपादैः। नहि होतुर्यजमानयाज्ययाऽपनये वरणापनयः कथमपि संभाव्यते, येन यथा तस्यापनयो नास्तीति दृष्टान्तीक्रियेत। मधुमाधवदेवत्यस्वयाज्यापाठार्थमेव तस्यावश्यकत्वात्। प्रतियाज्यापाठार्थं वरणभेदाङ्गीकारेप्यदृष्टार्थस्य वरणस्य सर्वार्थत्वेन तन्त्रेणानुष्ठितस्यापनयानुपपत्तेश्च। अतो भक्षापनयाभावे तद्दृष्टान्तो न युक्तः। अपनयहेतोरसंभवादेव पूर्वं प्रवृत्तं वरणं नाधुनाऽपनेतुं शक्यमित्यपि वैषम्यप्रदर्शनमयुक्तं, वरणभेदपक्षेऽपि वैकल्पिकानामादितोऽवधारणे कर्तव्ये यजमानकर्तृत्वनिश्चयेन प्रयोगारंभे सति होतृवरणस्य प्रयोजनाभावेनैव निवृत्तत्वेन प्रवृत्तत्वहेतुकापनयाभावकथनस्यासंभवात्। न हि यजमानकर्तृत्वादि नैमित्तिकं, येन निमित्तानध्यवसायात् आदितोऽवधारणं न युज्येत। अतस्तदुभयमप्ययुक्तमेवेति।

---

(१५)—फलचमसो नैमित्तिको भक्षविकारश्श्रुतिसंयोगात् ॥ ४७ ॥ इज्याविकारो वा संस्कारस्य तदर्थत्वात् ॥ ४८ ॥ होमात् ॥ ४९ ॥ चमसैश्च तुल्यकालत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥

तत्रैव "**यदि राजन्यं वैश्यं वा याजयेत् स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य तास्सम्पिष्य** दधन्युन्मृज्य **तमस्मै भक्षं प्रयच्छेत् न सोमम्**" इति श्रुतम्। **तत्र द्वितीयो यदिशब्दो** निस्सन्दिग्धत्वपरः। आद्यस्तु **निमित्तत्वपर एव**। **स्तिभिनीः** अङ्कुरान् **फलानि च**। तत्रैतस्य **फलचमसपदाभिधेयस्य किं भक्षणमात्रं किं वा यागोऽपीति चिन्तायां—निमित्तत्वे**नोपक्षीणस्य **यागस्य फलचमसान्वयित्वानुपपत्तेस्त**च्छब्दपरामृष्टस्य **च**

---

॥ फल चमसो नैमित्तिकोभक्षविकारः श्रुतिसंयोगात् ॥

यथैव पूर्वं याज्यापनये वषट्कारापनयश्चिन्तितः तथैव प्रसङ्गात् राजन्यवैश्याभ्यां सोमस्य यागादपनयोऽस्ति न वेति चिन्त्यत इत्येवं प्रसङ्गसङ्गतिं स्पष्टत्वादनुक्त्वा विषयवाक्यमुदाहरति—**तत्रैवेति**। **ज्योतिष्टोम** इत्यर्थः। **दधन्युन्मृज्येति**। दधनि मिश्रयित्वेत्यर्थः। **निस्सन्दिग्धत्वेति**। यदि वेदाः प्रमाणमित्यत्रेवेति शेषः। अत्र च ग्रामकामं याजयेदित्यत्रेव वृत्त्यर्थस्य याजनस्य रागत एवेहापि प्राप्तत्वान्न विधेयत्वम्। यद्यपि सिद्धान्ते प्रयोज्यव्यापारस्य यागस्यापि निमित्तान्तर्गतेर्न विधेयत्वं तथापि स यदि सोमं बिभक्षयिषेदित्यनुवादबलात् याजनकर्तरि सोमभक्षणेच्छाया असंभवेन यजनस्यैव यदिशब्दान्निमित्तत्वमित्यभिप्रेत्याह—**आद्यस्त्विति**। **धूर्तस्वाम्यादिभिः** स्तिभिनीपदेन फलानां फलस्तवकानां वा ग्रहणे उक्तेऽपि **वार्तिकोक्त**त्वेनाङ्कुराणामपि तत्पदार्थत्वमाह—**अङ्कुरानिति**। सूत्रे फलचमसपदेन व्यवहृतस्यार्थस्याप्रसिद्धिं वारयति—**तत्रैतस्येति**। दधिमिश्रितन्यग्रोधाङ्कुरपिष्टरूपस्येत्यर्थः। **उपक्षीणस्येति**। यदि राजन्यो वैश्यो वा यजेत स न्यग्रोधस्तभिनीराहृत्य तास्संपिष्य दधन्युन्मृज्य तेन यजेतेत्येवं यागस्य फलचमसं प्रत्युद्देश्यत्वेनान्वयो न संभवति निमित्तत्वेनान्वितत्वादित्यर्थः। यदि तु वैश्यराजन्यकर्तृकत्वे निमित्ते विधीयमानः फलचमसः प्रकरणादेव ज्योतिष्टोमयागाङ्गं भविष्यत्येवेति न यजिपदस्योपक्षीणस्य पुनरन्वय इत्युच्येत तत्राह—**तच्छब्देति**। **प्रकरणकल्प्ययागान्वयापेक्षया स्ववाक्योपात्तभक्षान्वयस्यैव प्राबल्यात्तथैवान्वयो युक्त इत्यर्थः**। **अङ्गीकृत्य यागस्य प्रकरणादुद्देश्यत्वं दूषणान्तरमाह—प्राप्तेति**। ततश्च पूर्वोक्तरीत्या याजनस्य निमित्तत्वाभावेन विशिष्टयागस्य निमित्तत्वे सति ल्यबन्तपदोपात्तसमानकर्तृत्वस्य प्रयोजककर्तृत्वाभिप्रायकत्वमाश्रित्य

**तस्य भक्षान्वयश्रवणात्प्राप्तयागानुवादेनानेकपेषणादिरूपगुणविधाने वाक्यभेदापत्तेश्चानेक-गुणविशिष्टं भक्षान्तरमेव फलचमसकरणकं विधीयते। फलचमसस्य विनियोगाभावेन संस्कार्यत्वानुपपत्तेस्सक्तुन्यायेन विनियोगभङ्गस्यावश्यकत्वात्।** तदप्यारादुपकारकमपि **यजमानसोमभक्षस्य बाधकं, "न सोमम्" इत्यनुवादबलात्, "न गिरा गिरेति ब्रूयात्" इति वदेककार्यकारित्वाभावेऽपि बाधकत्वरूपाया एव स्थानापत्तेरङ्गीकारात्।** अस्तु **वाऽयं स्वतन्त्र एव तन्निषेध इति प्राप्ते—**

**यद्यपि भक्षान्तरमिदं तथाऽपि तस्य नारादुपकारकत्वं 'तम्' इति द्वितीयानिर्देशेन फलचमससंस्कारार्थत्वप्रतीतेः। अनुपयुक्तस्य च संस्कारायोगेऽपि "अध्वर्युं वृणीते" इत्यादिवद्विनियोगकल्पना।** तत्रापि **"स यदि सोमं बिभक्षयिषेत्" इत्याद्यनुवादबलाद्य-जमानकर्तृकसोमभक्षस्य च तावतैवोपपत्तौ सर्वत्र सोमबाधेन सर्वार्थत्वकल्पने** प्रमाणाभावा-

---

तमस्मै इत्यस्मिन् स भक्षयेदित्येवं विपरिणमिते विधौ विशिष्टभक्षान्तरमेव विधीयत इत्यर्थः। ननु सिद्धान्ते फलचमसस्य यागाङ्गत्वात् सोमबाधेन तत्प्रतिपत्तिरूपभक्षस्य निषेधानुवादस्संभवति। **पूर्वपक्षे** तु फलचमसकरणकभक्षान्तरानुष्ठानेऽपि सोमस्य यागसाधनत्वानपायात् तद्भक्षस्यापि प्राप्ते-र्निषेधानुवादानुपपत्तिरित्याशङ्कां परिहरति—**तदपीति।** फलचमसभक्षस्य सोमभक्षस्थानापत्त्या सोमभक्षनिवर्तकत्वात् भक्षे निवृत्ते प्रतिपाद्यत्वेनार्थात् प्रतीयमानसाधनताया अपि त्र्यङ्गैः स्विष्ट-कृतं यजतीत्यत्र त्र्यङ्गैः इज्यासाधनशेषसाधनताया इव बाधान्न सोममित्यनुवाद उपपद्यत एवेत्यर्थः। एककार्यकरत्वे हि अर्थान्निवृत्तस्यानुवादस्संभवति। नहि संस्कारारादुपकारककर्मणोस्तदभावे बाधकृत्यस्यैवाप्रसक्तेः स संभवति। इरापदे त्वेकाक्षरलोपेऽपि गिरापदकार्यकरत्वोपपत्तेः वैषम्यम्। अतस्तदनुपपत्तिरस्त्येवेत्यतः पक्षान्तरमाह— **अस्तुवेति। अनुपयुक्तस्य चेति।** यद्यपि सक्तुष्वपि संस्कार्यत्वानुपपत्त्या विनियोगकल्पनमनेन न्यायेनापद्येत तथापि तत्रोत्पत्ति-शिष्टद्रव्यावरुद्धे सक्तूनां निवेशासंभवः। इह तु नैमित्तिकतयोत्पत्तिशिष्टस्यापि बाधोपपत्तेस्संभवत्येव निवेश इत्यभिप्रायः। ननु भक्षसंस्कार्यत्वानुपपत्त्या विधिकल्पने वैश्यराजन्यकर्तृकज्योति-ष्टोमस्य सर्वस्यापि फलचमसकरणत्वापत्तिरित्याशङ्कां परिहरति—**तत्रापीति।** यदि सर्वसोमाभ्या-ससाधनत्वमस्य भवेत् तदा ऋत्विक्साधारण्येन यजमानस्यापि फलचमसभक्षस्यैवापत्तौ स यदि सोम-मिति यजमानीयसोमभक्षस्यैवासाधारण्येनानुवादानुपपत्तेः अगत्या तदीयभक्षसंस्कार्यत्वं फलचमसस्य यावता यागोपयुक्तत्वेन विना न निर्वहति तावन्मात्रसाधनत्वमेव कल्प्यत इति तस्य यजमानचमस-साध्याभ्याससाधनत्वेनैव निर्वाहे तत्रैव सोमबाधकत्वस्यागत्याऽङ्गीकारेऽपि, अभ्यासान्तरे तद्बाध-पर्यन्तसाधनत्वकल्पनं नैव युक्तमाश्रयितुमित्यर्थः। **प्रमाणाभावादिति।** सोमभक्षस्य प्रकरणात्

यजमानचमसयागाभ्याससाधनत्वमेव फलचमसस्य कल्प्यते इति न काचिदनुपपत्तिः। वस्तुतस्तु—भक्षान्तरत्वे प्रमाणाभावात्सोमभक्ष एव यजमानकर्तृकः पेषणदध्युन्मृज्युत्तर-कालद्वयविशिष्टः फलचमससंस्कारकत्वेन विनियुज्यते, "राजा राजसूयेन" इतिवत्। "तस्य वायव्यासु" इतिवच्च विनियोगविशिष्टप्रयोगविधानादवाक्यभेदः। तस्य च यजमानचमसाभ्यासीयद्रव्यसंस्कारकभक्षसंस्कार्थत्वात्पूर्वोक्तयुक्तेश्च तदीयत्वानुमानात्क-ल्पितवाक्येन फलचमसस्योक्तयागाभ्याससाधनत्वसिद्धिः। नैमित्तिकत्वाच्च तत्र नित्यसोम-बाधकत्वम्। एवं च स्थानापत्त्यैव फलचमसे इतरसोमसंस्कारवद्यजमानभक्षस्यापि

---

प्रकरणान्तराभावादित्यर्थः। यत्त्वत्र प्रकाशकारैः यद्यपि वाक्यभेदपरिहाराय कर्मान्तरविध्या, पत्तिस्तथापि

> भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः।
> नाम्ना हि तदुपादानमासनोपायिचोदिते॥

इति वार्तिकोक्तन्यायेन यथा वारुण्या निष्कासनेति वाक्ये प्रकरणान्तरे गुणद्वयविशिष्ट-भावनामात्रविधिस्तस्या अवच्छेदकोऽपेक्षितो धात्वर्थोऽवभृथमिति नाम्ना दूरस्थोप्यनूद्य विनियुज्यते, एवमत्रापि प्रकृतमेव भक्षणं नाम्नाऽनूद्य तदवच्छिन्नं ल्यबन्तद्वयोक्तपूर्वकालीनसंस्कारद्वयपूर्वक-भावनान्तरं फलचमसोद्देशेन विधीयते रेवतीवारवन्तीयसंबन्धकरणपूर्वकं यागान्तरं पशुफलोद्देशेनेव। तस्य च फलचमसस्योद्देश्यत्वं यागाङ्गद्रव्यसंस्काररूपभक्षणावच्छिन्नभावनान्तरं प्रति यागाङ्गत्वं विनानुपपन्नं सत् पेषणदधिमिश्रणपूर्वकयजमानकर्तृकभक्षणावच्छिन्नभावनान्तरसंस्कृतेन फल-चमसेन यजमानचमसयागाभ्यासं कुर्यादिति श्रुतानुमितैकदेशनिष्पन्नेन कल्पितवाक्येन यागाङ्गतया विनियोगात् उपपद्यत इति न भक्षान्तरमित्युक्तं, तदयुक्तमिति सूचयितुं भावनान्तरविध्यनङ्गी-कारेणैव वाक्यभेदपरिहारप्रकारं सदृष्टान्तमाह—राजेति। अयमर्थः। यथैव प्रकृत-प्रत्यभिज्ञतया तदेव भक्षणमवच्छेदकं तथैव तेनैवाव्यभिचरितसंबन्धेन उपस्थितापूर्वप्रकृतैव-भावनाऽवच्छेद्यास्तु, न तु भावनान्तरं गौरवात् प्रमाणाभावाच्च। वाक्यभेदपरिहारस्य फलचम-सोद्देशेन विशिष्टतादृशभावनाविधानेनापि संभवात्। अत एव यत्र विनियोगान्वयिगुणसत्वे ऽपि उत्पत्त्यन्वयिगुणान्तराम्नानं तत्र वाक्यभेदपरिहारस्य राजसूयन्यायेन प्रयोगान्तरविधानमाश्रित्य कर्तुमशक्यत्वात् अगत्या उत्पत्तेरेव भेदकरणात् भावनान्तरविधानमाश्रीयते यथा इन्द्रियकामवाक्य इत्युक्तं तदधिकरणकौस्तुभे। प्रकृते तु यजमानस्य कर्तुः राजसूयवाक्ये राज्ञ इव वायव्यावाक्ये ल्यबन्तोक्तकालस्येव इहापि तदुपादानात् प्रयोगान्वयितया च तद्भेदमात्रं विनियोगविशिष्टं विधीयते

**प्राप्तिसम्भवे पूर्वप्रवृत्त्या तद्विध्यङ्गीकरणं** गुणद्वयविधानार्थं, **फलचमसस्य** यागसाधनत्व-**सिद्ध्यर्थं चेति द्रष्टव्यम्।** एतेन **"यदि सोमं न विन्देत् पूतीकानभिषुणुयात्" इत्यत्रा-भिषवयुक्तपूतीकानामपि यागसाधनत्वं व्याख्यातम्॥ १५॥**

---

इति वैषम्यम्। यथा च निष्कासवाक्ये वाक्यभेदापादकगुणात् यागान्तरमेव न भावनान्तरमात्रं तथा प्रकरणान्तरकौस्तुभे द्रष्टव्यम्। अतोऽत्र न भक्षान्तरं न वा भावनान्तर-मिति। **पूर्वोक्तयुक्तेश्चेति।** स यदि सोममिति यजमानकर्तृकसोमभक्षानुवादयुक्तेश्चेत्यर्थः। **गुणद्वयेति।** यद्यपि ल्यबन्तत्रयोपात्ताः षड्गुणाः प्रतीयन्ते तथाप्यन्येषामर्थतः प्राप्तेः गुणद्वय-मित्युक्तम्। तत्र सोमस्थानापत्त्या तत्संस्काराणामन्येषामिव क्रयस्य प्राप्तेराहरणस्य अनाहृतस्य पेषणादिसंस्कारकरणायोगात् आहरणोत्तरत्वस्य प्राप्तेः पेषणविधिक्रमेणैव तदुत्तरत्वस्योन्मृजने प्राप्तेर्भक्षणोत्तरमुन्मृजनासंभवाल्लिङ्गात् तदुत्तरत्वस्य भक्षे प्राप्तेः परिशेषादभिषवबाधेन पेषणस्य दध्युन्मृजनस्य विधानमात्रं क्रियत इत्यर्थः। **यागसाधनत्वेति।** तथा च तमस्मै इति विधेः स तं भक्षयेदित्येवं विपरिणामेऽपि स तेन यजेतेत्येव तात्पर्यकल्पनया यागसाधनत्वप्रतीतिः। **अत एव** सिद्धवद्यागीयहोमोद्देशेन "यदाऽन्यांश्चमसान् जुहोति अथैतस्य दर्भतरुणकेनोपहत्य जुहोति" इति दर्भगर्भमध्यस्थनूतनदर्भाख्यदर्भतरुणकविधानमप्युपपद्यत इत्यर्थः। यजमानचमससाध्य-यागाभ्यासेन सोमस्यापनयो भक्षमात्रश्रवणात् इत्येवं पूर्वपक्षस्य भक्षस्य यागोपलक्षकत्वात् फल-चमसेन सोमापनयस्तत्रापीत्येवं सिद्धान्तस्य च सोमाभाव एव पूतीकविधानेनासंभवात् मुख्यो-दाहरणताया असंभवमभिप्रेत्य असंस्कारेण यागोपलक्षणात् यागसाधनत्वं फलचमसवाक्येन विधीयत इत्येतत् व्याख्यातम्। अनेनैव न्यायेन श्रुतेनाभिषवसंस्कारेण यागोपलक्षणात् यागसाधनत्वं पूती-कानां पूतीकवाक्येन विधीयते न त्वभिषवमात्रं नैमित्तिकमिति तावन्मात्रानुष्ठानेन सिद्धिरित्येवं पूतीक-वाक्यमपि व्याख्येयमिति तात्पर्येण फलचमसवाक्यार्थप्रकारमतिदिशति—**एतेनेति।** प्रयोजनं पूर्व-पक्षे यजमानचमसाभ्यासे सोमसाध्यत्वात् वषट्कर्तुर्होमाभिषवकर्तुश्च सोमेनैव भक्षः। यजमानस्यैव परं स्तिभिनीभक्षः। **सिद्धान्ते तु** त्रयाणामपि स्तिभिनीनां भक्ष एव। पूतीकवाक्येऽभिषव-मात्रविधानस्य सोमाभिषवस्थानापत्त्यभावेन नैमित्तिकप्रायश्चित्तरूपतया पूर्वपक्षेऽङ्गीकारात् सोमालाभे प्रायश्चित्तमेतत् कर्तव्यम्। यागस्तु सोमसदृशप्रतिनिधिना। सिद्धान्ते तु पूतीकैरेवेति स्पष्टत्वान्नोक्तम्।

---

(१६)—अनुप्रसर्पिषु सामान्यात् ॥ ५२ ॥ ब्राह्मणा वा तुल्यशब्द-त्वात् ॥ ५३ ॥

राजसूये दशपेयो **नाम सोमयागविकारो** राजकर्तृकः। **तत्रातिदेशतो** दशसु **चमसेषु प्राप्तेषु यजमानचमसे राज्ञो भक्षणम्**। तत्रापरं "**शतं ब्राह्मणास्सोमान् भक्षयन्ति,**" "**दशदशैकैकं चमसमनु**प्रसर्पेयुः" **इति वचनद्वयं श्रुतम्**। तत्र न तावत् "**शतं ब्राह्मणाः**"

---

॥ **अनुप्रसर्पिषु सामान्यात्** ॥

पूर्वाधिकरणे राजन्यकर्तृकतच्चमससाध्ययागाभ्यासतच्छेषभक्षयोः फलचमसेन सोमापनये उक्ते क्वचित् तत्कर्तृके यागविशेषे तत्कर्तृकभक्षे फलचमसस्याप्यपनयोऽस्ति न वेति तत्प्रसङ्गाच्चिन्त्यत इत्येवं प्रसङ्गसङ्गतिं स्पष्टत्वादनुक्त्वा उदाहरणं दर्शयति—**राजसूय इति। दशपेय इति।** दशभिर्दशभिर्ब्राह्मणैः पेयस्सोमो यस्मिन्नित्यवयवयोगाश्रयणेन **तत्प्रख्यन्याय**प्राप्तदशपेयनामक इत्यर्थः। **राजकर्तृक इति।** तस्य राजसूयपदवाच्यत्वात् राजा राजसूयेन यजेतेति वचनेन राज्ञो विधानादिति शेषः। **दशस्विति।** होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां दशानां दशस्वित्यर्थः। राज्ञो भक्षणमित्यस्मात्पूर्वं यजमानत्वादिति शेषः। **अपरं** अतिदेशापेक्षयाऽपरं उपदेशरूपमित्यर्थः। भाष्यकारेणानुप्रसर्पन्तीति वर्तमानापदेशसदृशं वाक्यं लिखितं, तथाप्यग्रे तेनैवानुप्रसर्पेयुरिति विवरणकरणाद्विधित्वं कल्पनीयमेव। तदपेक्षया स्पष्टविधियुतं शाखान्तरीयत्वेनैव सौकर्याल्लिखितं वार्तिककृता यद्वाक्यं तदेव स्वयमप्युदाहरति—**अनुप्रसर्पेयुरिति।** अत्र **भाष्यकारेण** दशवाक्यस्य विधित्वं शतवाक्यस्यानुवादत्वं चाश्रित्य पूर्वपक्षस्तद्वैपरीत्यमाश्रित्य सिद्धान्तश्च कृतः, तत्र दशवाक्यस्य विधित्वेन पूर्वपक्षे ये वार्तिककृता दोषा उक्ताः तत्परिहारं कर्तुं शतवाक्यस्य विधित्वेन सिद्धान्तं तावद्दूषयति—**तत्र न तावदिति। भक्षानुवादेनेति।** एतच्च भाष्यकारसिद्धान्तदूषणाय वार्तिकोक्तानां सप्तदशदोषाणामुपलक्षणं ते तु वार्तिक एव द्रष्टव्याः; विस्तरापत्त्या न कथ्यन्ते।

अत्र **वार्तिककृता** पूर्वोक्तदोषैः शतवाक्ये विधेयविवेकासंभवेन यथा भाष्योक्तं विधित्वमाक्षिप्तं तथैव दशवाक्यस्य भिन्नवाक्यतया विधित्वेन च प्रतीयमानस्यानुवादत्वमपि निष्प्रमाणकं स्तुतिबुद्धेरनुदयाच्च निष्प्रयोजनमपीति **भाष्योक्तं** तस्यानुवादत्वमाक्षिप्य उभयोरपि **वाक्ययोर्विधित्वाङ्गीकारेण** सिद्धान्तमुपवर्णयितुं दशवाक्ये शतवाक्यविहितशतस्यानियमप्रसक्तौ **सत्यां दशत्वविधाने** एकैकमित्यस्यापि विधानापत्त्या **वाक्यभेदः** वषट्कर्तृणामनेकचमसप्राप्तौ

**इति विधिः 'दशदश' इत्यनुवादः,** भक्षानुवादेन **गुणद्वयविधाने वाक्यभेदात् , एकैकस्मिन् भक्षे शतब्राह्मणप्राप्त्यापत्तौ दशदशेत्यस्य प्राप्त्यभावाच्च । अतो दशदशेत्येव लिङ्श्रवणाद्विधिः ।** सोऽपि च **न चमसोद्देशेन दशत्वस्य प्राप्तत्वात् ।** नापि **तदुद्देशेन भक्षाश्रितदशकर्तृविधिः । चमसोन्नयनादिक्रियान्तरस्याप्याश्रयत्वप्रसङ्गेन भक्षस्यैवाश्रयत्वे प्रमाणाभावात् , याज्ञिकाचारसिद्धसमाख्याभक्षस्यैव नियमेनोपस्थित्यभावेन वषट्कारनिमित्तस्याप्याश्रयत्वापत्तेश्च, 'चमसम्' इति द्वितीयाया अनुशब्दयोगनिमित्तत्वेन प्रतियोगित्वपरतया तस्योद्देश्यत्वोपस्थापकाभावाच्च । नापि चमसानुप्रसर्पणोद्देशेन दशाकर्तृविधिः विशिष्टोद्देशे वाक्यभेदात् , चमसप्रतियोगिकर्त्विक्कर्तृकानु**प्रसर्पणस्याप्राप्तत्वाच्च, 'प्रयाजेभ्यस्तत्' **इतिवत् सर्वचमसेष्वेकस्यैव दशकस्य प्रसक्त्यापत्तेश्च । चमसेष्वेकैकत्वविशेषणे पुन-**

---

सत्यामनुवादत्वायोगः, ग्रहेष्वपि चमसत्वप्रसङ्गः , चमसशब्देन विशेषणे वाक्यभेदः इति चतुरो दोषानापाद्य यथा फलचमसे भक्षणं यागोपलक्षणमेवमनुप्रसर्पणमप्यतिदिष्टभक्षोपलक्षणम् , प्रकृतौ प्रैतु होतुश्चमस इत्यनुप्रसर्पणस्य भक्षार्थत्वेन संबन्धावगमात् । अनुप्रसर्पणचमसयोश्चान्यतरस्य साकाङ्क्षत्वाद्विशिष्टोद्देश्यता; एकैकमिति त्वनुवादः प्रत्युद्देश्यं वाक्यार्थसमाप्तेः प्रत्येकमेव प्राप्तत्वादिति सर्वदोषपरिहारेण दशवाक्यार्थवर्णनं कृतं तत् पूर्वपक्षेऽपि सिद्धान्तवत् समानत्वेन निष्प्रयोजनदूषणमपि वस्तुतोऽयुक्तमिति सूचयन् , इह चमसस्योद्देश्यत्वं विवक्षितमुत चमसानुप्रसर्पणपर्यन्तस्येति विकल्पाश्रयणेनाद्यपक्षं दूषयति—**सोऽपि चेति ।** द्वितीयं प्रत्याह—**नापीति । वाक्यभेदादिति ।** नहि साकाङ्क्षतया विशिष्टोद्देश्यता वार्तिकोक्ता युक्ता, तथात्वे शतवाक्ये भक्षेण सह सोमस्य विशेषणत्वाश्रयणे भाष्यमते स्वयमापादिताया विशिष्टोद्देश्यताप्रयुक्तवाक्यभेदापत्तेः असङ्गतत्वापत्तेः । तथा एकां गां दक्षिणां दद्यादित्यत्र गोकर्मकदानानुवादेन एकत्वविधाने विशिष्टोद्देश्यताप्रयुक्तवाक्यभेदापत्तेर्दशमे वक्ष्यमाणाया अप्ययुक्तत्वापत्तेश्च । अत एवार्तेर्निमित्तत्वे तस्याः केनचिदप्यवच्छेदाभावे निमित्तत्वस्यापर्याप्तेः तन्निर्वाहाय येन साकाङ्क्षं तस्यैवावछेदकत्वकल्पनया तत्पर्यवसानं लक्षणादिना स्वीक्रियते । उद्देश्यस्थले तु प्रकृतापूर्वसाधनत्वलक्षणात् तेनैवावच्छेदसंभवेन निराकाङ्क्षस्य नेतरविशेषणापेक्षेति तद्विशेषणत्वाङ्गीकारे भवत्येव विशिष्टोद्देश्यताप्रयुक्तो वाक्यभेद इति **मीमांसारहस्याभिज्ञानां** तात्पर्यम् । अत एव तादृशस्थले अन्यतरस्य साकाङ्क्षत्वाद्विशेषणविशेष्यभावाङ्गीकारपरवार्तिकं प्रौढिवादपरमेवेति भावः । **अनुप्रसर्पणस्याप्राप्तत्वाच्चेति ।** अनुप्रसर्पणस्य मुख्यार्थस्यैवोद्देश्यत्वं अथ वा तदुपलक्षितभक्षणस्य वा तद्वाच्यं न च तद्द्वयमपि संभवति प्रैतुहोतुरित्यादिप्रैषावगतचमसानुपपत्त्या चमसाध्वर्यूणां प्रसर्पणप्राप्तावपि तदनुभावित्वेन भक्षयितॄणां होत्रादिकृत्विजां प्रसर्पणप्रापकमानाभावे तदनुपपत्त्या विधेयत्वस्यै-

विशिष्टोद्देशः। दशदशेतिवीप्सार्थविधाने वाक्यभेदः, प्रतिचमसं विंशत्यापत्तिश्च। अतो

---

वापत्तेः। प्राप्तत्वेऽपि वा तावन्मात्र एव दशकर्तृविधानापत्तौ तेषां भक्षप्राप्तौ प्रमाणाभावेन शतवाक्ये सोमं भक्षयन्तीत्यस्य प्राप्तानुवादत्वमङ्गीकृत्य शतोद्देशेन ब्राह्मणत्वविधिसिद्धान्तानुपपत्तेश्च। नहि प्रसर्पणस्य नियमेन भक्षोपलक्षणत्वं चमसाध्वर्युप्रसर्पणस्य तदर्थत्वाभावात्। अनुप्रसर्पणस्याप्यविहितस्य तदुपलक्षणत्वासंभवाच्च। भक्षलक्षकत्वेऽपि तावन्मात्र एव दशकर्तृविधानेऽपि अनुप्रसर्पणप्राप्तौ मानाभावेन तदनुवादासंभवाच्च। अतो नान्यतरस्यापि तत्संभवतीत्यर्थः। दूषणान्तरमाह—**प्रयाजेभ्यस्तदितिवदिति। यद्यपि** प्रयाजेभ्य इत्येकशेषावगतसाहित्यबलात् सहितप्रयाजानामुद्देश्यत्वात् तत्र सर्वप्रयाजानादायैव ग्रहणं तदर्थं भवति। प्रकृते तु तदभावात् ग्रहं संमार्ष्टीति विहितसंमार्गस्य प्रत्येकग्रहाङ्गत्वस्येव दशत्वस्यापि प्रत्येकचमसाङ्गत्वात् प्रतिचमसं भवत्येव दशत्वमिति अस्ति वैषम्यं; **तथाप्ययमभिप्रायः।** यथैवैकपदोपादानावगतसाहित्यस्थले साहित्यस्य प्रतीयमानस्यापि पाश्चात्यप्रतीत्योद्देश्यविशेषणत्वादेव ग्रहैकत्वाधिकरणकौस्तुभरीत्याऽविवक्षा। अत एव सर्वेभ्यः कामेभ्य इत्यादौ न सहितफलानामनेकेषामुत्पत्तिः तथैव समानन्यायेनोद्देश्यताया व्यासज्यवृत्तित्वेऽपि तदविवक्षा तुल्यैव। अत एव द्वन्द्वावगतसाहित्योद्देश्यके वपनविधौ केशश्मश्रुणोः साहित्याविवक्षामादायैव पत्न्या अपि केशवपनमाशङ्क्य तयोरुपादेयत्वेन साहित्यविवक्षया तन्निराकरणं षष्ठे करिष्यते। ग्रहेषु संमार्गभेदस्तु न साहित्यबलात्, तथात्वे सहितानां ग्रहाणामेकेन कर्त्रा संमार्गानुष्ठानासंभवात्। संभवे वा **प्रतिप्रधानगुणावृत्तिन्यायेना**ऽवृत्तिप्रसक्त्यभावापत्तेश्च। अपि तु संमार्गक्रियायाः सर्वेषूद्देश्यतावच्छेदकरूपाक्रान्तेषु तन्त्रेणानुष्ठानासंभावादेव। आज्यग्रहणस्य तु सर्वप्रयाजार्थं तन्त्रेणानुष्ठानोपपत्तेर्नावृत्तिः। अत एव चतुर्गृहीताज्येन तन्त्रेण प्रयाजानुष्ठानासंभवादवयवश एवावृत्त्या तदनुष्ठानं; एवमिहापि चमसत्वावच्छिन्ने तद्भक्षत्वावच्छिन्ने वा सकृदनुष्ठितदशत्वेनैव शास्त्रार्थसिद्ध्यापत्तेः प्रत्येकं तदावृत्त्या तदनुष्ठाने नैव किञ्चित्प्रमाणमिति। एवं प्रत्युद्देश्यं वाक्यसमाप्तिन्यायेन वीप्सार्थप्राप्त्यनुपपत्तौ तस्य दशत्वद्वयरूपवीप्सार्थस्य विधानमावश्यकं तत्र दशद्वयविधानाद्वाक्यभेददोषमाह-**दशदशेति। प्रतिचमसमिति। अयमर्थः।** दशद्वयरूपवीप्सार्थविधानेऽपि तच्चमसानुवादेन यदि विधीयते दशद्वयं तदा प्रतिचमसं दशद्वयेन विंशत्यापत्तिः। यदितु विशिष्टोद्देशेनापि चमसभक्षोद्देशेन, तदा एकस्यैव दशत्वस्य विधाने एकस्मिन्नेव चमसे भक्षभेदे सति प्रतिभक्षं दशत्वापत्तेः एकस्मिन् फलचमसभक्षे यजमानवषट्कर्तृरूपकर्तृद्वयकृतभक्षभेदेन विंशतिसंख्यापत्तिः। एवमन्यत्रापि चमसैक्ये भक्षभेदेन दशकावृत्तौ दशकभेदेन शताधिकसङ्ख्यापत्त्या शतवाक्ये सिद्धान्ते

**दशकर्तृविशिष्टं प्रत्येकचमसप्रतियोगिकमनुप्रसर्पणमेवात्र विधीयते।** **तयोश्च** पार्ष्ठिकान्वये **एकैकस्मिन् चमसे दशदश कर्तारो भवन्तीति वीप्सानुवादः।** **अनुप्रसर्पणस्य च प्रयोजनापेक्षायां वैमृधन्यायेन चमसपदान्तर्गत**चमिधातुप्रतिपाद्य**समाख्यानिमित्तभक्षस्यैव स्ववाक्योपस्थितत्वात्तद्वाचकपदान्तरकल्पनया प्रयोजनवत्वम्।** अतश्च **समाख्यानिमित्तभक्षार्थं प्रतिचमसं दशानामनुप्रसर्पणे चमसानां दशत्वाच्छतसङ्ख्यासम्पत्तेश्शतवाक्यमनुवादो**

---

शतानुवादानुपपत्तिः। दशद्वयरूपवीप्सार्थविधाने तु एतादृशे विषये सुतरां विंशतिद्वयापत्तिरिति किमु वक्तव्यमित्यर्थः। एवं दशवाक्यस्य विधित्वमभ्युपगम्य वार्तिककृता निरूपिते सिद्धान्तेऽनुपपत्तौ प्राप्तायां **प्रकाशकारैः** स्वमतत्वेन चमसमात्रस्यैवोद्देश्यत्वमाश्रित्य दशेतिविधिः चमससमाख्ययैव तु भक्षोपस्थितेर्भक्षणान्विते दशत्वान्वयात् तत्संबन्धः प्राप्त एवानूद्यते इत्यनुप्रसर्पन्तीत्यनेन लक्षणया तदा चमससमाख्यया भक्षान्वितस्यैवोपस्थितेर्यथोन्नयनादिक्रियाव्यावृत्तिः तथा समाख्यानिमित्तभक्षस्यैवोपस्थितेर्न वषट्कारादिनिमित्ते भक्षे दशत्वप्रसङ्ग इति पूर्वपक्षोपपादने **वार्तिककार**प्रदर्शितरीत्यैव स्वयं वाक्यार्थवर्णनं कृतं; तदपि पूर्वोपपादितरीत्या पूतीकवाक्येऽभिषवेन यागलक्षणायां यागाङ्गत्वेन प्राप्ततया शक्यार्थानुवादसंभवेऽपीह भक्षलक्षणायामप्यनुप्रसर्पणस्य नियमेन कथमपि प्राप्त्यभावात् शक्यार्थानुवादासंभवादयुक्तमेवेत्यभिप्रेत्य स्वयमनुप्रसर्पणविधानेनैव वाक्यार्थं दर्शयति—**अतो दशेति। पार्ष्ठिकान्वये इति।** यथा अरुणैकहायन्यादिविशेषणानां प्रथमतो भावनान्वयेऽपि ऐककर्म्यात् पार्ष्ठिकः परस्परनियमः तथा दशैकैकं चमसमन्विति पदोपात्तयोर्विशेषणयोः प्रथमतोऽनुप्रसर्पणभावनान्वयेऽपि पश्चात् पार्ष्ठिकः परस्परनियमः सिद्ध्यति तस्मिन् सतीत्यर्थः। **चमिधातुप्रतिपाद्येति।** **यद्यपि** प्रयोजनापेक्षायां भक्षाधिकरणपात्रपरचमसपदेनोपस्थितस्य पात्रस्यैवोद्देश्यत्वकल्पनं युक्तं न तु तदन्तर्गतप्रकृत्यर्थमात्रस्य विशेष्य एव तस्योचितत्वात् **तथापि** पात्रस्य तदनन्तरं भक्षं विनाऽन्यत्रोपयोगाभावेन भक्षार्थतयैवोपयोगकल्पनया संस्कार्यत्वकल्पने शब्दतः प्राधान्येनानुपस्थितस्याप्यर्थतः प्रधानस्यैव सतः चमिधातुनोपस्थापनात् तस्यैव भक्षस्य प्रयोजनत्वमुक्तं नैव विरुद्ध्यत इति ध्येयम्। **ननु** चमसपदेन भक्षाधिकरणपात्राभिधानेऽपि समाख्यानिमित्तभक्षस्यैवोपस्थितौ मानाभावात् वषट्कारादिनिमित्तभक्षाधिकरणत्वस्यापि चमसेषु सत्वात् **कथं** तस्य भक्षस्य प्रयोजनत्वं न स्यादित्याशङ्कापरिहारं सूचयन् पूर्वपक्षसिद्धान्तोभयसाधारण्येन दशवाक्यार्थस्य समानत्वेऽपि शतवाक्यस्यानुवादत्वाङ्गीकारेण पूर्वपक्षं दर्शयति—**अतश्चेति। अयमर्थः;** सर्वेषां हि भक्षाणां प्रयोजनत्वकल्पने तेषां दशाधिकसंख्यत्वेन तदनुरोधेन प्रत्येकं दशकर्तृविधाने शताधिकसङ्ख्यापत्त्या द्वितीयवाक्ये शतपदानुवादासंभवात् तदनुवादतात्पर्य-

**विधेयदशत्वस्तुत्यर्थः न तु ब्राह्मणत्वविधायकः** वाक्यभेदापत्तेः। **अतो ब्राह्मणग्रहणं** सोमपदवदेव **भूम्ना गौणमिति यजमानचमसे राजत्वजातेरेव** न्यायप्राप्तत्वाद्**राजन्या दश भक्षयेयुरिति प्राप्ते—**

ब्राह्मणत्वस्य **सर्वचमसेषु प्राप्त्यभावेन "उपरि हि देवेभ्यो धारयति" इतिवद्विधेयत्वो-**

ग्राहकबलात् ऐकरूप्येण समाख्यानिमित्तानां दशानामेव तत् तत्कल्पनं युक्तम्। प्रैतु होतुरित्यादिप्रैषावगतचमससर्पणस्य समाख्यानिमित्तभक्षविषयत्वस्यैव प्रतीतेस्तदनुप्रसर्पणस्याप्युपस्थितसमाख्याविषयत्वोपपत्तेः। तादृशविधेयसामर्थ्यात् तन्मात्रप्रयोजनकत्वस्यैवापत्तेश्चेति। **वाक्यभेदापत्तेरिति**। पृथग्विधित्वादिति शेषः। **सोमपदवदेवेति**। यथा विधित्वाङ्गीकारेऽपि यजमानस्य राज्ञश्चमसे स्त्रिमिनीनां सोमबाधेन विधानात् सोमं भक्षयतीति सोमभक्षपदेनानुवादासंभवे तत्र दशानां ब्राह्मणानां प्राप्त्यनुपपत्तेः तत्प्राप्त्यर्थं नवसु चमसेषु सोमबाहुल्यगुणेनापूर्वसाधनीभूतद्रव्यमात्रपरत्वेन सोमपदं गौणमुभयवादिसंप्रतिपन्नमाश्रीयते तद्वत् ब्राह्मणपदमपि नवतिसंख्यया ब्राह्मणबाहुल्येन गुणेन ब्राह्मणाब्राह्मणसमुदाये गौणं शक्यमेवाश्रयितुं किमुतानुवादत्वेनार्थवादत्वाङ्गीकरण इत्यर्थः। **न्यायप्राप्तत्वादिति**। अनेन चानुप्रसर्पिषु सामान्यादिति पूर्वपक्षसूत्रगतं पूर्वपक्षे हेतुपरं सामान्यादिति पदं वार्तिकदर्शितप्रकारत्रयेण हेतुत्रयप्रतिपादनपरमिति सूचितम्। तथा च वाक्येन दशसंख्यामात्रविधाने सति संख्येयविशेषजिज्ञासायां यत्र यत् गमकं तुल्यं सामान्यं वर्तते तदेव ग्रहीतुमुचितमिति यजमानचमसातिरिक्तचमसेषु होत्रादीनां वृतानां ब्राह्मणानामेवोपस्थापनात् तज्जातीयानां ब्राह्मणानामेव ग्रहणम्। यजमानचमसे तु राजत्वजातिमत एवोपस्थापकत्वात् तज्जातीयानां राजन्यानामेव तत्। **अथवा** एकं फलचमसं प्रत्युपादीयमानयो राजत्वदशत्वयो**ररुणान्यायेन** परस्परनियमे सति यावति विषये ब्राह्मणत्वं तावति विषये दशत्ववत् यावति विषये राजत्वं तावति विषये दशत्वमित्यर्थावगतेस्तेषां तत्। **अथवा** तुल्यजातीयेन तुल्यस्य बाधात् राजसूयविधितः प्राप्तयो राजत्वैकत्वयोर्मध्ये दशत्वसंख्ययैकत्वबाधेऽपि राजत्वजातिबाधे प्रमाणाभावात् अनिवृत्तराजत्वाधिकारिके फलचमसे दशत्वविधानेन राजन्यानामेव ग्रहणं न्यायत एव प्राप्तमित्यर्थः। वाक्ययोर्द्वयोर्यदिशब्दाद्युपबन्धाभावे एकवाक्यतानुपपत्तेस्तदभावेप्येकं वृणीत इत्यादीनां प्राप्तविधेयतया त्रीन् वृणीत इति वाक्येन सह एकवाक्यताकल्पनेऽपि यत्राप्राप्तार्थत्वं तत्र यदिशब्दाद्युपबन्धसत्वेऽपि उपरिहीति वाक्ये उपरिभावविधानदर्शनात् प्रकृते यच्छब्दाद्यभावे अप्राप्तार्थकत्वे च सति सुतरां विधानपरत्वमाश्रयितुं युक्तमित्यभिप्रेत्य सिद्धान्तमाह—**ब्राह्मणत्वस्येति**। होत्रादिचमसेषु ब्राह्मणादिप्राप्त्याऽनुवादसंभवेऽपि यजमानचमसे अप्राप्ततया तद्विधायकत्वेन विधिफललाभे सति नानुवादत्वङ्गौणत्वं युक्तमिति **सर्वचमसे-**

**पपत्तेर्गौणत्वे प्रमाणाभावात् ब्राह्मणत्वमेवेह** शतोद्देशेन **विधीयते**। **"सोमान् भयतश्चन्ति"** **इत्यनुवादमात्रम्**। वस्तुतस्तु—**भक्षयतिना पूर्ववाक्ये समाख्याभक्षस्योद्देश्यत्वेनोपस्थि-**

---

ष्वित्यनेनोक्तम्। **उपरि हीति**। श्रुतस्योपरिहीत्यस्यैव लेडन्तत्वकल्पनया पृथग्विधित्वमाश्रित्य तद्विधानं, अथवा तस्याधस्ताद्धिध्येकवाक्यतया स्तावकत्वाश्रयणेऽपि सिद्धवन्निर्देशान्यथानुपपत्त्या तद्विषयकविध्यन्तरस्यैव कल्पनमाश्रित्य यथोपरिभावविधानं तद्वदिहापि उभयथा संभवेऽपीह श्रुतस्यैकवाक्यताज्ञापकहिशब्दादिप्रयोगस्याभावात् **तैत्तिरीय**शाखायामनन्यशेषतयैवैतद्वाक्याम्नानात् श्रुतस्यैव लेडन्तत्वकल्पनया विधित्वाश्रयणं युक्तमित्यर्थः।

अत्र **भाष्यकारेणास्य** वाक्यस्य विधित्वाश्रयणेऽपि दशवाक्यस्यानुवादत्वाङ्गीकारेण शतवाक्ये विशिष्टोद्देशविधेयानेकत्वकृतवाक्यभेदापादकगुणात् अतिदेशप्राप्तप्राकृतभक्षातिरिक्तस्य तत्स्थानापन्नतया विधानाङ्गीकारापत्तेः प्रकृतभक्षप्रत्यभिज्ञाबाधापत्तिः। तथा शतवाक्ये सोमपदोपादानात् तद्युतनवचमसभक्षण एव शतब्राह्मणविधानापत्त्या यजमानचमसे राजत्वबाधेन ब्राह्मणकर्तृत्वानापत्तिश्च। न ह्यस्मिन् मते सोमपदस्योपलक्षणत्वे मानमस्ति। दशवाक्यस्य पूर्वोक्त-रीत्या विधित्वस्वीकारे तु तत्र सोमपदानुपादानात दशस्वपि चमसेषु प्रत्येकं दशत्वविधाने सति शत-प्राप्तेः शतवाक्यगतं सोमपदं तात्पर्यग्राहकबलाच्चमसोपलक्षणं भवितुमर्हति। अतो राजबाधसिद्धान्तो-पपत्तौ शतोद्देशेन ब्राह्मणविधिरिति भाष्यदूषणपूर्वकं वार्तिकाशयवर्णनं **प्रकाशकारैः** कृतम्। **तदयुक्तम्**। भाष्यमतेऽप्यतिदेशप्राप्तभक्षप्रवृत्तेः पूर्वमेवैतद्विधिप्रवृत्तेरङ्गीकारेण शतसंख्यासंख्येय-ब्राह्मणरूपगुणद्वयविधानफलकविशिष्टभक्षविधानस्वीकारे बाधकाभावेन वाक्यभेदकर्मान्तरापत्त्योः परिहारसंभवात् दशवावाक्यस्यानुवादत्वेनापि विधिगतसोमपदस्य चमसगतद्रव्यमात्रोपलक्षणत्व-तात्पर्यग्राहकत्वस्याप्युपपत्तेश्च। अतो नैतत् भाष्यमते दूषणद्वयं, किंतु एकैकचमसभक्षे प्रत्येकं शतब्राह्मणकर्तृत्वापत्तौ दशदशेत्यनुवादानुपपत्तिरूपमधिकरणारम्भे प्रागुक्तमेवेत्यभिप्रेत्य पूर्वरीत्या दशवाक्यस्य विधित्वाश्रयणेन प्रत्येकं दशत्वसंख्याप्राप्त्या प्रचयशिष्टशतोद्देशेन संख्येयकर्तृगत-ब्राह्मणत्वविधिरिति **वार्तिकाशयेनाह—शतोद्देशेनेति**। भक्षयन्तीत्याख्यातसमानाधिकरणेन शतपदेन सङ्ख्येयव्यक्त्यभिधानात् ये शतमित्यनुवादे उद्देश्यत्वेनावगतासु व्यक्तिषु दशवाक्य-प्राप्तासु **आकृत्यधिकरणन्यायेन** ब्राह्मणत्वजातिरेव परिच्छेदकतया विधीयते इत्यभिप्रेत्य सर्वत्र ब्राह्मणत्वस्य विधेयत्वमुक्तम्। **अनुवादमात्रमिति**। दशवाक्येन चमसगतद्रव्यभक्षणार्थमेव दशानां विधाने शतानां भक्षसंबन्धो यथाप्राप्तोऽनूद्यत इत्यर्थः। अस्मिंश्च वार्तिकरीत्या शतस्योद्देश्यत्वाङ्गीकारे धातोरुद्देश्यत्वेनाप्यन्वयाभावात् अत्यन्तपारार्थ्यापत्तेः अस्वरसात् पक्षान्तर-माह—**वस्तुतस्त्विति**। द्वयोरनयोर्वाक्ययोर्मध्ये शतवाक्यार्थविचारस्याधुना करणात् तदपेक्ष्य

तस्यैवोपादानात्तदुद्देशेनैव ब्राह्मणत्वविधानमिति दशत्वेनैकत्वबाधवत् ब्राह्मणत्वेन राजत्व-बाध इति यजमानचमसेऽपि ब्राह्मणा एव फलचमसं दश भक्षयेयुः। न च "स यदि सोमम्" इत्यनेन राजकर्तृकभक्षस्य निमित्तत्वावगतेः कथं तदभावे फलचमस इति वाच्यं, निमित्तद्वयाङ्गीकारे वाक्यभेदापत्तेराद्येनैव यदिशब्देन यागगतराजकर्तृकत्वस्य निमित्तत्वप्रतिपादनात्। अयं तु यदिशब्दो निस्सन्दिग्धत्वार्थकोऽनुवाद इत्युक्तम्॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयाध्यायस्य
पञ्चमः पादः.

---

पूर्वत्वं पूर्ववाक्य इत्यत्र पूर्वपदेन ग्राह्यं, तेन वाक्यसन्दर्भे शतवाक्यस्य पूर्वत्वेपि न क्षतिः। तथा च दशवाक्ये समाख्यानिमित्तचमसभक्ष एव फलतो दशत्वविधानात्तेन प्राप्ते शते ब्राह्मणत्व-विधानेऽर्थात्तस्यैवानुवादो भक्षयन्तीति शतवाक्ये यथा स्वीक्रियते तथैव ममापि उद्देश्यत्वेनोपस्थि-तस्य तस्यैवेहाप्युद्देश्यत्वमिति अर्थाद्वषट्कारभक्षपुरोडाशादिभक्षाणां व्यावृत्तिसिद्धेर्विशिष्टोद्देशप्रयुक्त-वाक्यभेदाप्रसक्तेस्तद्भक्षोद्देशेन ब्राह्मणत्वस्य संभवत्येव विधिरित्यर्थः। अतश्च राजत्वजातेरुप-दिष्टत्वेऽपि राजसूयत्वेन धर्मेण दशपेयप्राप्तिद्वारेण फलचमसभक्षे तत्प्राप्तेर्विलम्बितत्वेनाविलम्ब-प्राप्तिकया ब्राह्मणत्वजात्या उपदिष्टया बाधो भवतीत्याह—**ब्राह्मणत्वेनेति**। स्पष्टार्थमन्यत्।

ये तु यजमानचमसे दशराजन्यकर्तृत्वपूर्वपक्षे तत्रैव चमसे वषट्कारादिनिमित्तेन होत्रादीनां ब्राह्मणानामपि भक्षकरणेनोच्छिष्टदोषप्रसङ्गापत्तेर्ब्राह्मणानामेव कर्तृत्वमिति सिद्धान्तं साधयन्ति, ते न सोमेनोच्छिष्टा भवन्ति इति वचनेन सोमभक्षविषये प्रसक्तस्योच्छिष्टदोषस्य निषेधकरणात्तस्य च भक्षणीयसोमद्वारा क्रत्वङ्गस्य स्थानापत्त्या फलचमसभक्षेऽपि प्राप्त्युपपत्तेः तदु-च्छिष्टत्वदोषस्य पूर्वपक्षेऽप्यनापत्त्या वार्तिक एव शिक्षिताः। प्रयोजनं पूर्वपक्षे उपस्थितजातीयस्यैव दशत्वापेक्षया ग्रहणात् उपस्थितहोतृयजमानापरित्यागेनैव दशत्वसंपादनमित्युद्गातृचमसे त्रयाणां स्तोत्रकारिणां प्रकृतत्वेनोपस्थितत्वात्तदपरित्यागेन सप्तानामन्येषां ब्राह्मणानामानयनम्। तथा च यजमानचमसे यजमानातिरिक्तानां नवानामन्येषां तत्कर्तव्यम्। तथा सदस्स्थितानामुद्गात्रादीनामन्ये-षामप्रकृतानामिव चमसमनुप्रसर्पणं च। सिद्धान्ते तु दशानां दशानामन्येषामेव ब्राह्मणानां समाख्या-

# अथ तृतीयाध्यायस्य षष्ठः पादः.

(१)—सर्वार्थमप्रकरणात् ॥ १ ॥ प्रकृतौ वाऽद्विरुक्तत्वात् ॥ २ ॥ तद्वर्जं तु वचनप्राप्ते ॥ ३ ॥ दर्शनादिति चेत् ॥ ४ ॥ न चोदनैकार्थ्यात् ॥ ५ ॥ उत्पत्तिरिति चेत् ॥ ६ ॥ न तुल्यत्वात् ॥ ७ ॥ चोदनार्थकार्त्स्न्यात्तु मुख्याविप्रतिषेधात्प्रकृत्यर्थः ॥ ८ ॥

अनारभ्य **श्रुतेन "यस्य पर्णमयी जुहूर्भवति" इत्यादिना**ऽव्यभिचरित**क्रतुसम्बन्धिजुहू-**

---

प्राप्ततत्तत्कर्तृबाधेन तत्तच्चमसभक्षार्थं विधानात् होत्रादिभिन्नानामेवानयनमनुप्रसर्पणं भक्षश्च, न तु होत्रादीनां, राजन्ययजमानस्य वा तदिति स्पष्टत्वान्नोक्तम् ।

**इति श्रीखण्डदेवान्तेवासिश्रीशम्भुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां तृतीयाध्यायस्य**
**पञ्चमः पादः**

---

**अथ षष्ठः पादः**

**॥ सर्वार्थमप्रकरणात् ॥**

पूर्वपादे वाक्यप्रकरणविरोधाविरोधप्रस्तावे पञ्चभिरधिकरणैः क्रतुव्यभिचारिसंबद्धानारभ्याधीतवाक्यविधेयानां अङ्गत्वविचारे कृते तत्प्रसङ्गेन पूर्वपादसमाप्तिपर्यन्तं शेषविचारे समापिते पुनर्बुद्धिस्थतया अनारभ्याधीतत्वसामान्यात्मनोपस्थितक्रत्वव्यभिचारिसंबद्धानारभ्याधीतवाक्यविधेयानामर्थानामङ्गत्वविचारः प्रकरणविरोधाविरोधपर्यवसायी भवति नवेति प्रस्तूयत इति सङ्गतीरनारभ्यपदेन सूचयन् विषयवाक्यमुदाहरति—**अनारभ्येति** । तथाचास्यानारभ्याधीतत्वेन प्रकरणपाठाभावात् तेन सह विरोधाविरोधविषयतायाः अप्रसक्तावपि यदि द्वारसमर्पकं क्रतुसंबन्धोपस्थापकं जुहूपदं प्राकृतीमेव जुहूमनुवदितुमर्हं तदा तेन प्रकृतेरेवोपस्थापनात् तदाकांक्षया गृह्यमाणजुहूद्वारा

**द्देशेन विधीयमाना पर्णता तद्द्वारेण जुहूसाध्यक्रत्वङ्गमिति स्थिते,** सा किं **प्रकृतिविकृति-साधारणी उत प्रकृतेरेवेति चिन्तायां—अविशेषात्सर्वेषामपि।** न च विकृतावतिदेशेनापि **प्राप्तेर्द्विरुक्तत्वापत्तिः। उपदेशेनैव प्राप्तिसत्त्वे अतिदेशस्य** कुशाविषयत्वाकल्पनवत् **पर्णता-**

---

प्रकृत्याकाङ्क्षया ग्रहणात् जुहूपदसमभिव्याहाररूपवाक्यस्य भवति प्रकरणेनाकाङ्क्षारूपेणा-विरोधः। यदि तु तत्पदं प्राकृतीमिव वैकृतीमप्यनुवदितुमर्हे तदा प्रकृतिविकृत्यङ्गभूतजुहूद्वारा पर्णताया उभयाङ्गत्वादनुष्ठानसादेश्यरूपस्थानेन सह भवति प्रकरणेन विरोधः। यद्यपि विकृत्यङ्गत्वेपि प्रकृत्यङ्गत्वाविघातात् न प्रकरणस्य विरोधस्तथापि प्रकरणव्यापारस्य प्रकृत्यङ्गत्व-बोधरूपस्यान्यत एव सिद्धत्वात् प्रकृत्यङ्गत्वमात्रबोधनद्वारा विकृत्यङ्गत्वनिरासफलस्यापि प्रकरणेन कर्तुमशक्यतया विरोधसादृश्यमात्रेणेह तद्विचारप्रवृत्तिरित्यर्थः। एतदेवाभिप्रेत्येदानीं अनारभ्याधीतानां प्रकृतिलिङ्गसंयुक्तानां प्रकरणसंबन्धे सति किं प्रकृतिप्रकरणसंबन्ध उत सर्वा-र्थत्वमिति विचार इत्युक्तं **वार्तिके। पर्णमयीति।** पलाशविकारभूतेत्यर्थः। 'तस्य विकार' इत्यधिकारे मयट्। इत्यादीत्यादिपदेन 'खादिरःस्रुवो भवति छन्दसामेव रसेन सम-वद्यति'इत्यस्य संग्रहः। क्रतुविशेषार्थत्वविचारस्य क्रतोरुपस्थापकपदाभावेऽयुक्तत्वाशङ्कापरि-हारायाह—**अव्यभिचरितेति।** जुहूपदश्रवणानन्तरं तदर्थस्याहवनीयादिवददृष्टरूपत्वाभावेन आकारविशेषयुक्तपात्ररूपस्य जुह्वा जुहोतीति वाक्येन होमसाधनत्वात् जुहूपदेन स्वसाध्य-त्वेनाव्यभिचारिणा क्रतोरुपस्थितेरनुष्ठानसादेश्येन स्थानेन क्रत्वङ्गत्वं जुहूद्वारा, अथवा जुहूस्वरूपे आनर्थक्यप्राप्तौ स्वोपस्थापितक्रत्वपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् जुहूपदेनैव वाक्यात् क्रत्वङ्गत्वमिति तद्विशेषविचारः करिष्यमाणो नायुक्त इत्यर्थः। तमेव विशेषं दर्शयति—**स किमिति।** यस्याङ्गमिति स्थितं स क्रतुः कः इति तच्छब्दस्य क्रतुरर्थः। सिद्धान्तसाधकं चात्र हेतुद्वयं द्विरुक्तत्वादिति सौत्रपदेन तन्त्रेणोपात्तं, प्राप्तस्यैव द्विर्विधानं तथा द्विः शाब्दबोधजनकत्वरूपप्राप्ति-कालवैषम्यं च। तत्राद्यं निरस्यति—**न च विकृतावतिदेशेनापीति।** अन्यतोऽप्राप्तपर्णतायां प्रकृतौ शास्त्रस्यार्थवत्त्वेऽपि विकृतावतिदेशेन प्राप्तिसंभवे तत्रोपदेशस्य वैयर्थ्यम**पि**शब्देनोक्तम्। तथा च एकदोक्तं प्राप्तं पर्णत्वं त्वया पूर्वपक्षिणा द्वितीयवारमपि प्रापणीयमित्येवं द्विरुक्तत्वापत्ति-रित्यर्थः। **कुशाविषयत्वाकल्पनवदिति।** यथैव शरविधायिप्रत्यक्षोपदेशेन विहितैश्शरैः नैराका-ङ्क्ष्यसिद्धेः सामान्यप्रवृत्तकुशप्रापकातिदेशस्य कुशाविषयत्वकल्पनम्, तद्वदिहाप्युपदेशेन तत्सं-भवेऽतिदेशस्य तदविषयत्वकल्पनं युक्तमिति न द्विरुक्तत्वापत्तिरित्यर्थः। **यत्तु** प्रकृतौ जुह्वा उपदेशेन झटित्युपस्थिताया विकृतौ चातिदेशप्राप्तत्वेन विलम्बोपस्थिताया युगपदनुवादायोगे तदुद्देशेन

विषयत्वाकल्पनात्। न च विकृतौ जुहूप्राप्तेरतिदेशायत्तत्वात्तस्य च प्रकृतेस्सर्वाङ्गसम्बन्धोत्तरकालिकत्वेन पर्णताविधेः प्रथमं प्रकृतिविषयशाब्दबोधजनकत्वावश्यम्भावे पुनर्विकृतिविषये तज्जनकत्वायोगेन प्राप्तिकालवैषम्यापत्तिरिति वाच्यं, वैमृधादिवत् पर्णताव्यतिरिक्ताङ्गसम्बन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य विकृतावतिदेशोपपत्तौ पर्णतायाः पश्चादेव विधानेन साधारण्योपपत्तेः। अन्यथा वैमृधेऽपि वैमृधव्यतिरिक्तप्रयाजाद्यतिदेशानापत्तेरिति प्राप्ते—

यत्किञ्चिदितिकर्तव्यताकवैमृधोपेतसकलाङ्गसम्बन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य वैमृधे अतिदेशकल्पनायामपि येषामङ्गानां स्वाङ्गसम्बन्धेन निराकाङ्क्षता तेषामेवातिदेशो न वैमृधस्य,

---

विधीयमाना पर्णता झटित्युपस्थितप्राकृतजुहूमेव स्यान्न वैकृतायां तस्यां विलंबोपस्थितत्वादित्येवं सिद्धान्तिनः प्राप्तिकालवैषम्यापादनम्। तदयुक्तं। सन्निकृष्टविप्रकृष्टप्रमाणयोस्स्वविषये बलाबलसत्वेऽपि तदुभयोपजीवकप्राप्तिमत्तत्पदार्थोद्देशेनान्यगुणविधौ तत्कृतबलाबलस्य नियामकत्वानुपपत्तेः। अत एव प्रबलप्रमाणप्राप्ताग्नेयादिहविषां दुर्बलप्रमाणप्राप्तोपांशुयाजादिहविषां चान्यत्र वेद्यां हवींष्यासदयतीत्यादौ हविःपदेनोद्देश्यताबोधनात् सर्वहविरुद्देशेन वेद्यासादनादिगुणान्तरविधानं संभवत्येवेत्येवंरूपेण प्राप्तिकालवैषम्यं स्पष्टदूषणत्वादुपेक्ष्य प्रकारान्तरेण सिद्धान्त्यभिमतं प्राप्तिकालवैषम्यमनूद्य परिहरति—**न च विकृताविति। तस्य चेति।** यदि प्रकृतेः पूर्णत्वं भवति तदा तद्धर्मातिदेशोऽन्यत्र संभवति। तच्च पर्णताविधेरेकदा प्रकृत्यपूर्वसाधनजुहूद्देशेन पर्णताविधौ भवतीति तदर्थं प्रथमतश्शाब्दबोधजनकत्वस्यावश्यंभावे पुनर्विकृत्यपूर्वसाधनतदुद्देशेन विधातुं शाब्दबोधानुपपत्तिः **सकृदुच्चरित** इति न्यायादित्यर्थः। **वैमृधादिवदिति।** यथा स्वाङ्गयुक्तवैमृधं विनापि तदतिरिक्ताङ्गसंबन्धमात्रेण प्रकृतेः पूर्णत्वमङ्गीकृत्य वैमृधयागे प्रयाजाद्यतिदेशस्स्वीक्रियते, तथेहापि पर्णतया विनापि प्रकृतेरितराङ्गैरेव पूर्णत्वं नानुपपन्नं; न हि पर्णतां विना जुह्वाः साधनाकाङ्क्षानुपशमः तस्य वैकङ्कतादिनापि तत्सिद्धेः। यदि तु वैमृधं विना नैवेतराङ्गमात्रेण पूर्णत्वमुच्यते तदा वैमृधसहिताङ्गानामेवातिदेशात् वैमृधे वैमृधातिदेशापत्तिरित्यर्थः। **अत्र** च सिद्धान्ते वैमृधस्य पौर्णमासीमात्राङ्गत्वेऽपि वैमृधस्य इन्द्रदेवत्यत्वेन याज्ञिकैरमावास्याविकृतित्वाङ्गीकारात् तस्याश्च वैमृधं विनाप्युपपद्यत एव परिपूर्णत्वं तथापि उभयाङ्गत्वे पूर्वपक्षरीत्या **वैमृधादिवदि**त्युक्तं द्रष्टव्यम्। **वस्तुतस्तु** अन्वारम्भणीयायां अन्वारम्भणीयां विनापि प्रकृतेः पूर्णत्वमङ्गीकृत्य प्रयाजाद्यतिदेशस्थलमेवादिपदोपात्तं दृष्टान्तीकर्तुं युक्तमिति ध्येयम्। **यत्किंचिदिति।** उत्पत्तिवाक्ये इष्टसामान्यस्य भाव्यत्वेनान्वयवत् इतिकर्तव्यतासामान्यस्यापि तत्स्वीकारादिति शेषः। **येषामङ्गानामिति।** यत् प्रयाजादिभावनानां तत्तद्द्रव्यदेवताभिक्रमणाद्यङ्गविशेषान्वयेन

**अङ्गविशेषानवगमेन तद्भावनायाः अपरिपूर्णत्वात्। अतश्च पर्णतारूपाङ्गसम्बन्धं विना प्रकृतेः पूर्णत्वाभावादतिदेशतो जुहूप्राप्त्यनन्तरं पुनः पर्णताविधौ प्राप्तिकालवैषम्यापत्तेः प्रकृत्यर्थैव पर्णता। यथा चैवं सति "दीक्षासु यूपं छिनत्ति" इत्यत्राग्नीषोमीयसवनीयानूबन्ध्यसम्बन्ध्युपदिष्टातिदिष्टच्छेदनसाधारण्येन दीक्षाकालविधौ न प्राप्तिकालवैषम्यं तथा** तत्रैव वक्ष्यामः। वस्तुतस्तु—**नैव तत्र साधारण्येन विधिः, प्रकृत्यर्थत्वेन विहितस्यातिदेशतोऽपि प्राप्तिसम्भवात्। तथाऽपि यूपैकत्वं भिन्नकालिकत्वेनागृह्यमाणविशेषत्वात्पात्रवदेव नानुपपन्नम्॥**

---

परिपूर्णत्वं तेषामङ्गानामित्यर्थः। **अतश्चेति**। अतिदेशतो जुहूप्राप्तिं विना पर्णताविधानं न संभवतीत्युक्त्या यत्पूर्वपक्षिणाऽतिदेशस्य पर्णताव्यतिरिक्तविषयत्वकल्पनमुक्तं तदपि परिहृतं द्रष्टव्यम्। अतिदेशेन जुहूप्राप्तेरावश्यकत्वे सति तेन तत्प्राप्तिकाले पर्णताविशिष्टाया एव प्राप्त्युपपत्तेः पुनस्तदर्थं विधानानपेक्षणात्। नहि पदार्थभेदेन पृथगतिदेशः। एककल्पनेनैव तदुपपत्तौ गौरवस्यान्याय्यत्वात्। शरमयविकृतौ तु शरशास्त्रवैयर्थ्यान्यथानुपपत्त्या अतिदेशस्य कुशव्यतिरिक्तविषयत्वकल्पनेऽपीह पर्णताशास्त्रस्य प्रकृत्यङ्गताबोधकत्वेनापि सार्थक्ये सति न तदनुरोधेनातिदेशसङ्कोचो युक्त इति भावः। **तत्रैव वक्ष्याम इति**। दीक्षाकालत्वं हि विधीयमानं न दैक्षापूर्वप्रयुक्तं, तदुपस्थापकानुष्ठानसादेश्याद्यभावात्। किं तु महाप्रकरणाज्ज्योतिष्टोमाङ्गं सत् साक्षात्तत्रानिवि**शमानमानर्थक्यतदङ्गन्यायेन** तदीययूपे निविशमानं तदीयत्वाविशेषात् सर्वपशुयागसंबन्धियूप एव भवतीति न प्राप्तिकालवैषम्यमित्येकादशे तृतीयपादे **यूपश्चाकर्मकालत्वात्** इत्यधिकरणे वक्ष्याम इत्यर्थः। तदेतदधिकरणगतं **प्रकाशकारोक्तं** परिहारद्वयमयुक्तमिति सूचयन् प्राप्तिकालवैषम्यमङ्गीकृत्यापि न सिद्धान्तहानिरिति दर्शयति—**वस्तुतस्त्विति**। तत्र हि महाप्रकरणादङ्गत्वं भवति यत्र स्ववाक्येन श्रुतमुद्देश्यं, तथा यत्र प्रधानार्थत्वं वाक्ये श्रुतं तत्र तदनिविशमानं श्रुतप्रधानगतोद्देश्यत्वान्यथानुपपत्त्या **आनर्थक्यतदङ्गन्याय**विषयं भवति। अत एवोक्तं रेवत्यधिकरणे **शास्त्रदीपिकायां**—न चायमानर्थक्यतदङ्गन्यायविषयः यो हि कर्माङ्गत्वेन गुणश्चोद्यते स तत्र साक्षादसंभवन्नङ्गे निविशते। संभवति ह्यङ्गद्वारेणाप्युपकारकत्वमिति। नहीह तदुभयमप्यस्ति। यूपस्यैवोद्देश्यताश्रवणेन महाप्रकरणानुप्रवेशस्य प्रधानार्थत्वस्य वा प्रसक्त्यभावात्; ततश्च यूपस्योद्देश्यत्वेऽपि **प्राप्तिकालवैषम्यरूपद्विरुक्तत्वन्यायसहकृता**व्यभिचरितक्रतुसंबन्धात् दैक्षार्थत्वमेवोपदेशात्। अतिदेशात्तु सवनीयाद्यर्थत्वं यूपतद्धर्माणामित्यर्थः। **पात्रवदेवेति**। यथा यज्ञार्थपात्राणामाधानप्रकरणे उत्पन्नानां आधानाङ्गभूतारण्याहरणकाले आहृतानां स्वतन्त्रकालाम्नानेन तन्त्रत्वमेवमिहापि यूपतन्त्रत्वमुपपद्यत एव। आव-

प्रयोजनं **पूर्वपक्षे पर्णतालोपे वेदान्तरीयविकृतौ याजुर्वेदिकत्वात्तद्भ्रेषप्रायश्चित्तम्। सिद्धान्ते अविज्ञातप्रायश्चित्तं विकृतिवेदीयं वा। भूरादिप्रायश्चित्तानामप्युपक्रमानुसारेणो-च्चैस्त्वादिवत् वेदधर्मत्वात्**॥ १॥

---

श्यकं चेदं यूपादीनां सर्वार्थत्वेनोपदेशस्वीकारपक्षेऽपि। इतरथा यूपत्रयस्यैव दीक्षाकाले-ऽनुष्ठानापत्तेरित्यर्थः। न च पात्रवत् यूपतन्त्रत्वेऽपि यूपवत् पात्राणामपि पर्णतान्यायेन प्रकृति-मात्रार्थतापत्तिः। तत्र 'यज्ञियैः केतुभिस्सह' इति मन्त्रलिङ्गकल्प्यश्रुतौ वारणो यज्ञावचर इति प्रत्यक्षश्रुतौ च यज्ञमात्रोद्देशेनैव जयादिवद्विधानेन अतिदेशप्राप्तिसापेक्षोद्देश्यकत्वाभावेन प्राप्तिकालवैषम्यापादकाभावात्। **प्रयोजनमिति। अयमर्थः।** वेदोपक्रमाधिकरणे उच्चैष्ट्वादि-धर्माणां यद्यृक्तो यज्ञ अर्तिमियात् भूस्स्वाहेति गार्हपत्ये जुहुयादित्यादिविधिविहितप्रायश्चित्तानां नैमित्तिकानामपि वेदधर्मत्वे साधिते सति तदुत्तराधिकरणे वेदधर्मत्वेऽपि यत्र वेदे उत्पत्तिस्तन्नि-बन्धनमिदमुभयमिति पूर्वपक्षं प्रापय्य ऋग्वेदादिना यद्विनियुज्यते तद्विनियोगनिबन्धनमुभयमिति सिद्धान्तितम्। तथा च याजुर्वेदिकज्योतिष्टोमविकृतौ सामवेदिके श्येनयागे तदतिदेशात् स्वाङ्गविशिष्टदीक्षणीयादिप्राप्तौ सत्यां तत्र जुह्वा अपि प्राप्तत्वेन तत्पृष्ठभावेन पर्णतायाः पूर्वपक्षे याजुर्वेदिकविनियोगविधिना उपदेशेनैव प्राप्तायाः कदाचित् लोपेऽपि प्रकृताविव याजुर्वेदिकाङ्गभ्रेष-प्रायश्चित्तं भवति। सिद्धान्ते त्वतिदेशेनेह पर्णताविनियोगेऽपि याजुर्वेदिकविधिविनियोज्यत्वा-भावादतिदेशवाक्यस्य कल्प्यत्वेन वेदविशेषांतर्गतत्वानिश्चयात् अविज्ञातवेदनिबन्धनं प्रायश्चित्तम्। **अथ वा** सामवेदिकश्येनोत्पत्तिवाक्यशेषत्वेनैव तदाकाङ्क्षयाऽतिदेशवाक्यस्य कल्पनीयत्वात् साम-वेदिकत्वमेवेति सामवेदविहिताङ्गभ्रेषप्रायश्चित्तम्।

**अथ वा** अविज्ञातेति मूलस्थं पदं अविज्ञातवेदीयविकृतिपरम्। विकृतिवेदीयमिति तु श्येनादिविषयं ज्ञेयमिति। यद्यप्यनेन न्यायेन श्येने प्राकृताङ्गानामपि अतिदेशेन सामवेदिकेन विनियोगात्तदीयस्वरस्यैव प्राप्त्यापत्तौ न प्राकृतस्वरः प्राप्नोति **तथापि** 'मंद्रया आज्यभागान्तं मन्द्रप्रातस्सवन' इत्यादिविहितस्वराणां प्रकृताविव विकृतावपि यज्ञभागप्रयुक्तत्वेन प्राबल्यात् विशेषविहितत्वेनातिदेशप्राप्तसामवेदिकस्वरबाधेनातिदेशादेव प्राकृतस्वरप्राप्तौ च न बाधकम्। अत एव यज्ञभागस्वरभ्रेषे प्रायश्चित्तविशेषानाम्नानात् सामवेदिकातिदेशविनियोग-विधिनिबन्धनं तद्भ्रेषनिमित्तप्रायश्चित्तमेव भवतीत्यपि ध्येयम्।

---

## (२)–प्रकरणविशेषात्तु विकृतौ विरोधि स्यात् ॥

"सप्तदश सामिधेनीरनुब्रूयात्" इत्यनारभ्याधीतं सामिधेन्युद्देशेन विधीयमानं साप्तदश्यं प्राकरणिकपाञ्चदश्यावरोधान्न पूर्ववत्प्रकृतौ दर्शपूर्णमासयोर्निविशते; सामिधेनीस्वरूपे आनर्थक्यप्रसक्तौ लक्षणीयस्यापूर्वविशेषसाधनत्वस्य प्रकरणेन झडित्युपस्थापनात्। साप्तदश्ये तु अव्यभिचरितक्रतुसम्बन्धेन कथञ्चिदपूर्वसामान्यस्योपस्थितावपि तद्विशेषस्य द्विरुक्तत्वन्यायेनोपस्थित्या विलम्बितत्वात्। किन्तु विकृतौ। न च तत्रापि क्लृप्तोपकार-पाञ्चदश्यावरोधः। औपदेशिकत्वेन शरवद्बाधकत्वोपपत्तेः। न चानारभ्याधीतत्वेन दौर्बल्यं, निरवकाशत्वरूपप्राबल्ययुक्तेरुभयत्रापि तुल्यत्वात्। अत एव "य इष्ट्या" इत्यने-

---

### प्रकरणविशेषात्तु विकृतौ विरोधित्वात् ॥

यद्यप्यत्र प्राचाङ्ग्रन्थेषु पाञ्चदश्यसाप्तदश्ययोः प्रकृतावेव विकल्पेन निवेशस्य पूर्वपक्षे उपपादितत्वात् तस्य च पूर्वाधिकरणेऽसिद्धान्तितस्येह निराकरणेनापवादत्वानुपपत्तेः नापवाद-सङ्गतिः संभवति, तथापि पक्षे प्राप्तस्यैव प्रकृत्यर्थत्वस्य निराकरणमात्रेणैवापवादत्वं कथञ्चिदुप-पादनीयम्। तदा प्रकृत्यर्थत्वमात्रेणैव पूर्वपक्षकरणं युक्तमिति निराकरणव्याजेन सूचयन् सिद्धान्तोपक्रमेणैव चापवादसङ्गतिं स्पष्टत्वादप्रदर्श्य विचार्यवाक्यविशेषमुदाहरति — सप्तदशेति। सामिधेनीरिति। 'प्रवो वाजा अभिद्यव' इत्याद्या अग्निसमिन्धनार्था ऋचः सामिधेनीपदस्यार्थः सामिधेन्यनुवचनस्योद्देश्यत्वे विशिष्टोद्देशे वाक्यभेदापत्तेः अनुवचनक्रिययैव नित्यं सामिधेनीनामन्वयात् अनुवचनस्यानुवादत्वमभिप्रेत्याह—सामिधेन्युद्देशेनेति। तद्विशेषस्येति। प्रकृत्यपूर्वं तदा परामृश्यते। यत्तु वार्तिके विकृतावपि पाञ्चदश्यस्य बाधकस्य सत्वात् न निवेश इत्युक्तं तदनूद्य परिहरति—न च तत्रापीति। उद्देश्यसामिधेनीप्राप्तयेऽतिदेशावश्यकत्वे सति तत्पृष्ठभावेन क्लृप्तोपकारकत्वात् झटिति पाञ्चदश्यमेव प्राप्नोतीति तेनावरोध इत्यर्थः। औपदेशिकत्वेनेति। यद्यप्ययं न विकृतिमात्रे उपदेशरूपेण पठितो विधिः, तत्र यदि प्रकृतावनिवेशे आनर्थक्यप्रतिहतन्यायेन पाञ्चदश्यावरुद्धायामपि विकृतौ निवेशमङ्गीकृत्यो-पदेशरूपत्वं तर्हि तन्न्यायाविशेषात् प्रकृत्यर्थत्वमप्युपदेशादापद्यते तथापि विकृतावातिदेशिक-पाञ्चदश्यबाधकत्वसंभवे प्रकृतिगतोपदिष्टतद्बाधकत्वस्य विकल्पस्य चाङ्गीकरणं न युक्तमिति भावः। उभयत्रापि। शरसाप्तदश्ययोरुभयोरपीत्यर्थः। बाधकाभावे उक्तन्यायप्राप्तं सर्वविकृतिषु निवेशमन्यत्राप्यतिदिशति—अत एवेति। एवं न्यायप्राप्ते सर्वविकृतिषु साप्तदश्यस्य निवेशेऽपि

**नावगम्यमानं सद्यस्कालत्वादि सर्वविकृतिषु निविशत एव।** अत एव **सर्वविकृतिषु सात-दश्यप्राप्तौ कासुचिन्मित्रविन्दादिविकृतिषु तत्पुनश्श्रवणं अन्यविकृतिषु तत्परिसङ्ख्याफल-कोपसंहारार्थम्। न च** वाक्यद्वय**वैयर्थ्यापत्तिः, एकेन सामिधेनीसम्बन्धोऽपरेण क्रतु-विशेषसम्बन्ध इति विषयभेदात्। न चैवमपि प्राकरणिकेनैवोभयसम्बन्धसिद्धौ इतरवै-यर्थ्यं, वाक्यद्वयाम्नानबलेनाभ्युदयशिरस्कत्वकल्पनादिति** दशमे वक्ष्यते ॥

---

विध्यन्तरानुपपत्तिबलात् क्वचिदेव तन्निवेशं दर्शयति—**अत एव सर्वेति। वाक्यद्वयेति।** अधिकारवाक्येनोभयसंबन्धसिद्धावपि अग्निहोत्रोत्पत्तिविधाविवेति शेषः। **दशमे वक्ष्यत इति।** मित्रविन्दादिप्रकरणगतसाप्तदश्यवाक्येनानारभ्यवादप्राप्तसाप्तदश्यानुवादेन सामिधेनीनां क्लृप्तोप-काराणां निर्गुणानां पुनर्विधानात **गृहमेधीयाज्यभागन्यायेने**तराङ्गपरिसंख्येति पूर्वपक्षनिरासाय सामिधेन्युद्देशेन साप्तदश्यस्यैव विधाने संभवति परिसंख्याफलकसामिधेनीविध्ययोगात् सामिधेनी-प्राप्तये चातिदेशावश्यकत्वेन तल्लोपकत्वानुपपत्तेः प्रकरणगतस्यास्य वाक्यस्य परिसंख्या-फलकविनियोजकत्वं दशमाष्टमपादे **अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्य-भागवत् प्राकृतप्रतिषेधार्थमि**त्यधिकरणे वक्ष्यत इत्यर्थः।

एवमनेनाधिकरणेन प्राकरणिकावरोधेऽनारभ्याधीतस्य विकृतिविशेषे निवेशो न तु प्रकृतौ विकल्प इति सिद्धस्यार्थस्य यत्रानारभ्याधीतस्यापि प्रकृत्यङ्गत्वं वाक्येनैव न तु **पर्णतान्यायेन,** यथा अनारभ्याधीतस्यापि चयनसंस्कृताग्नेरथातोऽग्निमग्निष्टोमेनानुयजन्तीति विधिना प्रकृत्यग्निष्टोमाङ्गत्वं तत्राग्निष्टोमपदसंकोचे प्रमाणाभावात् समबलतया प्राकरणिकोत्तरवेद्यवरोधेऽपि भवत्येव प्रकृता-वग्निरिति तद्विकृतिष्वतिदेशः। विकृतिविशेषे तमुक्थ्येनेत्यादि पुनः श्रवणं सामानविध्यसिद्धिद्वारा तदाश्रितगुणकामप्राप्त्यर्थं न तु परिसंख्यार्थं, मित्रविन्दादिगतसाप्तदश्यश्रवणवत्। अतश्च तादृशपुनःश्रवणरहितवाजपेयादिष्वतिदेशोपपत्तिरित्येवं अपवादस्सुधीभिरूह्यः। सूचितश्चायं दशमे अग्न्यतिग्राह्याधिकरणसमाप्तौ **पार्थसारथिना। यत्त्वत्र प्रकाशकारै**रेतदधिकरण-पूर्वपक्षे पाञ्चदश्यसाप्तदश्ययोर्विकल्पवदथातोऽग्निमग्निष्टोमेनानुयजन्तीत्यनारभ्याधीतेनापि प्रकृतौ विनियुक्तोऽग्निः प्रकरणाधीतयाप्युत्तरवेद्या सह विकल्प्यते न तु तयाऽग्निर्बाधितः सन् विकृत्य-ग्निष्टोमविषयो भवतीत्येवमग्निष्टोमाङ्गत्वमग्नेः प्राकरणिकोत्तरवेद्यङ्गत्वेन समबलमङ्गीकृत्याग्न्युत्तरवेद्यो-र्विकल्पाश्रयणेन विकल्पपर्यन्तत्वसिद्धान्तसाधनेनापवादत्वमुक्तम्।

**तन्न यथा श्रुतं युक्तं;** अग्नेरग्निष्टोमाङ्गत्वस्य वाक्यावगतत्वेन प्राकरणिकोत्तरवेदेर्बाध-स्यैवापत्त्या अतुल्यबलत्वेन विकल्पानापत्तेः। यदि तु निरवकाशत्वेनोत्तरवेदेः प्राबल्यं तदा

## (३)—नैमित्तिकं तु प्रकृतौ तद्विकारस्संयोगविशेषात् ॥ १० ॥

यत्तु **प्रकरण एव "सप्तदश वैश्यस्य" इति नैमित्तिकं साप्तदश्यं, तत् पाञ्चदश्यबाधकम्।** अत्र हि **षष्ठ्या निमित्तत्वमेव वैश्यस्योच्यते। विजातीयत्वाच्च सामिधेन्युद्देशेऽपि न वाक्यभेदः। वैश्यस्वामिकसामिधेन्युद्देशेन वा साप्तदश्यविधिः। षष्ठ्या परस्परसम्बन्धस्य प्राचां व्युत्पन्नत्वेन च विशिष्टोद्देशो युक्तः। वैश्योद्देशेनैव वा स्वस्वामिकसामिधेनीकत्वसम्बन्धेन तद्विधिः, "सामिधेनीरनुब्रूयात्" इत्यस्य तात्पर्यग्राहकत्वात्। अन्त्यपक्षद्वये च वैश्याभावे साप्तदश्याननुष्ठानान्निमित्तत्वं तस्यार्थिकम्। तथा काम्यमपि गोदोहनादि, एकविंशत्याद्यनुवचनादि च नित्यस्य चमसपाञ्चदश्यादे**र्नैमित्तिकस्य च **साप्त-**

---

विकृत्यग्निष्टोमेष्यग्निवाक्यस्य सावकाशत्वादतुल्यबलत्वमेवेति न तत्प्रसक्तिः। अतो न न्यायेन विकल्पस्सिद्ध्यतीति न विकल्पाश्रयणेनैतदधिकरणापवादत्वमपि तु प्राकरणिकोत्तरवेदिसत्वेऽपि प्रकृतावग्निरनारभ्याधीतोऽपि निविशत इत्येतावतैव। अत एवाग्निष्टोमपदस्य रूढ्या प्रकृत्यग्निष्टोममात्रपरत्वेन तन्मात्राङ्गताबोधकतया निरवकाशत्वेन प्राबल्यसंभवेऽपि तयोर्वचनांतरेण समुच्चयविधानात् नैकतरबाधो न वा समबलत्वेन विकल्पः। अत एव **पूज्यपादैः** द्वितीये अग्नेः स्वाभावेनैव सह "अग्निस्सोमाङ्गं वेच्छतां" इत्यादिवचनबलात् विकल्पमङ्गीकृत्याग्निपक्षे उत्तरवेद्याः समुच्चयः। तदभावपक्षे केवलमुत्तरवेदिरेवेत्येवं फलतोऽग्नेरुत्तरवेदेश्च विकल्पस्सूचित इत्यलं विस्तरेण। प्रयोजनं स्पष्टम्।

---

### ॥ नैमित्तिकं तु प्रकृतौ ॥

पूर्वाधिकरणप्रत्युदाहरणमात्रप्रदर्शने तात्पर्यात् नातीव पूर्वपक्षेऽभिनिवेष्टव्यं इत्यभिप्रेत्य भाष्यकारेण गोदोहनादिकाम्यवाक्यानामेवोदाहरणत्वप्रदर्शनेऽपि तस्य नैमित्तिकवाक्यानामनुदाहरणता तात्पर्याविवक्षया सौत्रनैमित्तिकपदस्वारस्यानुरोधेन नैमित्तिकवाक्यानामप्युदाहरणत्वं दर्शयन् सिंद्धान्तेनैवोपक्रमते—**यत्त्विति।** तथा च भाष्यकारेण नैमित्तिकेषु विशेषाशङ्काभावात् वक्ष्यमाणविशेषाशङ्काधिक्यतात्पर्येण काम्यवाक्यमेवोदाहृतं, न तु तेषामत्रानुदाहरणत्वतात्पर्येणेति भावः। साप्तदश्यस्य नैमित्तिकत्वं साधयति—**अत्र हीति। नैमित्तिकस्य चेति।** गोदोहनादिकाम्यमेकस्य चमसस्यैव बाधकं प्रतिष्ठादिफलकं काम्यमेकविंशत्यनुवचनादि तु नित्यनैमित्तिकयोः पाञ्चदश्यसाप्तदश्ययोः उभयोरपि बाधकमित्यर्थः। स्वर्गकामकर्तृकदर्शपूर्णमास-

**दश्यादेर्बाधकं, नित्यस्य** सामान्यविहितत्वेन **ब्राह्मणादिप्रयोगे** सावकाशत्वेन च **विशेषविहिता-न्निरवकाशाच्च काम्यान्नैमित्तिकाद्दुर्बलत्वावगतेः।** **न चैवमपि नैमित्तिकस्य कामनार-**

---

सामान्याङ्गत्वस्य प्रकरणेन पाञ्चदश्ये बोधनेऽपि सामान्यस्य विशेषं विनाऽपर्यवसानात् तत्तत्-कर्तृविशेषीयदर्शपूर्णमासव्यक्तीनां लक्षणयोपस्थितिर्वाच्या। साप्तदश्यस्य तु वैश्यकर्तृविशेषीय-दर्शपूर्णमासव्यक्तेः श्रुत्यैवोपस्थितिरिति श्रुतिलक्षणाकृतसन्निकर्षविप्रकर्षौ बाध्यबाधकताप्रयोजकौ दशमसिद्धावभिप्रेत्याह—**सामान्यविहितत्वेनेति।** यत्किंचित्प्राचीनमिति वाक्यविहितो-पांशुत्वस्य पदार्थधर्मत्वमिति सिद्धान्ते दीक्षणीयाया अपि अग्नीषोमीयप्राग्भाविपदार्थत्वेनोपांशुत्वं प्राप्तमप्यन्यत्र सावकाशत्वान्न भवति। किं तु निरवकाशो यावत्येति वचनविहितः स्वर एवेति नवमे वार्तिककृतोक्तम्। न हि तत्र **सामान्यविशेषन्याय**विषयता। यत्किंचिच्छब्दस्य प्रकृत-परामर्शिनः सर्वनामत्वात् तत्तत्पदार्थव्यक्तिविशेषाणां श्रुत्यैवोपस्थितत्वेन लक्षणाकृतस्य व्यक्ति-विशेषबोधे विप्रकर्षस्याभावात्। अतोऽसाधारण्येन **सावकाशनिरवकाशन्यायेन** दीक्षणीयास्वरेणो-पांशुत्वस्येवेहापि बाध इत्यभिप्रेत्य पार्थक्येन तन्न्यायं दर्शयति—**सावकाशत्वेन चेति।** **यत्तु** स्वाभाविकं नित्यं क्रतोः पूर्वमेव विहितमनुपसंजातविरोधित्वात् न कस्यचिद्बाधकम्। नैमित्तिकं तु निमित्तसंबन्धेन विधीयमानं पश्चात्तनमुपसंजातविरोधित्वात् पूर्वोपमर्देन विना न स्वात्मानं लब्धु-मलमिति पूर्वोपमर्देनैवोत्पद्यत इति पूर्वस्य बाधकमित्येवं **वार्तिककारप्रभृतीनामपच्छेदाधिकरण-न्यायोपन्यसनं** तदुपेक्षितं **पूज्यपादैः।** **तस्यायमाशयः**—निमित्तभूतयोरुद्गातृप्रतिहर्त्रपच्छेदयोः पौर्वापर्यादुत्पन्नयोः नैमित्तिकज्ञानयोः क्रमिकत्वेपीहावाक्यपाठक्रमेणोत्पन्नयोः ज्ञानयोर्यदि पौर्वापर्यं विवक्षितं तदा प्राकरणिकपाञ्चदश्यवाक्यप्रवृत्त्युत्तरं प्रवृत्तेनानारभ्याधीतसाप्तदश्येन पूर्वतनपाञ्च-दश्यबाधो दुर्वार एव। अतो वाक्यक्रमेणोत्पन्नयोरपि द्वयोर्यत्राकाङ्क्षाक्रमेण क्रत्वन्वयस्तत्र पूर्वेणैवोभयाकाङ्क्षया क्रतौ गृहीतेनैव नैराकाङ्क्ष्ये सति नोत्तरेण स एव क्रतुर्ग्रहीतुं शक्यत इति पाञ्चदश्यस्य प्राबल्यं वक्तव्यम्। कथमन्यथा प्राकरणिकपाञ्चदश्यावरोधात् साप्तदश्यं विकृतौ निविशत इति मीमांसकप्रवादस्सङ्गच्छेत। तदिहापि नैमित्तिकसाप्तदश्येऽपि तुल्यम्। **अथ** तु प्रकरणस्थत्वाविशेषात् उभयोरपीह पाञ्चदश्यसाप्तदश्ययोः कथंभावेन ग्रहणात् नान्यतरेणैव क्रतोः प्राक्नैराकाङ्क्ष्यमित्युच्येत, तदा **तदाऽऽकाङ्क्षया** विरुद्धानामविरुद्धानां चोपकाराणां तत्पृष्ठभावेन **पदार्थानां** च युगपत् भावनया अन्वितानामपि अनुष्ठानकाले शास्त्रार्थप्रवृत्तिक्रमपौर्वापर्यस्येदानीं **प्रमोषाद्यदेव** निरवकाशं शास्त्रं तद्बोधितपदार्थस्यैव विरोधेऽनुष्ठानमित्यन्ततो निरवकाशत्वेनैव **पाञ्चदश्यस्यान**नुष्ठानमिति **नापच्छेदन्यायप्रवृत्तिः।**

हितप्रयोगे सावकाशत्ववत् काम्यस्यापि ब्राह्मणादिकाम्यप्रयोगे सावकाशत्वाद्यविशेषेण नैमित्तिकापेक्षया बलवत्त्वानापत्तिः, साक्षात्पुरुषार्थसाधने पुरुषस्योन्मुखत्वेन काम्यस्य पुरस्स्फूर्तिकतया बलवत्त्वोपपत्तेः। **न च काम्यस्य क्रत्वनङ्गत्वात्** तेन **क्रत्वङ्गभूतनित्यादेर्बाधे विगुणक्रत्वाश्रितात्काम्यादपि फलानापत्तिः,** काम्यस्य **लाघवेन परप्रयुक्ताश्रयोपजीवितया स्वातन्त्र्येणानुष्ठानशङ्काऽनुपपत्तेः, आश्रयस्यापि परप्रयुक्तकाम्यगुणेनैवोपकारसिद्धौ**

---

एवं स्थिते यदत्रापच्छेदन्यायप्रवृत्त्युपपादनाय प्रकाशकाराणामायासकरणं—पाञ्चदश्यं हि स्वर्गकाममात्रोद्देशेन दर्शविधेस्तेनैव रूपेणाकाङ्क्षोत्पत्तेस्तदनन्तरमेवान्वेति। साप्तदश्यस्य तु वैश्यं प्रति विधेः न तया सामान्याकाङ्क्षया ग्रहणं योग्यता वा दर्शसामान्यान्वयेऽस्तीति वैश्यस्वर्गकामीयदर्शत्वेन विशेषाकाङ्क्षोत्पत्त्यर्थमवश्यं वैश्यस्वर्गकामं प्रति दर्शविधिर्विशेषतोऽपेक्षणीयः। अतस्स्वर्गकामसामान्योद्देशेन दर्शविधित एव वैश्यस्वर्गकामोद्देशेन दर्शविधिविशेष आक्षेप्यः। तेन सह साप्तदश्यविधेरेकवाक्यता वैश्यपदेन तद्विशेषलक्षणया भवतीति साप्तदश्यविधिः पाञ्चदश्यविधितः पश्चात्तन इति युक्तः **पौर्वापर्यन्यायेन** बाध इति; तद्वैश्यस्वर्गकामप्रयोगेऽसंभवेन सामान्याकाङ्क्षयाऽन्वये पाञ्चदश्यस्याप्ययोग्यत्वेन ग्रहणानुपपत्तेः साप्तदश्यस्यायोग्यतावत् सामान्यरूपाक्रान्तत्वेन तदभावस्यापि सत्वात्। इतरथा सामान्यविध्याक्रान्तत्वाभावे तन्मूलकत्वेन विशेषविधिकल्पनस्याप्यनुपपत्तेः विकल्पितद्रव्यादिविषये भेदनादिनिमित्तविषये चैतादृशविशेषवाक्यकल्पनानां तैश्च सह प्रत्येकं तत्तदङ्गवाक्यानां च पृथक्पृथगेकवाक्यताकल्पनानां चापत्याऽनन्तगौरवापत्तेः, क्वापि मीमांसाग्रन्थेष्वेवंविधविशेषवाक्यकल्पनानुपलंभाच्चोपेक्ष्यम्। अतः पूज्यपादाभिप्रेतं पूर्वोक्तमेव साधीय इत्यलं विस्तरेण। यया विशेषाशङ्कया भाष्यकारेण काम्यमेवोदाहृत्य विचारितं तामनुवदति—**न चेति**। नित्यनैमित्तिकयोरुभयोरपि क्रत्वङ्गत्वेनैकविषयत्वे सति बाध एव नित्यस्य प्रसज्यत इति तत्र पूर्वपक्षो मन्दः। काम्यस्य तु क्रत्वङ्गत्वाभावेन फलार्थत्वात् न क्रत्वङ्गनित्यनैमित्तिकादिभिरेकविषयतेति न बाधप्रसङ्ग इति हेत्वंतरं **क्रत्वनङ्गत्वादिति** पदेन सूचितम्। अथापि बाधे स्वीक्रियमाणेऽनिष्टान्तरमाह—**तेनेति**। अतः प्रकृतौ निवेशासंभवे साप्तदश्यवत् विकृतावेव काम्यं निविशते। यदि तु विकृतौ गुणकामानामप्रवृत्तेः अष्टमे वक्ष्यमाणत्वान्न निवेश इत्युच्येत, तदा प्रकृतावेव क्रत्वर्थं एकदा चमसेन प्रणीय पुनर्गोदोहनेन प्रणेतव्यमेकविंशत्यादिसंख्या च पुनरनुष्ठेयेति विशेषाशङ्कार्थः। परिहरति—**काम्यस्येति**। तथा चैकपुरुषानुष्ठानविषयत्वेन द्वारीभूतप्रणयनस्यैकत्वात् पार्यन्तिकफलभेदेऽपि एकविषयत्वान्नित्यबाधो युक्त एवेत्यर्थः। अत्र च द्वयोरपि शास्त्रयोः क्लप्तत्वेनाप्राप्तबाधत्वाभावात् तृतीये विचारासङ्गतिं दशमेऽर्थलोपाद्बाधस्याप्राप्तस्यैव विचारणीयत्ववत् तृतीयेऽपि प्राप्त-

**नित्यनैमित्तिकचमसाद्यनुष्ठापकत्वाकल्पनात् काम्यप्रयोगे चमसादेरङ्गत्वाभावेनैव वैगुण्याप्रसक्तेः।** अतो **दुर्बलस्य नित्यादेः प्रबलानास्कन्दितप्रयोगविषयत्वकल्पनया प्राप्तबाधविधया बाधकत्वं काम्यनैमित्तिकादेरिति सिद्धम्॥ ३॥**

---

बाधस्य विचारेऽपि न बाधकम्, सङ्गतिस्तु प्रत्युदाहरणरूपा प्रागेव सूचितेत्येवं सुपरिहाराममिप्रेत्य प्राप्तबाधत्वमेवाङ्गीकुर्वन् सिद्धान्तमुपसंहरति—**अत इति**। यत्तु ज्योतिष्टोमदर्शादि काम्यं सत् नित्यं तत्रापि कामे सति सायं प्रातःकालयोरनुष्ठानकरणात् तत्र सायंप्रातःकालावच्छिन्नजीवनरूपनिमित्तस्यापि प्रयोजकस्य सत्वात् पृथङ्नित्यानुष्ठानस्य प्राप्तस्य काम्यानुष्ठानेनैव प्रसङ्गतस्तत्सिद्धेः यो बाधः स न गोदोहनेन चमसस्येव स्वरूपेण बाधः जीवननिमित्तप्रयोगस्यापि काम्यप्रयोगान्तर्गतत्वेनाविकलस्य सिद्धेर्निमित्तशास्त्रस्य काम्यप्रयोगातिरिक्तविषयत्वकल्पने प्रयोजनाभावात्। यद्यपि जीवननिमित्तेन कामेन च एकस्मिन् काले प्रयोगद्वयपाते अगृह्यमाणविशेषत्वात् तन्त्रमेव युक्तं, वक्ष्यते च द्वादशे पूज्यपादैस्तथैव। काम्येन नित्यस्य प्रसङ्गसिद्धिरिति प्रवादोऽपि गोदोहनेन चमसोपकारस्य सिद्ध्यभिप्रायक एव युक्तस्तथापि काम्यस्य साक्षात्पुरुषार्थसाधनत्वेन तत्प्रयोगानुष्ठानस्यैव स्वरसतो गृह्यमाणविशेषत्वात् तदन्तर्गतत्वेन प्रसङ्ग एव युक्तः। अत एव द्वादशे तन्त्रतोपपादनान्ते "अस्तु वा तादृशस्थले प्रसङ्ग" इत्यादिना पक्षान्तरमपि **पूज्यपादैर्दर्शितम्।** न ह्येतादृशप्रसङ्गाङ्गीकारे जीवननिमित्तविषयपृथक्सङ्कल्पबाधप्रसङ्गो दोषः। तद्विषयसङ्कल्पस्य प्रथमारंभे सकृदेवानुष्ठानेन प्रतिप्रयोगं तस्य भेदेनानुष्ठानस्यैवाप्रसक्तेः। अतः प्रसङ्गेऽपि पूर्वसङ्कल्पितार्थसिद्धेः कस्यापि बाधाप्रसक्तावपि यो नित्यप्रयोगगतपार्थक्यांशस्य बाधस्स गोदोहनेनैवेह काम्येन कृत इत्येतावता साम्येन तदप्येतदधिकरणविषयं द्रष्टव्यम्।

एवं स्थिते सामान्यविशेषभावकृतेन तथा सावकाशनिरवकाशकृतदौर्बल्यप्राबल्येन गोदोहन इव एतादृशविषयेऽपि नित्यस्य प्रसङ्गेन बाधं **प्रकाशकारा** आहुस्तन्नित्यशास्त्रस्य काम्यशास्त्रप्रवृत्त्यतिरिक्तविषयत्वाङ्गीकारेणैव सामान्यविशेषभावस्योपपादनीयत्वापत्तौ सामान्यशास्त्राप्रवृत्त्यैव प्रसङ्गानुपपत्तेः तत्प्रवृत्तौ च विशेषशास्त्रत्वेन काम्यशास्त्रप्राबल्यायोगात् उपेक्षणीयम्। **यत्तु शास्त्रदीपिकायां** अपः प्रणयतीति प्रणयनोत्पत्तिवाक्ये चमसस्य करणत्वेनाश्रवणात् वाक्यान्तरेणापि तेन रूपेण विनियोगकरणाच्च चमसस्य सन्निधिमात्रेण प्रणयनाङ्गत्वात् तृतीयाश्रुत्यवगताङ्गभावगोदोहनादेरपेक्षया दौर्बल्यं, गोदोहनस्य फलं प्रति करणत्वेन विधानेन प्रणयनार्थतया विध्यभावात् तदनङ्गत्वेऽपि तत्प्रतियोगिकरणत्वस्यैव तृतीयाश्रुत्या बोधनेन श्रौताङ्गत्वात्। अत एवारुण्ये क्रयप्रतियोगित्वस्य वाक्यीयत्वेऽपि श्रौताङ्गत्वव्यवहार एव। अतः पशुकामप्रयोगे चमसाङ्गत्वस्य

(४)—इष्ट्यर्थमग्न्याधेयं प्रकरणात् ॥ ११ ॥ न वा तासां तदर्थत्वात् ॥ लिङ्गदर्शनाच्च ॥ १२ ॥

अग्नीनामतिदेशेन पवमानेष्ट्यङ्गत्वावगमात्तत्संस्कारकत्वेन विहितस्याधानस्यापि प्रकरणसहकृतवाक्यात्पवमानेष्टिसाधनीभूताग्निसंस्कारकत्वेन विनियुक्तस्य पवमानेष्ट्यङ्गत्वं, पवमानेष्टीनां च विश्वजिन्न्यायेन फलकल्पनेति प्राप्ते—

आधानस्य किमग्न्युत्पादकत्वं उत सम्मार्गादिवदग्निनिष्ठातिशयमात्रजनकत्वं, उभयथाऽपि त्वन्मते अग्निहोत्रादिष्वाहवनीयाद्युत्पादकाभावादतिदेशस्यैवासम्भवः। अतोऽग्नि-

---

श्रुत्या बाध इत्यभिप्रायेण श्रुतिलिङ्गादिवदप्राप्तबाधत्वम् । पशुकामप्रयोगे च क्रमेण चमसाङ्गता श्रौताङ्गोदोहनात् तत्र चमसस्य निराक्रियेति श्रुतिलिङ्गाधिकरणवार्तिकस्वारस्येन सूचितं तत् गोदोहनादिकाम्यस्य सन्निध्यवगताङ्गभावनित्यचमसबाधकत्वसंभवेऽपि पयआदिनित्यद्रव्यणां पयसा जुहोतीत्यादिवाक्यैः तृतीयाश्रुत्यैवाङ्गत्वात् दध्यादिकाम्येन तेषां बाधायोगात् सर्वकाम्योदाहरणाव्यापकत्वादुपेक्षितमिति **प्राप्तबाधविषयेत्यनेन** सूचितम् ।

---

॥ **इष्ट्यर्थमग्न्याधेयं प्रकरणात्** ॥

अनारभ्यवादप्रसङ्गादग्न्याधेयस्यानारभ्यवादत्वेन हेतुना प्रकृतिविकृत्यर्थत्वमुत्तराधिकरणे विचारयिष्यते । तदुपोद्घाततया पूर्वाधिकरणन्यायेन काम्यनैमित्तिकयोरिव आधानस्यापीष्टिप्रकरणे श्रुतत्वेन भासमानस्य प्रकरण एव प्राप्तं निवेशमपवदितुमेतदारंभ इति संगतिमिव विषयवाक्योदाहरणसंशयावपि सुज्ञातत्वादनुल्लिख्य पूर्वपक्षमेवाह—**अग्नीनामिति** । **पवमानेष्ट्यङ्गत्वेति** । अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकायाग्नये शुचये" इति वचनविहिता इष्टयः पवमानेष्टयः । अग्नीनां दर्शाद्यतिदेशेनेष्ट्यङ्गत्वस्येव यदाहवनीये जुहोतीत्यादिवाक्यैः इतरकर्मांगत्वस्याप्यवगतेः वाक्यावगताग्न्यङ्गाधानस्यापि तद्द्वारा सर्वकर्माङ्गत्वमेव **यद्यपि** प्राप्नोति **न** तु पवमानेष्टिमात्राङ्गत्वं, **तथाप्यवघातविधौ** प्रकरणेन यागीयव्रीहीणामिवाधानवाक्यगताग्निपदेन तदङ्गभूतानामेव संस्कार्यत्वं नासुलभमिति सूचयितुं **प्रकरणसहकृतेत्युक्तम्** । **अतिदेशस्यैवासंभव इति** । अस्तु वातिदेशस्तथापि आधानस्य यावदतिदेशप्राप्तप्रकृतपवमानेष्ट्यङ्गभूताग्निसंस्कारद्वारा तदर्थत्वं प्रकरणात् कल्प्यं ततः पूर्वमेव बलवदाहवनीयादिवाक्यप्रमितसर्वकर्मांगभूताहवनीयादिसंस्कारद्वारा सर्वकर्मार्थत्वमेव कल्प्यत इत्यभिप्रेत्याह—**अत इति**। **तासामग्निः**

**होत्राद्यङ्गभूताहवनीयाद्युत्पादकमेवाधानम्।** पवमानेष्टयोऽप्यग्न्यङ्गभूताः फलवदा**धानाङ्गभूता एव वा प्रकरणात्।** **ततश्च पवमानेष्ट्विसिद्धत्वादग्नेरतिदेशस्यैवाभावः॥**

प्रयोजनं **पवमानेष्टिषु पूर्वपक्षे अन्वारम्भणीया, सिद्धान्ते प्रधानारम्भत्वान्नेत्यादि**[1] ॥४॥

---

**प्रकृतितः प्रयाजवत्** इत्येकान्तरिताधिकरणे अग्नीनां पवमानेष्टिष्वनतिदेशस्यैव वक्ष्यमाणत्वात्, स्वतश्च तासु फलाश्रवणेन प्रकरणस्याप्यभावात् यदाहवनीये जुहोतीति तत्प्रकरणगतवाक्यान्तरात् फलवदग्न्यङ्गमेव ता न तु तदङ्गत्वमग्नीनामिति भाष्यकृन्मतेन सिद्धान्तमाह—**पवमानेष्टयोऽपीति।** वार्तिककारमतेन पक्षान्तरमाह। फलवदिति। प्रकरणादिति हेतूपपादकं फलवदिति विशेषणम्। तथा चाधानपवमानेष्टयोर्मिथः सन्निधानेनाम्नाने फलवदग्न्यङ्गत्वे च समाने सति प्रकरणमाधानस्यैवेति न नियन्तुं शक्यते तथाप्याधानस्य झटित्युत्पत्तिवाक्य एव फलसंबन्धेन प्रकरणित्वावगतेस्तदाकाङ्क्षयेष्टीनामेवाङ्गत्वेन ग्रहणं युक्तम्। **यत्त्वत्र** सूत्रभाष्यकारादिभिरिष्टि-प्रकरणमिति व्यवहृतं तत्पूर्वपक्षाभिप्रायेणेत्यर्थः। **यद्यप्यत्र** पूर्वपक्षे अग्निहोत्रादिष्वग्न्यभावः सिद्धान्ते तु तत्सिद्धिरिति स्पष्टं प्रयोजनं दृश्यते। अत एव **भवदेवेनापि** दर्शादिकर्मस्व-धिकारोऽनाहिताग्नेरपि पूर्वपक्षे, सिद्धान्ते आहिताग्नेरेवेति प्रयोजनमुक्तं, **तथाप्यग्न्युद्वासने** प्रायश्चित्तविधानात् आहिताग्निशरीरदाहार्थमामरणं रथकाराहिताग्नीनामिव धारणस्यावश्यकत्वेन तन्मध्यपतिताग्निहोत्रादिकर्मणामपेक्षिताहवनीयाधिकरणलाभसिद्धेरुभयपक्षेऽपि अग्न्यभावकृतबाधका-भावादनाहिताग्नेरधिकारानापत्तेर्न तद्विशेषलाभः। **एतेन** पवमानेष्ट्यर्थाग्नेरेवाधानसंस्कृतत्वेना-हवनीयपदवाच्यत्वेनाग्निहोत्राद्यङ्गभूताग्नेः आहवनीयत्वे मानाभावादिष्ट्यर्थाहवनीयस्यैव यदा-तिथ्यायामितिवत् साधारण्यप्रमाणाभावेन इष्ट्यपवर्गे अपवर्गान्न यदाहवनीये जुहोतीत्यादिवाक्यै-रग्निहोत्रादौ विनियोगो युक्त इति पूर्वपक्षे **प्रकाशकारोक्तं दूषणमपास्तम्।** पवमानेष्ट्यर्थसिद्धा-हवनीयादेरान्तं धृतस्यैव लाघवेन यदाहवनीये जुहोतीत्यादिवाक्यैस्सर्वकर्मसाधारण्यबोधनेनेष्ट्यप-वर्गे तदपवर्गस्य प्राप्तेः। अतो नैतत् पूर्वोक्तप्रयोजने विशेषो लभ्यत इत्यभिप्रेत्य प्रयोजना-न्तरमाह—**प्रयोजनमिति।** **अयमर्थः** प्रकृत्यारंभाङ्गभूतायाः आरम्भणीयायाः अतिदेशेन विकृत्यारम्भाङ्गतया प्राप्तायास्सौर्यादिविकृतीनामारंभेऽप्यनुष्ठानमिति द्वादशद्वितीयपादे **आरंभणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेनेत्यधिकरणे** वक्ष्यते। अनेन न्यायेन पवमानेष्टीनां सौर्यादिवत् स्वतन्त्रफलार्थत्वात् प्राधान्येन तदारंभेप्यारंभणीया पूर्वपक्षे कार्या,

---

1. R. reads पृथगारम्भाभावान्नेत्यादि·

एतान्नयापवादकदाशमिकद्वितीयतृतीयाधिकरणद्वयेन दर्शितः। विकृतिष्वप्यन्वारंभणीया कर्तव्यापि या अन्याङ्गभूता विकृतिर्दीक्षणीयादिरूपा तस्यां प्रधानारंभेणैवारंभात् पृथगारंभाभावेनारंभाङ्गभूतायास्तस्या लुप्तार्थत्वेनाप्राप्तेर्न सा कर्तव्या। किं तु प्रधानभूतविकृतिष्वेवेति पूर्वाधिकरणेन साधिते तर्हि राजसूये यत्रेष्टीनामपि राजसूयपदवाच्यत्वेन प्राधान्यं तथाभूतेष्ट्यारंभेऽपि अतिदेशप्राप्ता पृथगारंभणीया कर्तव्या **तथापि** रजसूयपदवाच्यानामिष्टिपशुसोमयागानामेकप्रयोगभाजामेकस्यारंभस्य सर्वत्र व्यासक्तस्येष्ट्यारंभत्वेन व्यपदेशायोगात् इष्टीनामारंभाभावात न कर्तव्येत्युतराधिकरणे साधितम्। ततश्च सिद्धान्ते भाष्यकारमते इष्टीनां समप्राधान्यात् उत्तराधिकरणन्यायेन, वार्तिककारमते तासामंगत्वात् पूर्वाधिकरणन्यायेन नारंभणीया कर्तव्येति प्रधानारब्धत्वादित्यस्य मतभेदेन प्रधानत्वेनाथवा प्रधानेन सहारब्धत्वादित्यर्थो द्रष्टव्यः। आदिपदेन पवमानेष्टीनां काम्यत्वात् कामाभावे तदकरणे प्रसंगतोऽपि आहवनीयाद्यभावात् अग्निहोत्रादीनां सर्वथा अकरणमेव पूर्वपक्षे, सिद्धान्ते तु तदभावेऽपि उत्तरक्रत्वर्थमेवाग्निसिद्धये आधानानुष्ठानादग्निसद्भावेन तदनुष्ठानमिति प्रयोजनान्तरस्य संग्रहः।

यत्तु **प्रकाशकारैः** प्रधानस्यैव सङ्कल्पनीयत्वात पूर्वपक्षे इष्टय एव सङ्कल्पनीया नाधानं अङ्गत्वात्। सिद्धान्ते तु आधानमेव सङ्कल्पनीयम् प्रधान्यात् नेष्ट्योऽङ्गत्वादिति प्रयोजनान्तरमुक्तं तदाधानस्याङ्गत्वेऽपि वसन्तादिकालाम्नानेनेष्टीनामपेक्षया बृहस्पतिसववत् प्रयोगबहिर्भूतत्वस्यावश्यकत्वात् अनियतपर्वकालीनेष्टिसङ्कल्पान्तः पाताभावेन तेन तदसिद्ध्या आवश्यकतया सङ्कल्पान्तरोपपत्तेरुपेक्षितं **पूज्यपादैः**। अत एव श्रौते वाजपेयाङ्गभूतेपि बृहस्पतिसवे वसन्तकालेऽनुष्ठानात् पृथक् स इष्ट एव। तथा श्रौतस्मार्तकर्माङ्गभूतपुण्याहवाचनगणपत्यादिपूजनादीनां पृथक् सङ्कल्पश्शिष्टानाम्। अत एव यस्य प्रधानप्रयोगबहिर्भूतस्याङ्गस्य प्रधानाव्यवधानेनैवानुष्ठानं तत्राधानाङ्गभूतपवमानेष्टिषु प्रधानप्रयोगबहिर्भूतत्वादेव पृथक्सङ्कल्पानुष्ठानं याज्ञिकानाम्। अत एव वैमृधेप्यनेन न्यायेन तदनुष्ठानं भवत्येव। इदानींतु वैमृधस्य समानतन्त्रत्वपक्षेणैवानुष्ठानात् प्रधानसङ्कल्पेन सहैव तदनुष्ठानाचारः। **यदि** तु पूर्वपक्षे आधानसंकल्पोपपत्तावपि तत्र तत्कर्मण एव संकल्पे उल्लेखः सिद्धान्ते तु सर्वक्रत्वर्थमित्येव। तथा पूर्वपक्षे भाष्यकारमत इवेष्टिसङ्कल्पस्यावश्यकत्वात्, तत्र च स्वर्गकामपदोल्लेखो भाष्यकारमते तु नैव सिद्धान्ते सः। वार्तिककारमते तु सङ्कल्पसामान्यमेवेति प्रयोजनभेदः पक्षद्वये उच्येत तदा एतदपि मूलस्थादिपदेन संगृहीतमिति द्रष्टव्यम्।

(५)—तत्प्रकृत्यर्थं यथाऽन्येनारभ्यवादाः ॥ १४ ॥ सर्वार्थं वाऽऽधानस्य स्वकालत्वात् ॥ १५ ॥

तदाधानमग्निवदेव **पर्णतान्यायेनाव्यभिचरितक्रतुसम्बन्ध्यग्नयङ्गत्वेन क्रत्वङ्गत्वावगते-र्द्विरुक्ततादोषभियैव प्रकृत्यर्थमिति प्राप्ते—नाधानस्य क्रत्वङ्गत्वं प्रमाणाभावात्। जुह्वादयो** ह्याकृतिविशेषरूपाः **पर्णतादिव्यतिरेकेणापि काष्ठान्तरेण जायमाना आनर्थक्यभयाद्युक्तं यत्पर्ण-तादेस्स्वजन्यापूर्वार्थतां बोधयन्तीति। आहवनीयाद्यग्नयस्तु अदृष्टविशेषरूपा आधानं विनोत्पत्तौ प्रमाणाभावादानर्थक्याभावेन स्वस्वरूपार्थत्वमेवाधानस्यावबोधयन्ति। अत एव तत्र नाग्निशब्दे अपूर्वसाधनत्वलक्षणा। अतः क्रत्वर्थत्वस्यैवाभावात् प्रकृत्यर्थता दूरापास्तैव। न चैवमाधानाकरणे क्रतुवैगुण्यानापत्तिः, अग्न्यभावेन वैगुण्योपपत्तेः।** वस्तुतस्तु—**लाघवेन क्रतुविधीनामाधानविधिसिद्धाग्निग्रहणेनैवोपपत्तौ स्वयमग्निप्रयोजक-त्वाभावादनाहिताग्नेरनधिकार एव क्रतुष्विति वैगुण्यशङ्का दूरापास्तैव।** एवं **पवमानेष्टीना-मप्यक्रत्वर्थत्वं व्याख्यातम्॥**

**प्रयोजनं पूर्वपक्षे आधानस्य कालान्तराम्नानेन भिन्नप्रयोगविधिविहिततया सर्वार्थं सकृदनुष्ठानेऽपि बृहस्पतिसवादिवदधिकारिविशेषणत्वे प्रमाणाभावान्नित्ये आधानं**

---

॥ **तत्प्रकृत्यर्थं यथान्येनारभ्यवादाः** ॥

कस्य चिदनारभ्यवादस्य प्रकृत्यर्थत्वे कस्यचिद्विकृत्यर्थत्वे च साधिते अस्यानारभ्यवादस्य नोभयार्थत्वमिति प्रत्युदाहरणत्वेनास्य विचारस्य पादसङ्गतिं स्पष्टत्वादनुल्लिख्य पूर्वाधिकरणसाधिता-नारभ्यवादत्वहेतुकत्वेनास्यानन्तरसङ्गतिं तच्छब्देन सूचयन् पूर्वपक्षं प्रतिजानीते—**तदाधानमिति। अग्निवदेवेति**। यथा यदाहवनीये जुहोतीत्यादिभिर्विनियुक्तानामप्युपदिष्टहोमविषयत्वमेव द्विरुक्तता-पत्त्या इहाग्नयश्च **स्वकालत्वा**दित्यधिकरणे सप्तमपादे वक्ष्यते, तथैव तद्द्वारेण प्रकृत्यर्थत्व-मित्यर्थः। **आकृतिविशेषरूपा इति**। ते चारत्निमात्रदैर्घ्यहंसमुखत्वबिलत्वादयो दृश्यमानाः। **स्वजन्येति**। यदङ्गं जुहूस्तज्जन्यापूर्वार्थतामित्यर्थः। यागादीनां स्वद्रव्यप्रयोजकत्वेन तदाक्षेपकत्वस्येवाग्निप्रयोजकत्वाक्षेपकत्वयोरुपपत्तेः **न तदभावकृतं वैगुण्यं प्रसज्यत इति** वैगुण्य-परिहारस्योत्तरमाह—**वस्तुतस्त्विति**। **यत्त्वेतदधिकरणान्ते एतेन** पवमानेष्टीनामप्यग्न्य-र्थत्वं व्याख्यातमिति वार्तिककृता पवमानेष्टीनामप्यग्न्यर्थत्वमुक्तं तद्यद्यपि भाष्यकारमते संभवदपि स्वमते आधानाङ्गत्वादयुक्तमिव मत्वा तात्पर्यतो व्याचष्टे—**एवमिति**। **प्रयोजनमिति**।

**विनाऽप्यनुष्ठानं** यथाशक्ति**प्रयोगे**। **सिद्धान्ते** त्वधिकारसम्पादकत्वान्नेति ॥ ५ ॥

---

## (६)----तासामग्निः प्रकृतितः प्रयाजवत् ॥ १६ ॥ न वा तासां तदर्थत्वात् ॥ १७ ॥

पवमानेष्टीनां **दर्शप्रकृतित्वादतिदेशेन प्रयाजादिवदेवाग्नयः प्राप्नुवन्ति, ते चाधानपवमानेष्टिसाध्या इति ततः पूर्वं कर्तव्यमेवाधानं पवमानेष्टयश्च। न चानवस्था यावत्पौर्णमास्यादिकालं करणोपपत्तेरिति प्राप्ते—**

---

यदत्र पूर्वपक्षे प्रकृतिप्रयोगान्तर्गतत्वात् तदेकदेशकालकर्तृकत्वमितराङ्गवदाधानस्यापि। सिद्धान्ते तु तदभावान्न तत्; किन्तु स्वकालादावेवेति प्रयोजनं **भवदेवादि**भिरुक्तं तन्निरसितुं **कालान्तराम्नानेने**त्युक्तम्। तथैकादशे **द्रव्यस्याकर्मकालनिष्पत्तेः प्रयोगस्सर्वार्थः स्यादि**ति तृतीयपादद्वितीयाधिकरणे प्रयाजादिवत् कर्माङ्गत्वात् प्रतिकर्मप्रयोगमावृत्तिराधानस्येति पूर्वपक्षं प्रापय्य स्वतन्त्रकालाम्नानात् यूपच्छेदनादिवत् तन्त्रत्वमिति सिद्धान्तितं, तत्र या आवृत्तिः पूर्वपक्षे उक्ता सापि नैतदधिकरणपूर्वपक्षप्रयोजनमिति सूचयितुं **सकृदि**त्युक्तम्। **यथाशक्तीति**। यत्प्रधानप्रयोगविधिगृहीतं प्रधानेन प्रयुज्यते तत्प्रधानविधिविरोधे सति प्रधानानुरोधेन नित्ये त्याज्यं भवतीति **पूर्वपक्षे यथाशक्त्युपबन्धविषयतायां** तदङ्गहानिकृतवैगुण्यपरिहारार्थं प्रायश्चित्तानुष्ठानमपि प्राप्येत। **सिद्धान्ते** तु प्रधानप्रयोज्यत्वाभावात् अग्न्यर्थत्वेनावश्यकस्य प्रसङ्गेनाधिकारसंपादकत्वात् तद्विषयत्वाप्रसक्तेस्तदभावे नैवाधिकार इति भावः। एवमिह क्रतुसामान्याङ्गत्वे स्थिते सति यैकादशाधिकरणप्रवृत्तिः सा कृत्वाचिन्तयेति तत्रैव स्फुटीकरिष्यते।

---

### ॥ तासामग्निः प्रकृतितः प्रयाजवत् ॥

यद्याधानपवमानेष्टीनां अग्न्यर्थत्वं पूर्वाधिकरणे साधितं तदा पवमानेष्टिष्वतिदेशप्राप्ताहवनीयादिस्वरूपसिद्ध्यर्थमाधानपवमानेष्ट्यन्तरानुष्ठानापत्तिरित्याक्षेपसमाधानार्थतया सङ्गतिं सूचयन्नेव पूर्वपक्षमाह— **पवमानेष्टीनामिति**। पौर्णमास्यादिकालस्य प्रकृत्यनुष्ठानप्रयोजकत्वात्तदतिपाते प्रायश्चित्तविधानेन तदापत्तिभिया प्रधानस्यावश्यमनुष्ठेयत्वे तस्याहवनीयसाध्यत्वात् अर्थादाहवनीयादिस्वरूपसिद्धिस्तदानीं भवतीति कल्प्यते। **यद्यपि** प्रपूर्वाधिकरणे पवमानेष्टिष्वसिद्धत्वादग्नेरतिदेशस्यैवाभाव इत्युक्तेः इहातिदेशेनाग्निप्राप्तिहेतुकपूर्वपक्षस्य नोपस्थितिः संभवति **तथापि**

न तावत्**पवमानेष्ट्यादिकं प्रकृतावङ्गं, अग्निमात्रार्थत्वस्य स्थापितत्वात्**। सत्यपि **चाङ्गत्वे तेषां नातिदेशः पवमानेष्ट्यादिषु,** यत्किञ्चिदितिकर्तव्यताकपवमानेष्ट्युपेतसकलाङ्गसम्बन्धे-**नैव प्रकृतेः पूर्णतां परिकल्प्य पवमानेष्टिष्वतिदेशकल्पनात्, येषामङ्गानां प्रकृतौ स्वाङ्गसम्बन्धेन निराकाङ्क्षता तेषामेवातिदेशः न पवमानेष्ट्यादीनां, तेषामङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात्। अतोऽन्वारम्भणीयावैमृधन्यायेनैव नातिदेशः।** वस्तुतस्तु—

---

पवमानेष्टिसंस्कृताग्नौ प्रकृत्यनुष्ठानात् तथाभूतस्यैवेहातिदेशेन प्राप्तिमाश्रित्य तन्निर्वाहाय पवमानेष्ट्यन्तरानुष्ठानशङ्कामात्रेण पूर्वपक्ष इति भावः। किं पवमानेष्ट्यादीनां प्रकृत्यङ्गत्वात् अतिदेशेन पवमानेष्टिषु प्राप्तिरुच्यते उताग्नीनां प्रकृत्यङ्गत्वात् तेषामतिदेशेन प्राप्तानां तत्साधनतया तेषां प्राप्तिरुच्यते? आद्ये परिहारमाह—**न तावदिति**। अङ्गत्वमङ्गीकृत्यापि **तस्यां तु स्यात् प्रयाजवत्** इति दाशमिकप्रथमपादचतुर्थाधिकरणोपपादितारम्भणीयान्यायसाम्येन परिहरति—**सत्यपि चेति**। अत्र **शास्त्रदीपिकायामङ्गत्वे** सत्यपि पवमानेष्टीनामनतिदेशप्रसाधनं कृतं—यदा हि पवमानेष्टयो विधीयमानाः कथंभावापेक्षिण्यः प्रकृतिमालोचयन्ति तदा प्रकृतेस्तच्छून्यत्वात् न ततस्ताश्शक्यन्ते ग्रहीतुमिति तदतिरिक्तामेवेतिकर्तव्यतां गृहीत्वा सन्तुष्टाः पवमानेष्टयः न पुनरात्मानमपि गृह्णन्ति इति; तत्तावद्यथाश्रुतमयुक्तं अङ्गत्वाङ्गीकारपक्षे प्रकृतेस्तच्छून्यत्वासंभवात्। यदा त्वङ्गत्वस्य विध्यधीनत्वात् विधेश्च त्र्यंशभावनाविषयस्य पवमानेष्टिभावनायामितिकर्तव्यताविशेषान्वयं विना पर्यवसानात् विधिप्रवृत्तिवर्तमानतादशायां प्रकृतावङ्गत्वेनागृहीतानामासामतिदेशासंभवेनेतिकर्तव्यताकाङ्क्षयाऽन्वयायोगात् तद्व्यतिरिक्तेतिकर्तव्यतयैव तस्यास्त्र्यङ्गभावनायाः परिपूर्णत्वाङ्गीकारेण विधेयतयाङ्गत्वसत्वेपि न पवमानेष्टीनामतिदेश इति वार्तिकोपपादितदिशोच्येत **तथापि प्रकृत्यङ्गत्वस्यैवाभावे** तदानीं प्रकृतेः पवमानेष्टिरूपाङ्गान्वयाभावेनापरिपूर्णत्वात् ततस्तदतिरिक्त-**प्रयाजाद्यङ्गानामपि** इतिकर्तव्यतयाऽन्वयानुपपत्तिः। अतः प्रकृतेः पूर्णत्वसिद्धये **पवमानेष्टीनां** तत्काले प्रकृत्यङ्गत्वस्यावश्यकत्वे प्रकृत्यङ्गत्वेनातिदेशो दुर्निवार इत्यभिप्रेत्याङ्गत्वसत्वेप्यतिदेशं **प्रकारांतरेण** निवारयति—**यत्किञ्चिदिति**। पवमानेष्टीनामुत्पत्तावेवेष्टसामान्यभाव्यानामिव इतिकर्तव्यतासामान्यान्वितानामेव विहितत्वेनाङ्गत्वं कल्प्यते न तु प्रयाजादिविशेषान्वितानां तदानीं तद्विशेषस्यानुपस्थितत्वात प्रापकप्रमाणाभावाच्च। एवं सर्वाङ्गान्वयेन परिपूर्णायाः **प्रकृतेः अतिदेशकल्पनेपि** अतिदेशात्पूर्वं पवमानेष्टीनां विशेषान्वयं विना निराकाङ्क्षत्वाभावादपरिपूर्णत्वेन **नातिदेश** इत्यर्थः। प्रकृतिप्रकरणाद्यभावाच्चाङ्गत्वमेव परमार्थतो नास्तीत्याह—**वस्तुतस्त्विति**। तथा चानङ्गभूतानामिहानतिदेशे साधिते अङ्गभूतानां तु प्रकृतौ विद्यमानत्वात् भवत्वतिदेश इति विशेषाशङ्कानिरासाय दाशमिकाधिकरणगतारंभणीयातिदेशविचारप्रवृत्तिरिति सूचितम्।

**नाङ्गत्वमपि ।** अग्नीनां तु सत्यप्यङ्गत्वे **साध्यत्वान्नेहातिदेशः ।** अवश्यं हि **ये प्रथमत आधानपवमानेष्ट्यादयः कार्यास्तेभ्योऽग्निसिद्धिरङ्गीकर्तव्या । ततश्च तेभ्यः कार्यसिद्धावन्येषामकरणम् ।** यथा चैवं **सति पवमानेष्टिहोमादय आधानहोमा वा आधानजन्योत्पत्त्यपूर्वरूपाहवनीयादौ भवन्ति तथा कौस्तुभे वारणाधिकरणे अत्र च स्पष्टम् ॥ ६ ॥**

---

अग्नीनां प्रकृत्यङ्गत्वेनातिदेशसंभवात् तादर्थ्येन तासामप्यतिदेशाशङ्कां निरस्यति— **अग्नीनां त्विति । सत्यप्यङ्गत्वे इति ।** प्रकृत्यङ्गत्वे सत्यपीत्यर्थः । यद्धीतिकर्तव्यताकाङ्क्षया गृहीतं तस्य प्राप्तयेऽतिदेशकल्पनं तदाकाङ्क्षया च साधनत्वेन योग्यमेव गृह्यते । एवं च पवमानेष्टिभिस्स्वसाध्याग्नीनां तेन रूपेणाकाङ्क्षयाऽग्रहणात् न तत्प्राप्तयेऽतिदेशः । अतिदेशप्राप्तस्याग्नीनामङ्गत्वस्यौपदेशिकेनाग्न्यर्थत्वेनाधानार्थत्वेन वा बाधादित्यर्थः । ननु पवमानेष्टिषु साधनत्वेनान्वयार्थमेवान्यासां पवमानेष्टीनां अनुष्ठानेनाग्नीनां साध्यत्वमङ्गीकृत्येह तत्प्राप्त्यर्थमतिदेशोपपत्तिरित्यत आह— **अवश्यं हीति ।** ननु पवमानेष्टीनामग्न्यर्थत्वे आधानार्थत्वे वा सर्वान्त एवाहवनीयाद्युत्पत्तेः आहवनीयादिशब्दवाच्यस्य आधानविशेषजन्यपरमापूर्वविशिष्टज्वलनादेः मध्ये अभावात् कथमाधानाद्यङ्गभूतानां होमानां पवमानेष्टीनां च आहवनीयाधिकरणत्वसिद्धिरित्याशङ्कानिरासायाह —**यथा चैवमिति । अयमर्थः । भाष्यकारमते** तावदाधानाङ्गतया संभाव्यमानानां पूर्णाहुत्यादिहोमानां पवमानेष्टीनां चाहवनीयोत्पत्त्यर्थमेव यदाहवनीये जुहोतीति प्राकरणिकवाक्यान्तरादनुष्ठेयानां संस्कारकतया तत्रैव करणात् अर्थादेवाहवनीयाधिकरणत्वं सुलभम् । **वार्तिककारमते** तु प्राकरणिकवाक्ये सप्तम्या द्वितीयार्थलक्षकत्वे मानाभावात् प्राकरणिकाधानाङ्गभूतानां होमानामनेनैव वाक्येनाहवनीयोऽधिकरणत्वेन विधीयते । अत एवात्रत्याहवनीयपदस्याधानोत्पत्त्यपूर्वविशिष्टाग्निपरत्वं लक्षणयैव द्रष्टव्यम् । येतु पवमानेष्ट्यङ्गभूता अतिदेशप्राप्ताः हविः श्रपणपिष्टलेपफलीकरणहोमादयस्तेषां आधानविशेषजन्यपरमापूर्वविशिष्टाग्निरूपगार्हपत्यान्वाहार्यपचनयोरसिद्धत्वेन यदाहवनीयेजुहोतीतिवत् वाक्यान्तराभावेन न तत्रानुष्ठानं प्राप्नोति **तथापि** मुख्ययोस्तयोरभावेऽपि विशेष्यभूताग्निमात्रस्यैव सति संभवे प्रकृतिदृष्टत्वमात्रेण ग्रहणे बाधकाभावात् युक्तमेव तत्र तत् । अनेनैव न्यायेन पवमानेष्ट्यङ्गभूतानामतिदेशप्राप्तानां होमानां मुख्याहवनीयाधिकरणत्वबाधेऽपि आहवनीय एवानुष्ठानं लभ्यत एवेति प्राकरणिकवाक्यमाधानप्रकरणोपदिष्टहोमपरमेव पर्यवस्यतीति न काप्यनुपपत्तिरिति तदधिकरणे **कौस्तुभे** स्पष्टमिति ।

---

(७)—तुल्यस्सर्वेषां पशुविधिः प्रकरणाविशेषात् ॥ १८ ॥ स्थानाच्च पूर्वस्य ॥ १९ ॥ श्वस्त्वेकेषां तत्र प्राक्छ्रुतिर्गुणार्था ॥ २० ॥ तेनोत्कृष्टस्य कालविधिरिति चेत् २१ ॥ नैकदेशत्वात् ॥ २२ ॥ अर्थेनेति चेत् ॥ २३ ॥ न श्रुतिविप्रतिषेधात् ॥ २४ ॥ स्थानात्तु पूर्वस्य संस्कारस्य तदर्थत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥ अचोदना गुणार्थेन ॥ २७ ॥

ज्योतिष्टोमे **क्रयसन्निधावग्नीषोमीयः** पशुराम्नातो **वचनात् "स एष औपवसथ्येऽहन्यालब्धव्यः" इत्यस्माच्चतुर्थेऽहन्यनुष्ठीयते। पशुधर्माश्च** तत्रैव **पशूपाकरणादयस्समाम्नाताः। सवनीयश्च पशुस्सौत्येऽहनि समाम्नातः "आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति" इति। अनुबन्ध्यश्चान्ते समाम्नातः। तदिह** किं पशुधर्माणां **पशुत्रयसाधारण्यं, उत सवनीयमात्रार्थत्वं, उत सवनीयाग्नीषोमीयोभयार्थत्वं, उताग्नीषोमीयमात्रार्थत्वमेवेति चिन्तायां महाप्रकरणवशाज्ज्योतिष्टोमसम्बद्धानां धर्माणां पशुधर्मत्वेन साक्षात्सम्बन्धायोगादानर्थक्यतदङ्गन्यायेन पशुयागद्वारा जनकत्वावगतेस्तेषां च मध्ये कस्यचित्**

---

॥ तुल्यः पशुविधिस्सर्वेषां प्रकरणाविशेषात् ॥

बलाबलाधिकरणोत्तरं प्रतिज्ञातस्य श्रुत्यादीनां विरोधाविरोधविषयविचारस्य उत्तरत्र कर्तव्यतायां प्रकरणस्य श्रुत्यादिभिस्सर्वैस्सह विरोधाविरोधविचारं सप्रसंगागतविचारं समाप्याधुना एतत्पादारब्धसामानविध्यविचारव्याजेन क्रमस्य प्रकरणेन सह विरोधाविरोधविचारायेदमधिकरणमिति स्पष्टत्वात् सङ्गतिमनुक्त्वा करिष्यमाणपूर्वपक्षहेतुसूचनपूर्वकं विचारविषयं दर्शयति —**ज्योतिष्टोमे इति**। **क्रयपदात्पूर्वं** दीक्षास्विति शेषः। **आम्नात इति**। यो दीक्षितो यदग्नीषोमीयं पशुमालभेतेति विधिनेति शेषः। **तत्रैवेति**। चतुर्थेऽहन्येवाग्नीषोमप्रणयनोत्तरकालं धिष्ण्यनिर्माणादूर्ध्वमुपाकरणादयः पशुधर्मा इत्यर्थः। प्रजापतेर्जायमानाः, इमं पशुमित्याभ्यां ऋग्भ्यां पशोर्दर्भपवित्रैरुपस्पर्शन**मुपाकरणं** नाम। आदिपदेन दर्भज्वाल्या त्रिः प्रदक्षिणकरणरूपं पर्यग्निकरणं गृहीतम्। **अन्ते इति**। अवभृथान्त इत्यर्थः। तेनानुबन्ध्यस्य सवनीयवत् वक्ष्यमाणावान्तरप्रकरणसंभावनाया अभावेनानुबन्ध्यमात्रार्थत्वं अग्नीषोमीयानुबन्ध्यार्थत्वं सवनीयानुबन्ध्यार्थत्वमिति पक्षत्रयं नास्तीति सूचितम्। **पशुधर्माणामिति**। सर्वैरपि धर्माकाङ्क्षिभिः

**विशिष्य प्रकरणबाधकबलवत्प्रमाणाभावेनाविशेषात्सर्वार्थत्वमित्याद्यः।** द्वितीयस्तु **सत्यपि ज्योतिष्टोमप्रकरणस्य पशुधर्मग्राहकत्वे सवनीयावान्तरप्रकरणेन तद्बाधः।** तस्य हि **औपवसथ्येऽहन्येवोत्पत्तिः "आग्नेयः पशुरग्निष्टोमे आलब्धव्यः, ऐन्द्राग्न उक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिष्षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी" इत्येतैर्वचनैः क्रतुपशूनां विधानात्। तस्य क्लृप्तोपकारप्राकृताङ्गसम्बन्धेऽप्यपेक्षितानां पशुधर्माणां सन्निहितत्वेन प्राकृताङ्गसन्दष्टत्वेन चावान्तरप्रकरणोपपत्तिः। ऐन्द्राग्नादिपशूनां तु** संस्थाधिकरणन्यायेन

---

पशुयागैरपेक्षितानामित्यर्थः। **द्वितीयस्त्विति।** सिद्धान्ते महाप्रकरणस्य स्थानेन बाधायोगात् अत्र ग्राहकत्वमेव नास्तीति सत्यपि पशुधर्मग्राहकत्वे इत्यपिना सूचितम्। ननु सवनीयोत्पत्तावप्यन्यविकृतीनामिव प्राकृतैरेवाङ्गैः प्रथमतस्तस्य निराकाङ्क्षत्वेन प्रकरणासंभवात् तत्समीपपठितविशेषधर्माणामेषामन्यतराकाङ्क्षारूपस्थानादेवाङ्गत्वं वक्तव्यमिति स्थानेन कथं महाप्रकरणबाध इत्यत आह—**तस्य चेति।** प्राकृतैरङ्गैर्या आकाङ्क्षा न शाम्यति सा विशेषपदार्थाकाङ्क्षा तत्पदार्थान्वयं यावत् अनुवर्तत एवेति सवनीयस्यापि अवश्यापेक्षितपशुधर्माकाङ्क्षा। तथैव पशुधर्माणामप्युपकार्याकाङ्क्षेत्युभयाकाङ्क्षालक्षणं प्रकरणं संभवति। अन्यविकृतीनां न वैशेषिकाङ्गानामपेक्षा येन प्रकरणं स्यात् **इत्यपेक्षितानामित्यनेन** सूचितम्। एवं सत्यपि प्रकरणे प्रधानभूतज्योतिष्टोमाश्रितस्य महाप्रकरणस्याङ्गाश्रितप्रकरणेन कथं बाध इत्याशङ्कामवान्तरप्रकरणत्वेन निरसितुं **प्राकृताङ्गेत्युक्तम्।** एकादशप्रयाजान् यजतीत्यादिविहितप्राकृताङ्गसंबन्धिसंख्या पूर्वं विहिता अन्ते चानूयाजानां पृषदाज्यादि विहितं तदुभयं च प्राकृताङ्गानुवादेन विधीयमानं प्रकरणात् सवनीयाङ्गं तदन्तराले पशुधर्मास्तत्संदष्टा भवन्तीति अवान्तरप्रकरणत्वसिद्धिरित्यर्थः। **संस्थाधिकरणन्यायेनेति।** संस्थानां काम्यत्वेनाश्रयं ज्योतिष्टोमं विना फलान्वयायोगात् संस्थानां धर्मग्रहणसमये ज्योतिष्टोमेनैव गृहीता धर्माः वैरूप्यापत्तेर्न तासामङ्गत्वं प्रतिपद्यन्त इति पादान्त्याधिकरणे वक्ष्यते। ततश्च काम्यसंस्थाङ्गतया विधीयमानानां काम्यतुल्यानामैन्द्राग्नादिपशूनां पशुधर्मान्वये वैरूप्यापत्तेर्न तेषां तद्धर्मवत्त्वेन समानविधानत्वमपि तु अग्निष्टोमाङ्गभूताग्नेयसवनीयाङ्गत्वमेवेत्यर्थः। यदि तु औपवसथ्याह एव तत्तत्संस्थानिमित्ते विधीयमानानां चतुर्णां पशूनामुत्पत्तिसाम्यात् ज्योतिष्टोममालाङ्गत्वाच्च प्रकरणाविशेषात् पशुधर्मग्रहणे वैरूप्यानापत्तेः सर्वेषामपि नैमित्तिकत्वेन **नित्यनैमित्तिकन्यायेन** समानविधित्वाभावाप्रसक्तेः सर्वेषामेव पशुधर्मग्राहकत्वमुपपद्यत एवेत्युच्येत तदेष्टापत्तिं पक्षान्तरेण दर्शयति—**अस्तु वेति।** अत एव **तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्** इति सूत्रगतं सर्वेषामिति बहुवचनं संगच्छते। इदं हि सूत्रं **स्थानाच्च पूर्वस्य श्वस्त्वेकेषां, तत्र प्राक्श्रुतिर्गुणार्था,** इत्युत्तरसूत्रद्वयसामञ्जस्यानुरोधेनाद्यपूर्वपक्षस्योत्सूत्रत्वमभिप्रेत्य सवनीयमाला-

**समानविधानत्वाभावादेव न पशुधर्मग्राहकत्वशङ्का।** अस्तु वा—**तेषामप्यवान्तरप्रकरणाद्धर्मग्राहकत्वं, नैतावता** सर्वार्थत्वम्। न च सौत्येऽहनि **तद्विधिः,** सवनीयोद्देशेन **तस्याश्विनग्रहग्रहणोत्तरकालत्वमात्रविधायकत्वात्** यूपपरिव्याणस्य **"त्रिवृता यूपं परिव्ययति" इति**

---

र्थत्वद्वितीयपूर्वपक्षपरतया **भाष्यवार्तिककर्तृभ्यां** व्याख्यातम्। तत्र यद्याग्नेयसवनीयमात्रार्थत्वमेव द्वितीयः पूर्वपक्षः तदा तस्यैकत्वात् सर्वेषामिति बहुवचनमनुपपद्यमानं सवनीयसर्वपशुयागार्थत्वस्वीकारे उपपद्यते इतरथा तुल्यस्सर्वेषां पशुविधिस्स्यात् यदि प्रकरणे विशेषो न भवेत् इत्येवमुत्सूत्राद्यपूर्वपक्षानुवादपरतया भाष्यादिदर्शितव्याख्यानाश्रयणेऽध्याहारादिक्लेशापत्तेः। अत इदमेवैकं सूत्रमाद्यद्वितीयपूर्वपक्षोपन्यासार्थं तन्त्रेणोपात्तमिति आद्यपूर्वपक्षपरतयोत्तरसूत्रद्वयानुरोधेन प्रथमतो व्याख्याय सवनीययागमात्रार्थत्वद्वितीयपूर्वपक्षपरतयाप्यावृत्त्या योजनीयम्। अतो न कस्यापि पूर्वपक्षस्य सौत्रत्वमित्याशयः। **सर्वार्थत्वमिति।** अग्नीषोमीयानुबन्ध्यार्थत्वं नेत्यर्थः। न चाग्नेयसवनीयातिरिक्तानां त्रयाणामवान्तरप्रकरणसत्वेन तद्ग्राहकत्वेप्याग्नेयस्य सौत्येऽह्न्युत्पत्त्या तत्र प्रकरणसंभवेऽपि चतुर्थेऽहनि तदभावे तदभावान्न तद्ग्राहकत्वं संभवतीत्याशङ्कते—**न च सौत्ये इति।** उभयत्रोत्पत्तिविधित्वं गुणविधित्वमनुपपन्नमेवेत्यन्यतरस्यान्यतरविधित्वेऽवश्याश्रयणीये यत्र च स्पष्टो गुणस्स्ववाक्य एव श्रूयते तत्र गुणविधित्वमेव यथा आश्विनवाक्ये। यत्र तु स्ववाक्ये गुण एव न श्रुतः प्रत्युतान्योत्पत्तिविधिसमभिव्याहारबाधस्तद्विशेषभूतार्थवादानुपपत्तिश्च भवतस्तत्रागत्या उत्पत्तिविधित्वमेव यथा आग्नेयवाक्ये। न ह्यैन्द्राग्नादिपशूनामन्यान्युत्पत्तिवाक्यान्याग्नेयसवनीयवत् संभाव्यन्ते। अतस्तेषामुत्पत्तिविधित्वावश्यकत्वे तत्समभिव्याहृताग्नेयवाक्यस्य गुणविधित्वे तत्प्रायपाठबाधस्स्फुट एव। न वा "आग्नेयः पशुरग्निष्टोम आलभ्यः" इत्यर्थवादसामञ्जस्यं गुणविधित्वे युज्यते। अत आग्नेयवाक्यस्यैवोत्पत्तिविधित्वं सौत्यवाक्यस्यैव गुणविधित्वं युक्तमित्यभिप्रायेण परिहरति—**सवनीयोद्देशेनेति।** यदि आश्विनवाक्ये उपाकरोतिना यागो लक्ष्यते तदा सवनीयपदमेवोद्देश्यसमर्पकमतो न विशिष्टोद्देशप्रयुक्तवाक्यभेदप्रसक्तिरिति सूचयितुं **सवनीयोद्देशेने**त्युक्तम्। यदि तूपाकरणपरमेव तत् तदा अश्विनग्रहोत्तरकालरूपविधेयसामर्थ्यादाग्नेयसंबन्धिन एव तस्योद्देश्यत्वसिद्धेर्न विशिष्टोद्देश इत्यपि द्रष्टव्यम्। अत एव चतुर्थेऽह्न्युपाकरणस्य प्रधानभूतसवनीययागस्य च उत्पत्त्या तत्रैवोभयोरप्यनुष्ठाने प्राप्ते वपया प्रातस्सवने चरन्तीति विधिना प्रधानोत्कर्षे विहितेऽङ्गानां प्रधानदेशत्वानुरोधेनोपाकरणस्यापि तत्रैव प्रातमनुष्ठानमाश्विनग्रहणोत्तरकालविधिना बाध्यत इत्यर्थः। **यत्तु** सिद्धान्तिनो दूषणपूर्वपक्षे यूपपरिव्याणस्य रशनागतत्रित्वस्य वापि विधाने वाक्यभेदापादनं तत् तस्य वाक्यान्तरप्राप्तत्वेनानुवादमात्रत्वात्तदप्रसक्त्या परिहरति—**यूपपरिव्याणस्येति।** न चाश्विनोत्तरत्वं सामान्यविधिनाऽप्राप्तं पुनर्विधेय-

सामान्यविधिना "आश्विनं ग्रहं गृहीत्वा उपनिष्क्रम्य यूपं परिव्ययति" इति परिव्याणविधिना वा प्राप्तत्वेनानुवादात्। परिव्याणान्तरे त्रिवृत्त्वस्यापि रशनासाधारण्याधिकरण एवोपपादयिष्यमाणत्वाच्च। न च तथाऽपि दूरस्थकर्मानुवादेन कालविधिरशक्यः, औपवसथ्येऽहनि विहितानामपि क्रतुपशूनां "वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यन्दिने अङ्गैस्तृतीयसवने" इत्यनेनोत्कर्षविधानात् सौत्येऽहन्यनुष्ठीयमानतयोपस्थित्युपपत्तेः तेन यथैव क्रयसन्निधावाम्नातस्याग्नीषोमीयस्य औपवसथ्येऽहन्यनुष्ठीयमानत्वेनैव धर्मग्राहकत्वं सिद्धान्ते, तद्वदिहापीति न दोषः। न चैवमपि क्व सवनीयविधिरित्यत्र विनिगमनाविरहः, धर्मबाहुळ्यस्य नियामकत्वात् अतश्चावान्तरप्रकरणात् सवनीयमात्रार्था इति। तृतीयस्तु सत्यं सवनीयार्थाः, स्थानादग्नीषोमीयार्था अपि। तस्य हि क्रयसन्निधौ विधिदशायामेव क्लृप्तोपकारप्राकृताङ्गैर्निराकाङ्क्षीकृतस्य औपवसथ्येऽहन्युत्कृष्टस्यार्थोपस्थितिमात्रसत्त्वेन स्थानम्। सवनीयवद्वाक्यसन्निध्यभावेन प्रकरणशङ्काऽनुपपत्तेः। अत एवेतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोस्सन्निधिरिति स्थानलक्षणम्। यद्यपि चात्र पशुधर्माणां श्रुत्यादिविनियुक्तत्वान्न प्रकरणस्य स्थानस्य वा विनियोजकत्वसम्भावना, तथाऽप्यपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्व एव विनियोजकत्वव्यवहारो भाक्त इति द्रष्टव्यम्। न चैवमपि प्रकरणेन स्थानबाधापत्तिः, अग्नीषोमीयस्य पशुधर्माकाङ्क्षायामेवातिदेशकल्पनवदौपदेशिकस्थानस्यैव विनियोजकत्वकल्पनौचित्यात्। अन्यथा प्रबलौपदेशिकप्रमाणेन प्रकृत्यर्थत्वात् धर्माणां क्वापि विकृत्यर्थत्वानापत्तेः। इन्द्रादेरुपायान्तरेणापि स्मृतिसम्भवान्न लिङ्गादेश्श्रुतिकल्पकत्वमिति विशेषः। अत उभयार्थत्वमिति प्राप्ते—

---

मेवेत्यत आह—आश्विनं गृहीत्वेति। साधारण्याधिकरण इति। इतो द्व्यन्तरिताधिकरण इत्यर्थः। यदपि दूरस्थकर्मानुवादेन यदाहवनीये जुहोतीत्यादौ उपादेयगुणविधानसंभवेऽपि कालादिरूपानुपादेयगुणविधानासंभवस्य प्रकरणान्तराधिकरणे व्युत्पादितत्वात् नेह तदनुवादेन कालविधिर्युक्त इति सिद्धान्तिनो दूषणं तदप्यनूद्य परिहरति—न चेति। दूरस्थकर्मोद्देशेनानुपादेयगुणविधानं दूरस्थतया कर्मणोऽनुपस्थितेरशक्यं, न चेह सास्ति, प्रत्युतानुष्ठीयमानतया उपस्थितिरस्त्येवेति न बाधकमित्यर्थः। अनुष्ठानकृतापि साङ्गत्वहेतुर्भवतीति दृष्टान्तेन दर्शयति—तेनेति। सवनीयवदिति। यत्रैवोत्पत्तिवाक्यं तत्रैवाकाङ्क्षोत्पत्तेः प्रकरणं भवति। अतश्चतुर्थेऽहन्युत्पत्तेः अग्नीषोमीयस्याभावात् सवनीयस्य तत्रोत्पत्तेः प्रकरणसंभवेपि अग्नीषोमीयस्य स्थानं तु संभवत्येवेत्यर्थः। भाक्त इति। ततश्च तेनैव भाक्तेन व्यवहारेणेह प्रकरणादिगतविरोधाविरोधचिन्ताप्रवृत्तिरित्यर्थः। यद्याकाङ्क्षामात्रेणैव दुर्बलस्यापि प्रमाणस्याङ्गताग्राहकत्वं तदा प्रबलश्रुत्यैन्द्र्याः

**न सवनीयस्यावान्तरप्रकरणं सौत्येऽह्न्युत्पत्तेः। अन्यथा दूरस्थकर्मानुवादेन कालरूपानुपादेयगुणविधानानुपपत्तेः। न च प्रातस्सवने उत्कृष्टत्वादेवोपस्थितिः,** आनुष्ठानिक्युपस्थितेरङ्ग**ग्राहकत्वेऽपि प्रकरणान्तरप्रतिबन्धकत्वस्य क्वाप्यदर्शनात्। अस्तु वा तत्। तथाऽपि वपाभ्यासमात्रस्य प्रातस्सवने** उत्कृष्टत्वेऽप्युपाकरणोत्कर्षे **प्रमाणाभावात्तदुपस्थित्यनुपपत्तेः। यद्यपि चोपाकरोतिना** याग एव लक्ष्येत, **तथाऽपि शक्यार्थस्योपाकरणस्याश्विनग्रहणोत्तरकालत्वस्याप्राते**रनुवादानुपपत्तिः। यद्यपि च **वपाप्रचारोत्तरभाविपदार्थानां तदा-**

---

गार्हपत्योपस्थानाङ्गत्वेऽपि इन्द्रस्मरणाकाङ्क्षया लिङ्गादिन्द्राङ्गत्वस्याप्यापत्तिरित्यत आह— **इन्द्रादेरिति। आनुष्ठानिक्युपस्थितेरिति।** स्थानरूपाया इति शेषः। तेन च तेन यथैवेत्यादि पूर्वपक्ष्युक्तदृष्टान्तवैषम्यं दर्शितम्। **क्वापीति।** आश्विनग्रहणोत्तरविधिना तदनुष्ठानबोधोत्तरमनुष्ठानविशेषे क्रमो वपयेति वाक्येन बोधनीयस्तदनंतरभाविनी तदुपस्थितिर्न पूर्वभाविकर्मान्तरत्वप्रतिबन्धिका भवति। तदानीं सन्निधानात् पूर्वविहितकर्मान्तरस्यैव वपाप्रचाराद्युत्कर्षापत्तेः प्राकृतसवनीयस्यैवोपस्थितौ प्रमाणाभावादित्यर्थः। **उपाकरणोत्कर्ष इति।** पाञ्चमिकतदाद्युत्कर्षन्यायेन तदुत्तरभाविनां वपासंस्कारादिरूपाणां वोत्कर्षेणोपस्थितिसंभवेपि तत्पूर्वदिनानुष्ठेयोपाकरणोत्कर्षे मानाभावेनेहोपस्थित्यसंभवादित्यर्थः। **याग एव लक्ष्येतेति।** यागलक्षणायामुपाकरणोपस्थापकाभावेऽपि यागस्य वपाभ्यासप्रचारादिना उपस्थितिस्संभवत्येवेत्याशयः। **अनुवादानुपपत्तिरिति।** आश्विनग्रहणोत्तरकालीनत्वेनोपाकरणानुवादानुपपत्तिः तादृशस्य यागलक्षणायामपि अर्थतः पूतीकवाक्ये अभिषवस्येव प्राप्त्यभावादित्यर्थः। न च वपाप्रचारोत्कर्षे सति अङ्गानां प्रधानदेशत्वानुरोधेन उपाकरणाद्युत्कर्षेण वपाभ्यासस्याश्विनोत्तरत्वादेवोपाकरणस्यापि तदुत्तरत्वप्राप्तेस्तादृशानुवादोपपत्तिरित्यत आह— **यद्यपि चेति।** अक्लृप्तकालाङ्गानां प्रधानकालत्वेऽपि क्लृप्तकालानामुपाकरणादीनां प्रधानकालिकत्वेनाश्विनोत्तरत्वप्राप्तिरित्यर्थः। **अपूर्वत्वादिति।** यथैव हविरभिवासनोत्तरमाम्नाताया वेदेः प्रकरणविनियुक्ताया यावत्पाठात्तदुत्तरत्वरूपः क्रमः कल्प्येत, ततः पूर्वमेव प्रत्यक्षश्रुत्या अमावास्यायां पूर्वेद्युः करणे विहिते सति हविरभिवासनस्य तदा नैव बद्धक्रमत्वमित्यक्लृप्तक्रमत्वात् न तदंतापकर्ष इति **तथाऽपूर्वमि**ति पञ्चमप्रथमपादाधिकरणे वक्ष्यते। तथैवोत्कर्षेऽपि वपाप्रचारस्यानूयाजवत् प्राकृतत्वाभावेनापूर्वत्वात्तदुत्तरभाविनामप्यक्लृप्तक्रमत्वेन नोत्कर्ष इत्यर्थः।

एतावता च सौत्यवाक्ये गुणविधानासंभवेनोत्पत्तिविधित्वं साधितं; अधुना सर्वस्यापि गुणस्यान्यतः प्राप्तेरनन्यपरत्वादपि तस्योत्पत्तिविधित्वमेव युक्तमिति प्राचीनानुक्तं विशेषं वक्तुमुपा-

द्युत्कर्षन्यायेनोत्कर्षस्सम्भाव्येत, तथाऽपि न तत्पूर्वभाविनामुपाकरणादीनामुत्कर्षे प्रमाणमस्ति। वस्तुतस्तु पूर्वं युद्धदिकरणन्यायेनापूर्वत्वात् तदुत्तरभाविनामपि नोत्कर्षः। वस्तुतस्तु—गङ्गायां घोष इत्यादौ शक्यार्थस्य घोषान्वयप्राप्त्यभावेऽपि लक्षणादर्शनात् तस्योत्तरकालत्वप्राप्त्यभावेऽप्युपाकरोतिना वपाभ्यासलक्षणोपपत्तेः पश्वनपक्रमोपयोगियूपदार्ढ्यसम्पादकद्वितीययूपपरिव्याणस्याश्विनग्रहणोत्तरकालताविधित एव तदुत्तरभाविवपायागस्याप्याश्विनग्रहणोत्तरकालत्वसिद्धेरेतद्वाक्यवैयर्थ्यमित्येवाभ्यासादेतस्योत्पत्तिविधित्वं, तत्रापीतरस्य सर्वस्य द्वितीययूपपरिव्याणादेर्वाक्यान्तरप्राप्तत्वात्कालविशिष्टं शुद्धमेव वा द्रव्यदेवताविशिष्टं कर्मैव विधीयते, ततश्चानेनैव वाक्येनाग्नेयसवनीयस्यैतत्समानजातीयैश्च वाक्यान्तरैरैन्द्राग्नादीनां विधानादौपवसथ्येऽहनि तेषां पुनश्श्रवणमनुवादमात्रं, तदपि "यथा वै मत्स्योऽविदितो जनमवधूनुते एवमेतेऽप्रज्ञायमाना जनमवधून्वते" इत्यर्थवादकृतसन्ततकरणनिमित्तकनिन्दोपपादकैतच्छब्दापेक्षितपशुसमर्पणार्थं, निन्दोन्नीतदोषपरिहारार्थं च "वपया प्रातस्सवने चरन्ति" इत्यादिना वपाप्रचारोद्देशेन प्रातस्सवनादिकालविधिः। खण्डशः कालभेदेनानुष्ठाने हि मध्ये स्मृत्यर्थमवकाशलाभाद्दोष-

---

करोतिना आश्विनं ग्रहं गृहीत्वेत्यनेन पदान्तरेण अन्वयमप्रतिपद्यमानेनैव द्रव्यदेवतासंबन्धेन यागलक्षणायां तत्रैव तदुत्तरकालान्वयेन उपाकरणस्य तद्वैशिष्ट्येनानुवादासंभवात्। केवलस्य तस्याभिषुणुयादितिवत् शक्यार्थमात्रत्वेन प्राप्त्या अनुवादत्वोपपत्तिसंभवेऽपि नोपाकरणेन लक्षिते यागे कालविधानमत्रास्तीत्याह-वस्तुतस्त्विति। उत्तरकालताविधित एवेति। आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययतीति विधितः त्रिवृता यूपं परिव्ययतीति सामान्यविधिविहितपरिव्याणापेक्षया परिव्याणान्तरविधायकादित्यर्थः। तथा च यूपीयद्वितीयपरिव्याणस्याश्विनग्रहोत्तरत्वे सिद्धे तदुत्तरभावेनानुष्ठेयानामुपाकरणाद्यङ्गानां वपायागाभ्यासस्य चार्थादेव तदुत्तरत्वसिद्धेर्नात्र विधेयान्तरावकाश इति भावः। यद्यपि रशना चेत्यधिकरणे पाठप्राप्ताश्विनोत्तरत्वस्यानुवादेनैवानन्यपरत्वात् परिव्याणांतरविधायकत्वं तस्य वक्ष्यत इति नाश्विनग्रहणोत्तरकालताविधित एवेति वक्तुं युक्तं तथापि पाठप्राप्ततदुत्तरत्वानुवादघटितविधित एवेत्यर्थो द्रष्टव्यः। एतद्वाक्यवैयर्थ्येत्यत्र सवनीयं पशुमुपाकरोतीति सौत्यवाक्यमेतच्छब्दार्थः। यदुक्तं पूर्वपक्षे आग्नेयसवनीयस्यौपवसथ्याहर्वाक्येनानुत्पत्तौ ऐन्द्राग्नादिपश्वन्तरोत्पत्तिविधिसाहचर्यबाधस्यादिति तत्परिहारं सूचयितुं तेषामपि तत्रोत्पत्तिरिति दर्शयति—तत्समानजातीयैश्चेति। आपस्तंबसूत्रे उक्थ्यसंस्थायां सौत्य एव दिवसे सर्वेषां क्रतुपशूनामाम्नानात् तन्मूलत्वेन कल्प्यमानैर्वाक्यांतरैरित्यर्थः। **यथा वै मत्स्य इति।** यथा जले लीनो मत्स्यो जनं पीडयति एवं सन्ततानुष्ठाने सौमिकतन्त्रसमुद्रे विवेका-

**परिहारः।** यद्यपि चात्रापि **कालविधानं दूरस्थकर्मानुवादेनाशक्यं,** तथाऽप्यर्थवादत एव तदुपस्थितेर्न कश्चिद्दोषः। यत्तु प्रचारविप्रकर्षस्योपादेयस्य गुणस्य सत्त्वान्न दोष इति मूलोक्तं समाधानं, तत् विप्रकर्षस्याशाब्दस्य विधेयत्वाभावादुपेक्षितम्। अतो न सवनीयस्यावान्तरप्रकरणं, स्थानात्त्वग्नीषोमीययागाङ्गं पशुधर्माः। न च ज्योतिष्टोमप्रकरणेन स्थानबाधः, पशुधर्माणां श्रुत्यादिभिः पशुसंस्कारकतया विनियुक्तानामयोग्यतया ज्योतिष्टोमप्रकरणेनाग्रहणात्। अतो यत्रैव श्रुतसम्बन्धः यथा "वाजपेयस्य" इत्यादौ तत्रैवानर्थक्यतदङ्गन्यायः, न त्वत्र। एवंसत्यपि यदि कस्यापि पशोः विशिष्यप्रमाणान्तरमरमपूर्वसाधनत्वोपस्थापकं न स्यात्तो महाप्रकरणपरिगृहीतानामेषामानर्थक्यतदङ्गन्यायेन

---

ग्रहात् एते जनं पीडयन्तीत्यर्थः। **यद्यपि चात्रापीति।** सुत्यादिवसोत्पन्नाग्नेयसवनीयस्य दूरस्थतया तदीयवपाप्रचारानुवादेन चतुर्थेऽहनि प्रातस्सवनादिकालविधानमशक्यं अनुपस्थितेरित्यर्थः, वपाप्रचारोद्देशमात्रेणैव तत्कालविधेः वपायां क्रतुपशुसंबन्धित्वोपस्थितिस्तु यथा वै मत्स्य इत्यर्थवादे पूर्वं तेषामेवोपक्रान्तत्वादेव सिद्ध्यतीति नानुपस्थितिरित्यभिप्रेत्य परिहरति–**तथापीति।** **अशाब्दस्येति।** यद्यपि भाष्यवार्तिकादौ सुत्याकालस्यसवनीयानुवादेन वपाप्रचारमात्रस्यैवोपादेयत्वेन विधेयत्वमुक्तं, न विप्रकर्षस्य, येनाशाब्दत्वेनैव त्यक्तस्याशाब्दत्वापत्तिस्तत्रापाद्येत तथापि "कःपुनर्गुणो यदर्थैषा श्रुतिः उच्यते पशून्संकीर्त्य यथा वै मत्स्योऽविदितो जनमवधूनुतेएवमेते अप्रज्ञायमाना जनमवधून्वत इति एषामविज्ञाने दोषमभिधाय एभिः कथं सवनानि पशुमन्तीति प्रश्नरूपकेण वपाप्रचारो गुणो विधीयतेतदर्थैषा श्रुतिः" इति भाष्यग्रन्थे सवनानि पशुमन्ति कथं भवन्ति इति प्रश्नोत्तरपरत्वेन वपादिवाक्यानां विधायकतायाः प्रदर्शितत्वात्। तस्य चैकेनैव वपावाक्येन उत्तरवाक्यद्वयेन वा प्रत्येकं तत्तद्वपाप्रचारमात्रादिगुणविधाने एवंप्रकारेण पशुमन्तीत्येवमेकरूपोत्तरत्वासभवादगत्याङ्गैस्तृतीयवन इति तृतीयवाक्यार्थसमाप्तिपर्यन्तं विधीयमानैकत्वानुरोधेन एवंरूपः प्रचारविप्रकर्षो विधेयः। अत एव **शास्त्रदीपिकायां** प्रचारविप्रकर्षो विधातुं उपादेयत्वादित्युक्तम्। अतस्तस्य शब्दतोऽभासमानस्य तदापादनं युक्तमेवेति ध्येयम्।

वस्तुतस्तु यथाश्रुतभाष्यादिस्वारस्येन वपाप्रचारमात्रस्यैव विधेयत्वस्वीकारे सुत्याकालीनसवनीयानां स्ववाक्येऽनुपादानेन उद्देश्यत्वायोगात् कथञ्चिदर्थवादोपस्थित्यापि तद्विध्यङ्गीकारे प्रातस्सवनकालस्यापि विधौ वाक्यभेदापत्तिपरिहारार्थमतिदेशप्रवृत्तेः पूर्वमेव प्रातस्सवनादिकालविशिष्टवपाप्रचारादिविधिर्विशेषणमात्रफलस्स्वीकार्यः। तदपेक्षया स्ववाक्योपात्तातिदेशप्राप्तवपाप्रचाराद्युद्देशेन श्रुततत्कालमात्रविधानमेवाश्रयितुं युक्तमित्येव **पूज्यपादानां** मूलोक्तसमाधानदूषणे तात्पर्य-

**भवेत्सर्वपश्वर्थत्वं, न त्वेतदस्ति,** स्थानेना**ग्नीषोमीयार्थत्वावगमात्, तेन सिद्धमग्नीषोमीये उपदेशोऽन्यत्र त्वतिदेश इति।** सामानविध्यप्रयोजनं **दशमादौ स्पष्टम्** ॥ ७ ॥

---

## (८)—दोहयोः कालभेदादसंयुक्तं शृतं स्यात् ॥ २८ ॥ प्रकरणाविभागाद्वा तत्संयुक्तस्य कालशास्त्रम् ॥ २९ ॥

**दर्शपूर्णमासयोर्दधि पूर्वेद्युरपरेद्युश्च पय उत्पाद्यते। दोहधर्माश्च शाखाहरणादयः पूर्वेद्युः क्रियन्ते। तेषामनुष्ठानसादेश्याद्दधिमात्राङ्गत्वमिति प्राप्ते—**

---

मिति। **स्थानेनेति।** एतच्च वाक्यलिङ्गादीनामप्युपलक्षणं, तेन पशुपुरोडाशादिरूपाङ्गविशेषाणामुत्पत्तिवाक्ये श्रुताग्नीषोमवाचकपदसदृशपदान्तरकल्पनया वाक्येन तद्देवतास्मारकत्वयोग्यतारूपलिङ्गेन च प्रकरणबाधादपि अग्नीषोमीययागार्थत्वं द्रष्टव्यम्। इह स्थानेन पशुधर्मसाधारण्येन पशुपुरोडाशस्यापि तदङ्गत्वसामान्ये साधिते सति यदेतत् पूर्वोक्तवाक्यलिङ्गाभ्यां प्रधानदेवतासंस्कारकत्वेन दृष्टविधयाऽङ्गत्वं दशमे साधयिष्यते तेनैवात्रत्यविचारप्रयोजनमाह—**सामानविध्यप्रयोजनमिति।** तथा च **पूर्वपक्षे** सामानविध्येऽप्यग्नीषोमीयसंस्कारार्थस्य पुरोडाशयागस्य सामर्थ्यादग्नीषोमीयमात्रार्थत्वस्यैवापत्तेः न सवनीयादावूहेनापि प्रयोगः किं तु लोप एव। **सिद्धान्ते तु** तत्रातिदेशप्राप्तत्वादूहेनानुष्ठानमिति दाशमिकाधिकरणमूलप्रवृत्तिकद्वादशद्वितीयपादद्वितीयाधिकरणे स्पष्टमित्यर्थः। आदिपदेन प्रास्मा अग्निमिति मन्त्रस्य मैष्यामसामर्थ्यात् पूर्वपक्षे लोपः। सिद्धान्ते च मैत्रीयागस्य विकृतित्वेनाग्नीषोमीयातिदेशप्राप्तत्वेनोहेन भवति प्रवृत्तिरित्यपि प्रयोजनं सामानविध्यं कृत्वाचिन्तया विचारे **लिङ्गविशेषनिर्देशादित्ति** नवमप्रथमपादाधिकरणे **शास्त्रदीपिकायां** सूचितं संगृहीतम्।

अत्र पशुधर्माणामिव यूपतद्धर्मच्छेदनादीनामपि स्थानादग्नीषोमीयाङ्गत्वस्यैव सत्वात् उदाहरणत्वप्रदर्शनं कर्तुं युक्तम्। अत एव **शास्त्रदीपिकायामु**दाहरणविवेकवेलायां तत्रैव पशुधर्मा यूपच्छेदनादयः पठिता इत्युक्तं; तथापि यूपस्य तद्धर्माणां च तन्त्रत्वस्यैकादशे वक्ष्यमाणत्वेन प्रकृतौ अनुष्ठानकृतविशेषाभावात् न पूज्यपादैस्ते उदाहृता इति ध्येयम्।

---

**यद्यपि स्थानं भवेत्, तथाऽपि प्रकरणेन तद्बाधः। न ह्यत्र पूर्ववत् क्लृप्तोपकारत्वादिना प्रकरणाभावश्शङ्कितुं शक्यः। न च स्थानमपि** दधियागस्यास्ति, **उत्तरेद्युरेवानुष्ठानात्। दध्नस्तु विद्यमानमपि** नानर्थक्यभियाऽपूर्वसाधनत्वलक्षणातात्पर्यग्राहकम्। **न च स्मारकविधयैव दध्नैव यागोपस्थितेस्स्थानशङ्का, तादृशोपस्थितेर्नैयत्याभावेन ग्राहकत्वानुपपत्तेः। किञ्च दोहधर्माः परेद्युरेवाम्नाताः तत्रैव भाव्यापेक्षायां प्रकरणादुभयार्थत्वेनावगम्यमानाः सामर्थ्यात् पूर्वेद्युरनुष्ठीयमानदधिसिद्ध्यर्थं पूर्वेद्युस्तन्त्रेण क्रियमाणा अपि** न तन्मात्रार्था भवन्ति। दोहनादयस्तु **सामर्थ्यादेवावर्तन्त इति विशेषः॥ ८॥**

---

॥ दोहयोः॥

**न ह्यत्रेति।** सवनीयस्य सौत्येऽहन्युत्पत्तौ सत्यां तस्य विकृतित्वेन प्राकृताङ्गैर्निराकाङ्क्षत्वात् न प्रकरणं संभवतीति स्थानमात्रादग्नीषोमीयमात्राङ्गत्वमेव भवति। अत्र तु पयोयागस्यापि प्रकृतित्वादेव कैरप्यङ्गैर्नैराकाङ्क्ष्याभावात् प्रकरणं संभवत्येवेति युक्त एव स्थानबाध इत्यर्थः। **दधियागस्यास्तीति।** धर्मदेशे क्रियमाणं प्रधानं कर्म प्रतिपद्यते पद्यमानं चावान्तरप्रकरणं न चेह तदुभयमस्ति अमावास्यायां परेद्युरेव पाठादनुष्ठानाच्चेत्यर्थः। **नानर्थक्यभियेति।** दधिस्वरूपे आनर्थक्यप्रसक्तावपूर्वसाधनत्वलक्षणातात्पर्यग्राहकं यदि तत्स्थानं भवेत् तदा स्थानात् दधियागापूर्वार्थत्वं स्यादपि; न ह्येतदस्ति दधिस्थानस्य विद्यमानस्यापि दधियागापूर्वोपस्थापकत्वे मानाभावात्। अपि तु प्रयोगान्तः पातिनः समन्त्रकस्य दध्नः यागकरणत्वस्य प्रकरणसहकृतश्रुत्यादिनाऽवगतत्वात् दधियागापूर्वसाधनत्वेनैवानर्थक्यपरिहारे सति तस्य प्रकरणस्याविशेषादुभयापूर्वसाधनत्वमेव लक्षयितुमुचितमिति न दधिस्थानं पयोयागार्थताव्यावर्तकमित्यर्थः। **न तन्मात्रार्था भवन्तीति।** दधिनिष्पत्त्यर्थक्रियमाणदोहमात्रार्थत्वं तावन्नैषां संभवति **गुणानाञ्च परार्थत्वादि**तिन्यायात् दधियागार्थदधिनिष्पत्त्यनुरोधेन तु यच्छाखाहरणादीनां पूर्वेद्युरनुष्ठानं न तत् प्रकरणावगतागृह्यमाणविशेषत्वस्य बाधकमिति उभयार्थानामपि तन्त्रेणानुष्ठानमेवंप्रकारेणापि संभवति; किमुत वचनादेव यदा दध्यर्थत्वे नैरपेक्ष्येण पूर्वेद्युरनुष्ठानं तदा सुतरामुभयार्थानामेव सतां तन्त्रमिति वक्तव्यमित्याशयः। तथा च तस्मादुभयसंयुक्तस्य शाखाहरणादेर्वचनात् पूर्वेद्युः करणं न दध्यर्थत्वादित्यदोषः इत्येतदधिकरणसमाप्तौ **वार्तिके** उक्तेन वचनात् पूर्वेद्युरनुष्ठानेन नास्य विरोध इति ज्ञेयम्। ये तु वत्सापाकरणदोहनप्रस्थापनादयः तन्त्रेण पूर्वेद्युरनुष्ठितास्सन्तो न प्रातर्दोहनिष्पादकत्वेनोपयुज्यंते तेषां तु अर्थादेवावृत्तिरित्याह-**दोहनादयस्त्विति।** एतेन शाखाच्छेदनाहरणादेस्सिद्धान्तेपि तन्त्रेण पूर्वेद्युरनुष्ठानेन पूर्वोत्तरपक्षयोस्साम्येऽपि पूर्वपक्षे दोहनादिधर्माणां सर्वेषामेव दधियागमात्रार्थत्वेन

## (९)—तद्वत्सवनान्तरे ग्रहाम्नानम् ॥ ३० ॥

**ज्योतिष्टोमे प्रातस्सवनिकग्रहणसन्निधौ ग्रहधर्माः** "उपोप्तेऽन्ये **ग्रहास्साद्यन्तेऽनुपोप्ते ध्रुवः" इत्याद्यास्श्रुताः। ते निस्सन्दिग्धस्थानात् प्रातस्सवनिकग्रहमात्रार्था इति प्राप्ते—**

**माध्यन्दिनसवनिकादीनामपि** प्रकरणात **तेन च स्थानबाधात् सर्वार्थत्वं प्रयाजादीना-मिवा**ग्नीषोमीयाद्यर्थत्वमिति ॥ ९ ॥

---

## (१०)—रशना च लिङ्गदर्शनात् ॥ ३१ ॥

---

न प्रातर्दोहार्थे पुनः करणं; सिद्धान्ते तु तद्भवत्येवेति विशेषपदेन सूचितम्। **प्रयोजनं** पयोयागविकारे शाखाहरणादिधर्माणामनतिदेशातिदेशप्रयोजनान्तरस्याप्युपलक्षणं द्रष्टव्यम् ।

---

### ॥ तद्वत्सवनान्तरे ॥

**उपोप्त इति।** उपोप्तं नाम ग्रहाणामधस्तात् मृत्तिकोपवेशनं तत्र ग्रहाणामासादनमित्य-द्याः इत्यादिपदेन संमार्गादयः। ऐन्द्रवायवाद्या दशग्रहाः प्रातस्सवने, मरुत्वतीयाद्या माध्यंदिन-सवने, आदित्याद्यास्तृतीयसवने आम्नाताः। तत्रोपोप्तासादनादयो धर्माः प्रातस्सवनिकग्रहसन्नि-धावाम्नानात् तदङ्गमेवेत्यर्थः। निस्संदिग्धपदेन च विशेषाशङ्का सूचिता। ततश्च पूर्वापेक्षयेमां विशेषाशङ्कां निराकर्तुं तद्वदित्यतिदेशः पृथक्कृतः। **प्रकरणाविशेषादिति।** प्रातस्सवनस्य निष्फलस्यावान्तरप्रकरणासंभवात् ग्रहपदेन सर्वेषां ग्रहाणामुपादानात्, तत्र चापूर्वसाधनत्वलक्षणा-तात्पर्यग्राहके सवनत्रयोपेतस्य ज्योतिष्टोमस्यैव प्रकरणे सति अविशेष इत्यर्थः। **अग्नीषोमीयाद्यर्थ-त्वमिति।** आग्नेयस्य प्रथमानुष्ठानेन सन्निधानेऽपि प्रकरणाविशेषात तद्बाधेन प्रयाजाद्यङ्गाना-मग्नीषोमीयार्थत्वमिवेत्यर्थः। प्रयोजनं पक्षद्वयेनैव स्पष्टम् ।

---

### ॥ रशना च लिंगदर्शनात् ॥

अत्र च परिव्ययत्यूर्वै रशना त्रिवृद्दर्भमयीप्रपिष्टानां कर्तव्येत्यग्नीषोमीयस्थानानुमिते प्रकरणे श्रुतम्। तत्राद्यवाक्येन परिव्याणमात्रं यद्यपि श्रुतं, तथापि तत्र सामर्थ्येनैव पक्षप्राप्ता रशन

ऊर्ध्वे रशनेति वाक्यशेषबलात् नियता लभ्यत इति रशनाकरणकं परिव्याणमवान्तरप्रकरण-प्राप्तयूपोद्देशेन विधीयते। अत एवोक्तं **वार्तिके** अधिकरणारंभे––अग्नीषोमीये यूपपरिव्याणमाम्नाय सवनीयेऽपि आश्विनं ग्रहं गृहीत्वेत्याम्नातं, तच्च निर्गुणपुनःश्रवणात् कर्मान्तरं, उभयोश्चैकेन द्रव्येण भवितव्यम्। यच्च परिव्याणद्रव्यं सा रशना लोके वेदे च प्रसिद्धा तेनोभयत्रार्थादेव रशना प्राप्ता। सा च किंमयी किन्धर्मा चेत्यपेक्षिते अग्नीषोमीयस्य स्थानानुमिते त्रिवृदादिधर्माम्नानात् विशेषः प्रतीयत इति। अत एवैतदर्थलभ्यत्वोपपादनपरवार्तिकव्याख्याने तत्र रशना श्रूयत इति पदविरोध-माशंक्य अर्थप्राप्त्यभिप्रायमेव श्रवणमुक्तमिति समाहितं **भट्टसोमेश्वरसुतगंगाधरेण**। एवं चोत्तरवाक्यैर्यूपपरिव्याणसाधनीभूतरशनां प्रकरणप्राप्तामुद्दिश्य त्रिवृदादिधर्मविधानम्। प्रपिष्टत्वं चार्द्राणां दर्भाणामीषत् कण्डनादिना सूक्ष्मावयतासंपादनद्वारा रशनादार्ढ्याय विधीयत इति न क्वापि विशिष्टोद्देशकृतवाक्यभेदप्रसक्तिः। सेयं रशना तद्धर्माश्च अग्नीषोमीयाङ्गभूतपरिव्याण-द्वारा यदि तदंगं तदा तत्रैव तेषां प्राप्तिर्न सवनीयपरिव्याणान्तरे तस्य तत्स्थानापन्नत्वाभावात् उत परिव्याणमात्राङ्गमिति परिव्याणान्तरस्यापि ताद्रूप्याविशेषात् तत्रापि तेषां प्राप्तिरिति संदेहः।

**तत्र प्रकाशकारैः** किमेते अग्नीषोमीयपरिव्याणार्थाः, उत सवनीयपरिव्याणार्था अपीति **शास्त्रदीपिका**गतमुख्यसंशयहेतुभूतं किं रशनया यूपं परिव्ययतीति रशनाविनियोजकश्रुतौ उद्देश्यस्य परिव्याणस्य वाक्यीयेन यूपेन विशेषणं संभवति नवेति संशयान्तरमुपन्यस्य परिव्याण-मात्रस्योद्देश्यस्य वाक्याद्यूपेन विशेषणे वाक्यभेदात् परिव्याणमात्रमुद्देश्यं परिव्ययतीति सामान्य-शब्दोऽपि विपरिवृत्तेरग्नीषोमीयपरिव्याणपर एव न सवनीयपरिव्याणपरः। तस्याविपरिवृत्तेः। अग्नीषोमीयपरिव्याणं च क्रमादग्नीषोमीयाङ्गमिति तत्संयुक्ता रशना तद्धर्माश्च तद्द्वाराऽग्नीषोमीया-ङ्गमेवेति पूर्वपक्षं कृत्वा परिव्येतव्येन यूपेन विना परिव्याणस्य साकाङ्क्षत्वात् तेन विना प्रतीत्य-पर्यवसानात् विशिष्टमत्रोद्देश्यम्। तत्रोभयार्थेन प्रकृतेन यूपेन विशेषणं द्वितीयाश्रुतिप्रमाणकत्वात् प्रबलं, तेनाग्नीषोमीयाङ्गत्वेन परिव्याणविशेषणं स्थानप्रमाणकं दुर्बलं बाध्यते। तेन च यूपेनापूर्वद्वयमप्युपस्थापितमिति तदीययूपपरिव्याणद्वयेऽपि उद्देश्यतावच्छेदकरूपसत्वात् रशना अङ्गं तथाविधरशनोद्देशेन दर्भमय्यादिशब्दैर्विधीयमाना धर्मा अपि वाक्यात् परिव्याणद्वयाङ्गरशनाङ्गमिति सवनीयपरिव्याणान्तरेऽपि तत्प्राप्ते रशनातद्धर्माणां सामानविध्यमिति सिद्धान्तितम्।

**तदयुक्तं**; सामर्थ्यादेव रशनायाः परिव्याणाङ्गत्वप्रतिपादनपरपूर्वलिखितवार्तिकग्रन्थपर्या-लोचनया रशनया यूपं परिव्ययतीति श्रुतेरेवासत्वप्रतीतेः। तद्वाक्योपात्तपरिव्याणरूपोद्देश्ययूप-विशेषणत्वसंभवासंभवसंशयस्यायुक्तत्वात्। तथाविधश्रुतिसत्वेऽपि वा तस्याः यूपोद्देशेनैव विशिष्ट-

परिव्याणविधायकत्वेन पक्षद्वयेपि वाक्यभेदप्रसक्त्यभावाच्च। परिव्याणस्योद्देश्यत्वेऽपि प्रकरणादेव पूर्वोक्तप्रकारेण यूपीयत्वप्राप्तेः यूपमित्यस्यानुवादत्वेन वाक्यभेदाप्रसक्त्या परिव्याणमात्रोद्देश्यतामूलकपूर्वपक्षासंभवाच्च। साकाङ्क्षत्वादिना विशिष्टस्योद्देश्यताङ्गीकारेणानुप्रसर्पिषु सामान्यादित्येतत्पूर्वपादाधिकरणे वार्तिककृता कृतस्य वाक्यभेददोषपरिहारस्य स्वयमेव तदधिकरणे दूषितत्वेनेह सिद्धान्ते तथैव परिहारकरणेन तदुपजीव्यतया तस्यानुचितत्वाच्च। अतः यूपोद्देशेन परिव्याणविधिमथवा प्रकरणप्राप्तयूपसंबन्धपरिव्याणोद्देशेन रशनाविधिं वाङ्गीकृत्यैवावश्यं सिद्धान्ते वाक्यभेदस्य परिहार्यत्वे तस्य पूर्वपक्षेप्यवर्जनीयत्वात् यूपपरिव्याणार्थत्वाङ्गीकारेणैवेह पूर्वोत्तरपक्षसाधनं कर्तुं युक्तमिति साक्षात् परंपरया वा यूपार्थत्वं रशनातद्धर्माणामावश्यकम्। तथा च केवलयूपपरिव्याणाङ्गतामात्राश्रयणेन वार्तिकाद्युपपादितेनापि एतदधिकरणसिद्धान्तस्य यूपगतैदमर्थ्यविशेषं विनास्थैर्यासंभवात् यूपः किमर्थ इति विवेक्तव्यम्। यदर्थो यूपस्तदपूर्वार्थत्वमेवैषां धर्माणां सिद्ध्यतीति पशुधर्मवद्यूपस्य तद्धर्माणां चानुष्ठानसादेश्यादग्नीषोमीययागार्थत्वेनासामानविध्यात् पूर्वपक्षं कृत्वा यूपस्य पशुत्रयसामानविध्येनैवेहत्यसिद्धान्तोपपादने उपदेशेनैव धर्माणां सामानविध्यस्य एतदध्यायगतपूर्वोत्तराधिकरणेषु विचारणीयत्वादिहापि यूपप्रभृतिसकलधर्माणामुपदेशेनैवासामानविध्यमित्येतत्परतयैव भाष्यवार्तिकग्रन्थतात्पर्यं वर्णयन्ति **केचिद्व्याख्यातारः**।

तदप्ययुक्तं; यूपच्छेदनादीनामग्नीषोमीयसवनीययोः उपदेशातिदेशप्राप्त्यभिधानपरतत्तत्**भाष्यवार्तिकशास्त्रदीपिका**दिग्रन्थैस्सह विरोधापत्तेः। तथा चाधानस्यप्रकृतिमात्रार्थत्वनिराकरणपरे **सर्वार्थं वा आधानस्य स्वकालत्वादिति** सिद्धान्तसूत्रे यथाश्रुतसूत्रार्थाक्षेपपरो वार्तिकग्रन्थः—यत्तु स्वकालत्वं तदुपदेशातिदेशप्राप्तयूपच्छेदनवत्प्रयोगसाधारण्यार्थमिति न सर्वार्थत्वङ्गमयतीति। तथा **यूपाश्चाकर्मकालत्वा**दित्येकादशाधिकरणे अग्नीषोमीये उपदिष्टः सवनीयानुबन्ध्ययोश्चातिदिष्टो यूप इति **शास्त्रदीपिका**। अतस्सकलग्रन्थपर्यालोचनया यूपतच्छेदनादिप्रभृतिसकलधर्माणां पशुधर्माणामिवासामानविध्यमेवाश्रयणीयम्। तस्मिंश्चाश्रिते यूपद्वारा छेदनादिधर्माणामिव रशनादीनामप्यग्नीषोमीयपरिव्यागार्थत्वमेवापतन्नेव वारयितुं शक्यम्। न हि यूपसामान्यश्रुतिबलात् सामान्यतो यूपपरिव्याणस्योद्देश्यत्वं संभवति, तथात्वे सवनीये उपदेशेनेव यूपत्वाविशेषाद्वाजपेयादिसंबन्धिनि तस्मिन्नपि उपदेशेनैव तत्प्राप्त्यापत्तेः। अतोऽपूर्वसाधनत्वलक्षणायां वाजपेयादिसंबन्धितद्वारणार्थं यूपपदेन तात्पर्यग्राहकानुष्ठानसादेश्यबलात् झटित्युपस्थिताग्नीषोमीयापूर्वसाधनत्वस्यैव लक्षणया परिव्याणस्याग्नीषोमीययूपाङ्गत्वे सिद्धे तदङ्गभूतरशनादीनामग्नीषोमीयाङ्गत्वमेव।

**एतेन** यूपपदेनापूर्वद्वयमुपस्थापितमिति सवनीयाग्नीषोमीयापूर्वसाधनयूपपरिव्याणत्वस्योद्देश्यतावच्छेदकत्वेन ताद्रूप्याविशेषात् सवनीयपरिव्याणान्तरसाधारण्योपपादनमत्रत्यं हेतूकृत्य पशुधर्माधिकरणे एतद्व्यतिरिक्तानां यूपच्छेदनादिधर्माणामसामानविध्योक्तिः **प्रकाशकाराणामपास्ता।** तथात्वे पर्णतासंमार्गादीनां जुह्वग्निद्वारोपस्थितसर्वक्रत्वङ्गत्वस्योपदेशेनापत्तेः। दीक्षासु यूपमिति वाक्येऽपि साकाङ्क्षत्वेन यूपच्छेदनस्योद्देश्यत्वसंभवात् तत्रापि यूपपदेन पशुद्वयापूर्वोपस्थित्या उभयापूर्वसाधनीभूतयूपछेदनाङ्गत्वस्य अनायासेन उपदेशादेव दीक्षाकाले उपपत्तेः पर्णताधिकरणे ज्योतिष्टोमीययूपोद्देशेन विधानमङ्गीकृत्य ज्योतिष्टोमापूर्वप्रयुक्तत्वेन सवनीये उपदेशप्रसाधनस्य स्वयङ्कृतस्य वृथाचेष्टात्वापत्तेश्च।

यत्तु **गङ्गाधरेण** स्थानापेक्षया प्रकरणस्य बलवत्त्वेन शास्त्रस्य महाविषयत्वसंपत्तेरग्नीषोमीयापूर्वसाधनत्वलक्षणापेक्षया ज्योतिष्टोमापूर्वोपकारकत्वलक्षणाया एवाङ्गीकारेणोभयार्थत्वं, विनियोगे हि विरोधात् लिङ्गेन महाप्रकरणं बाध्यते। न पुनस्संबन्धमात्रापेक्षिण्यां लक्षणायामविरोधादित्युक्तं **तत्तुच्छम्।** प्रबलेन लिङ्गेन प्रकरणबाधे सति येन रूपेण यस्य विनियोगो यत्र तेनैव विशेषरूपेणातिप्रसङ्गपरिहारायावश्यकेन लक्षणोपपत्तौ अतिप्रसक्तरूपेण लक्षणायां मानाभावात् विनियोगे विरोधे सति प्रबलेन दुर्बलबाधेऽपि लक्षणायां संबन्धमात्रोपजीविन्यां दुर्बलस्याविरोधेनाबाधस्य स्वयमेवोक्तत्वेन लक्षणायां स्थानस्य दुर्बलत्वेन महाप्रकरणेन बाध इत्युपपादनस्यासङ्गतत्वाच्च। इतरथा पशुधर्माणामपि ज्योतिष्टोमोपकारकपशुमात्राङ्गत्वापत्त्या सामानविध्यापत्तेः। अतोऽग्नीषोमीयपशुयागाङ्गत्वेऽपि ज्योतिष्टोमाङ्गपशुयागाङ्गत्वोपपत्त्या महाप्रकरणाविरोध उभयत्रापि वाच्य इति यूपतच्छेदनादिसर्वधर्माणामथ वा तद्व्यतिरिक्तानां रशनाधर्माणां वोपदेशेन सामानविध्योपपादनस्य दुरुपपादत्वादुपदेशेनैव सामानविध्यप्रकरणसङ्गतिलोमेन वार्तिकादिग्रन्थानामुपदेशपरतया व्याख्याकरणस्य युक्तत्वात्। कथं चिदुद्देश्यतावछेदकरूपाक्रान्तत्वेनातिदिष्टस्यापि परिव्याणधर्मजातस्य साधारण्यमात्रप्रतिपादनपरत्वं प्राचीनग्रन्थानां कल्पनीयम्। अत एव संस्थाधिकरणे धर्मसाधारण्यं चोपदेशातिदेशाभ्यामपि भवति। समानविधानता तूपदेशेनैवेति ग्रन्थेन साधारण्यसामानविध्ययोः स्वयं प्रदर्शितं भेदमुररीकृत्यैवेह **वार्तिककृता** रशनाधर्माणां स्पष्टं साधारण्यमेवोक्तं न सामानविध्यम्। तदेतत् सकलमभिप्रेत्य पशुधर्माधिकरणे भाष्यवार्तिककारादिभिरनुदाहृतमपि यूपधर्मजातं पशुधर्माणामसामानविध्यस्थापनेनैवासामानविध्यतया ज्ञातुं शक्यमिति तस्यापि तदधिकरणविषयत्वं सूचयन् पर्णताधिकरणसिद्धद्भिरुक्तत्वापादनेनैव सर्वेषां यूपतद्धर्माणां स्पष्टतयाऽन्यत्राप्रतिपादितं

पशुनियोजनाङ्गत्वेन **विनियुक्तस्य यूपस्यानुष्ठानसादेश्यादग्नीषोमीयापूर्वसाधनीभूत-पशुनियोजनार्थत्वं, अतिदेशात्तु सवनीयानुबन्ध्यार्थत्वम्।** एवं **तदुत्पादकानां छेद-नादिसंस्काराणामपि। यद्यपि च यूपस्वरूपे आनर्थक्याभावः, तथाऽप्यनुवादस्य**

---

सवनीयादावुपदेशाभावमसामानविध्योपपत्तये प्रथमतो दर्शयति—**पशुनियोजनाङ्गत्वेनेति**। उपाकरणनियोजनादिपशुधर्माणामग्नीषोमीयाङ्गत्वस्य पूर्वत्र निश्चितत्वात् तत्र पशुनियोजने यूपस्य यूपे पशुं नियुंजीतेत्यनेनाधिकरणतया विधौ **द्विरुक्तत्वन्यायेना**ग्नीषोमीयापूर्वसाधनपशुनियोजनस्यै-वोद्देश्यत्वात् पशुनियोजनद्वारा यूपतद्धर्माणामग्नीषोमीयार्थत्वमुपदेशेनेत्यर्थः। **एवमिति**। यथैव निश्चिताग्नीषोमीयाङ्गत्वपशुनियोजनद्वारा यूपस्याग्नीषोमीयार्थत्वमेव तथैव निश्चिताग्नीषोमीयाङ्गता-कयूपद्वारा तत्संस्काराणां च्छेदनादीनामपि तदर्थत्वमेवेत्येवं **पदार्थः**।

अत्र च दीक्षासु यूपं च्छिनत्तीति वाक्ये यूपछेदनस्योद्देश्यत्वे विशिष्टोद्देशापत्तेः छेदनमात्रस्य तत्त्वेऽतिप्रसंगात् यूपोद्देशेनैव दीक्षाकालविधिरिति यूपस्वरूपस्यैव भाव्यत्वं दीक्षाकाले च कथं यूप उत्पादनीय इत्यपेक्षया य एवौपवसथ्याहे पठितास्छेदनादयस्तेषामेव सामर्थ्येनोत्पादकत्वेन निश्चितानां तत्काले अनुष्ठानमर्थतः प्राप्नोतीति छिनत्तीत्युपलक्षणं सर्वसंस्काराणां ज्ञेयम्।

तथा च सकलसंस्कारजन्यमदृष्टं यूप इति येषां **पार्थसारथ्यादीनां** मतं; तेषां तदुत्पाद-कत्वाविशेषात् छेदनादिवत् प्रोक्षणादीनामप्यपकर्षो दुर्निवार एवेति प्रोक्षणादीनामौपवसथ्या-हेऽनुष्ठानापत्तेरयुक्तं तन्मतमिति पूज्यपादैरेकादशे **यूपश्चाकर्मकालत्वादि**त्येतदुत्तराधिकरणे-वक्ष्यते।

**यत्तु** तुल्यः सर्वेषां पशुविधिरिति पशुधर्माधिकरणे **गङ्गाधरेण** सर्वेषामेव यूपोत्पादकत्वे-नावधारितानां दीक्षाकालप्राप्तानां सर्वसाधारणैकयूपोत्पत्त्यर्थतया सर्वपश्वर्थानामपि वचनादौपव-सथ्याहे अग्नीषोमीयपशुनियोजनकाले केषाञ्चित्प्रोक्षणादीनामनुष्ठानेपि न पूर्वावगतसर्वार्थत्वहानिरिति न सवनीयार्थे भेदेन तेषामनुष्ठानमित्युक्तं; **तदयुक्तं**, न्यायतः प्रोक्षणादीनामपकर्षस्य प्राप्तस्या-पवादरूपेण तत्तदुत्पत्तिविधिव्यतिरिक्तवचनान्तरस्य क्वाप्यनुपलंभात्। अतो यूपाहुत्याद्यङ्गकच्छेद-नाद्यष्टाश्रीकरणान्तानामेव **बौधायना**दिकल्पपर्यालोचनया याज्ञिकाचाराच्च यूपोत्पादकत्वाङ्गीकारे-णैव केषाञ्चित्संस्काराणां दीक्षाकाले अपकर्षः। अन्येषां त्वपकर्षकवचनाभावादेवोत्पन्नयूपसंस्कार-कत्वमित्येवं वैलक्षण्यमपि तत्रैव तथा नवमाध्यायादौ च निरूपयिष्यते। तदभिप्रेत्य तेषा-

सन्निहितगामित्वादेवाग्नीषोमीये **निवेशः**। विकृतौ **त्वभिक्रमणवत् गमनम्**। **तेषां तु** भेदेना**नुष्ठाने प्राप्ते** दीक्षाकालस्याप्युपदेशातिदेशाभ्यां **विहितस्यैकत्वात्तन्त्रेणानुष्ठानादेकस्या एव यूपव्यक्तेस्सर्वोपकारकत्वमेकादशे वक्ष्यते। ये च परिव्याणादय उत्पन्नयूपसंस्कारकास्तेषामप्यनुष्ठानसादेश्यातिदेशाभ्यां प्रकृतिविकृत्यङ्गत्वम्। यूपस्वरूपस्य तद्व्यतिरेकेणा**प्युत्पन्नत्वात्। **यूपव्यक्तेरेकत्वात्तु गृह्यमाणविशेषत्वे**ऽप्यातिथ्याद्यर्थ**बर्हिः प्रोक्षणन्यायेन**

---

मप्यग्नीषोमीयार्थत्वं साधयितुं पार्थक्येन **तदुत्पादकानामित्युक्तम्**। **सन्निहितगामित्वादेवेति।** यूपस्यादृष्टरूपत्वेनानर्थक्यपरिहारार्थमपूर्वसाधनत्वलक्षणायां प्रयोजनाभावात् न तदर्थमपूर्वविशेषोपस्थितयेऽपेक्षितस्याग्नीषोमीयस्थानादेरत्र नियामकत्वं संभवति तथापि निरूढपश्वन्तरीययूपसाधारण्योत्पादकत्वव्यावृत्तये ज्योतिष्टोमाङ्गपशुयागसंबन्धित्वेन रूपेणोत्पाद्यत्वकल्पने आवश्यके अनुष्ठानसादेश्यात् पशुनियोजनकार्यद्वारतश्चोपस्थिताग्नीषोमीयसंबन्धित्वेनैव तत्कल्पनात्तत्रैव निवेश इत्यर्थः। ननु छेदनाद्युत्पादकसंस्काराणां यूपरूपादृष्टार्थत्वेनाग्नीषोमीयाङ्गत्वानवगतौ कथं सवनीयादिविकृतिष्वतिदेशः तदभावे च सवनीये तन्त्रेण तदनुष्ठानेऽपि तदतिरिक्तविकृतिषु तत्प्राप्त्यनापत्तिरिति शङ्कामभिक्रमणस्य दर्शपूर्णमासाङ्गत्वाभावेऽपि तदङ्गप्रयाजाङ्गतया तद्विकृतिषु **प्रधानं नीयमानमिति न्यायेन** तदंशे पृथगतिदेशाकल्पनेऽपि प्राप्तिवदिहापि तदङ्गयूपार्थतया तेषां अतिदेशाभावेप्युपपद्यत एव प्राप्तिरित्यभिप्रायेण परिहरति—**विकृतौ त्विति। भेदेनेति।** उपदिष्टत्वादग्नीषोमीयार्थेताननुष्ठाय तदपवर्गे तत्संस्कारोत्पादितयूपस्याप्यपवृत्तेः सवनीयाद्यर्थेऽतिदेशेन प्राप्ततया भेदेनानुष्ठाने प्राप्ते इत्यर्थः। **उपदेशातिदेशाभ्यामिति।** पूर्वदर्शितरीत्या विधीयमानं दीक्षाकालत्वं पशुयागविशेषमनारभ्याधीतमपि महाप्रकरणात् ज्योतिष्टोमापूर्वप्रयुक्तं **सदानर्थक्यतदङ्गन्याये**नाविशेषात् पशुयागत्रयार्थमिति उपदेशादेव त्रिषु पशुषु तद्भवतीति **प्रकाशकारा**णामभिप्रेतं, तदेकादशे पूज्यपादैर्निराकृतमेवेति स्पष्टतया प्रागेव पर्णताधिकरणे मयोपपादितम्। अतो यद्यपि दीक्षाकालत्वविधौ नाग्नीषोमीयस्य स्थानादिना छेदनादिविधिष्विव सन्निधानं तथाप्यव्यभिचरितक्रतुसंबन्धसहकृतद्विरुक्तत्वन्यायेन अग्नीषोमीययूपार्थत्वस्यैवापत्तेः उपदेशात्तस्य तदर्थत्वं तदतिदेशेन च सवनीयादौ प्राप्तस्य दीक्षाकालस्य दैवादेकत्वेन कालैक्यादगृह्यमाणविशेषत्वात्तन्त्रेण तेषामनुष्ठाने सति तन्त्रेणानुष्ठितैः छेदनादिभिस्तन्त्रेणैवोत्पादितस्य एकस्यैव सर्वोपकारकत्वं न तु उपदेशादेवेत्यभिप्रायः। दीक्षाकालैक्यादेव यूपतन्त्रत्वस्यावश्यवक्तव्यत्वादितरथोपदिष्टयूपत्रयस्यैव दीक्षाकालेऽनुष्ठानापत्तेः वृथैव सवनीयादौ उपदेशेनैव तत्प्राप्तावाग्रह **इत्यप्येकादशे वक्ष्यत** इत्यनेन सूचितम्। **उत्पन्नत्वादिति।** छेदनादीनां यूपस्वरूपार्थत्वेन प्रधानापूर्वार्थतया विध्यभावेन तदनङ्गत्वेपीहापूर्वसाधनत्वलक्षणाया आवश्यकत्वात् **अनुष्ठान-**

**प्रसङ्गेन कार्यसिद्धेः नावृत्तिः। न चैवं तन्न्यायेनैवाग्निपात्रसम्मार्गादेर्दर्शपूर्णमासिकस्यापि विकृतौ प्रसङ्गापत्तिः, व्रीहिप्रोक्षणादिवद्यत्कार्यकूटोद्देशेन** यद्व्यक्तेरुत्पत्तिः **तत्कार्यकूटाङ्गभूततद्व्यक्तिगतसंस्कारजन्यादृष्टं प्रति तत्कार्यान्तिमकार्यत्वेन नाशकत्वस्य क्लृप्तत्वेन तदनापत्तेः। न ह्यग्निपात्रादेर्यत्कार्यकूटोद्देशेनोत्पत्तिः तत्कार्यकूटाङ्गं संस्कारः, सम्मार्गस्य ज्योतिष्टोमाद्यनङ्गत्वात्, अतस्तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रति तत्प्रयोगीयफलीभूतान्तिमकार्यत्वेन नाशकतेति विशिष्य कार्यकारणभावेनैव तत्प्रयोगवृत्त्यन्तिमफलेन नाश इति वैषम्यम्।** एवं च **परिव्याणरशनातद्धर्मादय औपवसथ्येऽहन्यनुष्ठीयमाना अप्युपदेशातिदेशाभ्यां त्रितयोपकारकाः। सवनीये च "आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति" इति विधिनाऽभ्यासात् परिव्याणान्तरं विहितं, आश्विनोत्तरकालस्य पाठा**दुपनिष्क्रमणस्य **चार्थादेव प्राप्तेः। तच्च प्रकरणात् सवनीयस्यैवाङ्गम्। तदपि च न**

---

सादेश्योपस्थिताग्नीषोमीयापूर्वार्थतया विधानात् प्रकृत्यङ्गत्वमतिदेशात्तु विकृत्यङ्गत्वमिति विशेषः प्रकृतिविकृत्यङ्गत्वमिति पदगताङ्गत्वपदेन सूचितः। **आतिथ्याद्यर्थेति।** यदातिथ्यायां बर्हिस्तदुपसदामिति वाक्येनातिथ्योपसदग्नीषोमीयार्थे साधारणतया आश्ववालादिधर्मकबर्हिषो विधानात् तत्र तत्तदतिदेशेन छेदनादीनां प्राप्तानामपि नावृत्त्या अनुष्ठानमपि तु बर्हिष एकत्वादातिथ्यादिकाले तेषामनुष्ठानेनातिथ्यार्थत्वेन गृह्यमाणविशेषत्वात्तन्त्रत्वप्राप्तावपि आतिथ्यार्थानामेव प्रसङ्गेनोपसदग्नीषोमीयोपकारकत्वमित्येवं द्वादशप्रथमपादाधिकरणे वक्ष्यते तेन न्यायेनेहापीत्यर्थः। एवमिह परिव्याणादीनामग्नीषोमीयकाले क्रियमाणानामुपदेशात् प्रकृतिमात्राङ्गत्वेन प्रसङ्गेन सवनीयोपकारकत्वे निर्धारिते सति **यदि** तु गृह्यमाणविशेषत्वेऽपि बर्हिषि त्रितयोद्देशात तत्र क्रियमाणसंस्काराणामपि त्रितयोद्देशोपपत्तिरिति विभाव्यते **तदाऽस्तु** सर्वत्र तन्त्रमेवेत्युक्त्वा यूपसंस्काराणामपि चाग्नीषोमीयकालक्रियमाणानामनयैव विधया तन्त्रत्वमिति पूज्यपादैर्द्वादशे तदधिकरणे वक्ष्यते। ततश्च दीक्षाकाले उपदेशातिदेशाभ्यां प्राप्तत्वेन पशुयागत्रयोद्देशेन तन्त्रेण कृतस्यैकस्यैव यूपस्योद्देशेन विहिताः परिव्याणादयः तन्त्रेणैव भवन्तीति तन्त्रत्वमपि सुवचमेव। **यद्व्यक्तेरिति।** व्रीहिव्यक्तेरुत्पत्तिराग्नेयाग्नीषोमीयापूर्वरूपकार्यकूटोद्देशेनेत्यर्थः। प्रकृते तु यूपस्य पशुयागत्रयोद्देशेनोत्पन्नस्य ये संस्काराः परिव्याणादय स्तेषां तत्कार्यकूटाङ्गसंस्कारत्वात् तज्जन्यादृष्टस्यान्त एव नाशात् वैषम्यमित्यभिप्रेत्याग्नीषोमीये उपदेशत उत्तरयोस्त्वतिदेशेनैव प्राप्तानां साधारण्यं न तूपदेशेनैव त्रिषु प्राप्तानामित्युपसंहरति—**एवं चेति। उपनिष्क्रमणस्य चेति।** यूपसमीपे गमनस्येत्यर्थः। **प्राकाशदानवदिति।** यथैव प्राकाशावध्वर्यवे ददातीति विधीयमानं विशिष्टदानान्तरं यथा प्राकृताध्वर्युसंप्रदानकदक्षिणा-

**प्राकृतकार्यापन्नं** प्राकाशदानवद्विधिवैयर्थ्यापत्तेः। **अत एव तत्कार्यमदृष्टं यूपदार्ढ्याधिक्यं वेत्यन्यदेतत्।** **तदिह रशना तद्धर्माश्च त्रिवृत्त्वदर्भमयीत्वादयो** नाप्राकृतकार्यापन्ने **परिव्याणान्तरे यूपावटबर्हिरास्तरण इव भवन्तीति प्राप्ते—**

उत्पत्तिवाक्ये **त्रिवृत्त्वानुवादरूपतात्पर्यग्राहकवशाल्लाघवाच्च** प्रकृतापूर्वसाधनीभूत**यूपपरिव्याणत्वमेवोद्देश्यतावच्छेदकं न तु विजातीययूपपरिव्याणत्वं, तथात्वे उत्पत्तिवाक्ये त्रिवृत्त्वस्याप्राप्तत्वेन विधाने गौरवापत्तेः,** अत **उद्देश्यतावच्छेदकरूपसत्त्वात्तत्रापि रशना-**

---

दानकार्यापन्नमिति दशमे तृतीयपादे वक्ष्यते तद्वन्नेदमित्यर्थः। **विधिवैयर्थ्यापत्तेरिति।** तत्राप्राप्तप्राकाशादिगुणविधानेन कथञ्चित् सार्थक्यसंभवेपीह सर्वस्याप्यर्थस्य प्राप्तत्वेन यूपदार्ढ्यस्यापि चैकेनैव परिव्याणेन सिद्धेः विध्यन्तरवैयर्थ्यापत्तेरित्यर्थः। **अप्राकृतकार्यापन्नेति।** तथा च प्रथमपरिव्याणोद्देशेन विधीयमानानां रशनादीनां विजातीयप्रथमयूपदार्ढ्यरूपद्वारैव प्राप्तेस्तदभावे नातिदेशेन सवनीयपरिव्याणांतरे प्राप्तिस्संभवतीत्यर्थः। आस्तरण इत्यस्याग्रे बर्हिर्धर्मा इति पूरणीयम्। अत्र प्राचीनैस्त्रिवृत्त्वानुवादरूपलिङ्गदर्शनमात्रेणैव सूत्रकृता सिद्धान्तप्रसाधनेऽपि तत्र तन्मात्रव्यतिरेकेण युक्त्यापि तं साधयितुमेतद्यूपपरिव्याणस्य तत्साधनस्य वा रशनातद्धर्मविधावुद्देश्यत्वेनैतद्यूपपरिव्याणत्वास्याग्नीषोमीयपरिव्याण इव सवनीयपरिव्याणेऽप्यविशेषात् श्रुत्या स्थानबाध इति युक्तिप्रदर्शनं कृतम्। तदेतत यूपपरिव्याणत्वस्योद्देश्यतावछेदकत्वेपि प्राथमिकयूपदार्ढ्यजनकविजातीयपरिव्याणत्वस्यैव परिव्ययत्यूर्जैवरशनेनेति विधिप्रमितस्य तदनिवारणात्तादृशरूपानाक्रान्ते परिव्याणान्तरे तत्प्राप्तिसिद्धान्तासाधकत्वात् अयुक्तमित्यभिप्रेत्योद्देश्यतावछेदके वैजात्यस्याप्रवेशार्थं त्रिवृत्त्वानुवादस्यैव शरणीकरणीयत्वात् तमेव सूत्रकृता हेतूकृतं पुरस्कृत्य सिद्धान्तं दर्शयति—**उत्पत्तिवाक्ये इति।** **प्रकृतापूर्वसाधनीभूतेति।** **यद्यपि** त्रिवृत्त्वानुवाददर्शनात् परिव्याणविशेषणीभूतस्याग्नीषोमीयापूर्वसाधनत्वस्यैव न तत्प्रविष्टत्वं कल्पनीयमपितु तात्पर्यग्राहकबलात् प्रकृतयागत्रयापूर्वसाधनपरिव्याणत्वस्यैव उद्देश्यतावछेदकत्वं कल्पयित्वा व्रीहिधर्माणां यवेष्विवोपदेशेनैव प्राप्तिर्व्याख्यातॄणामाशयेन शक्यते वक्तुं **तथापि** तद्गतवैजात्याप्रवेशसिद्ध्ये तदनुवादस्य तात्पर्यग्राहकत्वकल्पनाया आवश्यकत्वे तावतैव त्रिवृत्त्वानुवादोपपत्तेः पूर्वावगताग्नीषोमीयापूर्वसाधनत्वविशेषत्यागपर्यन्तं तद्व्यापारकल्पने प्रयोजनाभावात् वैजात्याप्रवेशेऽप्युपदेशेनाग्नीषोमीयार्थमेव युक्तमिति प्रकृतावित्यनेनोक्तम्। यथा चैवं सति त्रिवृतायूपं परिवीयेत्यस्य पशुसंस्कारकत्वेन परिव्याणान्तरविधायकत्वात् नानुवादकतया तात्पर्यग्राहकत्वं संभवतीति तथा चतुर्थे निराकरिष्यते। वैजात्यप्रवेशे च अवशिष्टोद्देश्यतावच्छेदकरूपसत्वादतिदेशोपपत्त्या परिव्याणान्तरे तद्धर्मप्राप्तिरित्युपसंहरति —**अतश्चेति।** ततश्च संस्कारविधावग्नीषोमीयापूर्वसाधनत्वेनैवोद्देश्यत्वाद्विकृत्यपूर्वसाधने

**तद्धर्माः। व्याख्यातॄणां तु सङ्गतिलोभेन यूपतच्छेदनपरिव्याणरशनातद्धर्माणां सर्वेषामुपदेशेनैव त्रितयसाधारण्यमङ्गीकृत्य सवनीयपरिव्याणान्तरे उपदेशेनैव तत्प्राप्तिं व्याचक्षाणानामाशयं न विद्मः॥ १०॥**

---

(११)—आराच्छिष्टमसंयुक्तमितरैस्सन्निधानात ॥ ३२ ॥ संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात्॥ ३३ ॥ निर्देशाद्व्यवतिष्ठेत ॥

ग्रहधर्माणां **ग्रहस्वरूपे आनर्थक्यप्रसक्तौ ग्रहयागाभ्यासापूर्वसाधनत्वमेव ग्रहपदेन लक्ष्यते दीक्षणीयावाङ्नियमन्यायेन, न तु ज्योतिष्टोमापूर्वसाधनत्वम्। अतश्च प्रकरणोपस्थितापूर्वसाधनत्वस्यैव लक्षणान्नानारभ्याधीतांश्वदाभ्ययागाभ्यासापूर्वसाधनत्वं धर्माणामिति प्राप्ते—**

---

परिव्याणान्तरे सवनीये इतरधर्माणामिवाग्नीषोमीयातिदेशेनैव रशनादीनां प्राप्तिरित्यर्थः। व्याख्यातॄणामिति ग्रन्थस्तु पूर्वमेव प्रायशो व्याख्यातः। प्रयोजनं परिव्याणान्तरं पूर्वपक्षे वाससा लौकिकरशनया वा त्रिवृता कार्यम्। सिद्धान्ते तु प्राकृतधर्मयुक्तयेति स्पष्टत्वान्नोक्तम्।

---

**॥ आराच्छिष्टम्॥**

अत्र **वार्तिककारादिभिस्तुल्यस्सर्वेषामिति** पशुधर्माधिकरणमारभ्य स्थानस्य पूर्वैस्सह विरोधाविरोधविचारस्यैव प्रस्तुतत्वेनेह तदभावेपि प्रसङ्गादेव वाक्यप्रकरणविरोधाविरोधौ विचार्येते इति प्रासङ्गिकीं सङ्गतिं प्रदर्श्य प्रकरणेन सर्वप्राकरणिकग्रहार्था ग्रहधर्मा इति प्रतीतेः अनारभ्याधीतांश्वदाभ्यार्थत्वमशक्यमिति पूर्वपक्षं प्रापय्य ग्रहस्वरूपे आनर्थक्यभिया अपूर्वसाधनत्वलक्षणायां सुराग्रहादिव्यावृत्तये अवश्यं प्रकरणालोचनेपि ग्रहाणां ग्रहपात्राणां स्वतः फलवत्त्वाभावेन प्रकरणाभावात् ज्योतिष्टोमस्यैव प्रकरणबलात् ज्योतिष्टोमापूर्वसाधनत्वस्यैव लक्षणायामनारभ्याधीतयोरपि तयोस्ताद्रूप्याविशेषात् भवन्त्येव तद्धर्मा इति सिद्धान्तितम्। तत्र ज्योतिष्टोमापूर्वसाधनत्वलक्षणायां प्रमाणप्रयोजनयोरभावात तदभावेऽपि पूर्वोत्तरपक्षयोस्सूपपादतां दर्शयन् स्थानस्यैव प्रकरणेन सह विरोधाविरोधचिन्ताप्रदर्शनव्याजेन मुख्यप्रकरणसङ्गतिलाभे प्रासङ्गिकसङ्गत्यभिधानं चायुक्तमित्यपि सूचयन् पूर्वपक्षमाह—**ग्रहधर्माणामिति**। स्पष्टार्थमन्यत्। अत्र दीक्षणीयापदवदिह तत्तदसाधारणग्रहाभ्यासापूर्वसाधनत्वबोधकपदाभावात्तत्तदपूर्वसाधनत्वानां भेदेनाननुगतलक्षणापत्तेः लाघवादैकरूप्येण ज्योतिष्टोमापूर्वसाधनत्वमेव लक्षयितुं युक्तमिति तत्तद्ग्रहाभ्यास-

**प्रकरणादन्येषामिवानुष्ठानसादेश्यादनारभ्याधीतानामप्युपस्थितेर्वाक्यसङ्कोचे प्रमाणाभावादेव सर्वार्थत्वम्। अत एव प्रबलेन दुर्बलेन वा प्रमाणेन साधनत्वेनावगतानां सर्वेषामेव हविषां वेद्यादिकमङ्गम्। वस्तुतस्तु—अंश्वदाभ्ययोरनारभ्योत्पन्नयोरपि प्राकरणिकेन वाक्येनैव क्रत्वङ्गतेति तुल्यत्वमेव॥ ११॥**

---

## (१२)—अग्नयङ्गमप्रकरणे तद्वत्॥ ३५॥

**इष्टकाधर्माणा**मकृष्णत्वादीनाम**नारभ्याधीतचित्रिण्यादीष्टकाविनियोगस्याप्य**नारभ्याधीतत्वात्**प्राकरणिकेष्टकामात्रधर्मत्वमिति प्राप्ते—**

**पूर्ववदनुष्ठानसादेश्यादिष्टकाप्रयोज्यचयनापूर्वसम्बन्धित्वस्य तत्प्रयोज्यक्रत्वपूर्वसम्बन्धित्वस्यैव वा लक्षणीयस्यानारभ्याधीतास्वप्यविशेषाच्चात्राप्युभयधर्मत्वम्॥ १२॥**

---

## (१३)—नैमित्तिकमतुल्यत्वादसमानविधानं स्यात्॥ ३६॥

---

जन्यावान्तरापूर्वसाधनत्वमात्रलक्षणायां पूज्यपादैरुक्तायामपि नातीवाभिनिवेष्टव्यम्। प्रकरणोपस्थितापूर्वसाधनत्वलक्षणायामपि ग्रहाणां तज्जन्याभ्यासानां वा प्रकरणाभावेन तदुपस्थापिततदपूर्वसाधनत्वलक्षणाया नियन्तुमशक्यत्वाद्येषां ज्योतिष्टोमप्रकरणेन तत्तदभ्यासापूर्वसाधनत्वमवगतं तेषामेवापूर्वसाधनत्वलक्षणया पूर्वपक्षस्य ज्योतिष्टोमापूर्वसाधनत्वलक्षणयापि उपपादयितुं शक्यत्वात्। **याज्ञिकास्तु** दधिग्रहांश्वदाभ्योपांश्वन्तर्यामादिग्रहेषु दर्विहोमसंज्ञेषु संमार्गासादनादिग्रहधर्माननुतिष्ठन्ति तन्मूलं चैन्द्रवायवादिग्रहाभ्यासावान्तरप्रकरणे तद्धर्माम्नानमेवेत्यपि ध्येयम्।

---

### ॥ अग्न्यङ्गमप्रकरणे ॥

**अकृष्णत्वादीनामिति।** अखण्डामकृष्णां कुर्यादित्यादिवाक्यविहितानामित्यर्थः। **अनारभ्याधीतत्वादिति।** ततश्चांश्वदाभ्ययोः प्राकरणिकोत्पत्त्यभावेऽपि प्राकरणिकविनियोगमात्रेणापि प्राकरणिकग्रहतुल्यत्वेन भवतु तद्धर्मवत्त्वमिह तु विनियोगस्याप्यनारभ्याधीतत्वात् न प्राकरणिकेष्टकातुल्यत्वमित्येवं विशेषाशङ्कापनोदायाधिकरणान्तरारंभ इति सूचितम्।

---

सोमधर्मा अभिषवादयः, फलचमसेऽपि समानविधानाः सोमस्वरूपे आनर्थक्यप्रसक्तौ लक्षणीयस्य ज्योतिष्टोमापूर्वसाधनीभूतप्रदेयप्रकृतित्वस्योद्देश्यतावच्छेदकस्य यवेष्विव फलचमसेऽप्यविशेषात्। न ह्यत्र सोमत्वमपि विवक्षितं, फलचमसे स्थानापत्त्याऽप्यभिषवाद्यनापत्तेः। न च नित्यानामभिषवादीनां नित्यक्रतुसम्बन्धे अनित्यस्य फलचमसस्य द्वारत्वानुपपत्तिः, नित्यानामपि नित्यसोमवदनित्यफलचमसस्य द्वारत्वे उद्देश्यत्व एव वा बाधकाभावात्। इष्यत एव हि "उपांशु यजुषा" इत्यादौ नित्यानां नैमित्तिकानां च होमादीनामुपांशुत्वादिविषयता। न चैवं नैमित्तिकस्य नित्यविनियोगोत्तरप्रतीतिकत्वेन विलम्बितप्रतीतिकत्वादतुल्यत्वं तथात्वे प्रमाणाभावात्। क्वचित् सत्त्वेऽपि वा संस्कारविध्युत्तरप्रवृत्तिकत्वे प्रमाणाभावेनातुल्यत्वाभावाच्च। अस्तु वा तत्, तथाऽपि संस्कारविध्युद्देश्यतावच्छेदकाक्रान्तत्वस्य फलचमसेऽप्यनिवारणाच्च। न च संस्कारविधावपूर्वसाधनत्वरूपसामान्यधर्मप्रकारकसोमविशेष्यकबोधाङ्गीकारान्न फलचमससङ्ग्रह इति वाच्यं, एवमप्युपदेशस्य सोमतात्पर्यकत्वानिवारणेन विकारभूतेऽपि फलचमसेऽप्राकृतविशेष्यकत्वप्रसङ्गादभिषवाद्यनापत्तेः। अतश्च सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसाधनत्वप्रकारकप्रकृत्यपूर्वसाधनविशेष्यक एव बोध इति तद्वत्कुर्यादित्यतिदेशेन विकृत्यपूर्वसाधनेऽपि समानविधानत्वाभावेऽपि धर्मप्राप्तिरविरुद्धा। प्रकृते तु फलचमसस्य प्रकृत्यपूर्वसाधनत्वादेव यवादिवदुपदेशविषयत्वमिति प्राप्ते—

सत्यं सर्वत्र संस्कारविधौ प्रकृत्यपूर्वसम्बन्धित्वप्रकारकप्रकृत्यपूर्वसम्बन्धिविशेष्यक एव पार्यन्तिक उद्देश्यबोधः, तथाऽपि सा सम्बन्धिता यद्धर्मावच्छिन्नस्य संस्कारविधिपार्यन्तिकशाब्दबोधात्पूर्वं प्रमीयते तद्धर्मावच्छिन्नस्यैव संस्कारविध्युपदेशविषयत्वेन व्यवहारो

---

॥ नैमित्तिकमतुल्यत्वात् ॥

अत्र च यद्व्रीहिप्रोक्षणादेर्येवमपि विषयं मन्वते तच्च चिन्त्यमित्यष्टाविंशश्लोके **विधिरसायनकृता** पूर्वोक्तरीत्याऽपूर्वसाधनत्वलक्षणाङ्गीकारे फलचमसस्यापि सोमेन सह समानविधित्वापत्तिरिति दूषणमुक्तं संक्षेपेण पूर्वपक्षोपपादनव्याजेनानूद्यापूर्वसाधनत्वलक्षणायामपि न यववत्तस्योपदेशविषयत्वेन सामानविध्यमिति सिद्धान्तव्याजेन दूषयितुमुपक्रमते— **सत्यमिति**। **तद्धर्मावच्छिन्नस्यैवेति**। यथैव सोममभिषुणोति व्रीहीनवहन्ति इत्यादिसंस्कारविधिषु अपूर्वसाधनत्वलक्षणायामपि प्रकृत्यपूर्वसाधनत्वस्यैव प्रकरणेन झटित्युपस्थितत्वात् तदवच्छिन्नोद्देश एव उपदेशव्यवहारस्तथैव प्राथमिकशाब्दबोधे सोमत्वादिरूपेणैवावगतापूर्वसाधनत्वावच्छिन्नोद्देश एव तद्व्यवहार इति कल्पनात् यवादीनां यवैर्यजेतेति शास्त्रेणापूर्वसाधनत्वस्य संस्कारविधितः पूर्वं

**नान्यस्य, तस्य घटादेरिव तत्त्वेनाप्रतीतस्योद्देश्यत्वानुपपत्तेः । अत्र च "तप्ते पयसि दध्यानयति" इत्यादौ प्रथमं पयस्त्वावच्छिन्नोद्देशेन विधीयमानेऽपि दध्यानयने पयस्त्वावच्छिन्नस्यापूर्वसाधनत्वबोधोत्तरमेवापूर्वसाधनत्वावच्छिन्नोद्देश्यत्वस्य पार्यन्तिकत्वात् पयस एवोपदेशविधिविषयत्वं पार्यन्तिकपदोपादानान्न विरुध्यते । प्रकृते च न फलचमसत्वावच्छेदेनापूर्वसाधनता अभिषवादिविधितः पूर्वं प्रमिता; तथात्वे "स यदि सोमं विभक्षयिषेत्तमस्मै भक्षं प्रयच्छेत् न सोमम्" इत्याद्यनुवादानुपपत्तेः। अतस्तात्पर्यग्राहकानुरो-**

---

यवत्वेनैव रूपेण कृत्स्नयोपदेशविषयत्वेऽपि फलचमसस्यानेन वाक्येन संस्कारान्वयानुपपत्त्यैव यागसाधनतया विधानान्न फलचमसत्वेन सोमसमानकक्षतयाऽपूर्वसाधनत्वावगतिः संस्कारान्वयात्पूर्वमिति न तद्विषयत्वमित्यर्थः । अत्र च पार्यन्तिकशब्दबोधात् पूर्वं यद्धर्मावच्छिन्नत्वेन यस्योद्देश्यत्वं श्रुतं तदुद्देशस्योपदेशविषयत्वमित्येतावन्मात्रोक्तौ यवेषु व्रीहिधर्माणामुपदेशो न स्यादित्यतोऽपूर्वसंबन्धिता **यद्धर्मावच्छिन्नस्येत्युक्तम्** । ननु दध्यानयनवाक्योपात्तोद्देश्यताकस्य पयसोऽपि संस्कारवाक्यात् प्राक्नापूर्वसाधनत्वावगतिः पयस्त्वेन रूपेण, किंतु सा वैश्वदेव्यामिक्षेति वाक्यादामिक्षात्वेन रूपेणामिक्षाया एवेति कथं पयस उपदेशविषयत्वमित्यत आह—**अत्र चेति** । **अपूर्वसाधनत्वबोधोत्तरमेवेति** । तप्ते पयसीति वाक्यार्थबोधकाल एव पयस्स्वरूपे आनर्थक्यपरिहारार्थं पयस्त्वसमानाधिकरणयत्किंचिदपूर्वसाधनत्वलक्षणाया आवश्यकत्वे सति पूर्वमपूर्वसामान्यसाधनत्वावगत्युत्तरं पश्चादामिक्षावाक्येनापूर्वविशेषसाधनत्वावगतावपि संस्कारविधितः पूर्वमपूर्वसाधनत्वावगतिः पयस्त्वावच्छिन्नस्य नासुलभेत्यर्थः । **तथात्वे इति** । यदि फलचमसस्य यागसाधनत्वं स्यात् तदा तेनैव भक्षप्राप्तौ निर्विवादात् स यदि सोममित्यनुवादोऽनुपपन्न एवेति ततः पूर्वं कृत्स्नसाधनत्वेन सोमस्यैव प्राप्तौ स यदि सोममित्युपपन्नं भवति । अतः सोमस्यापूर्वसाधनत्वावगतिः पूर्वं; न फलचमसस्य । अतो न फलचमसत्वसमानाधिकरणयत्किंचिदपूर्वसाधनत्वेन पयस इवोद्देश्यतेति भावः । **यद्यपि** पार्यन्तिकबोधात् पूर्वं यद्धर्मावच्छिन्नस्यापूर्वसंबन्धिता प्रमीयते तद्धर्मावच्छिन्नस्यैव संस्कारविध्युपदेशविषयत्वमित्येवं नियमकल्पने मानाभावात संस्कारविधिप्रवृत्तिकाले यस्य यदुद्देश्यतावच्छेदकरूपाक्रान्तत्वं तस्य तदुपदेशविषयत्वमित्येतावतापि यवादिसाधारणोपदेशविषयत्वस्य फलचमसेप्यापत्तेर्दुर्वारत्वात स यदि सोममित्याद्यनुवादरहितोत्पत्तिविधिविधेयनैमित्तिकेषु तत्परिहारकल्पनाया अव्यापनाच्चापूर्वसाधनत्वलक्षणाङ्गीकारे फलचमसे सामानविध्यापत्तिर्विधिरसायनोक्ता दुष्परिहरेति सिद्धान्तारंभे **सत्यं व्यवहार** इति पदद्वयप्रयोगेण **पूज्यपादैस्सूचितम्** । **तथापि** विकृतावतिदेशेनापि संभवत्प्राप्तिकत्वेन पर्णताया वैकृतजुहूदे-

**धेन सत्यप्युद्देश्यतावच्छेदकावच्छिन्नत्वे नोपदेशविषयत्वं फलचमसस्येत्यसमानविधानता। अतश्च तस्यैव धर्माकाङ्क्षायां** सत्यपि कर्मैकत्वे **कल्पितेन स्थानापत्त्याख्यातिदेशेन क्रयाभिषवादीनां सोमधर्माणां प्राप्तिः।** अत एव **प्राकृतिकोपदेशविषयभिन्नविषयत्वादस्य संस्कारोहत्वमाचक्षते।** वस्तुतस्तु-**गुणकाम्यवाक्य इवात्र भावनान्तरमेव** विधीयते। **अनेकगुणो-**

---

शेनाविधानमिवेहापि कार्यापत्त्या तत्प्राप्तिसंभवे उद्देश्यतावच्छेदकरूपाक्रान्तत्वेऽपि न तत्र उपदेशेन धर्माणां विधानं, अपूर्वसाधनत्वावच्छिन्नत्वेन शीघ्रोपस्थितसोमसंस्कार्यशेषतयैव धर्मविधिप्रवृत्तेर्निराकाङ्क्षत्वादिति ध्येयम्।

**यत्तु** केनचित् संस्कारविधिषु अपूर्वसाधनत्वलक्षणाया आवश्यकत्वेऽपि यादृशं तदवगतं वाक्यान्तरैः तादृशमेव लक्षणीयं; तच्च सोमेन यजेतेत्यादिविधिभिर्ज्योतिष्टोमापूर्वत्वावच्छिन्ननिरूपितमेवावगतमिति ज्योतिष्टोमापूर्वत्वावच्छिन्ननिरूपितसाधनताश्रयत्वेनैव लक्षणयोद्देश्यत्वात् तादृशोद्देश्यतारूपाक्रान्ते सोमयवादौ संस्कारविध्युपदेशविषयत्वेऽपि फलचमसेऽन्यत्र वा नैमित्तिकेऽपूर्वत्वावच्छिन्नापूर्वनिरूपितसाधनत्वाश्रयत्वाभावात् नोद्देश्यत्वेन तद्धर्मप्राप्तिः उपदेशेनेति युक्तमसामानविध्यं नीवारावयवानां विकलानामपि व्रीहिशास्त्रेणैव प्रधानापूर्वत्वावच्छिन्नोद्देशेन विधानान्न बाधकमिति कथं चित्समाधेयमित्युक्तम्। तन्न। तथात्वे तादृशोद्देश्यतावच्छेदकरूपानाक्रान्ते फलचमसेऽतिदेशेनापि धर्मप्राप्त्यनापत्तेः। **सत्यपि कर्मैकत्व इति।** यदि कर्मभेदो भवेत्तदा प्रकृतिविकृतिभावसंभवेन तद्वदित्यतिदेशः शक्यते कल्पयितुम्। न ह्यत्र ज्योतिष्टोमस्यैकत्वे ज्योतिष्टोमो ज्योतिष्टोमवदिति वक्तुं शक्यते। ततश्च कर्मधर्मानतिदेशेऽपि द्रव्यभेदे सति फलचमसेनेज्यां भावयेदित्युक्ते कथमित्याकाङ्क्षायां यत्स्थानेऽसौ विहितः तस्यैव विपरिवृत्तेः सारूप्याच्च सोमवदित्यतिदेशो न बाधकमित्यर्थः। **अत एवेति।** स्थानापत्तिकल्पितातिदेशेन धर्मप्राप्तेरेवेत्यर्थः। अत्र च वक्ष्यमाणोहलक्षणे प्रकृतौ यद्धर्मावच्छिन्नवृत्तित्वेन श्रुतस्य विकृतौ तद्भिन्नधर्मावच्छिन्नवृत्तित्वमित्येवं प्रकृतिविकृतिपदोपादानात एकस्यैव ज्योतिष्टोमस्य प्रकृतित्वेन विकृतित्वाभावात् कथं संस्कारोहत्वमित्याशङ्का प्राकृतोपदेशविषयभिन्नेत्यनेन निरस्ता। तथा च यतो यो धर्मात् गृह्णाति तदेव द्रव्यं प्रकृतिविकृतिपदाभ्यामुच्यत इति उपदिष्टसंस्काराणां सोमे सोमत्वावच्छिन्नवृत्तित्वं श्रुतं तेषामेव तद्भिन्नफलचमसवृत्तित्वान्नानुपपत्तिरिति। **वस्तुतस्त्विति।** इदं तु परमतेनोक्तम्। यथा च नात्र भावनान्तरविधानं तथोक्तमधस्तात्। यत एव स्तिमिनीनामाहरणं यद्यर्थप्राप्त्यनुवादो भवेत् तदा अर्थप्राप्ताहरणसिद्ध्यर्थं क्रयप्राप्तिः स्यात्। न त्वेतदस्ति। विशिष्टभावनान्तरविधानपक्षे वाक्यभेदाप्रसक्त्या हरणस्यापि विधानेनौ-

पादानाच्च। अतश्च तस्या एवेतिकर्तव्यताकाङ्क्षयाऽतिदेशकल्पनमित्यपि वक्तुं शक्यम्। अत एव "न्यग्रोधस्तिभिनीराहृत्य" इत्याहरणस्यैवौपदेशिकत्वान्न क्रय इति केचित्॥

प्रयोजनं—गुणकामप्रवृत्त्यप्रवृत्ती, सोमपदवतो मन्त्रस्य लोपोहौ च॥ १३॥

---

(१४)–प्रतिनिधिश्च तद्वत्॥ ३७॥ तद्वत्प्रयोजनैकत्वात्॥ ३८॥ अशास्त्रलक्षणत्वाच्च॥

व्रीह्याद्यभावे नीवारादिसदृशप्रतिनिधेरपि संस्कारविधितः पूर्वं साधनत्वानवगमाद-समानविधानत्वं, सकलाङ्गयुक्तव्रीहिजन्ययागप्रयोगासम्भवे कर्मशास्त्रेण तदाक्षेपादिति प्राप्ते–

सत्यमुत्तरकालं तदाक्षेपः, तथाऽपि व्रीहिशास्त्रार्थालोचनवेळायामेव व्रीहित्वजातेर्याग-साधनत्वेऽवगते तदन्यथाऽनुपपत्त्या तदवच्छिन्नव्यक्तेस्तदारम्भकीभूतावयवानां च सा-धनत्वमाक्षिप्यते। अतश्च जातिव्यक्त्यवयवसाधनतानां पूर्वमेवावगतानां सर्वासामसम्भवे कतिपयग्रहणस्योत्तरकालप्रतीतिकत्वेऽपि स्वरूपेण पूर्वावगतेस्समानविधानत्वोपपत्तिः। न हि नीवारत्वेन रूपेण तेषामुपादानं येन तद्रूपेण साधनत्वबोधस्यौत्तरकालिकत्वादसमा-नविधानत्वापत्तिः, अपि तु व्रीह्यारम्भकावयवसमानजातीयकतिपयावयवारब्धत्वेन। अतश्च तेषां व्रीह्यवयवनिष्ठसाधनतासम्पत्त्यर्थमवर्जनीयतयोपादानेऽप्यवयवसाधनतायास्संस्कार-विधिभ्यः पूर्वमेव प्रमितत्वात्समानविधानत्वोपपत्तिः। संस्कारविधिषु हि प्रकृतापूर्वसाध-

---

पदेशिकत्वं तदा आहरणमात्रं कर्तव्यमिति सिद्ध्यति अतो न क्रय इत्यपि केषां चिन्मतं दर्शयति—अत एवेति। बह्वृचब्राह्मणे फलचमसे क्रयाम्नानात् तस्याप्यौपदेशिकत्वेन भवत्येव स इत्यस्वरसबीजङ्केचित्पदेन सूचितम्। प्रयोजनमिति। सोमीयाभिषवमानाश्रितानां गुण-कामानां पूर्वपक्षे प्रवृत्तिः सिद्धान्ते न तथा। व्रीहिमन्त्रस्य यवेष्विव सोमपदवतो मन्त्रस्य लोपः पूर्वपक्षे; सिद्धान्ते त्वतिदेशादूहेन तत्प्रयोग इत्यर्थः। यद्यपि सोमयागस्थानापत्त्या वैश्वानरेष्टि-विधानेऽपि स्वातिदेशप्राप्तैरेव धर्मैः नैराकाङ्क्ष्यात् न सोमधर्मान् गृह्णाति। एवं फलचमसोऽपि याव-दुपदिष्टधर्मैरेव निराकाङ्क्षो नैव सोमातिदेशकल्पनया तद्धर्मान् गृह्णातीति नैवाभिषवादिकं सोमपद-घटितमन्त्राणामूहादि वा प्राप्नोति, तथापि भक्षणरूपसंस्कारानुवादबलात् आवश्यकोऽतिदेशः अभिषवस्य परं पेषणेन बाधः, अथ वाऽविरोधात् समुच्चय इत्यन्यदेतत्।

---

नीभूतप्रदेयद्रव्यप्रकृतित्वत्वावच्छिन्नप्रकृतित्वस्यैवोद्देश्यतावच्छेदकत्वादवयवनिष्ठसाधनताया अवयविनिष्ठसाधनतातो भेदेऽपि न विरोधः। एवं च यत्र नावयवघटितसादृश्येन प्रतिनिधिस्तत्र न समानविधानत्वं, न वा कार्यापत्त्याऽपि धर्मप्राप्तिः। यथा अवघातप्रतिनिधितया नखनिर्लुञ्छनादेः करणे नखेषु प्रोक्षणादेः, यूपावटास्तरणबर्हिर्वैलौकिकेतिकर्तव्यतोपादानेनापि चरितार्थत्वात्। फलचमसे तु "तमस्मै भक्षं प्रयच्छेत्" इत्यादिशब्दगतलिङ्गादेवातिदेशकल्पनमिति विशेषः॥

प्रयोजनं—"व्रीहीणां मेध" इति मन्त्रस्य पूर्वपक्षे लोपः। सिद्धान्तेऽनूहः। मन्त्रान्तर्गतव्रीह्यादिपदानां व्रीहित्वसाधनताक्षिप्तसाधनताकानामित्यर्थेनावयवेष्वपि प्रयोगोपपत्तेः॥ १४॥

॥ प्रतिनिधिश्च तद्वत्॥

स्पष्टार्थं प्राय एतदधिकरणम् क्वचिदेव प्रतीकं घृत्वा व्याख्यायते। **न वा कार्यापत्त्येति**। **यद्यपि** नवमे नखावपूतश्चरुरित्यादौ नखानामनुमानात् उलूखलमुसलस्थानापत्त्यातिदेशेन प्रोक्षणं भवतीति वक्ष्यते, तथा च तेनैतद्विरुद्धमभिधानं भाति **तथापि** यत्र नखनिर्लुञ्छनविध्यभाव एवावघाताभावप्रयुक्तं नखनिर्लुञ्छनानुष्ठानं वितुषीभावजननसामर्थ्यमात्रेणैव तत्र तेषां नखानां मुसलस्थानापन्नत्वे मानाभावात् वेदैकगम्यापूर्वसाधनतायाः केनाप्यनवगमे सति अपूर्वसाधनद्वारेण विहितानां प्राकृतधर्माणामतिदेशायोगात् न वैदिकधर्माणां प्राप्तिः। **यद्यपि** प्रधानचोदनासमाप्तिशास्त्रेणास्यापि प्रतिनिधेरपूर्वसाधनत्वमवगतं भवेत् **तथापि** यया प्रणाड्या मुख्यस्यापूर्वसाधनत्वेन संस्कारोद्देश्यत्वं तादृशप्रणाडीजनकत्वस्यामुख्ये मानाभावान्न तदुद्देश्यतावच्छेदकरूपाक्रान्तत्वेनातिदेशसंभवः। न हि कार्यापत्तिमात्रेणैव धर्मप्राप्तिः तस्याः स्वतः प्रमाणत्वाभावेनातिदेशकल्पनेनैव तत्प्रापकत्वसिद्धान्तात् अविहिते कथंभावाकाङ्क्षामूलकातिदेशकल्पने मानाभावात्। तदाकाङ्क्षाया लौकिकप्रकारेणापि उपशमोपपत्तेश्च। अत एव व्रीहिसोमावयवत्वेनैव नीवारपूतीकानां प्रतिनिधितयोपादाने यत्नान्तरीयकतया नीवारपूतीकांशानामुपादानं तत्र तदंशानां शास्त्रतस्तत्कार्यकारितया विधानाभावात् न कार्यापत्त्यतिदेशविषयत्वं धर्माणामिति न तत्प्राप्तिरिति **वार्तिके** आवेदितमेव। **लोप इति**। व्रीहिपदलोपेन फलचमसे सोमपदलोपेन स्तिमिनीपदस्योह इव नीवारपदोहः पूर्वपक्ष इत्यर्थः।

## (१५)—नियमार्था पुनः श्रुतिः ॥ ४० ॥

**यत्र तु पूतीकादौ तत्त्वेन अभावे विधिः, तत्र सकलाङ्गयुक्तसोमजन्ययागप्रयोगासम्भवे पश्चादेव तत्प्रवृत्तेः न समानविधानत्वम्। न ह्यत्र पूतीकगतावयवानां प्रतिनिधिनियमः। तेषां मन्दसदृशत्वेन पक्षेऽप्यप्राप्तेः, पूतीकपदेऽवयवलक्षणाप्रसङ्गाच्च। न च नियमविधिलाघवानुरोधेन तदङ्गीकारः,** तस्य फलमुखत्वेन **निषादस्थपत्यधिकरणन्यायेनाकिञ्चित्करत्वादिति प्राप्ते—**

---

### नियमार्था।

**यत्र त्विति।** पूर्वत्र नीवारत्वेन रूपेण नीवाराणां प्रत्यक्षविध्यभावात् व्रीह्यवयवत्वेनैवोपादानात् भवतु सामानविध्यमिह तु पूतीकत्वेनैव रूपेण पूतीकानां विध्युपलम्भात् स्यात् फलचमसवत् असामानविध्यमिति विशेषाशङ्कया पूर्वपक्षोत्थानं षष्ठाधिकरणसिद्धमप्यत्र प्रत्युदाहरणमात्रार्थं च कथनं तुशब्देन सूचितम्। **तस्य फलमुखत्वेनेति।** तस्येत्यस्याकिंचित्करत्वादित्यनेनान्वयः। फलपदात्पूर्वं गौरवस्येति शेषः। यत्तु पूर्वपक्षयुपपादितं पूतीकपदे सोमावयवलक्षणापत्तिदूषणमनूद्य **प्रकाशकारैः** परिहृतं—पूकानां साधनत्वं हि नाश्रुतं किंतु संस्कारविध्यन्यथानुपपत्त्या कल्पनीयं संस्कारविधौ च सर्वत्र स्वरूपे आनर्थक्यमिया अपूर्वसाधनत्वलक्षणाया आवश्यकत्वेन पूतीकानां च पूर्वं व्रीहिवत् साधनत्वानवगमात् पूतीकपदे सोमावयवलक्षणाया एव न्याय्यत्वात्। किं च कल्पितवाक्ये लक्षणाया अदोषत्वेन निषादस्थपत्यधिकरणवैषम्यादिति, **तदयुक्तं,** पूर्वानवगतसाधनत्वस्यापि पयसो दध्यानयनवाक्ये संस्कार्यत्वदर्शनाद्धेतोरेवापूर्वसाधनत्वलक्षणायां तद्गतपूर्वावगतत्वनियमापेक्षणे प्रमाणाभावस्य **पार्थसारथ्यादिभिर्नवमे** निरूपितत्वेन तन्निर्वाहार्थं तल्लक्षणाया आवश्यकत्वाभावात्। संस्कार्यत्वमेवाव्यभिचरितक्रतुसंबन्धेनोपस्थितापूर्वसामान्यसाधनत्वमपि बोधयति। तावन्मात्रेणैव चापूर्वसाधनत्वावगतिः पूर्वमिति व्यवहारः। पश्चाच्चापूर्वविशेषसाधनत्वकल्पनैव संस्कारविध्यन्यथानुपपत्तिमूला। अत एव पयः फलचमसादिसंस्कारविधिषु तल्लक्षणा नासुलभेति कल्पने तु प्रकृतेपि तदुपपत्तेस्तुल्यत्वाच्च। पूतीकपदेऽवयवलक्षणया यागसाधनत्वोपपादने संस्कारविध्यन्यथानुपपत्त्या यागसाधनत्वस्य पूतीकेषु कल्पनीयत्वसिद्धान्तभङ्गापत्तेश्च। कल्पितवाक्ये नियमविधिलाघवानुरोधेन लक्षणाकल्पनस्यानुचितत्वेनादोषत्वे अपूर्वविधित्वकृतगौरवस्याप्यदोषत्वात उपजीव्यश्रुतपूतीकगतसंस्कार्यत्वानुरोधेन पूतीकत्वरूपेणैव तत्साधनत्वकल्पने बाधकाभावाच्च। अतः पूतीकपदेऽवयव-

पूतीकपदार्थस्य हि **पूतीकत्वस्य नात्र करणत्वं श्रुतं, द्वितीयान्तत्वात्। अतश्च नियमविधिलाघवानुरोधेन तया न पूतीकत्वस्य साक्षाद्यागसाधनत्वं लक्ष्यते, अपि त्ववयवनिष्ठसाधनतानान्तरीयकप्रयोजकत्वमेवेति न पूतीकपदेऽवयवलक्षणा,** सदृश**नियामकन्यायप्रवृत्तेः पूर्वमेव चास्य विधेः प्रवृत्तेर्नियमविधित्वोपपत्तिः। अतश्चात्रापि कतिपयावयवसाधनत्वस्य सोमशास्त्रादेव सिद्धेस्समानविधानत्वम्॥ १५॥**

---

## (१६)—संस्थास्तु समानविधानाः प्रकरणाविशेषात् ॥ ४१ ॥ व्यपदेशश्च तुल्यवत् ॥ ४२ ॥ विकारास्तु कामसंयोगे नित्यस्य समत्वात् ॥

---

लक्षणामनंगीकृत्यैव सिद्धान्तमुपपादयति—**पूतीकपदार्थस्य हीति।** इदंच पूतीकवाक्य एवाभिषुणुयादिति पदे यागलक्षणास्वीकारपक्षे तदानीमेव यागेऽन्वयार्थं द्वितीयाया लक्षणावश्यकत्वे सति प्रयोजकत्वस्यैव लक्षयितुमुचितत्वात्। यदा तु सौर्यादिवाक्येषु यागलक्षणामूलभूतद्रव्यदेवतासंबन्धानुपपत्तेरिवेहाभावेन श्रुताभिषववाक्ये यागलक्षणाङ्गीकारो निर्मूलो न युक्तः, अतः श्रुतवाक्येनाभिषवे पूतीकोद्देशेन विहितेऽपि यागसाधनत्वं विना तदुद्देश्यत्वमनुपपन्नं सद्यागसाधनत्वमपि कल्पितवाक्यान्तरेण बोध्यते। अत एव पुरोहितं वृणीत इत्यादौ संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनेति प्रवादः। **पूज्यपादैरपि** फलचमसस्य भक्षसंस्कार्यत्वान्यथानुपपत्त्याऽनुमितवाक्येनैव यागसाधनत्वमुक्तम्। तत्र श्रुतं वाक्यंक्वचिद्यागसाधनताबोधकवाक्यान्तरकल्पकं सत् श्रुतार्थस्याभिषवादेः विधायकमपि न भवति, तस्य यागसाधनत्वबलादेवेतरसंस्काराणामिवास्यापि प्राप्तेः। अतस्तत् तत्कल्पकमात्रमनुवादः। क्वचित्तु पुरोहितादेरप्राप्तवरणविधायकमपि। एवं च कल्प्यमानवाक्यान्तरे पूतीकैरित्येव करणत्वार्थतृतीयान्तपदघटितस्यैव कल्पनान्न लक्षणाया आवश्यकत्वं येन प्रयोजकत्वमेव पूर्वोक्तं लक्ष्येत, तथापि श्रुतकरणत्वस्यैव नियमविधिलाघवानुरोधेन परंपरासंबन्धघटितस्य स्वीकारो युक्त इति तात्पर्यार्थः। यदैव सोमाभावे प्रधानचोदनया अर्थाक्षिप्तं सुसदृशं विसदृशं चानियमेन प्राप्नोति तदा यावन्न्यायेन सुसदृशमेवेति नियन्तुं उपक्रम्यते ततः पूर्वमेवानेन वाक्येन प्रवृत्तेन मन्दसदृशं नियम्यत इति तस्यां दशायामनियतप्राप्तेस्सत्वात् नियमविधित्वं नानुपपन्नमित्यभिप्रेत्याह—**सदृशेति।** प्रयोजनं उहानूहरूपं स्पष्टमेव।

---

अपि वा द्विरुक्तत्वात्प्रकृतेर्भविष्यन्तीति ॥ ४४ ॥ वचनात्तु समुच्चयः ॥ ४५ ॥ प्रतिषेधाच्च पूर्वलिङ्गानाम् ॥ ४६ ॥ गुणाविशेषादेकस्य व्यपदेशः

ज्योतिष्टोमे **चतस्रस्संस्थाः अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंज्ञकाः।** संस्था नाम **क्रतुप्रयोगवृत्तिस्तोत्रोपरमः।** तत्र द्वादशस्तोत्राण्य**ग्निष्टोमे, तत्राग्निष्टोमस्तोत्रमन्त्यम्।** साऽ**ग्निष्टोमसंस्था** नित्या काम्या **च, संयोगपृथक्त्वात् दध्यादिवत्। उक्थ्येऽग्निष्टोमस्तोत्रोत्तरं**

---

**संस्थास्तु समानविधानाः प्रकरणाविभागात्।** अत्र चाग्निष्टोम उक्थ्यष्षोडश्यतिरात्रो वाजपेयोऽप्तोर्याम इति सप्तसंस्थो ज्योतिष्टोम इत्यादिवचनेषु संस्थावाचित्वेन दृष्टानामुक्थ्यादिपदानामेवोक्थ्यं गृह्णीयात्पशुकाम इत्यादिवाक्येषूपादानेन तदर्थस्यैव पश्वादिफलार्थत्वेन विधानस्य पूर्वपक्षसिद्धान्तसाधारण्येन वक्ष्यमाणत्वेऽपि यावत् स्तोत्रग्रहणवाचित्वं नापाकृतं भवत्युक्थ्यादिपदानां न तावत् संस्थानामेव फलसम्बन्धः सिद्ध्यतीति तदर्थं रथन्तरपादे स्वयं**कौस्तुभे** प्रदर्शितमग्निष्टोमादिपदानां मुख्यामुख्यार्थपरत्वमनुवदति—**ज्योतिष्टोमे इति। संस्था नामेति।** स्तोत्रेण क्रतुप्रयोगवृत्त्युपरम इत्यर्थः। तथाविधस्तोत्रानंतरं कतिपयोत्तराङ्गानुष्ठानेन प्रयोगोपरमाभावादसंभववारणाय क्रतुपदम्। अग्निष्टोमादिस्तोत्रानन्तरमपि प्रधानभूतहार्योजनग्रहाभ्यास सत्वेन तदन्त एव क्रतुप्रयोगसमाप्तेः तस्याः संस्थात्ववारणाय स्तोत्रपदम्। तस्याःस्तोत्रसंबन्धाभावेन तन्निवारणसंभवात्। ततश्च यत्स्तोत्रानुष्ठानानन्तरं क्रत्वभ्याससमाप्तौ सत्यां उत्तरत्र स्तोत्रेण प्रधानयागाभ्यासो नास्ति तत्स्तोत्रकालीना तत्क्रतुसमाप्तिः अग्निष्टोमादिपदैः संस्थात्वेनोच्यते। अत एव सप्तसोमसंस्था इति स्मृतौ व्यवहारः। अथ वा स्तोत्रसंबन्ध्युपरम इत्यर्थः। उभयथापि वार्तिकादिग्रन्थेषु तदर्थप्रतीतेः। सर्वथापि समाप्तिवाचित्वेन विवादः संपूर्वस्य तिष्ठतेस्समाप्तिवाचित्वादित्यर्थः। **तत्र द्वादशस्तोत्राणीति।** आद्यं तु बहिष्पवमानस्तोत्रं, तत्र चत्वार्याज्यानि, चत्वारि पृष्ठस्तोत्राणि माध्यंदिनार्भवपवमाने द्वे, यज्ञायज्ञीयं चाग्निष्टोमनामकमिति द्वादशेत्यर्थः। **सेति।** पूर्वोक्तान्त्यपदोपस्थापितसमाप्तिमदर्थविशेषणीभूता समाप्तिः तच्छब्देन परामृश्यते। **नित्या काम्या चेति।** अग्निष्टोमान्तज्योतिष्टोमस्य नित्यतयाऽवगतस्यैव स्वर्गकामादिवाक्यैः कामसंबन्धबोधनात् अर्थादेवाग्निष्टोमसंस्थाया नित्यकाम्यत्वमित्यर्थः। **उक्थ्यस्तोत्राणीति।** एह्यूष्वीत्यस्यामृचि साकमश्वसाम्ना क्रियमाणमेकं वयमुत्वेत्यस्यां सौभरसामकं द्वितीयम्। आयाहींद्र इत्यस्यां नार्मेधसामकं तृतीयमित्येवं त्रीण्यन्या-

त्रीण्यन्यान्युक्थ्यस्तोत्राणि, सा उक्थ्यसंस्था। षोडशिनि तदुत्तरं षोडशिस्तोत्रं, सा षोडशिसंस्था। अतिरात्रे तदुत्तरं द्वादशस्तोत्रात्मकास्त्रयो रात्रिपर्यायाः आश्विनस्तोत्रं च, सा अतिरात्रसंस्था। यास्तु अत्यग्निष्टोमवाजपेयाप्तोर्यामाख्याः अन्यास्तिस्रस्स्मृतौ गण्यन्ते, ता एतास्वेवान्तर्भूताः। यत्राग्निष्टोमस्तोत्रोत्तरमुक्थ्यान्यकृत्वा षोडशिस्तोत्रं क्रियते, सा अग्निष्टोमसंस्थैवात्यग्निष्टोमपदवाच्या, यथावस्थितषोडश्युत्तरं यत्र वाजपेयस्तोत्रं क्रियते, सा षोडशिसंस्थैव वाजपेयपदवाच्या। यत्रातिरात्रे चतुर्थो रात्रिपर्यायस्स्तोत्रत्रयात्मको वर्धते, तत्रातिरात्रसंस्थैवाप्तोर्यामपदवाच्या। तत्रात्यग्निष्टोमो राजन्यस्य नित्यः "अत्यग्निष्टोमे राजन्यस्य गृह्णीयात्" इति वचनात्। अन्यास्तूक्थ्यादयः काम्याः "पशुकाम उक्थ्यं गृह्णीयात्" "षोडशिना वीर्यकामः स्तुवीत" "अतिरात्रेण प्रजाकामं याजयेत्"

---

नीति शेषः। **तदुत्तरं** उक्थ्यस्तोत्रोत्तरम् **षोडशिस्तोत्रमिति**। इन्द्रजुषस्वेत्यृचा गौरीवितनामक-षोडशिसाम्ना क्रियमाणषोडशिस्तोत्रमित्यर्थः। एवमग्रेऽपि ज्ञेयम्। **त्रयो रात्रिपर्याया इति।** अयमर्थः—प्रथमे रात्रिपर्याये पान्तमावो अन्धस इत्यस्यामृचि वैतहव्यं साम, प्रव इन्द्रायेत्यस्यां शाक्त्यं साम, वयमुत्वा तदिदर्था इत्यस्यां काण्वं साम, इन्द्रायमद्वने सुतं इत्यस्यां श्रौतकक्षं साम, अथ द्वितीये अयं त इन्द्रसोम इत्यस्यां दैवोदासं साम, आतून इन्द्रक्षुमन्तमित्यस्यां आकूपारं साम, अभित्वावृषभासुत इत्यस्यामार्षभं, इदं वसो सुतमित्यस्यां गारं साम। अथ तृतीये इदँह्यन्वोजसे त्यस्यां माधुछन्दसं साम, आत्वेतानिषीदतेत्यस्यां दैवातिथं साम, योगेयोगे इत्यस्यां सौमेधं साम, इन्द्रसुते सोमेषु इत्यस्यां कौत्समित्येवं चतुश्चतुस्सामसाध्यचतुश्चतुस्स्तोत्रसाध्येषु त्रिषु पर्यायेषु द्वादशस्तोत्राणि संपद्यन्त इति द्वादशस्तोत्रात्मकाः त्रयः पर्याया इत्यर्थः। **आश्विनस्तोत्रं चेति।** रात्रिपर्यायानन्तरं क्रियमाणानि सन्धिस्तोत्राणि आश्विनशब्देनोच्यन्ते। तानि च एनावोअग्निमिति तृचे तथा प्रत्यु अदर्श्यायतीति तृचे, तथा इमाउवां दिविष्टय इति तृचे, च रथन्तरसाम्ना क्रियन्ते। तत्र क्रमेणाग्निरुषाश्विनां देवतात्वेनाश्विनपदप्रवृत्तेः। **वाजपेयस्तोत्रं क्रियत इति।** तच्च किमित्ते विष्णो परिचक्षीत्यस्यामृचि बृहद्वाजपेयसाम्ना क्रियत इति भावः। **वर्धत इति।** तृतीयरात्रिपर्यायानन्तरं जराबोधीय, सत्रासाहीयमार्गीयवारवन्तीयैश्चतुर्भिस्सामभिः होतृमैत्रावरुण-ब्राह्मणाच्छंसि अच्छावाकानां शस्त्राणां स्तोत्राणि चत्वारि वर्धन्ते स चतुर्थो रात्रिपर्याय इत्यर्थः। एवं त्रयस्त्रिंशस्तोत्रोऽप्तोर्यामसंज्ञः। **नित्य इति।** अत्यग्निष्टोम इति वाक्येन कामसंयोगेन बाधितस्य क्रत्वंगत्वस्य प्रतिप्रसवकरणादित्यर्थः। पशुकामादिवाक्येषूक्थ्यादिपदैर्मुख्यार्थ-ग्रहणसंभवे अमुख्यार्थग्रहणस्यायुक्तत्वात् न स्तोत्रग्रहणयोरुपादानमित्येतदर्थं संस्थायां

**इति वचनेभ्यः। अत्राग्निष्टोमादिशब्दानां** प्रचुरप्रयोगात् **संस्थास्वेव शक्तिः, तद्वति ज्योतिष्टोमे निरूढलक्षणा. तद्वति क्रत्वन्तरे साम्प्रतिकी, ग्रहणे स्तोत्रे च गौणी इत्येवं कौस्तुभे द्रष्टव्यम्। अतश्च संस्थानामेव फलसम्बन्धः। ग्रहणस्तोत्रादिकं तु तत्तद्वाक्ये वाक्यान्तरप्राप्तमनूद्यते। संस्थापदार्थवृत्तिप्रयोगस्य प्रतिसम्बन्ध्यपेक्षायां च प्रकरणाज्ज्योतिष्टोमक्रतुरेवाश्रयत्वेनान्वीयते। तदेतत्सर्वमिन्द्रियकामाधिकरणे स्थितमेव।**

---

मुख्यार्थत्वं साधयति—**प्रचुरप्रयोगादिति**। उक्थ्येन यजेत उक्थ्यो यज्ञः; षोडशिना यजेत षोडशी यज्ञः, इति यज्ञपदसामानाधिकरण्येन उक्थ्यादिपदप्रयोगस्तावत् नोक्थ्यस्तोत्रसंबन्धमात्रेण युज्यते, पूर्वपूर्वस्तोत्राणामुत्तरोत्तरयागेषु षोडश्यादिषु सत्त्वेऽपि अग्निष्टोमस्तोत्रवत्युक्थ्ये उक्थ्यस्तोत्रवति षोडशिनि षोडशिस्तोत्रवत्यतिरात्रादौ अग्निष्टोमोक्थ्यषोडश्यादिपदैः व्यवहाराभावात्। अतोऽग्निष्टोमोक्थ्यादिपदानां तादृशस्तोत्रसंबन्धिसमाप्तिमत्क्रतुपरत्वमगत्या वाच्यम्।

एतेनोक्थ्यादिपदवाच्यग्रहयागाभ्यासा एव फले विधीयन्ते, अभ्यासानां प्रतिसंबन्धियागापेक्षयैव ज्योतिष्टोमस्याश्रयत्वमिति सौभराधिकरणगतन्यायसुधोक्तमपास्तं, आकृत्यधिकरणन्यायेन विशिष्टवाचित्वकल्पनापेक्षया लाघवात् संस्थावाचित्वं प्रकल्प्यते। तद्वति तु ज्योतिष्टोमक्रतौ निरूढलक्षणया व्यक्तिन्यायेन बोधात्तत्सामानाधिकरण्यस्यान्यत्र यज्ञे तत्स्तोत्रसमाप्तेः अभावेन तदप्रयोगस्य च नानुपपत्तिः। स्तोत्रसंबन्धात् ग्रहणे गौण्या प्रयोगः। अतः संस्थावाचित्वाङ्गीकारेणैव यावन्मुख्यार्थग्रहणं संभवति, न तावदमुख्यार्थग्रहणं युक्तमिति पशुकामादिवाक्येषु तद्ग्रहणमेव युक्तमिति भावः।

**यत्त्वग्निष्टोमोक्थ्यादिपदानां** ग्रहण इव स्तोत्रेऽपि गौणीत्युक्तं **तत्तु** किमर्थमित्येतत्तु विचारणीयम्। अग्निष्टोमादिस्तोत्रसंबन्धिनीषु समाप्तिषु शक्तिवादिना अवश्यं तत्तत्स्तोत्रेषु तत्तत्पदप्रयोगात् तत्तत्पदवाच्यत्वमन्वयव्यतिरेकाभ्यां स्वीकार्यमेव यत्किंचित्स्तोत्रसमाप्तेः तत्तत्पदवाच्यत्वाभावात्। अत एव **वार्तिके शास्त्रदीपिकायां** स्तोत्रविशेषवचनत्वमङ्गीकृत्यैव ग्रहण एव तत्संबन्धेनोपचारो दर्शितः। एवं स्थिते तत्रैव शक्तावधारितायां तत्संबन्धिसमाप्तिष्वपि शक्त्यन्तरकल्पनं कथमिव पूर्वापरविरुद्धं युक्तमित्युभयत्रापि शक्तिः, अथवा स्तोत्रेष्वेव, समाप्तिषु तु निरूढलक्षणैव। तद्वति क्रतौ तु सांप्रतिकी ग्रहणे गौणी लक्षणेत्येवायाति।

इह तु सर्वगुणकामानामाश्रयसामानविध्यचिन्तायां—फलवत्त्वेन संस्थादीनामपि

---

यद्यप्युक्थ्यो यज्ञ इत्याद्यनुरोधेन स्तोत्रसंबन्धिसमाप्तिमत्क्रतुलक्षणैवैका अगत्या स्वीकर्तुमुचिता, न मध्येपि समाप्तौ निरूढलक्षणा अपरा, तथापि सप्तसोमसंस्था इत्यादिप्रचुरप्रयोगात्तत्रापि साऽऽवश्यिक्येव। ततश्च तत्तत्स्तोत्रेषु तत्तत्पदानां गौणताकल्पनायाः प्राचीनग्रन्थेष्वदृष्टायाः स्वीकारे प्रमाणाभावात् शक्यार्थत्वेन उभयोः स्तोत्रसंस्थयोरन्यतरस्य वा ग्रहणे प्रसक्ते संस्थारूपस्यैवात्र ग्रहणम्। अथवा मुख्यार्थस्तोत्रत्यागेन लाक्षणिकसंस्थार्थस्यैव ग्रहणमित्यत्र नियामकान्तरमेव वाच्यम्। अत एव वार्तिके स्तोत्रसंबन्धेन ग्रहणे उपचारेण तत्तत्पदप्रयोगं प्रदर्श्य न च मुख्यसम्भवे गौणः परिगृह्यते इत्यनेन ग्रहणस्य फलसंबन्धं वर्जयित्वा स्तोत्रोपादाननिराकरणाय यदि च ग्रहणस्तोत्रयोः फलसंबन्धः स्यात् ततः तयोः क्रियात्वादाश्रयापेक्षा नास्तीति स्वतन्त्रयोरेव प्रयोगः प्राप्नोति। तत्र च प्रकरणाज्ञानप्रयोजनमुक्थ्यादिशब्दप्रयोगश्च न ज्ञायेतेति ग्रहणसाधारण्येनोक्तं तत् एतेन स्तोत्रादीनामत्राग्रहणे तत्र षोडश्यादिशब्दानामशक्तत्वादिति हेतूक्तिः **कौस्तुभस्यापि चिन्त्यैव**।

अत एव **गंगाधरेण** संस्थावाचित्वप्रतिपादनपरवार्तिकं गौणप्रतिपक्षतया संस्थालक्षणायामेव वाचकताभिप्रायेण व्याख्यातम्। **एतेन** यत् **शास्त्रदीपिकायां** स्तोत्रसंबन्धात् समाप्तावपि लक्षणामाशंक्य तत्संबन्धिक्रतुमात्रे प्रयोगाभावात्, अस्ति च षोडशिसंस्थे यज्ञे अतिरात्रसंस्थे च उक्थ्यस्तोत्रं न तद्यज्ञेऽस्त्युक्थ्यशब्दप्रयोगः। लक्षणा चेत् तत्रापि च प्रयुज्येतेति परिहृतं **तदपास्तं**। प्रयोगे सति लक्षणया तदुपपादनस्योचितत्वेपि तदभावे लक्षणया तदापादनस्य रूपं वस्त्रमितिवत् निषिद्धलक्षणात्वापत्त्याऽन्याय्यत्वात्। क्रतौ प्रयोगस्य समाप्तिमत्त्वेनैवास्माभिरंगीकारेण केवलं स्तोत्रसंबन्धमात्रेण तदापादनस्यायुक्तत्वाच्च। नहि तत्तत्स्तोत्रसमाप्तिमात्रेण क्रतौ तत्तत्पदप्रयोगः किं तु तत्तत्स्तोत्रकृता क्रतुप्रयोगसमाप्तिः सैव च तत्तत्पदप्रवृत्तिनिमित्तं अतो नान्यस्तोत्रकृततत्तत्समाप्तिमति क्रतौ उक्थ्यादिस्तोत्रसत्त्वेऽपि तदापत्तिरिति दिक्। **सर्वगुणकामानामिति**। ततश्च सौत्रं संस्थापदं यद्यप्युपलक्षणं तथापि संस्थासामानासामानविध्यविचारे कृते सति समानन्यायात् सर्वत्रापि कृतो भवतीति ता एव प्रस्तुत्यात्र विचार आरभ्यत इत्यर्थः। **यद्यपि** संस्थानामक्रियात्मकत्वेन धर्मग्राहकत्वासंभवात्, आश्रयभूतज्योतिष्टोमद्वारमेव धर्मग्राहकत्वमिति तस्य च सर्वसंस्थास्वेकरूपत्वेनैव तद्ग्राहकत्वात्र संस्थानां सामानविध्यासामानविध्यविचारस्संभवति **तथापि** संस्थासु ज्योतिष्टोमः स्वयं फलवत्त्वेन धर्मान् गृह्णाति उत फलवत्संस्थाभिर्गृहीतान् धर्मान् अयं द्वारतया गृह्णाति इत्यनिश्चयात् न ज्योतिष्टोमो धर्मग्राहक

**ज्योतिष्टोमादिवत्** प्रकरणाविशेषात् **दीक्षणीयादिधर्माणामुभयार्थत्वमिति प्राप्ते—**

**फलवत्त्वज्ञानं विना धर्माणामङ्गत्वबोधानुपपत्तेः,** तस्य च **गुणस्थले आश्रयसम्बन्धव्यतिरेकेणाबुद्ध्यमानत्वादाश्रयस्य च स्वविधिविहितस्य लाभसम्भवे गुणेनो**त्पत्तिविनि**योगप्रयोगाणामनाक्षेपाद्धर्माणां गुणान्वयात्पूर्वमेवाश्रयान्वयस्य** तद्विधिप**र्यवसानार्थमवश्य वाच्यत्वेन** विरम्यव्यापारत्वाप**त्तेर्नोभयार्थत्वम्। न ह्येवमाश्रयनिष्ठफलवत्त्वज्ञानं गुणान्वयाधीनं, तद्बोधव्यतिरेकेणापि यागस्य क्रियारूपस्य फलवत्त्वबोधोपपत्तेः। गुणे तु फलवत्त्वज्ञापकविधिवैयर्थ्यापत्त्यैव कृतिसाध्याश्रयान्वयस्य धर्मान्वयात्पूर्वमवश्यं वाच्यत्वम्। अत एवाश्रयो गुणनिष्ठकरणतासम्पादको गुणकरणतावच्छेदककोटिप्रविष्टो वेति करणाकाङ्क्षैव वितता आश्रयाकाङ्क्षेति मूलप्रवादः। अतो धर्माणामाश्रयाङ्गत्वमेव।** गुणभावनायां **तु आश्रयतो धर्मातिदेश इति सिद्धम्॥**

---

इति शक्यं वक्तुम्। अग्निष्टोमसंस्थायां तु स्वतस्तस्याः फलवत्त्वाभावेनाङ्गतया ज्योतिष्टोमस्य स्वगतफलवत्त्वेनैव भवति स्वतो धर्मग्राहकत्वमिति अग्निष्टोमसंस्थाकज्योतिष्टोमेनाश्रयभूतेन समानविधानास्संस्थादिगुणाः, उत तेनासमानविधाना इति विचारतात्पर्यमाश्रयपदेन सूचितम्। **प्रकरणाविशेषादिति।** यथैव ज्योतिष्टोमस्य फलवत्त्वेनैव उपजातकथंभावाकांक्षस्य तत्सन्निधावाम्नानाद्धर्मसंबन्धः न तु ज्योतिष्टोमत्वेन, तथैव फलवत्त्वस्य तुल्यत्वात् कथंभावाकांक्षायां सन्निधेरविशेषात् सम एव संस्थानामपि धर्मसंबन्ध इत्यर्थः। **तस्य च** गुणनिष्ठफलवत्त्वज्ञानस्य चेत्यर्थः। **उत्पत्तीति।** आश्रयस्येति पूर्वं शेषः। **तद्विधीति।** आश्रयस्तच्छब्दार्थः। **विरम्य व्यापारत्वापत्तेरिति।** त्र्यंशयुक्तक्रियाविधिसमये व्याप्टतानामङ्गविधीनां पश्चात्तनेऽपि गुणफलविधौ व्याप्रियमाणानामाकांक्षोत्थापनद्वाराऽन्वयात् विरम्यव्यापारत्वापत्तिरित्यर्थः। ननु संस्थासूपदेशेन धर्मप्राप्त्यभावेऽतिदेशस्य च सारूप्यनिबन्धनत्वात् संस्थानां चायागरूपत्वेन ज्योतिष्टोमसारूप्यासंभवात् अनुपपत्तेर्धर्माणां चाग्निष्टोमसंस्थांगत्वाभावेन तत्स्थानापत्त्या तत्प्राप्त्यसंभवात् ज्योतिष्टोमस्थानापन्नत्वाभावेन च तत्स्थानापत्तेरपि वक्तुमशक्यत्वात् उक्थ्यात्मिकया संस्थया पशून्भावयेदित्यत्र कथं कथमित्याकाङ्क्षानिवृत्तिरित्यत आह—**गुणभावनायान्त्विति** गुणस्य स्वतोऽक्रियात्मकत्वेन धर्मानाकांक्षत्वात् भावनायामेव तदपेक्षायामत्र सारूप्याभावेऽपि प्रकरणोपस्थितधात्वर्थस्यैवाश्रयत्वेनान्वये तद्द्वारा उपस्थितधर्माणामेव तत्त्वेनान्वये न किंचिद्बाधकम्। सारूप्यं हि नादृष्टोपकारजनकतया अपेक्ष्यते। किन्तु प्रकृत्युपस्थापनद्वारेणैवोपयुज्यते। ततस्तदतिदेशकल्पकं भवति। एवमिहापि आश्रयत्वेनोपस्थितिरपि तद्धर्मातिदेशकल्पिका भवत्येवेत्यर्थः।

प्रयोज यपि न गुणकामप्राप्तिरूपं सम्भवि, संस्थानां विकृतित्वेऽपि तदाश्रयभूतस्य ज्योतिष्टोमस्य प्रकृतिभूतस्य सत्त्वेनैव सदोमानाद्याश्रितगुणकामानां, षोडश्याद्यभ्यासाङ्गभूतग्रहणा ाि तानां वा गुणकामानां प्राप्त्युपपत्तेः। नाप्युद्भिदादीनां वैकल्पिकसंस्थाप्रकृतिकत्वरूपं, यागत्वसादृश्याधिक्येन ज्योतिष्टोमप्रकृतिकत्वस्यैवापत्तेः, तथाऽपि यत्र "अथैष भूर्वैश्वदेवः" इत्यादौ न यागत्वपरिचायकपदश्रवणं, तत्र वैकल्पिकसंस्थाप्रकृतिकत्वं पूर्वपक्षे। सिद्धान्ते ज्योतिष्टोमप्रकृतिकत्वमेवेति द्रष्टव्यम्। संस्थाऽङ्गभूतधर्मभेदे याजुर्वेदिकादिप्रायश्चित्तं पूर्वपक्षे। सिद्धान्ते त्वविज्ञातमपि। तथा "यज्ञस्याशीरुदृचमशीय

---

अत्र च सं था ामयागत्वेन द्रव्यदेवतयोस्तत्संस्काराणां चानपेक्षणात् न यद्यप्यतिदेशः। तथाप्युक्थ्यादिग्रहणानां तत्तत्संस्थानिमित्तकानां देवतोपपादकीभूतयागापेक्षायां प्रकृतत्वात् सोमवाक्यविहितयाग एव तत्त्वेन संबध्यत इति तेषु सोमद्रव्यतत्संस्काराणां उपदेशेन प्राप्तिरविरुद्धा। यानि त्वदृष्टार्थानि दीक्षणीयादीनि तेषां स्वर्गकामवाक्यैकवाक्यतया अग्निष्टोममात्राङ्गत्वादुपदेशतोऽ प्राप्तेरतिदेश एव। तेषां परं तन्त्रः प्रसङ्गो वेति तु वक्ष्यते। अत एव परिमितशब्दस्यैकाह इत्याश्वलायनसूत्रव्याख्याने नारायणेन सोमादीनां संस्थासूपदेशतः अतिदेशतश्च दीक्षणीयादीनां प्राप्तिरित्युक्तम्। अत्र चाभावाद्भावोत्पत्त्यनंगीकारेऽपीह संस्थानामभावरूपाणामपि तत्तत्फलसाधनत्वं वचनप्रामाण्यात् अकुर्वन् विहितं कर्मेतिवचनप्रामाण्यात् अकरणस्य प्रत्यवायजनकत्वमिव कल्प्यते। अथवा समाप्त्यनन्तरभाव्यौदासीन्यप्रतिपत्तिरूपसंकल्पस्यैव तत्साधनत्वमित्यादि प्रकारा वार्तिक एव द्रष्टव्याः। यत्तु यथाश्रुतवार्तिकानुसारेण प्रकारान्तरैः प्रयोजनांतरमुक्तं तदपि न युक्तमित्याह—नापीति। एवं स्थिते सामान्यतो ज्योतिष्टोमविकाराणां वैकल्पिकसंस्थाप्रकृतिकत्वादिप्रयोजनान्तरं यद्वार्तिके उक्तं तदेतत्तात्पर्येणेत्याह—तथापीति। तथाचोद्भिदादिविकृतिपरत्वेन वार्तिकार्थवर्णनमयुक्तमित्याशयः। ज्योतिष्टोमप्रकृतिकत्वमेवेति। अग्निष्टोमसंस्थज्योतिष्टोमप्रकृतित्वमेवेति तत्र तदीया एव धर्माः। उक्थ्यादिपुर ार ा विहिता धर्मास्तु यत्र "शतोक्थ्यं भवति, शतातिरात्र भवति" इत्यादिविशेषचोदना तत्रैव नाम्नाऽतिदिश्यन्त इत्यर्थः। अविज्ञातमपीति। इन्द्रियकामाधिकरणकौस्तुभदर्शितरीत्या स्वर्गाद्यपूर्वप्रयुक्तज्योतिष्टोमस्यैवाश्रयत्वात् स्वर्गाद्यपूर्वभावनापेक्षया पश्वादिफलकोक्थ्यादिगुणभावनायाः गुणात् भेदेन गुणभावनायामितिकर्तव्यतापेक्षयाऽतिदेशेन ज्योतिष्टोमात् धर्मलाभेऽपि स्वर्गार्थं क्रियमाणज्योतिष्टोमभावनापेक्षितधर्मैस्सहैव तन्त्रेण तेषां धर्माणामनुष्ठानं, अथवा स्वर्गार्थक्रियमाणज्योतिष्टोमतन्त्रमध्यपातात् तदीयैरेवोपकारलाभात् प्रसंगो

इत्यादियज्ञपदोपेतमन्त्रेऽविकृतप्रयोगः पूर्वपक्षे, संस्थायामस्य लोपात्। सिद्धान्ते यज्ञस्य संस्थायाश्चाशीरित्येवमूहितव्यम् ॥ १६ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयस्याध्यायस्य षष्ठः पादः.

---

वा। उभयथापि धर्माणामुपदेशातिदेशाभ्यां सिद्धान्ते उभयभावनाङ्गत्वात् संस्थाङ्गभूतधर्मभ्रेषेऽतिदेशस्याविज्ञातवेदत्वात्अविज्ञातं प्रायश्चित्तम्। तथा ज्योतिष्टोमांगस्यापि तदानीं भ्रेषात् याजुर्वैदिकमपि तदानीं कर्तव्यमिति प्रायश्चित्तद्वयस्य समुच्चय इत्यर्थः। यदा तु संस्थाविधीनां याजुर्वेदिकत्वात् तच्छेषत्वेन कल्प्यस्यातिदेशवाक्यस्यापि याजुर्वेदिकत्वे सकृदनुष्ठितयाजुर्वेदिकप्रायश्चित्तेनैवोभयोपकारसिद्धेर्नाविज्ञातप्रायश्चित्तमित्युच्येत, तदा नैतत्प्रयोजनमित्यपि ध्येयम्।

वस्तुतस्तु अतिदेशस्य याजुर्वैदिकत्वाभावेऽपि नैतत्प्रयोजनं युक्तं, तदधिकरणकौस्तुभरीत्यैव गुणभावनायां ज्यौतिष्टोमिकधर्मातिदेशेपि तदीयदेवतादीनामनपेक्षणात् तदपूर्वसाधनीभूतद्रव्यादिसंस्काराणां द्वाराभावादेव चानतिदेशात् आरादुपकारकाणां संभवत्साधारण्यानां तत्संभवेऽपि तदुपकाराणां ज्योतिष्टोमार्थानुष्ठितैरेव प्रयाजादिभिः प्रसंगतो लब्धेः तदंशे पृथगतिदेशस्यैवाकल्पनात् न तेषां संस्थाङ्गत्वं येन संस्थाङ्गभ्रेषनिमित्तं प्रायश्चित्तमप्यापद्येत। अत एव प्रसंगेनोपकारिकाया अपि सौमिकदक्षिणाया अग्नीषोमीयाद्यङ्गत्वाभावादेव तद्विकृतिषु निरूढपश्वादिषु नातिदेश इति दीक्षादक्षिणाधिकरणेऽग्रे वक्ष्यते। तथा अष्टमेऽपि प्रसङ्गेनोपकारकस्यापि गोदोहनादेस्सौर्यादावनतिदेशोऽनंगत्वादित्यपि। एतेन प्रारब्धयज्ञसमापनशासनपरस्य वक्ष्यमाणमन्त्रस्यायागे संस्थायां द्वाराभावादेवातिदेशानुपपत्तौ यज्ञस्य संस्थायाश्चाशीरित्येवमूहासंभवात् वक्ष्यमाणमपि प्रयोजनान्तरमपास्तमिति दिक्। अविकृत इति। फलार्थप्रारब्धकर्मसमाप्तिपुरस्सरतज्जन्यफलाशासनपरेऽस्मिन् मन्त्रे पूर्वपक्षे ज्योतिष्टोमसत्वेन यज्ञस्याशीरित्येवं प्रयोगसंभवेपि संस्थायां काम्यायामपि यज्ञत्वाभावेन तत्पदस्य लोपात् अतिदेशाभावेनोहस्याप्यप्रसक्तिरग्निष्टोमसंस्थायामिवेत्यर्थः। अयं हि मन्त्रः सोमाङ्गभूतदीक्षणीयाद्यङ्गेडायां पाशुकतत्पौरोडाशिकेडासु च विनियुक्तः। यज्ञस्य प्रारब्धस्य समाप्तिं प्राप्नुयामित्याशीःपरस्यास्य सोमयागस्यैव पूर्वं प्रारब्धत्वात् पश्वादियागाङ्गेडार्थत्वेऽपि प्रारब्धसोमयागसमाप्त्याशासनपरत्वावगतेर्यत्र यज्ञत्वं तत्रैवोपदेशेन प्राप्तिर्नान्यत्र। सिद्धान्ते तु पूर्वमुक्थ्यादिसंस्थानामारंभे ज्योतिष्टोमस्येव संस्थानामप्यारब्धत्वात् तदुभयसमाप्त्याशासनार्थस्यास्य मंत्रस्य ज्योतिष्टोमसमाप्त्या-

# अथ तृतीयाध्यायस्य सप्तमः पादः

(१)—प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥ १ ॥ सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात् ॥ २ ॥ आरादपीति चेत् ॥ ३ ॥ न तद्वाक्यं हि तदर्थत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥

दर्शपूर्णमासयोर्वेदिबर्हिषी तद्धर्माश्च खननलवनादयः किं अङ्गप्रधानसाधारणहविरासादनार्थाः, उत प्रधानाङ्गभूतहविरासादनमात्रार्था इति चिन्तायां—"वेद्यां हवींष्यासादयति "बर्हिषि हवींष्यासादयति" इति वचनेन वेदिबर्हिरासादनस्य हविरुद्देशेन विधानादर्था-

---

शासने यज्ञत्वेनाविकृततया प्राप्तावपि संस्थास्वतिदेशेन प्राप्तस्योहेन प्रयोगो न तु लोप इत्याशयः। तथोक्थ्याद्यङ्गभूतेषु प्राकृतेषु ग्रहणस्तोत्रशस्त्रेषु प्राकृतग्रहस्तोत्रशस्त्रधर्मातिदेशे सति तदाश्रितगुणकामादिकं भवति पूर्वपक्षे आश्रयस्योपदेशादेव प्राप्तेः। सिद्धान्ते तु नेति वार्तिकोक्तप्रयोजनान्तरस्येत्याद्यपीत्यादिपदेन संग्रहः। अत्र चोपहूतोऽयं यजमानोस्य यज्ञस्यागुर उद्चमशीयेत्येवं वैकृतपाठस्य हौत्रसूत्रे दर्शनात् तस्याशीस्समाख्याकरणेऽपि यज्ञस्याशीरित्याशीःपदघटितो मन्त्रः अत्रत्यः पूज्यपादैर्धृत इति तन्मूलं गवेषणीयमिति।

इति श्रीपूर्वोत्तरमीमांसापारावारीणधुरीणश्रीखण्डदेवा-
न्तेवासिकविमण्डनशंभुभट्टविरचितायां
भाट्टदीपिकाप्रभावल्यां तृतीयस्य
षष्ठः पादः

---

अथसप्तमः पादः

॥ प्रकरणविशेषादसंयुक्तं प्रधानस्य ॥

पूर्वं सामानविध्यासामानविध्यविचारेण धर्माणां साधारण्ये विचारिते तत्प्रसंगादस्मिन्नपि पादे वाक्यप्रकरणविरोधाविरोधचिन्ताव्याजेन केषांचिद्धर्माणां साधारण्यं निरूप्यत इति सङ्गतिं स्पष्टत्वादप्रदर्श्यैतदधिकरणविचारविषयं दर्शयति—**दर्शपूर्णमासयोरिति**। **खननेति**। वेदिं

स्तयोरपि हविरर्थत्वप्रतीतेः हविस्स्वरूपे चानर्थक्यप्रसक्तावपूर्वसाधनत्वलक्षणातात्पर्यग्राहकजिज्ञासायामप्रतिबद्धफलवत्प्रधानाधिकाराख्यप्रकरणस्यैव तात्पर्यग्राहकत्वावसायात्तेन चाङ्गत्वसम्बन्धस्यैव शाब्दस्य लक्षणाघटकतयाऽऽश्रयणात् प्रधानापूर्वाङ्गभूतहविरर्थत्वमेवेति प्राप्ते—

प्रकरणेन वाक्यसङ्कोचे प्रमाणाभावादानर्थक्यपरिहारार्थं यथा प्रधानप्रकरणेन तात्पर्यग्रहः, तथा दुर्बलेनाप्यङ्गाधिकाराख्यतत्प्रकरणेनापि। अत एवानारभ्याधीताङ्गानुष्ठानसादेश्यस्यापि तात्पर्यग्राहकत्वमुक्तम्। तेन सर्वार्था एवैते। अस्तु वा प्रधानप्रकरणेन तत्। तथाऽपि नाङ्गत्वं सम्बन्धघटकं, गौरवात्, अपि तु उपकारकत्वमात्रमभ्युदितेष्ट्यां दधिपयसोरिव। सम्बन्धमात्रं वा स्वर्गादिवत् "अगन्म" इत्यत्र। अतश्च प्रधानापूर्वो-

---

खनति" "बर्हिर्लुनाति" इत्यादिविधिविहिता इत्यर्थः। **अर्थादिति।** वेदिबर्हिरधिकरणकासादनस्य हविरर्थत्वेऽर्थात् आसादनद्वारा वेद्यादेरपि हविरर्थत्वमित्यर्थः। **प्रकरणस्यैवेति।** इतरथा क्रत्वन्तरपिण्डपितृयज्ञार्थबर्हिरप्येतैर्धर्मैस्संयुज्येतेति भावः। **शाब्दस्येति।** यथैव आग्नेयं चतुर्धा करोतीत्यादौ संबन्धसामान्याभिधायितद्धितसंभवेपि पुरोडाशेन सह न स संबन्धो वाक्यान्तरेण शब्दतो बोधित इति न तद्ग्रहणमपि तूत्पत्तिवाक्यावगतदेवतात्वस्यैव शब्दतः प्रतिपादनात्। एवमिहापि दर्शपूर्णमासापूर्वसम्बन्धित्वापेक्षया उत्पत्तिवाक्यावगतहविर्गतसाधकत्वरूपांगत्वस्यैव लक्षणाश्रयणमित्यर्थः। **उक्तमिति।** अनारभ्याधीतयोरंश्वदाभ्ययोर्ग्रहधर्मप्राप्त्यर्थं ग्रहधर्मविधौ ग्रहस्वरूपे आनर्थक्यपरिहारार्थमपूर्वसाधनत्वलक्षणायां यथा प्राकरणिकग्रहाभ्यासापूर्वसाधनत्ववत् अनुष्ठानसादेश्योपस्थितांश्वदाभ्याभ्यासापूर्वसाधनत्वस्यापि अविशेषेण लक्षणात् दुर्बलप्रमाणावगतापूर्वसाधनांश्वदाभ्यग्रहार्थत्वमपि ग्रहधर्माणामिति पूर्वपादे अदूर एवोक्तमित्यर्थः। **अभ्युदितेष्ट्यामिति।** प्रणीताधर्माः प्रकृतौ श्रूयमाणाः यस्य हविःपाकार्थत्वं श्रुतं तत्प्रयुक्ता न। किं तु यदेव हविःपाकोपकारकमात्रं तदर्थाः। अत एवाभ्युदितेष्ट्यां दधिपयसोरिज्यार्थत्वं, न तु प्रणीताकार्यार्थतया तयोर्विनियोग इति सिद्धान्तमंगीकृत्यापि तयोरधिकरणतानान्तरीयकतासिद्धप्रणीतोपकारजनकतामात्रेण प्रणीताधर्मास्तयोरपि भवन्तीति नवमे वक्ष्यते। तद्वदिहाप्युपकारकत्वमात्रमेव संबन्धघटकमित्यर्थः। **संबन्धमात्रं वेति।** अगन्म सुवरिति स्वर्गफलप्रकाशकमन्त्रलिंगकल्प्यश्रुतौ अनेन मन्त्रेणापूर्वसंबन्धिफलं प्रकाशयेदित्येवंरूपायामपूर्वार्थत्वप्रतिपादने संबन्धमात्रमेव लक्षणाघटकं न तु अङ्गत्वादिकं, स्वर्गादिफलस्यापूर्वं प्रत्यङ्गत्वाभावात्; तद्वदिहापि स्वीक्रियत इत्यर्थः। अनेनैव न्यायेन लिङ्गदर्शनाच्चेत्यत्रत्यगुण-

**पकारकहविरर्थत्वमात्रावगतेरङ्गतदङ्गहविषामप्यनारभ्याधीतानां प्राकरणिकानां वा प्रधानोपकारकत्वाविशेषात् सर्वार्थत्वम् ॥ १ ॥**

---

## (२)—फलसंयोगात्तु स्वामियुक्तं प्रधानस्य ॥ ६ ॥

दर्शपूर्णमासयोः **ज्योतिष्टोमादौ च केशश्मश्रुवपनादयस्तावत् क्रतुयुक्तपुरुषसंस्कारार्थाः, न त्वारादुपकारकाः "केशश्मश्रु वपते" "दतो धावते" 'आङ्क्ते' अभ्यङ्क्ते' इत्यादावात्मनेपदनिर्देशेन पुरुषार्थत्वावगमात्।** क्रियाफलस्य ह्यात्मगामित्वे आत्मनेपदम्। **आरादुपकारकत्वे तु तत्फलस्य क्रतुसाद्गुण्यस्य क्रतुगतत्वेन नात्मगामित्वम्।** यत्त्ववान्तरादृष्टं, **न तत्क्रियाफलम्।** यद्यपि **कृतीअञ्जूचधातुः परस्मैपद्येव' तथापि छन्दस्यात्मनेपददर्शनात्, तस्यापि च सार्थकत्वे सम्भवति साधुत्वार्थत्वस्यान्याय्यत्वात् 'स्वरित' इत्यादिविधेरेवानित्यत्वं परिकल्प्य आत्मगामिक्रियाफलकत्वाङ्गीकारो न दोषाय। एवं "दतो धावते" इत्यादौ। दन्तानां द्वितीययापि**

---

सूत्रव्याख्यानवार्तिकोक्तं प्रयाजशेषाभिधारणस्यापि अङ्गप्रधानहविरर्थत्वं द्रष्टव्यम्। प्रयोजनं प्रधानहविषामेव अन्तर्वेद्यासादनं, अंगहविषां तु बहिर्वेदीति पूर्वपक्षे सिद्धान्तेऽन्तर्वेद्येव सर्वेषामिति।

---

॥ **फलसंयोगात्तु स्वामियुक्तं प्रधानस्य** ॥

**याजमानास्तु तत्प्रधानत्वात्** कर्मवदित्यष्टमपादद्वितीयाधिकरणसिद्धान्तसूत्रे येषां याजमानत्वं सिद्धं ते कर्तृत्वांशेनाङ्गप्रधानार्था उत भोक्तृत्वांशेन प्रधानमात्रार्था इति संशयः प्रदर्शितो वार्तिके। तत्रैव तावत् कथं याजमानत्वं केषां सिद्धमित्यपेक्षया उपपादयन्नाह **—दर्शपूर्णमासेति**। आदिपदेनाधानस्य संग्रहः। **क्रियाफलस्येति**। धात्वर्थरूपक्रियाजन्यवियोगादिरूपफलस्य नखादिषु कर्मत्वानुरोधेन स्वीकारेऽपि भावनाफलस्य फलाधानयोग्यतारूपस्येप्सिततमस्य कर्तृगामित्वे सत्येवात्मनेपदविधानात् कर्तृसंस्कारकत्वमेवेत्यर्थः। **यत्त्ववान्तरादृष्टमिति**। प्रयाजादिभिः क्रतूत्पत्तिं विना उत्पत्त्यपूर्वजननानुकूलप्रधानयागगतयोग्यतारूपक्रतूपकारस्याव्यवधानेनोत्पादयितुमशक्यतया स्वोत्पत्त्यनन्तरमवांतरादृष्टं मध्ये यावत् प्रधानोत्पत्ति जन्यत इति स्वीकर्तव्यम्। तथैवेहापि तदारादुपकारकत्वाङ्गीकारपक्षे स्वीक्रियमाणमपि न तदात्मनेपदप्रयोजकक्रियाफलं तस्योत्तरफलार्थत्वेन मुख्यत्वाभावादित्यर्थः। **यद्यपीति**। तथ च परस्मैपदिनोरनयोरुपरि प्रयुज्यमानात्मनेपदं न स्वरितञित इत्यनेन प्राप्तं येनात्मगामिनि क्रिया-

**संस्कार्यत्वावगमः । "पयोव्रतं ब्राह्मणस्य" इत्यादौ** षष्ठ्या। **ज्ञानस्य तु मलापकर्षणार्थत्व-लिङ्गात्। एवं तपसोऽपि** वक्ष्यते। **अन्ततो यत्र न किञ्चिद्गमकं, तत्र दीक्षासमाख्यैव तथा, यमादिपरिग्रहानुकूल**पुरुषसंस्कारवाचित्वात्। **पुरुषस्य च क्रतूपयोगित्वं कर्तृतया, क्रतुजन्यफलभोक्तृतया वा।**

**तदिह संस्काराः किं कर्तृत्वांशोपयोगिनः, उत भोक्तृत्वांशोपयोगिनः इति चिन्तायां भोक्तृत्वार्थत्वे समप्राधान्यापत्तेः प्रकरणावगतक्रतुसम्बन्धबाधापत्तिः। अतः कर्तृत्वार्थाः। दन्तधावनादीनां शरीरसंस्कारार्थत्वात्तस्य च परलोकभोग्यफलभोक्तृत्वेऽनुपयोगादपि तथात्वम्। अतश्च कर्तुरङ्गप्रधानार्थत्वात्संस्काराणामपि तथात्वमिति प्राप्ते—**

---

फले सत्येव तद्भवतीति तद्बलादञ्जनादीनां क्रतुयुक्तपुरुषसंस्कारार्थत्वं भवेत्। किन्तु फलस्यात्म-गामित्वनियमाभावेऽपि केवलं छान्दसमिति तयोर्न तत्संस्कारार्थत्वसिद्धिरित्याशङ्कार्थः। **स्वरितेत्यादीति**। यदात्मनेपदं तदात्मगामिक्रियाफल एवेति नियमः। तच्च स्वरितेतो ङितश्चैव भवतीत्येतदंशे परमनुशासनमनित्यमन्यत्रापि तदभावे वेदे प्रयोगदर्शनात्। अतोऽ-त्राप्यात्मनेपदबलादेव युक्तं तत्संस्कारकत्वमित्यर्थः। **द्वितीययापीति**। देहाद्वियुक्तानां नख-केशश्मश्रूणामनुपयुक्तत्वेन संस्कार्यत्वानुपपत्तेः तत्रत्यद्वितीयायास्सक्तुन्यायेन करणत्वलक्षकत्वस्य षष्ठे वक्ष्यमाणत्वात् न तत्र तत्संस्कारद्वारा पुरुषसंस्कारत्वं सिद्ध्यतीति तत्र केवलमात्मनेपदमेव तत्साधकं नतु द्वितीयापीति वैषम्यमपिनोक्तं। दन्तादीनां तु शरीरसंबद्धानां संस्कार्यत्वस्य फल-भोक्तृजीवावच्छेदकतया उपयोगेन संभवात् तस्य स्वावच्छेद्यजीवव्यक्तिगतत्वेनैवोपपत्तेः तयापि जीव-संस्कारार्थसिद्धिरित्यर्थः। यथा च केशश्मश्रुनखानामपि सम्भवत्येव संस्कार्यत्वमिति न तत्र द्विती-यया तृतीयार्थलक्षणा तथा षष्ठे उपपादयिष्यते। **षष्ठ्येति**। यद्यपि बार्हद्गिरादिवाक्य इव ब्राह्मणस्येति षष्ठी निमित्तत्वपरापि संभाव्यते, तथापि अपेक्षितोद्देश्यपरत्वे संभवति अनपेक्षितनिमित्त-परत्वकल्पनस्यायुक्तत्वात् रागतस्तृप्त्यर्थत्वेन प्राप्ताशने ब्राह्मणसम्बन्धिनि यत्किञ्चिदनियतोपाया-क्षेपप्रतिबन्धेन पयोव्रतनियमविधिबलाच्च तस्यैव संस्कार्यत्वमित्यर्थः। **वक्ष्यत इति**। "द्व्यहं नाश्नाति" "त्र्यहं नाश्नाति" इति विहितद्वित्रिदिनानशनरूपतपसो दुःखरूपस्य यागफलोत्पत्ति-प्रतिबन्धापनयनद्वारा यागफलसिद्ध्यर्थस्य सामर्थ्यादेव तद्भोक्तृसंस्कारार्थत्वमिति **तपश्च फलसिद्धि-त्वाल्लोकवदित्यधिकरणे** अग्रिमपादे वक्ष्यत इत्यर्थः। **पुरुषसंस्कारवाचित्वादिति**। स च दीक्षणीयाजन्यो योग्यतारूपः। यथा च यमनियमपरिग्रह एव न दीक्षा तथोपपादयिष्यते पञ्चमे। **समप्राधान्यापत्तेरिति**। भोक्तृत्वं हि प्रधानफलं, यदि प्रधानफलार्थास्संस्कारास्तदा प्रधान-

**कर्तृत्वस्य** शरीरादिवदेव **संस्कारव्यतिरेकेणापि जायमानत्वाद्वैयर्थ्याद्दृष्टरूपभोक्तृत्वार्थत्वमेव युक्तम्। भोक्तृत्वस्य कर्तृत्वापेक्षयाऽभ्यर्हितत्वाच्चैवम्। शरीरादीनामपि स्वावच्छेद्यजीवव्यक्तिगतत्वसम्बन्धेन भोक्तृत्वोपयोगित्वमव्याहतम्। न चैवं प्राधान्यापत्तिः,** क्षेत्रसंस्काराणां **बीजावपनार्थत्वस्येवात्मसंस्काराणामपि क्रतुजन्यफलाधानयोग्यताजननार्थानां क्रत्वङ्गत्वोपपत्तेः। अत एव सर्वैरेव संस्कारैस्स्वस्वावान्तरादृष्टद्वारा समुच्चित्य सा जन्यते। प्रधानफलमेव वाऽऽत्मन्युत्पद्यते इति तदर्था एव संस्काराः, नाङ्गार्थाः, तत्फलस्य क्रतुगामित्वात्। यत्र तु दृष्टविधया वचनादेव वा कर्तृत्वोपयोगित्वं यथा प्राथमिकशुध्यर्थस्नानाचमनादौ, "हिरण्यमालिनः प्रचरन्ति" इत्यादौ च, बहुवचनात्तत्र कर्तृत्व एवोपयोगादङ्गप्रधानार्थत्वम्। अत एव** तादृशस्थलेऽङ्गविकृतिषु **तस्यातिदेशः॥ २॥**

---

## (३)–चिकीर्षया च संयोगात्॥ ७॥

**सोमे** षट्त्रिंशत्प्रक्रमादि**परिमाणां वेदिं** विधाय **श्रुतं "इयति शक्ष्यामहेऽस्यां कर्तुं" इति।**

---

तुल्यत्वापत्तेः प्रकरणावगतप्रधानार्थत्वबाधापत्तिरित्यर्थः। **शरीरादिवदेवेति।** यथा शरीरस्य फलभोक्तृत्वेऽनुपयोगात् न संस्कार्यत्वमिति त्वयोक्तं तद्वत् कर्तृत्वस्यापि तद्व्यतिरेकेण जायमानत्वात् न तत्रोपयोग इत्यर्थः। **क्षेत्रसंस्काराणामिति।** तथा क्षेत्रसंस्काराः क्षेत्राधिकरणबीजोत्पत्स्यमानाङ्कुराधानयोग्यताजनकास्सन्तो बीजावपनार्था न त्वङ्कुरार्थाः बीजस्यैव तदर्थत्वादेवमिहापि क्रत्वङ्गत्वोपपत्तिरित्यर्थः। **तादृशस्थल इति।** एतेनेह प्रकृतौ पक्षद्वयेपि वपनादेः सकृदनुष्ठानसाम्येपि पूर्वपक्षेऽग्नीषोमीयादिविकृतिष्वप्यग्नीषोमीयाङ्गत्वादतिदेशः। सिद्धान्ते तु न तत्र किंतु ज्योतिष्टोमविकृतिष्वेवेति प्रयोजनं व्यतिरेकोक्त्या सूचितम्

---

### ॥ चिकीर्षया च संयोगात्॥

**षट्त्रिंशत्प्रक्रमादीति।** षट्त्रिंशत्प्रक्रमा प्राची, चतुर्विंशतिः पुरस्तात्, त्रिंशज्जघनेनेति वाक्यविहितचतुर्विंशतिप्रक्रमत्रिंशत्प्रक्रमपरिमाणयोरादिपदेन संग्रहः। **अस्यार्थः।** दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो मण्डपोऽवस्थितः। ततः पूर्वस्यां दिशि सदोहविर्धानादीनां पर्याप्तो भूभागविशेषः सदः प्रभृतिभिस्सह सौमिकी वेदिरुच्यते। प्रक्रमः पादक्षेपः सा वेदिः प्राचीषट्त्रिंशत्प्रक्रमा कार्या। तस्याः पूर्वो भागो दक्षिणोत्तरं चतुर्विंशतिप्रक्रमः। पश्चाद्भागस्तु दक्षिणोत्तरं

**सा वेदिर्यद्यपि देशत्वादङ्गप्रधानार्थतया प्रसज्यते, तथाऽपि दीक्षा**दक्षिणन्यायेनो**क्तवचनात्प्रधानमात्रार्था। 'कर्तुं' इति हि तुमुना** इच्छार्थकेन **चिकीर्षितार्थत्वप्रतीतेः, प्रधानस्यैव चिकीर्षितत्वात्, अङ्गानां चाचिकीर्षितानामपि चिकीर्षितप्रधानार्थत्वेनैवानुष्ठानात्** प्रधानमात्रार्थैव **वेदिः ॥ ३ ॥**

**स्थितं तावदपर्यवसितं—**

---

## (४)—तथाऽभिधानेन ॥ ८ ॥ तद्युक्ते तु फलश्रुतिस्तस्मात्सर्वचिकीर्षा स्यात् ॥ ९ ॥ गुणाभिधानात्सर्वार्थमभिधानम् ॥ १० ॥

**दर्शपूर्णमासयोः "चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्यां" इति श्रुतम्।**

---

लिंशत्प्रक्रम इति। एतावत्स्थलात्मिकायां वेद्यां सोमयागङ्कर्तुं शक्ष्यामहे इति निश्चित्य तथैव कुर्यादितीयतीत्यस्यार्थः। **दीक्षादक्षिणन्यायेनेति।** अदूर एव वक्ष्यमाणेनेति शेषः। **इच्छार्थकेनेति।** इच्छार्थेषु तुमुनिति सूत्रविहितत्वादिच्छार्थकत्वम्। **प्रधानमात्रार्थैवेति।** अन्यथा प्रकरणादेव प्रधानमात्राङ्गत्वस्य प्राप्तस्य कर्तृप्रचारार्थत्वलिङ्गेन बाधादङ्गप्रधानार्थत्वसिद्धावेतद्वचनवैयर्थ्यापत्तिः। सति तु वचने लिङ्गेन बाधितस्य प्रतिप्रसवकरणात् प्रधानार्थत्वमेवेत्याशयः। किञ्च परिमाणस्य शक्तेश्चोपन्यासादपि प्रधानमात्रार्थत्वम्। अङ्गानां त्विष्टिपशूनां सदोहविर्धानादिमण्टपनिरपेक्षाणां यथोक्तपरिमाणमन्तरेणापि अनुष्ठातुं शक्यत्वात् तदुपन्यासवैयर्थ्यापत्तेः। सोमस्य तु अनुष्ठानं यथोक्तवेद्यामेव संभवति नान्यत्रेति स उपपद्यत इति। अत्र च **चिकीर्षया च** संयोगादित्येतदधिकरणपूर्वपक्षसूत्रगतस्य संयोगादिति पदस्याव्यवधानेनानुवृत्तिसौकर्यायेदं सिद्धान्ताप्रदर्शनेनापर्यवसितमेवावस्थाप्य उत्तराधिकरणपूर्वपक्षसूत्रमन्तरागर्भिणीन्यायेन लिखति।

---

**॥ तथाभिधानेन ॥**

**मन्त्राविति।** "पृथिवी होता द्यौरध्वर्युः रुद्रोऽग्नीत् बृहस्पतिरुपवक्ता" "अग्निर्होता अश्विनाध्वर्यू त्वष्टाग्नीत् मित्र उपवक्ता" इति चतुर्होतृपञ्चहोतृसंज्ञकाविमौ मन्त्रौ ज्ञेयौ। अनयोश्चतुर्होतृपञ्चहोतृत्वमेतन्मन्त्राभिमानित्वेनात्मभूः कश्चित्पुरुषः प्रजापतिना चतुर्वारं पञ्चवारमामन्त्रितःप्रत्युत्तरमुवाचेति स पुरुषश्चतुर्हूतः पञ्चहूतस्तदीयनाम्ना मन्त्रावपीमौ चतुर्होतृपञ्चहोतृसंज्ञकौ, तत्र पूज्यानां प्रत्यक्षनामग्रहणमयुक्तमित्यभिप्रायेण हूतशब्दस्थाने होतृशब्दः प्रयुज्यत इत्यर्थकात् 'आत्मन्

**तत्राप्येतौ** मन्त्रौ **पौर्णमास्यमावास्या**पदवाच्य**प्रधानमात्रसंयोगात्तद्धविरभिमर्शनार्थावेव ।** न ह्यत्र **पौर्णमास्यादिशब्दौ कालपरौ, तथात्वे द्वितीयया सप्तम्यर्थलक्षणापत्तेः,** "आसन्नानि **हवींष्यभिमृशति" इति प्राप्ताभिमर्शनानुवादेन मन्त्रकालोभयविधौ वाक्यभेदापत्तेश्च । काले निमित्ते अभिमर्शनोद्देशेन मन्त्रविधौ प्रतिपदादिकालीनाभिमर्शने मन्त्रानापत्तेश्च । पौर्णमास्यमावास्यापदाभ्यां** पौर्णमास्यादि**प्रयोगस्याधिकरणत्वविधौ चोभयत्र प्रातिपदिके प्रत्यये च लक्षणाप्रसङ्गो वाक्यभेदश्च तदवस्थ एव । प्रयोगस्य निमित्तत्वाङ्गीकारे च**

---

आत्मन्नित्यामन्त्रयत तस्मै चतुर्थं हूतः प्रत्यशृणोत्" इत्यादितैत्तिरीयब्राह्मणार्थवादादवगन्तव्यम् । **पदवाच्येति ।** पदद्वयस्य शक्त्या कालपरत्वेऽपि कर्मणि निरूढलक्षणायाः शक्तितुल्यत्वमभिप्रेत्य वाच्यत्वोक्तिर्न विरुद्धयते । एतेन **फलसंयोगात्तु स्वामियुक्तं प्रधानस्येति** प्रपूर्वाधिकरणसूत्रगतप्रधानस्येति पदानुषङ्गमभिप्रेत्य प्रधानमात्रवाचकपौर्णमास्यमावास्याभिधानेन संयोगादित्येवं सूत्रं व्याख्यातम् । तेन प्रधानेनेति क्वचित्सौत्रः पाठो धृतः स भाष्यवार्तिकादिषु अदर्शनादुपेक्ष्य इति ज्ञेयम् । **तद्धविरिति ।** हविः पदानुपादानेपि हविर्मात्राभिमर्शनार्थत्वं कथं चित्सिद्धान्ते आवश्यकमेव । तत्रैव प्रधानसंयोगात् प्रधानहविरभिमर्शनार्थत्वमेव युक्तमित्यर्थः । अत्र सिद्धान्ते वार्तिककृता पौर्णमास्यमावास्यापदयोः कालपरत्वमथवा कर्मपरत्वं वाङ्गीकृत्य साक्षात्प्रयोगद्वारेण चाधिकरणत्वेनैव तदर्थयोरन्वयात् यथाप्राप्तहविरभिमर्शने मन्त्रयोर्व्यवस्थया विनियोग इति सिद्धान्तितम् । तत्र कालपरत्वमुक्तमनूद्य दूषयति—**न ह्यत्रेति । अयमर्थः ।** न तावत् सर्वत्रैव काले मुख्यत्वात् तत्पदद्वयेन कालस्यैव ग्रहणं सिद्धान्तिनोऽपि, बहुशः स्थलेषु तात्पर्यग्राहकसत्वे निरूढलक्षणासिद्धार्थस्यैव ग्रहणात् । अत एव पूर्वेद्युः कालविशिष्टवेदिकरणविधौ सप्तमीसत्वेपि **न** कालपरममावास्यापदं, किन्तु कर्मपरमेव । एवं चेहापि द्वितीयायास्तात्पर्यग्राहकत्वात् कर्मपरत्वमेव युक्तम् । अत एव न वार्त्रघ्नीवृधन्वतीमन्त्रयोरिवात्र कालकृता व्यवस्था, न चोपक्रमगतप्रातिपदिकमुख्यार्थत्वलाभायान्त्ये प्रत्यय एव लक्षणाश्रयणं युक्तं, अत एव कर्मपरत्वमङ्गीकृत्य प्रयोगद्वाराऽधिकरणत्वं **वार्तिके शास्त्रदीपिकायां** च यदुक्तं तत् कर्मवाचित्वेनापीह सिद्धान्त उपपादयितुं शक्यत इत्यभिप्रायेणेति **प्रकाराकारोक्तं** युक्तमिति वाच्यम् । प्रत्यये लक्षणायां सर्वथा जहत्स्वार्थलक्षणापत्तेः आनर्थक्यप्रतिहतन्यायेन तदपेक्षया प्रातिपदिक एवाजहत्स्वार्थनिरूढलक्षणाङ्गीकारस्य युक्तत्वात् । अत्रैव दूषणान्तरमाह—**आसन्नानीति ।** प्रयोगद्वारेणाधिकरणत्वपक्षं द्वितीयं दूषयति—**पौर्णमास्यादीति ।** अतो लक्षणया कर्मपरस्यापि तत्पदद्वयस्य पुनः स्वप्रयोगलक्षणा, द्वितीयायाश्च सप्तम्यर्थलक्षणेति लक्षणाद्वयांगीकारापेक्षया स्वसम्बन्धिहविर्लक्षणाया एकस्या एव

**लक्षणाद्वयप्रसङ्गो विकृतावप्राप्त्यापत्तिश्च ।** अतो लाघवात्प्रातिपदिकेनैव **पौर्णमास्यादिप्रधानमात्रसम्बन्धिहविर्लक्षणात्तदुद्देशेनैव मन्त्रविशिष्टमभिमर्शनं** विनियुज्यते, मन्त्रमात्रं **वा तदुद्देशेन विधीयते, अभिमर्शनं तु प्रकरणप्राप्तानुवादः । उत्पत्तिवाक्ये च हविश्शब्देन प्रधानमात्रहविरुपादानं उपसंहारविषया न विरुध्यते, अतः प्रधानमात्रार्थौ मन्त्रौ ॥**

**स्थितादुत्तरं—यद्यपि चिकीर्षितार्था वेदिः, तथाऽपि साङ्गस्यैव फलसामग्रीत्वेन चिकीर्षितत्वादङ्गप्रधानार्थैव सा । वस्तुतस्तु—देशत्वात्तस्याः प्रकरणादेवाङ्गप्रधानार्थत्वसिद्धेरर्थवाद एवायं 'इयति शक्ष्यामहे' इति ।** अत एव **'शक्ष्यामहे' इति वचनात्**

---

स्वीकारे लाघवमभिप्रेत्य स्वाभिमतं वाक्यार्थं दर्शयति—**अतो लाघवादिति । प्रातिपदिकेनैवेति ।** द्वितीयानुरोधेन कालपरत्वाभावे निश्चिते कर्मणोऽप्यभिमर्शनकर्मत्वानुपपत्तिर्यावता विना नोपशाम्यति तावदगत्या लक्षणीयमेवेत्यर्थः । **विनियुज्यत इति । एतेनाभिमर्शनविनियोजकत्वे** मन्त्रस्याभिमर्शनस्य च प्रधानहविरुद्देशेन विधाने **चित्राधिकरणन्यायेन** वाक्यभेदापत्त्युद्भावनं प्रकाशकारा**णामपास्तम् ।** आसन्नवाक्यविहिताभिमर्शनभावनाया एवेह विनियोगकरणात् तस्यां च चतुर्होत्रादीनां करणत्वेनैवान्वयव्युत्पत्तेः तद्विशिष्टाभिमर्शनभावनायाः प्राप्ताया अपि प्रधानहविःसम्बन्धार्थं विधाने तदप्रसक्तेः । प्रत्युत भवदुपपादितसिद्धान्तपक्ष एव पूर्वोक्तविधया तदापत्तेरनिवार्यत्वमिति **विनियुज्यत** इत्यनेन सूचितम् । गुणकामाधिकरणन्यायेन वा वाक्यभेदापत्तिं परिहरति—**मन्त्रमात्रमिति ।** तथाचाभिमर्शनाश्रितं मन्त्रकरणत्वं तद्विशिष्टो मंत्रो वा प्रधानहविरुद्देशेन विधीयत इति न वाक्यभेद इत्यर्थः ।

### स्थितादुत्तरम्

अत्र **प्रकाशकारैः** देशत्वेन वेदेः लिंगादिव विशेषतश्चास्या वेदेः कर्तृप्रचारार्थत्वात् सांगप्रधानार्थत्वं; न च वाक्यवैयर्थ्यं, तस्य वेदिपरिमाणस्तावकतया अर्थवादत्वादित्युक्तं तद्दूषयति—**अत एवेति ।** एतद्वाक्याभावेऽस्याः कर्तृप्रचारार्थत्वे प्रमाणाभावात् कर्तुं शक्ष्यामह इत्येतद्बलादेव तदर्थत्वस्वीकारे तस्य स्तावकत्वोक्त्यनुपपत्तेः उक्तं कर्तृप्रचारार्थत्वेनाङ्गप्रधानार्थत्वमपास्तमित्यर्थः । नन्वत्र सौमिक्या वेदेः अङ्गप्रधानार्थत्वे सिद्धान्तिते सति सोमाङ्गभूतदीक्षणीयादिषु औपदेशिकतया प्राकृतदार्शपूर्णमासिकवेदिबाधकत्वादेव प्राकृतवेदेरप्रसक्तौ कथं सौमिकी वेदिस्तत्र न प्रसज्यते । किन्तु प्राकृत्येवेति पूर्वपक्षं कृत्वा प्रसज्यत इति सिद्धान्तकरणं नाना**र्थत्वात् सोमदर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यादिति** द्वादशाध्यायगता संगच्छते । सिद्धान्ते

**कर्तृप्रचारमात्रार्थत्वमङ्गीकृत्याङ्गप्रधानार्थत्वमप्यपास्तम्। अतस्सर्वार्थाया वेदेः अग्नीषोमीयादौ प्राकृतहविरासादनार्थवेदिबाधकत्वं, तद्विकृतौ चातिदेशस्सिद्धो भवति। यत्तु द्वादशे प्राकृतवेदेः प्रसङ्ग इति वक्ष्यते, तत्** कर्तृप्रचारमात्रार्थत्वं कृत्वाचिन्तया ॥

**द्वितीयस्योत्तरं**—सत्यं **पौर्णमास्यादिशब्दाभ्यां प्रधानसम्बन्धिहविर्लक्षणा, तथाऽपि सम्बन्धो नाङ्गत्वाख्यः, तथात्वे वाक्यसङ्कोचापत्तेः अपि तु उपकारकत्वाख्य इत्यङ्गप्रधानार्थावेव मन्त्रौ ॥**

---

## (५)—दीक्षादक्षिणं तु वचनात् प्रधानस्य ॥ ११ ॥ निवृत्तिदर्शनाच्च

**ज्योतिष्टोमे दीक्षा "दण्डेन यजमानं दीक्षयति" इत्यादिका, दक्षिणा च "गौश्चाश्वश्च इत्यादिका, श्रुता। सा अङ्गप्रधानार्था। दीक्षायास्तावत् द्वितीयया पुरुषसंस्कारिकाया वपनाधिकरणन्यायेन फलिसंस्कारकत्वप्रसक्तावपि "यो दीक्षितो यदग्नीषोमीयं पशुमाल-**

---

अङ्गत्वादेव तन्त्रत्वोपपत्तेः प्रसङ्गासम्भवादित्याशङ्कां परिहरति—**यत्त्विति। कृत्वाचिन्तयेति।** इह वेदेरङ्गप्रधानार्थत्वं यदुक्तं तद्धविरासादनादिकार्यद्वारैव। यदा तु वाक्यशेषबलात् कर्तृप्रचारार्थत्वमेव स्वीक्रियते तदा प्राकृतवैकृत्योः भिन्नकार्यत्वात् प्रसङ्गानुपपत्त्या पृथक् प्राकृतीति पूर्वपक्षं कृत्वा कर्तृप्रचारार्थत्वेपि प्रसङ्गसिद्ध्या न प्राकृतीति सिद्धान्तकरणं कृत्वाचिन्तयेत्यर्थः।

**द्वितीयस्योत्तरं**

अत्र **वार्तिककृता** कालपरत्वमाश्रित्य साक्षादधिकरणत्वेन कर्मपरत्वेपि वा प्रयोगद्वाराऽधिकरणत्वेनान्वयं पौर्णमास्यमावास्यापदार्थयोराश्रित्य सिद्धान्तं कृत्वा पुनरप्यन्ते अथापि पौर्णमास्यादिशब्देन हविर्लक्ष्यते, तथापि तदुपकारित्वमात्रलक्षणात् सर्वार्थत्वसिद्धिरित्युक्तम्। तदेतद्वार्तिकोक्तपक्षत्रयमध्ये चरमत्वेनान्त्यस्यैव हविर्लक्षणापक्षस्य मुख्यत्वं **शाखायां तत्प्रधानत्वादि**त्यधिकरणे

वेदेष्यभिमृशेत्पौर्णमासीमित्यत्र लक्षणा। पौर्णमासीप्रातिपादिके द्वितीयेष्टा यथाश्रुता॥

इति **तन्त्रसारे न्यायसुधाकृता** सूचितमपि **प्रकाशकरै**र्मुख्यार्थलोभेन कालपरत्वपक्षस्य मुख्यत्वमङ्गीकृत्य दूषितं तत्पूर्वोक्तयुक्तिभिः कालपरत्वप्रयोगपरत्वपक्षयोरेवायुक्तत्वात् हविर्लक्षणापक्षस्यैव मुख्यत्वादयुक्तमिति **सत्यमिति पदेन** सूचयन् हविर्लक्षणामंगीकृत्यैव सिद्धान्तमाह—**सत्यमिति।**

---

**भते" "दीक्षितस्सोमं क्रीणाति" इत्यादौ दीक्षितग्रहणात् "**निर्मन्थ्येने**ष्टकाः पचन्ति" इत्यादिवद्विशेषणीभूतदीक्षाया अपि कर्तृसंस्कारद्वारा अग्नीषोमीयाद्यर्थत्वप्रतीतेः,** तस्य च **स्वतन्त्रविध्युन्नायकत्वे गौरवादनुवादविधया "दण्डेन दीक्षयति" इत्यादौ "हिरण्यमालिनः" इति बहुवचनवत् कर्तृसंस्कारकतातात्पर्यग्राहकत्वावगतेः कर्तुरङ्गप्रधानार्थत्वेन दीक्षाया अप्यङ्गप्रधानार्थत्वम्। दक्षिणायास्तु कर्त्रानमनद्वाराऽङ्गप्रधानार्थत्वं स्फुटमेव। एवं च "दीक्षा सोमस्य," "दक्षिणा सोमस्य" इति वचनद्वयं साक्षात्परम्परासारणसम्बन्धसामान्यमादायानुवादः, इतरथा परिसङ्ख्यापत्तेरिति प्राप्ते—**

---

## ॥ दीक्षादक्षिणम् ॥

**निर्मन्थ्येनेति।** निर्मन्थ्यादिशब्दस्य क्रियानिमित्तत्वात् मन्थनक्रियाविधानं विना तद्विशिष्टस्याग्नेरिष्टकाङ्गत्वानुपपत्तेस्तदर्थमन्थनक्रियाया अपि अग्निद्वारा इष्टकापाकाङ्गत्वं कल्पितविशेषणविधिना स्वीक्रियते। तथैव दीक्षितपदस्यापि क्रियानिमित्तत्वाद्विशेषणीभूतदीक्षाया अपि विधानात् अग्नीषोमीयाद्यङ्गत्वमुपपन्नमित्यर्थः। अत्र मथनस्य विनियोजकवाक्यकल्पनावदिहापि दीक्षाविनियोजकवाक्यकल्पना **प्रकाशकारादिभिः** दर्शिता, सा अयुक्ता। तथात्वे अग्नीषोमीयक्रयमात्राङ्गत्वस्यैवापत्तेः वाक्यान्तरकल्पने गौरवाच्चेत्यभिप्रेत्यास्यानुवादस्य तात्पर्यग्राहकमात्रत्वकल्पनेन सर्वाङ्गार्थत्वमुपपादयति—**तस्य चेति।** तथा च सत्यपि यजमानपदश्रवणे तात्पर्यग्राहकबलात् यजमानगतकर्तृत्वांशपातित्वं न तु भोक्तृत्वांशपातित्वमिति कर्तृसंस्कारद्वाराऽङ्गप्रधानार्थत्वमित्यर्थः। **एतेन फलसंयोगात्तु स्वामियुक्तं** प्रधानस्येति न्यायात् प्रधानार्थता, दीक्षितविनियोगाच्चाङ्गार्थतापि प्राप्तेत्येवं कथंचित्तत्र चान्यत्र च प्राप्तिमादाय दीक्षावाक्यस्य यत्पूर्वपक्षे स्थित्वा सिद्धान्तिनं प्रति **न्यायसुधाकृतः** परिसङ्ख्यात्वापत्त्यापादनं, यच्च प्रकरणात्प्रधानार्थत्वस्य प्राप्तस्य क्रयाद्यङ्गताबोधकवाक्येन बाधादेव तत्र चान्यत्र चाप्राप्तत्वेनायुक्तं परिसङ्ख्यात्वापादनमिति **न्यायसुधोक्तं** प्रदूष्य, वाक्येन प्राप्ताङ्गाङ्गता सोमस्येति षष्ठीश्रुत्या बाध्यत इति प्रतिप्रसवविधित्वेन सिद्धान्तकरणं **प्रकाशकाराणां तदुभयमपि** पूर्वोक्तरीत्या दीक्षयतीत्युत्पत्तिवाक्य एव समतयाऽङ्गप्रधानार्थत्वावगतावुभयत्र प्राप्तेः सम्भवात् अङ्गार्थत्वप्रधानार्थत्वयोः प्राबल्यदौर्बल्याभावेन प्रधानार्थत्वबाधाप्रसक्तेः दीक्षावाक्यस्य तद्बाधकत्वायोगाच्च वृथाश्रममात्रमिति सूचितम्। यत्तात्पर्यग्राहकबलाद्दीक्षायाः कर्तृसंस्कारार्थत्वेनाङ्गप्रधानार्थत्वमुच्यते तस्य न तात्पर्यग्राहकत्वमित्यग्रे वक्ष्यते। अङ्गीकृत्यापि तु तद्वचनेन बाध्यतेऽन्यथा वैयर्थ्यापत्तेरित्यभिप्रेत्य

वचनानर्थक्यभिया **प्रधानमात्रार्थत्वम्। फलतः परिसङ्ख्यात्वाच्च न त्रैदोष्यापत्तिः। न च वचनस्य प्रधानप्रयुक्तत्वमात्रपरत्वेनाप्युपपत्तेरङ्गाङ्गत्वनिवृत्तिपरत्वे मानाभावः,** प्रसङ्गसिद्ध**कृतिकारकत्वादेर्निराकर्तुमशक्यतया वचनस्याङ्गोद्देश्यतामात्रनिवृत्तिफलकत्वाव-सायात्। तस्याश्च प्रयुक्तत्व इवाङ्गत्वेऽपि प्रविष्टत्वेनोभयनिवृत्त्युपपत्तेः।** प्रयुक्तत्वनिवृत्तौ **अङ्गत्वाङ्गीकारे फलाभावाच्च।** न च **दक्षिणावाक्ये परिसङ्ख्यार्थत्वोपपत्तावपि 'दण्डेन' इत्यादिवाक्येन दीक्षायाः प्रसक्तस्य प्रधानमात्रार्थत्वस्य "यो दीक्षितः" इत्यादिवाक्येन**

---

सिद्धान्तमाह—**वचनानर्थक्येति। फलत इति** यावद्दक्षिणाया आनत्यर्थत्वलिङ्गेन प्रयोगाङ्ग-कर्त्रर्थत्वं दीक्षायाश्च तात्पर्यग्राहकबलात् तदर्थत्वं कल्प्यते ततः पूर्वमेवानेन वचनद्वयेन सोमो-द्देशेन विनियोगे कृते फलतोऽङ्गार्थत्वनिवृत्तिरित्यर्थः। **प्रसङ्गसिद्धेति। अयमर्थः।** इदं हि वाक्यद्वयं अङ्गप्रधानार्थयोरपि दीक्षादक्षिणयोरङ्गाङ्गत्वनिरासार्थं न, किन्तु सोमप्रयुक्तत्वबोधन-द्वाराङ्गप्रयुक्तत्वनिवृत्तिपरमिति ह्युच्यते। न हि मन्मतेऽङ्गत्वस्य कृतिकारकत्वरूपस्य तव मते कृतिव्याप्यत्वरूपस्य प्रयोज्यत्वस्य वा सर्वथा निवृत्तिस्संभवति। अङ्गेषु प्रसङ्गेनोपकारजनकत्वेपि तयोस्सत्वेन तदसंभवाभावात्। अतस्त्वया परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपप्रयोज्यत्वान्तर्गतं यत्परोद्देश्यत्वं तदनेन वचनद्वयेन निवर्त्यत इत्येव वक्तव्यम्। तथा च यथैव कृतिव्याप्यत्वे विद्यमानेऽपि अङ्गोद्देश्यतापरिसङ्ख्यानात् अङ्गोद्देशप्रवृत्तकृतिव्याप्यत्वाभावेन तदप्रयोज्यत्वं सिद्ध्यति, तथैव कृतिकारकत्वे विद्यमानेऽपि अङ्गोद्देशप्रवृत्तकृतिकारकत्वाभावात् तदङ्गत्वनिवृत्तिरपि सिद्ध्यत्येवेति दूषणान्तरमप्याह— **प्रयुक्तत्वनिवृत्ताविति।** प्रकृतौ ह्यङ्गार्थत्वसाधनस्य न पूर्वपक्षे प्रयोजनविशेषो लभ्यते, प्रसङ्गेनैवोपकारकत्वात्। तद्भ्रेषे अङ्गभ्रेषप्रयुक्तप्रायश्चित्तस्यापि पृथगनुष्ठानाप्रसक्तेः। अत एवाग्नीषोमीयविकृतौ निरूढपश्वादौ वक्ष्यमाणमतिदेशप्रयोजनमपि न, तव मते तयोः प्रकृताग्नीषोमीयप्रयुक्तत्वाभावे तादर्थ्यमात्रेण तद्विकृतावतिदेशासम्भवात्। अत एवाष्टमे पश्वर्थगोदोहनादीनां तत्प्रयोगे तादर्थ्यसत्वेपि दर्शपूर्णमासप्रयुक्तत्वाभावेन विकृता-वनतिदेशः तथा दर्शादिसमुदायस्याप्यनतिदेशः साधयिष्यते। अतः प्रयुक्तत्वास्वीकारेऽङ्गत्व-मात्रस्वीकारे फलाभाव इत्यर्थः। **यस्तु प्रकाशकारैः** प्रधानार्थत्वेन प्राप्ताया दीक्षाया यागार्थता-बोधकवाक्येन बाधात् पुनः प्रधानार्थताबोधनेनापूर्वप्रतिप्रसवविधित्वानुपपत्तेः परिसंख्यात्वं, दीक्षावाक्यस्याप्राप्तविधित्वेऽपि न तेनाङ्गार्थत्वाविरोधेन प्रधानार्थत्वं बोध्यते प्रधानार्थत्वस्य श्रौतत्वेन बाधादिति सिद्धान्तितम्। तदनूद्य दूषयति—**नचेति। गौरवेणेति।** व्याख्यात-प्रायमेतत्। अतो यो दीक्षित इति सिद्धवदनुवादान्यथानुपपत्तिकल्प्येनाङ्गताबोधनात्

**दीक्षायास्तत्तदङ्गाङ्गताविधायकेन बाधितस्य प्रतिप्रसवार्थता "दीक्षा सोमस्य" इति वाक्यस्यास्त्विति वाच्यं** गौरवेणाग्नीषोमीयादिवाक्यस्य **दीक्षाविधायकत्वानुपपत्तेः। अतोऽनुवादविधयैव तद्बाधकत्वाद्युक्तमेव परिसङ्ख्यात्वम्। वस्तुतस्तु—गौरवभियैवानुवादविधयाऽपि न बाधकत्वं, अपितु प्रधानाङ्गभूतदीक्षायुक्तपुरुषानुवाद एव "य एवं विद्वान्" इतिवत्** दीक्षितपदम्। अतश्च दीक्षा**वाक्यस्यानुवादकत्वमेव दक्षिणाप्रशंसाफलकम्। अतः प्रधानमात्रार्थमेव दीक्षादक्षिणम्। तथाऽपि तु नाङ्गेषु प्राकृती अन्या वा दक्षिणा, प्रसङ्गेन कार्यसिद्धेर्द्वादशे वक्ष्यमाणत्वात्॥**

**प्रयोजनं—अग्नीषोमीयादिविकारेषु दीक्षादक्षिणयोरनतिदेशः** सिद्धान्ते। **ततश्च तेष्वपेक्षितत्वात्** शतोक्थ्यादिवत् **प्रकृतिप्रकृतितोऽन्वाहार्यदक्षिणायास्स्वतन्त्रातिदेशः, अर्थाक्षिप्तं यत्किञ्चिदानतिसाधनद्रव्यं वा दक्षिणेत्यपि तत्रैव वक्ष्यते॥ ५॥**

---

प्रधानार्थत्वं बाधितमित्यस्य प्रतिप्रसवत्वमाश्रयणीयम्। तदपेक्षया यावत् कल्प्येनाङ्गाङ्गत्वं बोधनीयं ततः पूर्वप्रवृत्त्या दक्षिणावत् प्रधानाङ्गत्वस्य बोधनात् फलतोऽङ्गाङ्गत्वनिवृत्तिरेव क्रियत इति न प्रतिप्रसवत्वम्। **यदि तु** पूर्वपक्षेऽङ्गार्थत्वाविरोधेन प्रधानार्थत्वप्रतिप्रसवविधित्वस्वीकारेऽपि सिद्धान्ते श्रौतेन विनियोगेन प्रधानार्थत्वबोधनात् वाक्यीयाङ्गार्थत्वबाधेनाप्राप्तविधित्वमेवाङ्गीकृतं नतु तदित्युच्येत तदाङ्गार्थत्वविधेर्निरवकाशतया विकल्पापत्तिः। अतस्तदर्थत्वबोधकप्रमाणप्रवृत्तेः पूर्वप्रवृत्त्यैव तद्बाधकत्वे वक्तव्ये 'इत्यश्वाभिधानीमादत्ते' इतिवदागतमेव परिसंख्यात्वमित्यर्थः। **दीक्षितपदमिति। एतेन** दीक्षितपदस्य कर्तृसंस्कारार्थत्वतात्पर्यग्राहकता उक्तापि परास्ता, यथा सिद्धानुवादत्वेनैवोपपत्तौ तात्पर्यग्राहकविधया स्वरसतः प्रतीयमानप्रधानार्थत्वस्य दीक्षायां बाधे गौरवाश्रयणापत्तेः। एतावता च दीक्षायामङ्गप्रधानार्थत्वविचारस्य वार्तिके एकदेशिमतत्वेन दर्शितस्यायुक्तत्वं प्रदर्श्य अधुना फलसंयोगात्तु स्वामियुक्तं प्रधानस्येत्यनेनैव गतार्थत्वात् दीक्षाणामनुदाहरणत्वमित्यधिकरणारंभे वार्तिककृता स्वमतत्वेन सूचितं, तदर्थतोऽनुसंन्धत्ते—**अतश्च दीक्षेति। द्वादशे इति।** भृतत्वात्त्वपरिक्रय इति द्वादशप्रथमपादाधिकरण इति शेषः। **सिद्धान्त इति।** यदप्येतद्व्यतिरेकेण निरूढपश्वादौ तदतिदेशः पूर्वपक्षे प्रयोजनं कैश्चिल्लिख्यते तदयुक्तं सोमार्थदक्षिणयैव पूर्वपक्षेपि अग्नीषोमीयादिषु प्रसङ्गसिद्धेरग्नीषोमीयभावनायां कथंभावाकाङ्क्षयाऽनन्विताया दक्षिणायास्सिद्धान्त इवानतिदेशस्यैव प्राप्तेः। अतः पूर्वपक्षे अन्यदेव किंचित् कथंचित्प्रयोजनं सुधीभिरूह्यमिति पूर्वपक्षप्रयोजनानुक्त्यैव पूज्यपादैस्सूचितम्। **शतोक्थ्यादिवदिति।** अष्टमे शतोक्थ्यादौ दशरात्रातिदेशे स्थिरीकृते तत्र दशरात्रान्तर्गताग्निष्टोमसंस्थाहर्विकारे शतोक्थ्येऽहनि उक्थ्यादीनां दशरात्रद्वितीयेहन्यभावे तत्तदति-

(६)—तथा यूपस्य वेदिः ॥ १३ ॥ देशमात्रं वाऽशिष्येणैकवाक्यत्वात्

दर्शपूर्णमासयोः "होतुरन्तर्वेद्येकः पादो भवति बहिर्वेद्येकः" इति श्रुतम्। तथा सोमे अग्नीषोमीययूपमानं प्रकृत्य "अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि" इति। तत्रान्तर्वेदिदेश एव तत्तदङ्गत्वेन विधीयते उत अन्तर्वेदिबहिर्वेदिशब्दलक्षितदेशविशेषो वा इति चिन्तायां —लक्षणायां प्रमाणाभावात् अन्तर्वेदिदेश एवैकपादोद्देशेन यूपार्धोद्देशेन च विधीयते, तद्विधौ पादार्धान्तरयोर्बहिर्वेदिदेशः प्राप्त एवानूद्यत इति प्राप्ते—

आद्योदाहरणे तावद्धविरासादनार्थाया दार्शिक्या वेदेरेकपादोद्देशेन विधौ एकत्वस्योद्देश्यविशेषणस्याविवक्षापत्तेः "बहिर्वेद्येकः" इत्यस्यानुवादायोगाद्विधाने वाक्यभेदापत्तेरगत्या देशविशेष एव लक्षणया होत्रवस्थानोद्देशेन विधीयते। न च देशविशेषलक्षणापेक्षया लाघवादन्तर्वेदित्वविशिष्टबहिर्वेदित्वमेव लक्षणया विधीयतामिति वाच्यं, विशेष्यविशेषणभावे विनिगमनाविरहात्।

द्वितीयोदाहरणेऽपि सौमिक्या वेदेर्देशत्वेनाङ्गप्रधानार्थत्वस्य स्थापितत्वात्, यूपार्धद्वयेऽपि वेदेः प्राप्तत्वादर्धोद्देशेन तद्विधाने परिसङ्ख्यापत्तिः। न चाग्नीषोमीयादि-

---

देशादप्राप्तावपि तत्प्रकृतिभूताग्निष्टोमादेव ग्रहणं साक्षात् प्रकृतावदृष्टमपेक्षितं मूलप्रकृतितो ग्राह्यमिति न्यायमनुसृत्य साधयिष्यते। तद्वदिहापीत्यर्थः। अन्वाहार्यदक्षिणाया इत्यस्याग्रे ग्रहणमिति शेषः।

---

॥ तथा यूपस्य वेदिः ॥

अत्र च भाष्यवार्तिकयोस्सूत्रस्वारस्येन सोमाङ्गभूताग्नीषोमीययूपमानं प्रकृत्य यद्यप्यर्धमन्तर्वेदि मिनोतीति वाक्यमेवोदाहृतं, तथाप्येकादशे भाष्यकृता कर्तृभेदस्तथेति चेदित्यधिकरणे वरुणप्रघासेषु विहारद्वये कर्तृतन्त्रत्वप्रतिपादनार्थे होतृतन्त्रत्वोपपत्त्यै दार्शपूर्णमासिके होतुरन्तर्वेद्येकः पाद इति वाक्येप्यसंस्कृतदेशविशेषलक्षणाया एतदधिकरणन्यायेनोक्तत्वात्, तदनुरोधेन सौत्रयूपपदस्य उपलक्षणार्थत्वमभिप्रेत्य दार्शपूर्णमासिकवाक्यमपि उदाहरति—दर्शपूर्णमासयोरिति। प्रायश्चैतदधिकरणं स्पष्टार्थं क्वचिदेव तु व्याख्यायते। यूपार्धोद्देशेनेति। यूपं स्थापयितुं कियद्विस्तारवानवटोऽपेक्षित इति जिज्ञासायां तन्निर्णयाय मूलस्य स्थौल्यमङ्गुल्यादिभिर्मातव्यं तस्य

रूपाङ्गाङ्गत्वेऽपि वेदेस्तदङ्गभूतयूपमानाङ्गत्वे प्रमाणाभावः, प्रयोगविधिना साङ्गानामेवाङ्गानां प्रयोगविधानात्। अन्यथा तदङ्गप्रयाजपशुपुरोडाशादिहविरासादनादौ वेद्यादेरनापत्तेः। न च वाक्येन वेदेर्यूपार्धाङ्गत्वेन विधानात् प्रकरणगम्यसर्वार्थत्वस्य बाधोपपत्तेः परिसङ्ख्यात्वानापत्तिः, षट्त्रिंशत्प्रक्रमपरिमाणार्थवादस्य "इयति शक्ष्यामहे" इत्यस्यार्धमात्रार्थत्वेऽनुपपद्यमानत्वेन सर्वार्थत्वबाधानुपपत्तेः। न चैवमपि फलतः परिसङ्ख्यात्वात्त्रैदोष्यानापत्तिः प्रापकप्रमाणप्रतिबन्धाभावेन शाब्दपरिसङ्ख्यात्वापत्त्या त्रैदोष्यावश्यकत्वात्। अतो वरं देशविशेषलक्षणैवैका। न चार्धोद्देशेन बहिर्वेदिमात्रविधानादर्धान्तरे च अन्तर्वेदेरेव प्राप्तत्वेनानुवादोपपत्तेर्न लक्षणाऽपीति वाच्यं, अनुवादवैयर्थ्यभियैव लक्षणाङ्गीकारात्, तत्राऽप्यन्तर्वेदिपद एव लक्षणाङ्गीकारे बहिर्वेदेरपि विधेयत्वेन वाक्यभेदापत्तेः "अर्धमन्तर्वेदि अर्धं बहिर्वेदि" इति पदैर्लक्षितदेशविशिष्टमानस्यैव यूपोद्देशेन विधानम्। तत्प्रयोजनं तु यूपैकादशिन्यां वेदेरविवृद्धिः। वस्तुतस्तु—देशविशेषलक्षणायामपि सामान्यतस्साङ्गे विहिताया वेदेरविरोधेनार्धप्राप्त्युपपत्तेः यूपैकादशिन्यामपि तदर्थं वेदिविवृद्धिरावश्यिकी, अत एव "यावद्यूपं वेदिमुद्धन्ति" इति कल्पसूत्रकारवचनमपि सङ्गच्छते। अतोऽन्यत्प्रयोजनं मृग्यम्। देशविशेषलक्षणैव वा नाङ्गीकर्तव्येति ध्येयम्॥ ६॥

---

मीयमानस्य यदर्धं तद्यूपार्धं तदुद्देशेनेत्यर्थः। प्रापकप्रमाणेति। प्रापकप्रमाणस्यापि क्लृप्तत्वेन प्रवृत्तिप्रतिबन्धासंभवात् कथञ्चित्कल्पने सर्वार्थत्वबोधकार्थवादानुपपत्तिरित्यर्थः। अविरोधेनेति। देशविशेषलक्षणापि अणुमात्रेण यथावेदेरेकदेशत्वमनुगृहीतं भवति तथैव तदविरोधेन स्वीकार्या तथैव याज्ञिकानामनुष्ठानादित्यर्थः। इतरथा पार्थसारथ्युक्त प्रकारेणासंस्कृतस्य लौकिकदेशविशेषस्य लक्षणापक्षे देशविशेषस्य वेदेरविरोधासंभवात्। यथाचैवं सति दक्षिणवैहारिकमारुतीयागे सत्यपि वेदिभेदे होत्रैक्यं तथा प्रसंगतः कार्यसिद्ध्युपपत्त्या साधयिष्यते एकादशे पूज्यपादैः। मृग्यमिति। तच्च निरूढपशौ पूर्वपक्षे यूपार्धमानांगत्वेन लौकिकवेदेरग्नीषोमीयार्थत्वात् तदतिदेशात्तत्रैव यूपमानम्। सिद्धान्ते देशविशेषस्यैवाङ्गत्वेन तदतिदेशात्तत्रैवेति प्रकाशकारोक्तं द्रष्टव्यम्। यदा तु वेद्यङ्गत्वाविरोधेनैव देशलक्षणा तदा तादृश एव देशविशेषे यूपमानं सिद्धान्ते पूर्वपक्षे च समानमिति याज्ञिकाचारानुरोधात् कल्पसूत्राच्च न देशविशेषे अपूर्वे जहत्स्वार्थलक्षणा किं तु पूर्वपक्ष एव युक्तः। अतएव "यदन्तर्वेदिमिनुयात् देवलोकमभिजयेत् यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य सन्धौ मिनोति उभयोर्लोकयोरभिजित्यै" इति तैत्तिरीयश्रुतौ वेद्यङ्गत्वाविरोधेन सन्धिदेशविधानं संगच्छत इत्यर्थः।

---

(७)—सामिधेनीस्तदन्वाहुरिति हविर्धानयोर्वचनात्सामिधेनीनाम् ॥ १५ ॥ देशमात्रं वा प्रत्यक्षं ह्यर्थकर्म सोमस्य ॥ १६ ॥ समाख्यानं तु तद्वत् ॥ १७ ॥

**सोमे "उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः" इति श्रुतम्।** यत् यत्र **दक्षिण-हविर्धानेऽभिषवः तत्राग्नीषोमीयादिसामिधेनीरनुब्रूयादित्यर्थः। तत्र हविर्धानशकटः सामिधेन्यङ्गं उत तल्लक्षितो देशविशेष इति चिन्तायां—पूर्ववत् परिसङ्ख्यावाक्यभेदाद्य-भावात् लक्षणापरिहाराय सोमधारणेन** कृतार्थस्यापि **हविर्धानस्यैव पुरोडाशकपालन्यायेन सामिधेन्यङ्गत्वमिति प्राप्ते—**

**हविर्धानस्या**त्यन्ताप्राप्तस्य **सामिधेन्यङ्गत्वेन विधावपूर्वविधित्वापत्तेः, प्रकृतित** आहव-**नीयप्रत्यग्देशस्यातिदेशप्राप्तस्यानियमेन दक्षिणोत्तरहविर्धानसमीपवर्तितया प्राप्तेर्दक्षिण-हविर्धानलक्षितदेशस्य नियमविधौ लाघवमिति तदनुरोधेन लक्षणाऽपि न दोषः।**

---

॥ **सामिधेनी स्तदन्वाहुरिति** ॥

हविर्धानमण्टपगतयोर्दक्षिणोत्तरभागयोः अवस्थितयोर्हविर्धाननामकशकटयोर्मध्ये यद्दक्षिणं शकटं तत् लुप्तसप्तम्यन्तयत्तच्छब्दाभ्यां सुन्वन्तीत्यन्वययोग्यमुच्यते इत्यभिप्रेत्य व्याचष्टे—**यद्यत्रेति**। उतशब्दोऽथशब्दार्थे। **कृतार्थस्येति**। दक्षिणं हविर्धानं प्रवर्तयन्तीनि विहितस्य हविर्धानस्य दक्षिणे हविर्धाने सोममासादयतीत्यनेन सोमधारणे विनियोगात् कृतार्थत्वम्। न च वैपरीत्यं तच्छब्दस्य प्रकृतपरामर्शित्वस्वाभाव्येन हविर्धानत्वेन विनियोगस्यैव नियामकत्वा-दित्यर्थः। **अत्यन्ताप्राप्तस्येति**। दर्शातिदेशतस्सामिधेन्यनुवचने आहवनीयप्रत्यग्देशस्य भूमिरूपस्येह उत्तरवेदेराहवनीयत्वेन तत्प्रत्यग्देशतया प्राप्तवपि हविर्धानत्वेन रूपेणाप्राप्तस्यैव विधित्वे अपूर्वविधित्वापत्तेः गौरवं तव मते। मम तु प्रत्यग्देशत्वेन सामिधेनीसंबन्धितया प्राप्त-स्यैव हविर्धानसमीपदेशस्य विशेषरूपेण दक्षिणहविर्धानप्रतियोगित्वमात्रं विधीयत इति लाघव-मित्यर्थः। एतावता च सामान्यतो विशेषतश्च हविर्धानस्य सामिधेनीसंबन्धः कल्प्यत इति गौरवम्। सिद्धान्ते तु विशेषत एवेति लाघवमित्युक्तम्। **वस्तुतस्तु** दक्षिणहविर्धानत्वेन विधावपूर्वविधित्वं, सिद्धान्ते तु देशैकदेशनियमनात् नियमविधित्वमिति **लाघवगौरवोपपादनमेव यथाश्रुतग्रन्थस्वारस्येन प्रदर्श्यते**।

**वस्तुतस्तु—लाघवस्य प्रमाणानुग्राहकत्वात् निषादस्थपत्यधिकरणन्यायेन औत्सर्गकालि-कत्वाच्च तदनुरोधेन लक्षणाऽनुपपत्तेः,** यत् यत्र देशे **सुन्वन्ति अभिषुण्वन्ति तत् तस्मिन् अभिषवदेशे सामिधेनीरनुब्रूयादित्यर्थावगमेन हविर्धानस्याप्रतीतेः अभिषवदेशस्यैव श्रौतत्वेन विधेयत्वात् न लक्षणाऽपि ॥**

**प्रयोजनं पूर्वपक्षे हविर्धानोपरि सामिधेनीपाठः। सिद्धान्ते अभिषवदेशे दक्षिण-हविर्धानसमीपे॥ ७ ॥**

---

यत्त्वत्र **प्रकाशकारैः** पूर्वपक्षेऽपि देशविधायकत्वात् नापूर्वविधित्वप्रसंगः। अत एव चतुर्थे **नियमार्था वा श्रुतिरित्यधिकरणे** द्रव्यदेशकालादिविधीनां प्राचीनप्रवणे वैश्वदेवेन यजेते-त्यादीनां वैकृतानामपि नियमविधित्वमुक्तम् इत्युक्तम्, **तदयुक्तम्** अतिदेशादन्तर्वेद्येकः पादो बहिर्वेद्यपर इति लक्षितदेशविशेषावच्छिन्नभूप्रदेशरूपस्यैव प्रत्यग्देशस्य नियमेन प्राप्तेः हविर्धान-सामान्यस्य समिधेन्यनुवचने प्राप्त्यभावस्य स्वयमेव पूर्वमुपपादितत्वेन पक्षे अप्राप्तस्य दक्षिणहवि-र्धानस्य पूर्वपक्षे नियमविध्यनुपपत्तेः। अतः **पूर्वपक्षे** शरन्यायेन अतिदेशप्रवृत्तेः पूर्वमेवानेन प्रत्यक्षविधिना देशविधानादर्थात् प्राकृतदेशस्य निवृत्तिरित्याश्रयितव्ये आपतितमेवापूर्वविधित्वम्। **सिद्धान्ते** तु प्रत्यग्देशत्वसामान्येन यावदुभयहविर्धानसमीदेशस्यानियतप्राप्तिः ततः पूर्वमेव **यवमयश्चरुर्भवतीत्यत्रेव** नियमकरणान्नियमः फलं लभ्यत इति लाघवम्। **यत्तु** चतुर्थे **वैकृतदेश-**विधीनां नियमार्थत्वमुक्तमित्युक्तम् तत् तन्त्ररत्नादिग्रन्थेषु प्राकृतद्रव्यदेशकालादिविधीनामेवो-दाहृतत्वेन स्वकपोलकल्पितमेवेत्युपेक्ष्यम्। एवं प्राचां रीत्याऽधिकरणविचारं समाप्याधुना पूर्वपक्ष-स्यानुत्थानादेव व्यर्थमेतद्विचारकरणमिति लक्षणाभावकृतलाघवप्रदर्शनव्याजेन सूचयति— **वस्तुतस्त्विति।** सुन्वन्तीतिपदसमभिव्याहारानुरोधेन यच्छब्दस्य हविर्धानसमीपदेशार्थ-त्वनिश्चयात् अभिषवसमानदेशत्वस्यैव प्रतीतेर्न हविर्धानस्याङ्गत्वप्राप्तिरित्यभिप्रेत्याह— **यद्यत्र देशे इति।** यत्तु अथाग्नीषोमीयेन चरन्ति उत्तरवेद्यामादण्डप्रदानात् इत्याश्वलायनसूत्र-मनुरुद्ध्य उत्तरहविर्धानशकटसमीपे सामिधेन्यनुवचनमनुतिष्ठन्ति **याज्ञिकाः** तन्निरासाय **दक्षिण-**हविर्धानसमीपे इत्युक्तम्। ततश्चाहत्यश्रुत्या अभिषवदेशस्यैव विधानात् सूत्रगतोत्तरवेदिगत-सप्तम्यास्सामीप्यार्थकत्वस्य त्वयाप्यवश्यवक्तव्यस्य ममाप्यक्षतेः तदयुक्तमित्याशयः।

---

(८)—शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्, तस्मात्स्वयं प्रयोगे स्यात् ॥ उत्सर्गे तु प्रधानत्वाच्छेषकारी प्रधानस्य तस्मादन्यः स्वयं वा स्यात् ॥ १९ ॥ अन्यो वा स्यात्परिक्रयाम्नानाद्विप्रतिषेधात्प्रत्यगात्मनि ॥ २० ॥

तदेवं पूर्वैस्सह प्रकरणस्थानयोर्विरोधाविरोधविचारे समाप्ते अधुना समाख्यायास्तं कर्तुं प्रथमं तावत् स्वाम्यतिरिक्तकर्तृसद्भावः प्रतिपाद्यते । अग्निहोत्रदर्शपूर्णमासज्योतिष्टो-

---

॥ शास्त्रफलं प्रयोक्तरि ॥

ते सर्वार्थाः प्रयुक्तत्वादित्यतः पूर्वं तद्विरोधचिन्तायाः अभावादितः प्रभृति करिष्यमाणस्य विचारस्यासङ्गतत्वं परिहर्तुमाह—तदेवमिति । तं कर्तुमिति । यदि होत्रादयो नाना कर्तारो विद्यन्ते ततस्ते क्व विनियुज्यन्तामिति विचारो युज्यते । यदातु सर्वमेव यजमानेनैव कर्तव्यं तदा तु न कर्त्रन्तराणामवकाश इति तत्तत्समाख्योत्थापितो विरोधविरोधविचारप्रस्तावो व्यर्थ एवेति तदुपोद्घाततया यजमानातिरिक्तकर्त्रन्तरसद्भावोऽत्र साध्यत इत्यर्थः । अग्निहोत्रेति । यद्यप्यग्निहोत्रप्रकरणे तदङ्गतया न दक्षिणाम्नानं, येन दक्षिणाम्नानादग्निहोत्रे दर्शपूर्णमासयोरिव उत्सर्गातिरिक्ते अन्य एव कर्तेति सिद्धान्तः साध्येत । अतएव भाष्योदाहृतमप्यग्निहोत्रवाक्यं वार्तिककृतानुदाहृत्य तत्र दर्शपूर्णमासादीनि फलदक्षिणावन्ति कर्माण्युदाहरणमित्युक्तम् । शास्त्रदीपिकायामपि तथा, तथाप्यहरहर्यजमानस्स्वयं अग्निहोत्रं जुहुयात् पर्वणि वा ब्रह्मचारी वा जुहुयात्, ब्रह्मणा हि स परिक्रीतो भवति । क्षीरहोता वा जुहुयात् । धनेन स परिक्रीतो भवति" इत्यापस्तंबसूत्रधृतबह्वृचब्राह्मणे तत्रापि दक्षिणाकार्यस्य परिक्रयस्यैवाहत्यविधानात् तद्बलेनान्यस्य कर्तृत्वं संभाव्यत एव ।

अत्र च वेदाध्यापनेन परिक्रीतो ब्रह्मचारी अथवा अग्निहोत्राधिकारसिद्ध्यनंतरं द्वादशदिनपर्यन्तं पयोहोमविधानात् यस्या गोः पयो हूयते सा गौरानत्यर्थमग्रे होमाय यस्मै दीयते स ऋत्विक्क्षीरहोता वा धनेन परिक्रीतो जुहुयादित्यर्थः । एतावांस्तु विशेषः दर्शपूर्णमासादिष्वन्य एव दक्षिणाम्नानात्, अग्निहोत्रे तु विकल्पेन परिक्रयस्याम्नानात् उत्सर्गातिरिक्ते यजमानस्यान्यस्य वा कर्तृत्वविकल्प इति प्राचीनग्रन्थदर्शितद्वितीयपूर्वपक्षेणैव सिद्धान्त इति । सर्वथा तु

**मादिषु** दक्षिणायुक्तेषु **कर्मसु** यद्यपि **तावत् "स्वर्गकामो यजेत" इति सामानाधिकरण्यात् साङ्गाया अपि यागादिकरणिकाया भावनायास्स्वर्गकामकर्तृकत्वं प्रतीयते, तथाऽपि कर्तृत्वस्य "स्वतन्त्रः कर्ता" "तत्प्रयोजको हेतुश्च" इति सूत्रद्वयानुरोधात् "षड्भिर्हलैः कर्षति" इति प्रयोगाच्च साक्षात्प्रयोजकसाधारण्यैनैवावगतेरसति प्रमाणान्तरे प्रयोजककर्तृत्वायोगेऽपि प्रकृते दक्षिणाम्नानादिना प्रयोजककर्तृत्वस्याप्यवगतेस्स्वाम्यतिरिक्तस्यापि कर्तृत्वम्। कर्मकरानतिसाधनवचनो हि दक्षिणाशब्दो नासत्सु कर्त्रन्तरेषूपपद्यते। न ह्यत्रास्ति किञ्चिद्बलवद्बाधकम्। येन "यदि पत्नीस्संयाजयन्** कपालमभिजुहुयात् **वैश्वानरं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा तं स द्वेष्याय दद्यात्" इत्यत्र द्वेष्यस्य ऋत्विक्प्रतिषेधादिवादृष्टार्थत्वं दक्षिणायाः कल्प्येत। सामानाधिकरण्यस्य प्रयोजककर्तृत्वेनाप्युपपत्तेः। आत्मनेपदस्यापि साक्षात्प्रयोजकसाधारण्येनाप्यकर्तरि फलप्रतिषेधकत्वेनैवोपपत्तौ न फल्यतिरिक्तस्य कर्तृत्वप्रतिषेधकत्वम्। अत एव "यजन्ति याजकाः" इति परस्मैपदप्रयोगः। तेन कस्यापि बाधकस्याभावान्न दक्षिणादानस्यादृष्टार्थत्वकल्पना, अतस्तद्बलात् "दर्शपूर्णमासयोश्चत्वार ऋत्विजः" इति वचनाद्धौत्रादिसमाख्यावरणाद्याम्नानबलाच्च स्वाम्यतिरिक्ता** अपि **कर्तारः**। न च स्वामिनोऽशक्तौ दक्षिणादिनाऽन्यो-

---

परिक्रयाम्नानात् अन्योऽप्यस्तीत्यर्थे न कोऽपि विवाद इत्याशयः। **दक्षिणायुक्तेष्विति** दक्षिणापदं परिक्रयमात्रोपलक्षणं ज्ञेयम्। **अत्र च प्राचीनैः** सूत्रद्वयेन उत्सर्गे अन्यत्रापि यजमानस्यैव कर्तृत्वमथवोत्सर्गे तस्यैव तत् तदतिरिक्ताङ्गेषु त्वनियम इति पूर्वपक्षद्वये कर्तव्ये आद्यपूर्वपक्षेहेतुद्वयं उपन्यस्तं आत्मनेपदं सामानधिकरण्यं च। तत्रात्मनेपदहेतोरग्निहोत्रोदाहरणाव्यापकत्वेनान्वाचययुक्तित्वात् सामानधिकरण्यहेतोरत्यन्तवैलक्षण्याभावाच्च तमुपेक्ष्य द्वितीयहेतुकमेव पूर्वपक्षमाशङ्काव्याजेन सूचयन् सिद्धान्तमेवोपपादयति—**यद्यपीति**। **कपालमभिजुहुयादिति**। गार्हपत्ये हविः श्रपणपक्षे पुरोडाशार्थासादितेषु कपालेषु यदि पत्नीसंयाजाहुतिः पतेदित्यर्थः। **अदृष्टार्थत्वमिति**। दशमद्वितीयपादे इदं वाक्यमुदाहृत्य वैश्वानरेष्टेः दर्शपूर्णमासप्रयोगान्तःपातित्वेन तदंगभूतायाः प्रधानदक्षिणयैवानतिसिद्धेः दक्षिणान्तरापेक्षाभावेऽपि वचनबलादेकहायनस्यापि परिक्रयार्थत्वमिति पूर्वपक्षं प्रापय्य ऋत्विगाचार्यौ नातिचरितव्याविति स्मृतेः ऋत्विजो द्वेष्यत्वायोगात् अनृत्विजे द्वेष्यायादृष्टार्थमिदं दानांतरम्। दक्षिणाशब्दश्चागत्या दानमात्रपर इति **द्वेष्ये चोदनात् दक्षिणापनयःस्यादित्यधिकरणे** बाधकसत्वे दक्षिणादानस्यादृष्टार्थत्वमुक्तं न तद्वदिह बाधकलेशोऽप्यस्तीत्यर्थः। द्वितीयं पूर्वपक्षमाशंक्य दूषयति—**न च स्वामिन इति**।

पादानं, दक्षिणादेर्नित्यवदाम्नानविरोधात्। अतः परकीयस्वत्वस्य परेणोत्स्रष्टुमशक्यत्वादुत्सर्गमात्रं स्वामिना कार्यम्। अन्यत्तु विशेषतः प्रमाणाभावेऽन्येनैवेति सिद्धम्॥ ८॥

---

(९)—तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषात्॥ २१॥ अपि वा श्रुतिभेदात्प्रति नामधेयं स्युः॥ २२॥ एकस्य कर्मभेदादिति चेत्॥ २३॥ नोत्पत्तौ हि॥ २४॥

ते कियन्त इत्यपेक्षायां तत्तत्कर्मण्यध्वर्य्वादिसंज्ञापुरस्कारेण तत्तत्कर्मविधानात् यावतां यत्र विधानं तावन्त एव तत्र ज्ञेयाः। अतश्चाग्निहोत्रे एक एवाध्वर्युः, दर्शपूर्णमासयोश्चत्वारः, चातुर्मास्येषु पञ्च, पशौ षट्, सोमे षड्विंशतिः। न च परिक्रयवशादेकोपादानावश्यंभावे तस्यैव पाचकलावकादिवत्तत्तत्कर्मकरणनिमित्तास्तावत्यस्संज्ञा भविष्यन्तीति वाच्यं संज्ञानां कर्मकरणात्पूर्वमेव "अध्वर्युं वृणीते" इत्यादिना प्रयुक्तत्वेन कर्मकरणनिमित्तकत्वाभावात्, अपि तु तत्तद्वरणनिमित्तकत्वं तत्तद्वरणजन्यतत्तदानतिनिमित्तकत्वं वा उक्तविधानलिजन्याध्यवसायविशेषनिमित्तकत्वं वा, कृतेऽपि वरणे अहमध्वर्युस्स्यां

---

॥ तत्रार्थात् कर्तृपरिमाणं स्यात्॥

कर्त्रन्तरे साधितेऽपि यावन्त इयन्त इति न साधितं न तावत्समाख्यायाः पूर्वैस्सह विरोधाविरोधविचारः प्रस्तोष्यमाणः प्रस्तोतुं शक्यत इति कर्त्रन्तरसाधनस्य तदुपोद्घातत्वसिद्ध्यर्थमेतद्विचारणीयमित्यपेक्षयाऽधिकरणमारभते—ते कियन्त इति। प्रत्यक्षवचनसत्वे पूर्वपक्षस्य सुनिरस्यताभिप्रायेण तमकुर्वन्नेव सिद्धान्तेनोपक्रमते—तत्तत्कर्मणीति। तान् पुरोऽध्वर्युर्विभजति प्रतिप्रस्थाता मन्थिनं जुहोति नेष्टा पत्नीमभ्युदानयति उन्नेता चमसानुन्नयति इत्यादि वाक्यैरध्वर्य्वादिसंज्ञापुरस्कारेण तत्तत्कर्मणि यावतां विधानं तावन्त इत्यर्थः। पञ्चेति। प्रतिप्रस्थातुराधिक्यादित्यर्थः। षडिति। प्रतिप्रस्थातृमैत्रावरुणयोराधिक्यादित्यर्थः। षड्विंशतिरिति। अध्वर्य्वादयः षोडश, चमसाध्वर्यवो दशेति षड्विंशतिरित्यर्थः। सदस्यस्य कर्मकर्तृत्वाभावेन स्वामिन एव सप्तदशत्वस्य वक्ष्यमाणत्वात् स्वाम्यतिरिक्तकर्तृत्वेन गणनायां षड्विंशतित्वमुक्तं नासङ्गतमिति ध्येयम्। अतो वरणेन ब्राह्मणं भावयेदिति यथाश्रुतार्थानुसारात् केवलवरणनिमित्तत्वम्। कृतेऽपि वरणे तस्यानत्यभावेऽध्वर्युत्वादिव्यवहाराभावात् वरणेनानतिमन्तं ब्राह्मणमिति वाक्यार्थानुसारात् वरणजन्यानतिनिमित्तकत्वं, अथवा

**इत्यध्यवसायाभावेऽध्वर्युशब्दाप्रयोगात्।** वस्तुतस्तु **अध्यवसायस्यापि निश्चयरूपस्य क्षणिकत्वात्**तज्जन्याभिमानविशेष **एव निमित्तं, तस्य च सत्रे स्वत एवानतत्वेन वरणाभावेऽपि इच्छात एव सत्त्वादध्वर्युत्वाद्युपपत्तिः। प्रकृतावपि "होता अवृतस्सामिधेनीरन्वाह" इति वरणात्पूर्वं होतृशब्दप्रयोगोपपत्तिः।** अत एव **वरणजन्यादृष्टवत्त्वमध्वर्युत्वादिकमिति प्राभाकरमतमपास्तम्। सत्रेऽपि** ऋतुयाज्यावरणवत् **वरणापत्तेश्च। न चैवमप्येकस्यैव तत्तदभिमानोपपत्तेः कर्तृभेदे प्रमाणाभावः "अध्वर्युं वृणीते" "ब्रह्माणं वृणीते" इति तत्तद्विधिविहितवरणानामभ्यासेन भिन्नानां संस्कार्यभेदं विनाऽनुपपत्तेः।** अप्रवृत्तस्य **पुरुषस्य प्रवर्तनफलकमभ्यर्थनं हि वरणं, न च तदेकस्मिन् पुरुषेऽनेकं सम्भवति। भिन्नानां च संस्कार्याणां तत्तत्क्रियासु भिन्नास्वेव विनियोगान्न विकल्पाशङ्का। "दर्शपूर्ण-**

---

वरणजन्यानतिजन्याध्यवसायविशेषनिमित्तत्वं वक्तव्यं, तत्र पक्षद्वयस्य तृतीयेनैव निरस्तत्वात् शास्त्रदीपिकायां सिद्धान्तपक्षत्वेन परिगृहीतं तृतीयपक्षमपि दूषयति—**वस्तुतस्त्विति। तज्जन्य इति।** तत्तत्क्रत्वंगपदार्थकर्तृत्वेन प्रयोगारंभे यो ब्रह्मत्वाद्यभिमानविशेषः स एव निमित्तं; स क्वचिदाम्नातैः वरणानतिसंकल्पैः भवति यथा प्रकृतौ, सत्रे तु तदनाम्नानात् स्वत एव। क्वचिदग्निहोत्रे परिक्रयादेव, नैतावता तस्य तन्निमित्तत्वव्याघात इत्यर्थः। **एतेनाध्यवसायजन्यादृष्टविशेष** एव ब्रह्मत्वादिनिमित्तं तस्य च प्रकृताविव सत्रेऽपि सत्वात् मुख्य एव तत्प्रयोग इति केषांचिद- **पास्तम्।** अध्यवसायस्याविहितत्वेनादृष्टजनकत्वे प्रमाणभावात्। अदृष्टपर्यन्तशक्तिकल्पने गौरवापत्तेश्च, मुख्यतया उभयत्र प्रयोगस्य पूर्वोक्तविधयोपपत्तेश्च, यत एव सत्रे मुख्यतया प्रयोगोपपत्त्या न गौरवमस्मन्मते, अत एवाध्यवसायस्याविहितत्वेनादृष्टाजनकत्वेऽपि वरणस्य विहितत्वेनादृष्टजनकत्वात् तज्जन्यादृष्टमेव तत्तन्निमित्तमित्यपि मतं निरस्तमित्याह—**अत एवेति। ऋतुयाज्यावरणवदिति।** सोमे ऋतुदेवत्यग्रहेषु याज्यार्थं पूर्वं वरणेनाननानामपि होतृकाणां पुनर्वरणमदृष्टार्थं विहितं तद्वदापत्तेः। ततश्च दशमद्वितीयपादे ज्योतिष्टोमातिदेशपरंपरया प्राप्तमृत्विग्वरणं सत्रे कर्तव्यं न वेति संशये प्रकृतौ वरणस्य ऋत्विक्त्वार्थत्वात्, चोदकानुग्रहाय यजमानेष्वपि ऋत्विक्त्वस्य ये यजमानास्ते ऋत्विज इति वचनेनाघ्रातव्यत्वात्, अलुप्तार्थकतया कर्तव्यमिति पूर्वपक्षिते प्रकृतौ वरणस्यानत्यर्थत्वेन दृष्टार्थत्वात् स्वत एवानतेषु दृष्टद्वारस्य लोपात् न कर्तव्यमिति, "वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात्" इत्यधिकरणे सिद्धान्तितं; तेन सह तव विरोधापत्तिरित्यर्थः। एकस्यैव तत्तदभिमाने वक्तव्ये विधिभेदेन भिन्नानां वरणानामेकस्मिन् समुच्चयो विकल्पो वा स्यात्, न त्वेतदुभयमपि संभवतीत्याह—**अप्रवृत्तस्येति। एवमिति।**

मासयोश्चत्वार ऋत्विजः" इत्याद्यनुवादबलादप्येवम्। एवं च "ऋत्विजो वृणीते" इत्ययमपि न वरणविधिः। तथात्वे ऋत्विज इति बहुत्वानुवादानुपपत्तेः, अपि तु ऋत्विक्संस्कारकवरणमात्रानुवादः ऋत्विग्धर्माणां तदुत्तरत्वप्राप्त्यर्थः तत्तद्धर्मविधानार्थश्च। अतो यावन्ति लौकिकानि मन्त्रवन्ति वा वरणानि तावन्तः कर्तार इति सिद्धम्।

---

## (१०)—चमसाध्वर्यवश्च तैर्व्यपदेशात् ॥ २५ ॥

अध्वर्य्वादिसंज्ञानां रूढत्वादस्तु भेदकत्वम्। चमसाध्वर्युसंज्ञायास्तु चमसेषु अध्वर्युरित्येवं यौगिकत्वादध्वर्युपुरुषादय एवैते इति प्राप्ते—

सत्यपि संज्ञाया यौगिकत्वे "चमसाध्वर्यून् वृणीते" इति पृथग्वरणाम्नानाद्वरितव्यानां चमसाध्वर्यूणां पूर्ववदेवान्यत्वम्। एवं "सदस्यं वृणीते" इति वचनात्सदस्यस्यापि।

---

न विकल्पशङ्केत्यर्थः। बहुत्वानुवादानुपपत्तेरिति। न ह्येतद्वरणविध्यभावे ये ऋत्विज इत्यनुवादस्संभवति। न्यायेन यजमानातिरिक्तस्यैकस्य द्वयोर्वाऽनुपपत्त्या प्राप्तत्वात्। ब्रह्मादिवरणादिविधिषु सिद्धवद्वरीतव्यविशेषोपादानलब्धप्रचयशिष्टऋत्विग्बहुत्वमादाय प्राप्त्युपपादनेन वरणान्तरविधौ तु गौरवापत्तेः। अन्ततो ब्रह्मवरणादिविधिपर्यालोचनाया आवश्यकत्वे तत्रैव विधित्वमङ्गीकृत्य तत्प्राप्तवरणानुवादत्वमेवास्य कल्पयितुं युक्तमित्यर्थः। ऋत्विग्धर्माणां हिरण्यमालित्वादीनाम्। मन्त्रवन्तीति। होतृब्रह्माध्वर्यूद्गातॄणामग्निर्होताऽसौ मानुष इत्यादिमन्त्रेण मन्त्रवन्ति वरणानि मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्रादीनां प्रतिप्रस्थाता मे भव इत्यादिलौकिक्या वाचा क्रियमाणानि लौकिकानीत्यर्थः।

---

॥ चमसाध्वर्यवश्च ॥

कर्मभेदाभेदचिन्तारूपोपोद्घातप्रसङ्गेन प्रासङ्गिकीमातिदेशिकीं चानन्तरसंगतिमभिप्रेत्य पूर्वपक्षमाह—आध्वर्यवेति। ब्रह्मादिसंज्ञानां परस्परवैलक्षण्येनासंभवन्निवेशित्वात् अस्तु भेदकत्वं, चमसाध्वर्युसमाख्यायास्तु अध्वर्युपुरुषेषु योगेन संभवात् न भेदकत्वम्। एवं सदसि भवस्सदस्य इत्यवयवयोगेन ब्रह्माद्यन्यतर एव सदस्य इति पूर्वपक्षाभिप्रायः। पूर्ववदेवेति। वृतेषु तेषु पुनर्वरणस्य समुच्चयविकल्पयोरसंभवादित्यर्थः। सदस्यस्यापीति। यद्यपि सिद्धान्तेऽपि सदस्यवरणमदृष्टार्थमेवेति ब्रह्माद्यन्यतमस्यापि पुनस्तददृष्टार्थं शक्यत एव कर्तुं अतो वरणा-

एवं च " मध्यतःकारिणां चमसाध्वर्यवः" "होतृकाणां चमसाध्वर्यवः" इति ऋत्विक्सम्बन्धव्यपदेशोऽपि भेद एवोपपद्यते ॥ १० ॥

---

## (११)—उत्पत्तौ तु बहुश्रुतेः ॥ २६ ॥

ते चमसाध्वर्यवो वरणवाक्ये बहुत्वश्रुतेर्बहवः। यद्यपि तत्रोद्देश्यविशेषणत्वाद्बहुत्वाविवक्षा, तथाऽपि " स्वाध्यायोऽध्येतव्यः " इतिवत् संस्कारविध्यन्यथाऽनुपपत्त्या विनि-

---

निवेशात् न तद्भेदस्तथापि सदस्यपदस्य रूढत्वादेवानिविशमानसंज्ञात्वं ज्ञेयमिति भावः। मध्यतःकारिणामिति। मध्यतःकारिणां चमसाध्वर्यवो होतृकाणां चमसाध्वर्यव इति प्रैषमन्त्रे होतृब्रह्मोद्गातृयजमानानां मध्यतः कारिसंज्ञानां तथा प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां होतृकसंज्ञानाञ्च ऋत्विजां संबन्धस्य चमसाध्वर्युषु षष्ठ्या अवगतेस्तद्व्यपदेशादपि वृतेभ्यो होत्रादिभ्यो दशभ्योऽन्य एव ते सिद्ध्यन्तीत्यर्थः। यद्यप्यत्र षष्ठ्या तेषां संबन्धेऽवगते ऋत्विजस्तेषां स्वामिनः न यजमानः। यजमानपुरुषेभ्यश्चैतेऽन्य इति नः प्रतिज्ञानं न यजमानेन चमसाध्वर्यवं कर्तुं वरीतव्याः ऋत्विग्भिस्ते वरितव्या इति भाष्यग्रन्थात् ऋत्विजां स्वामित्वाख्यसंबन्धप्रतीत्या ऋत्विक्कर्तृकमेव चमसाध्वर्यूणां वरणं भाति तथापि दक्षिणादानस्य यजमानकर्तृकत्वात् ऋत्विग्भिस्तेषामानत्यसंभवात् वरणानुपपत्तेर्ब्रह्मादिवरण इव एतेषां वरणेऽपि यजमानस्यैव कर्तृत्वं युक्तम्। स्वामित्वाख्यसंबन्धस्य तु तदाज्ञाकारित्वेनाप्युपपत्तेः न कापि क्षतिः। अत एवोक्तं वार्तिके यद्यपि च यजमानेन व्रियन्ते तथापि तदाज्ञाकारित्वेन व्रियमाणत्वात् भवत्येव तदीयत्वेन व्यपदेश इति।

---

### ॥ उत्पत्तौ तु बहुश्रुतेः ॥

अत्र उत्पत्तौ तु बहुश्रुतेरित्येकेनैव सिद्धान्तसूत्रेणोपक्रमात् सिद्धान्तेनैवोपक्रमते—ते इति। सौत्रतुशब्देन निरसनीयामाशङ्कां दर्शयति—यद्यपीति। तथाचैको द्वौ बहवो वा इत्यनियम इत्याशङ्कार्थः। इतिवदिति। यद्यपि स्वाध्यायोऽध्येतव्य इति विधौ स्वाध्यायस्य तव्येन कर्मत्वाभिधानात् संस्कार्यत्वावगतेः स्वाध्यायोद्देशेनाध्ययनविधाने स्वध्यायस्याविवक्षितैकत्वात् अनेकस्वाध्यायाध्ययनापत्तिः तथापि स्वाध्यायगतसंस्कार्यत्वानुपपत्त्या सामर्थ्यादर्थज्ञानार्थत्वेन विनियोगविधिकल्पनायामधीतेन स्वाध्यायेनार्थज्ञानं भावयेदित्येवं स्वध्यायस्योपादेयत्वात्

योगकल्पनदशायां तद्विवक्षोपपत्तिः। अनयैव दिशा "पुरोहितं वृणीते" "अध्वर्युं वृणीते" इत्यादावप्येकत्वविवक्षा द्रष्टव्या। वस्तुतस्तु—तत्रतत्र विनियोगेऽपि चमसाध्वर्यवश्चम-सानुन्नयन्ति "अध्वर्युः पुरोविभजते" इत्यादौ बहुत्वैकत्वश्रुतेस्तद्विवक्षोपपत्तिः॥ ११॥

## (१२)—दशत्वं लिङ्गदर्शनात्॥ २९॥

ते च दश एकादश वा, न तु त्रयः, चमसानां तावत्त्वात्। अत एव मध्यतःकारिणां होत्रादीनां चतुर्णां होतृकाणां च मैत्रावरुणादीनां षण्णां चमसाध्वर्यव इति व्यपदेशोऽपि सङ्गच्छते। सदस्यपक्षे तच्चमसे एकादशः। एवं च दशपेये क्रतौ सिद्धवद्दशचमसाध्वर्यव इत्यनुवादोऽपि सदस्याभावपक्षे सङ्गच्छते। त्रित्वपक्षे न कथञ्चिदस्योपपत्तिः॥ १२॥

---

विवक्षितैकत्वं ततश्च स्ववेदान्तर्गतैकशाखाध्ययनं कर्तव्यं न तु तदीयशाखान्तरमपीत्यर्थे सिद्धे स्ववेदान्तर्गतैकशाखाध्ययनस्याध्ययनविधिसिद्धत्वेन क्रतुविधिभिरनाक्षेपेपि क्रतूपयोगिभिन्नवेदान्त-र्गतशाखाध्ययनस्यान्यतोऽसिद्धस्याक्षेपस्तैः कर्तव्य एवेत्यर्थस्सिद्ध्यति। सर्वथापि तूपादेयत्वे-नैकत्वविवक्षावत् इहापि बहुत्वस्योपादेयगतत्वेन विवक्षोपपद्यते। अत एवोद्देश्यत्वेन तद्गतविशेषणाविवक्षायां कल्प्यमानविनियोगविधावुद्देश्यताबोधकपदप्रतिपाद्यार्थगतसंख्यावाचकस्यै-तज्जातीयपदस्य कल्पनयोपादेयगतत्वेनोद्देश्यगतसंख्याया एव विवक्षितत्वमित्यत्र नियामकमुद्देश्य-गततत्संख्यानुवादस्य पाक्षिकानुवादत्वापत्तिरेव ज्ञेयमित्यर्थः। पुरोहितं वृणीत इति। वरणस्य पुरोहितसंस्कारकत्वेऽपि वृतेन पुरोहितेन राज्ञो यच्छान्तिकपौष्टिकादि शक्यते कर्तुं तत्कर्तव्यमिति लिंगात् राजकर्तृकवरणेन राजकार्ये पुरोहित उपादेयः तथा वृतेनाध्वर्युणा यजमानकार्यं कर्तव्यमिति कल्प्ये विधौ अध्वर्युरुपादेय इत्यर्थः। किं च स्वाध्यायपुरोहितांशे विनियोगविध्यन्तरकल्पनेऽपीह प्रत्यक्षत एव विनियोगविध्युपलंभात् न तत्कल्पनमावश्यक-मित्याह—वस्तुतस्त्विति।

---

**दशत्वं लिङ्गदर्शनात्**

दशत्वं लिङ्गपर्शनादिति सूत्रगतं लिङ्गदर्शनादिति पदं व्याचष्टे—एवंचेति।

## (१३)—शमिता च शब्दभेदात् ॥ २८ ॥ प्रकरणाद्वोत्पत्त्यसंयोगात् ॥ २९ ॥

पशौ "शमितारमुपनयीत" इति श्रुतः शमिता तु वरणभेदानाम्नानात् सत्यपि संज्ञाभेदे यौगिकत्वेन प्रकृतेष्वेव ऋत्विक्षु अनृत्विक्षु वा वृतेषु तस्या उपपत्तेर्नान्यः। तत्राप्यध्वर्योः "पराङावर्ततेऽध्वर्युः पशोस्संज्ञप्यमानात्" इति वचनेनासामर्थ्यात् तत्पुरुषः प्रतिप्रस्थाता संज्ञपयेत्। न च तस्य हिंसादोषभियाऽप्रवृत्तिः। दक्षिणादिलोभेन तदङ्गीकारेण

---

॥ शमिता च शब्दभेदात् ॥

**वरणभेदेति।** यदि वरणभेदश्चमसाध्वर्युवत् स्यात् तदा उत्पत्तिवाक्यगतसंज्ञाभेदः स्यात, न त्वेतदस्ति। एवं सति या शमितेति संज्ञा सा योगेनैवोपपन्नेति न प्रकृतेभ्यो भेद इत्यर्थः। **अनृत्विक्ष्विति।** वृतानामपि चमसाध्वर्यूणां न ब्रह्मादित् ऋत्विक्त्वमिति **कर्मकार्यादि**त्यधिकरणे अनन्तरेणैव वक्ष्यते। तेन तेष्वपि शमितोपपद्यत एवेति सूचयितुमनृत्विक्षु वेत्युक्तम्। यजमानवारणाय वृतेष्वित्युपादानम्। तत्र न्यायेनाव्यापृतस्य यस्य कस्यापि प्रकृतस्य सामान्यतस्तत्प्रसक्तावाध्वर्यवसमाख्यया अन्यस्य निवारणे सत्यध्वर्योरपि असामर्थ्यादप्राप्तावितरमन्यस्तेषां यतो विशेषःस्यादिति वक्ष्यमाणन्यायेन कर्तृनियममाह—**तत्रापीति। पराङावर्तत इति।** अध्वर्युः शमित्रे शामित्रप्रैषं दत्वा संज्ञप्यमानात् पशोस्सकाशात् परावृत्य स्वस्थानं गत्वा तिष्ठेदितित्यर्थकेन विधिना परावृत्तिविधानादसामर्थ्यं तस्येत्यर्थः। प्रतिप्रस्थातुरपि व्यापृतत्वे तदनन्तरभाव्यन्यो वेति विशेषः **तत्पुरुष** इति पदेन सूचितः। **अत्र प्रकाशकारैः** प्रतिप्रस्थात्रादीनां शामित्रे कर्तृत्वस्य न्यायतः प्राप्तेःन्यायस्य च न हिंस्यादिति निषेधेन बाधमाशंक्य **आख्या चैवं तदर्थत्वादि**त्यत्र यथा आध्वर्यवादिसमाख्यायाः प्रामाण्यमुक्तं तथैवे**तरमन्यस्तेषामिति** सूत्रावयवेनाध्वर्युपुरुषा इत्यादिसमाख्याया एव मुख्यकार्यकारित्वे प्रामाण्यमुक्तमिति तादृशसमाख्याकल्पितविधित एव प्रतिप्रस्थात्रादीनां शामित्रे कर्तृतया प्राप्तेर्न न्यायमात्रात् प्राप्तिरिति हिंसानिषेधो विधिना बाध्यत इति समाहितम्। **तदयुक्तम्।** याजनवृत्तित्वेन लोभतः प्राप्ते ऋत्विजां मध्ये अनियमेन कर्तृत्वे सत्येव तत्समाख्याया नियामकत्वसंभवेऽपि तत्कर्तृत्वस्य रागतः प्राप्तस्य विधिस्पृष्टत्वाभावेन हिंसानिषेधबाधकत्वानुपपत्तेः। अत एव यजमानस्य साक्षात प्रयोजकत्वेन वा कर्तृत्वेन विधानात् न तन्निषेधप्रवृत्तिः। ऋत्विजां तु लोभेन प्रवृत्तेःयुक्तैव तत्प्रवृत्तिरित्यभिप्रेत्याह—**दक्षिणादिलोभेनेति।** अतो **वार्तिके** यद्धिंसानिषेधबोधितदोषजनकतया आर्त्विज्यस्य

**प्रवृत्त्युपपत्तेः। अत एवार्त्विज्यं निन्दन्ति। ब्राह्मणस्य च शामित्रविषये कलौ पृथङ्निषेधो दोषाधिक्यज्ञापनार्थः।** अत एव कलौ **शामित्रे ब्राह्मणालाभेन शूद्रेण क्रियमाणे "क्लोमानं(र्धं) शमितुस्तद्ब्राह्मणाय दद्यात् यद्यब्राह्मणस्स्यात्" इति वचनं सङ्गच्छत एव। अब्राह्मणपदं** अब्राह्मणयजमान**परमिति तु प्राञ्चः॥ १३॥**

---

निन्द्यत्वमुक्तं तद्विरुद्धमपि भवत्कल्पनमित्यभिप्रेत्यार्थतो वार्तिकसंमतिं दर्शयति—**अत एवेति**। शामित्रेऽपि हिंसासामान्यनिषेधप्राप्तौ पुनः कलौ विप्रस्य विशेषतस्तन्निषेधो व्यर्थ इति न सामान्यनिषेधप्रवृत्तिरिति गूढाभिसंहितं निरसितुमाह—**ब्राह्मणस्य चेति**। **अत एव कलाविति**। तथा च शमितुर्वृतान्तर्गतत्वनियमे सति ब्राह्मणानामेव याजनार्थे वरणविधानात् तदतिरिक्तस्य शामित्राप्राप्तेः यद्यब्राह्मणःस्यादिति लिङ्गानुपपत्तिः। सिद्धान्ते सा अत एव परिहृता। कलौ दोषाधिक्येन ब्राह्मणालाभे गुणभूतकर्त्रनुरोधेन शामित्रलोपायोगात् तत्सिद्ध्यर्थमब्राह्मणस्यापि अस्त्येव तत्प्रसक्तिरिति संगच्छत एव तद्वचनमित्यर्थः। अत्र प्राचीनैरिदं लिङ्गमन्यथानुपपत्त्या वार्तिकलिखितयाजमानप्रकरणाम्नानाच्चाब्राह्मणयजमानपरमिति नाब्राह्मणस्य शामित्रप्रापकमित्युक्तं तदयुक्तमेवेति सूचयितुमनुवदति—**अब्राह्मणयजमानेति**। तत्र चार्धं च वैकर्तस्य क्लोमा च शामितुस्तत् ब्राह्मणाय दद्यात् यद्यब्राह्मणः स्यात् इति बह्वृचब्राह्मणगतमेतल्लिङ्गं क्लोमाचार्धवैकर्तनं च शमितुरित्यानुपूर्व्यं भाष्यकारेणार्थतो धृतमथवा शाखान्तरीयं वा। तत्र वैकर्तः स्थूलो मांसखण्डः, क्लोमा नाम यकृत्सदृशं तिलकाख्यं मांसं, यकृन्नामकालखण्डं मृदीयो मांसम्। अत्र च पूर्वं वामपार्श्वस्थितास्तिस्रो मांसशलाकाः कीकसपदवाच्या उक्ता ताः पूर्वोक्तवैकर्तार्धं च तदुभयमुन्नेतुर्भाग उक्तः। अनेनोर्वरितवैकर्तार्धं क्लोमा च तदुभयं शमितुर्भाग इत्युच्यते। अयं शमिता यद्यब्राह्मणःस्यात् तदा स्वेन स्वीकृतं तदुभयमन्यस्मै ब्राह्मणाय दद्यात् इत्यर्थो वेदभाष्यकृता कृतः। तत्र यदि यजमानपरं तत् पदं तदा अप्रस्तुतकथनस्यैवापत्तेः याजमानप्रकरणस्याभावात्, सत्वेऽपि वाक्येन तद्बाधस्य युक्तत्वादन्यथानुपपत्तेः पूर्वोक्तरीत्या क्षीणत्वात् स्वरसतः प्रतीयमानशमितृपरत्वमेव तद्युक्तमित्यस्वरसद्योतकतुशब्देन सूचितम्।

---

## (१४)—उपगाश्च लिङ्गदर्शनात् ॥ ३० ॥

**एवं सोमे समाम्नाता** उपगातारोऽपि **वृतेष्वेव । न चोपगातॄणां गातृगुणत्वेन लोकप्रसिद्धेर्वृतानां च तुल्यकक्षत्वेन तदभावादन्य इति वाच्यं, तुल्यानामपि प्रैषप्रैषार्थकारित्ववत्परस्परोपकारित्वस्योचितत्वात् । स्वामिपरिक्रीतानामपि शिल्पकारिणां तथा दर्शनाच्च ।** तत्राप्युपगानस्य **सामवैदिकत्वात् उद्गात्रादीनां त्रयाणां गानव्यापृतत्वेऽपि सुब्रह्मण्यो नियतः । अन्ये तु " त्र्यवरा उपगायन्ति, चत्वार उपगायन्ति " इति वचनान्तरानुसारादनियताः ।** अत एव **" नाध्वर्युरुपगायेत् " इति वचनान्नासौ ॥**

---

## (१५)—विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ॥

**सोमविक्रयी त्वन्य एव । वरणादिकं हि क्रत्वर्थत्वात्तदङ्गपदार्थकरणाय पुरुषानुपादातुं क्रियते । विक्रयस्त्वविहितत्वात् विहितक्रयान्यथाऽनुपपत्त्याऽऽवश्यकोऽपि** दोषश्वी-

---

**॥ उपगाश्च ॥**

**उपगातारोऽपीति ।** गातॄणां पृष्ठभावेन स्वरपूरणादिना ये उपकुर्वन्ति ते उपगातृपदेनोच्यन्ते, उपपूर्वस्य गायतेः गानोपचयवाचित्वादित्यर्थः । ननु प्रैषे आध्वर्यवसमाख्यादिना प्रकृतनियमसम्भवेऽपीह तदभावे कथं तन्नियमस्सिद्ध्यतीत्यत आह—**तत्रापीति । सामवैदिककर्मण्यौद्गात्रमिति** समाख्यया उद्गातृप्रवचनसंबन्धनिमित्तया चतुर्णामपि कर्तृत्वप्राप्तेः त्रयाणां व्यापृतत्वे सुब्रह्मण्य एवेति सामवैदिकत्वादित्यनेन सूचितम् । **अन्ये त्विति । त्र्यवर** उपागायन्तीति वचनेन त्र्यवरकर्तृकोपगाने विहिते कर्तृविशेषजिज्ञासायां प्रयोगार्थोपात्तकर्तॄणामेव प्रकरणेन युक्तं ग्रहणमित्यर्थः । यत एवानियता अपि वृता एवात एवाध्वर्योरपि तत्र प्राप्तौ निषेध उपपद्यते, अन्यथा वृतातिरिक्तस्यैव ग्रहणे तस्य कथमपि प्राप्त्यभावात् निषेधानुपपत्तिः । अतो निषेधरूपलिङ्गदर्शनात् प्रकृतग्रहणमित्युपगाश्च लिङ्गदर्शनादिति सूत्रोक्तलिङ्गदर्शनहेतुमर्थतो व्याचष्टे—**अत एवेति ।** अत्र **चोपगेषु शरवत् प्रकृतिलिङ्गसंयोगादिति** दशमचतुर्थपादाधिकरणे यत्पूज्यपादैः ऋत्विज उपगायन्तीति ज्योतिष्टोमे उपगानविधायकं वाक्यं लिखितं तदेतदधिकरणसिद्धऋत्विक्कर्तृतामादायार्थतो ज्ञेयम् । इतरथा प्रत्यक्षविधिनैव ऋत्विजां विधाने सति तदतिरिक्तस्य तत्कर्तृत्वेनाप्राप्तेरेव पुनर्लिङ्गदर्शनहेतुना तन्निवारणसाधनस्य निष्फलत्वापत्तेरिति ।

कारेण रागतः प्रवृत्तपुरुषकर्तृकविक्रयोपजीवनेनापि क्रयसिद्धेरनाक्षेपाच्चानङ्गम्। अतस्तत्र वृतानामप्राप्तेरन्य एवेति ॥ १५ ॥

---

## (१६)–कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषात् ॥ ३२ ॥ न वा परिसङ्ख्यानात् ॥ ३३ ॥ पक्षेणेति चेत् ॥ ३४ ॥ न सर्वेषामधिकारः ॥

ब्रह्मादयश्चमसाध्वर्यवश्च सोमे कर्तारस्समधिगताः, ते सर्वे ऋत्विक्पदवाच्याः ऋत्विक्पदस्य "ऋत्विग्दधृक्" इत्यादिस्मृत्या कर्तृवाचिकिन्नन्तत्वनिपातनेन यौगिकत्वावगतेः वसन्ताख्यऋतुकालीनयागप्रयोगकर्तृवाचित्वनिर्णयेनादृष्टरूपऋत्विक्त्वे रूढिमङ्गीकृत्यौणादिकत्वकल्पनानुपपत्तेः तस्य च सर्वपुरुषेष्वविशेषात्। तस्यैतस्य यज्ञक्रतोस्सप्त-

---

विक्रयी त्वन्यः।

दोषस्वीकारेणेति। सोमविक्रयिणोऽभोज्यान्नत्वेन निन्दितत्वात् श्राद्धे भोजयितव्यत्वप्रतिषेधात् ब्राह्मणस्य वैश्यवृत्त्योपजीवनेऽपि सोमविक्रयस्य प्रत्यक्षत एव निषेधाच्च सोमविक्रयस्य दोषजनकत्वावगतेः लोभेन दोषं सोढ्वापि प्रवृत्तकर्तृकसोमविक्रयोपजीवनेन क्रयसिद्धिरित्यर्थः।

---

कर्मकार्यात् सर्वेषामृत्विक्त्वमविशेषात्।

अत्र वार्तिके सर्वेषामृत्विक्पदवाच्यत्वमिति पूर्वपक्षे ऋत्विक्कार्यस्यापि सर्वेषां प्राप्तौ सत्यामतश्चत्वारः पञ्च षट् सप्त दशेत्याद्या अवयवा अप्येतस्य महान्त इत्येवं स्तोतुमनुवाद इत्युक्तम्। तत्र सोमे चमसाध्वर्युभिस्सह षोडशर्त्विजां सत्त्वात् षड्विंशतिषु तेषु साप्तदश्यस्य पृथक्करणेनानुवादसंभवेऽपि दर्शपूर्णमासचातुर्मास्यपशुषु चतुः पञ्चषट्संख्यातिरिक्तानामाम्नानाभावादेव तदवयवत्वेनानुवादासंभवात् अयुक्तमिति सूचयन् साप्तदश्यवाक्यस्यैव केवलस्यानुवादत्वं दर्शयति—तस्यैतस्येति। अत्र भाष्यकारेण नवा परिसङ्ख्यानादिति सिद्धान्तसूत्रानुरोधात् सप्तदशवाक्यस्यानुवादत्वे प्रयोजनाभावात विधेयान्तरस्याश्रवणेनागत्या इतरनिवृत्तिफला त्रिदोषापि परिसंख्याङ्गीक्रियते। न ह्यवयवयोगेन ऋत्विक्त्वे सप्तदशातिरिक्तेष्वपि विद्यमाने ऋत्विक्त्वम् ऋत्विक्कार्यं वा तेभ्यः परिसंख्यातुं शक्यते बाधादतो ऋत्विजो वृणीत इति वाक्ये ऋत्विजामप्रसिद्धत्वात् न ऋत्विजः प्रसिद्धानुद्दिश्य वरणं विधीयते। अपि तु यूपं तक्षतीतिवत् विपरीतवचनव्यक्त्याश्रयणेन वरणेन ऋत्विजः कुर्यादित्यर्थात् ऋतुयजननिमित्तत्वमनङ्गीकृत्य वरणनिमित्तत्वमेव ऋत्विक्शब्दस्य। यद्यपि

दश ऋत्विजः" इति तु "एकं वृणीते" इत्यादिवदवयुत्यानुवादः। इतरथा परिसङ्ख्यायां त्रिदोषत्वापत्तेः। अदृष्टरूपऋत्विक्त्वकल्पनायां गौरवात्। अत एव च वरणमेव तज्जन्यादृष्टमेव वा ऋत्विक्पदप्रवृत्तिनिमित्तमित्यपास्तं रूढिकल्पनायां प्रमाणाभावात्, ब्रह्मादिवरणानां भेदादनेकादृष्टशक्तिकल्पनापत्तेश्च। व्यापकधर्मस्य वरणत्वस्यैव शक्यत्वाङ्गीकारे त्वतिप्रसङ्ग इत्यस्मन्मतप्रवेशः यजमाने वरणाभावेन ऋत्विक्त्वानापत्तेश्च, सत्रे ऋत्विक्त्वसम्पत्तये वरणापत्तेश्च। अत एव "ऋत्विजो वृणीते" इत्यस्यैव वरणविधित्वादेकमेव वरणं ऋत्विक्पदप्रवृत्तिनिमित्तमित्यप्यपास्तं "ब्रह्माणं वृणीते"

---

चमसाध्वर्युष्वप्यस्त्येव वरणमिति न तद्व्यावृत्तिस्संभवति, तथापि ब्रह्मादिगतवरणविशेषस्यैव प्रचुरप्रयोगेण निमित्तत्वाश्रयणात् तत्रैव ऋत्विक्शब्दस्य रूढिरिति सप्तदशवाक्ये परिसंख्याबलात् कल्प्यत इति सिद्धान्तितम्। तत्र यथाश्रुतभाष्यानुसारात् दृष्टार्थ एव सन् वरणविशेषो निमित्तमिति प्रतीतावपि प्रभाकरेणादृष्टोत्पादकत्वेन तस्य निमित्तत्वमुक्तं तदुभयमप्यनूद्य दूषयति —अदृष्टरूपेति। यथैव ऋत्विक्त्वं सामान्यमन्यत्रादृष्टं ब्रह्मादिष्वेवैकमनुगतं प्रकल्प्य तद-वच्छिन्ने ऋत्विक्पदस्य न रूढ्यन्तरकल्पनं गौरवात्, तथैव वरणादिनिमित्तरूढिकल्पनमपि नाश्रय-यणीमित्यर्थः। अतिप्रसङ्ग इति। वरणत्वस्यैव शक्यत्वाङ्गीकारे चमसाध्वर्युष्वपि तत्सत्वात् पूर्वपक्षस्यैव सिद्धिरित्यर्थः। यजमान इति। तथा च स्वामिसप्तदशा इत्यधिकरणे यज-मानेन सह ऋत्विग्गतसाप्तदश्यसंख्यापूरणेन वक्ष्यमाणतदभ्युपगमविरोधापत्तिरित्यर्थः। यत्तु प्रकाशकारैः वरणस्य कर्मणेव कर्त्रापि सह संबन्धित्वात् स्वामिनोऽपि तन्निमित्तमृत्विक्त्वमुपपद्यत एवेत्युक्तं तद्वरणस्यैवैकरूप्येण निमित्तत्वासंभवात् वरणकर्तृकत्वेन ऋत्विक्त्वस्येव ब्रह्मत्वादेरप्या-पत्तेदुर्निवारत्वादुपेक्ष्यम्। यत्तु वरणानां भेदादनेकशक्तिकल्पनापरिहारार्थमुक्तं तदनूद्य दूषयति —अत एव ऋत्विज इति। सत्रे वरणापत्तेरेवेत्यर्थः। वैयर्थ्यप्रसङ्गाच्चेति। ऋत्विजो वृणीत इत्येकवरणविधिनैव षोडशानामृत्विक्त्वे सिद्धे ब्रह्मादिवरणविधीनां वैयर्थ्यम्। यदा तु ब्रह्मत्वाद्यवान्तरभेदसिद्ध्यर्थं तद्विध्यावश्यकत्वं, तदा तैरेव ऋतुयजनकर्तृत्वोपाधिना ऋत्विक्त्वस्यापि सिद्धेः सामान्यविधिवैयर्थ्यप्रसङ्ग इत्यर्थः। यत्तु वार्तिके ऋत्विक्शब्दस्य यौगिकत्वमङ्गीकृत्यैव अध्ययनश्रवणादिना येषामृतुयजनकर्तृत्वेन ऋत्विक्त्वं प्रसिद्धमस्ति तानेवानूद्यानतिरूपदृष्टप्रयोजनार्थं वरणमात्रविधावपि सप्तदशसंख्यानियमानुरोधेन यानृत्विजो वृणीते ते सप्तदशेत्येवमुपसंहारात्तत्र चार्थलोपात् यजमाने वरणलोपेऽपि ऋतुयजनकर्तृत्वमात्रेण सर्वेषां तदुपपत्तिः। यद्यप्यृतुयजन-कर्तृत्वं चमसाध्वर्युष्वतिप्रसक्तं तथापि ब्रह्मादिष्वेव रूढिकल्पनात् पङ्कजशब्दवद्योगरूढ्यङ्गीकारात्

इत्यादिविधीनां वैयर्थ्यप्रसङ्गाच्च। एतेन ब्रह्मादिनिष्ठक्रतुयजनान्येव ऋत्विक्पदप्रवृत्तिनिमित्तमित्यप्यपास्तं, अनेकशक्तिकल्पनातादवस्थ्यात्। अतश्च सर्वे एव ऋत्विक्पदवाच्या इति सर्वेषामेव हिरण्यमालित्वादि ऋत्विक्कार्यमिति प्राप्ते—

सत्यं ऋत्विक्पदं यौगिकं क्रतुयजनसामान्यवाचि च। तथाऽपि सप्तदशश्रुत्या उद्भित्पङ्कजादिवदेव रूढिमकल्पयित्वैव सप्तदशश्रुत्युन्नीतप्राचीनप्रयोगस्य सहकारित्वकल्पनेनैव सप्तदशानामेव ऋत्विक्पदशक्यत्वोपपत्तिः। न ह्युद्भिदादिपदेष्वतिप्रसङ्गनिराकरणार्थं रूढिकल्पनं, तथात्वे सोमादिवत् मत्वर्थलक्षणामङ्गीकृत्य गुणविधित्वस्यैवापत्तेः। न चैवं सप्तदशश्रुतेः परिसङ्ख्यात्वापत्त्या त्रिदोषत्वापत्तिः। ऋत्विक्पदज्ञानकारणताकल्पनवेळायामेव सप्तदशश्रुतेस्तात्पर्यग्राहकत्वकल्पनेन प्राप्तपरिसङ्ख्यात्वाभावात्। अतश्च सप्तदशानामेव ऋत्विक्कार्यं हिरण्यमालित्वादि ॥ १६ ॥

---

## (१७)—नियमस्तु दक्षिणाभिश्श्रुतिसंयोगात् ॥ ३६ ॥ उक्त्वा च यजमानत्वं तेषां दीक्षाविधानात् ॥ ३७ ॥

---

न तेषामृत्विक्त्वमित्युपपादितं तदप्यनूद्य दूषयति—एतेनेति। यतोऽनेकशक्तिकल्पनापत्तिभिया केवलं यौगिक एव ऋत्विक्शब्दोऽतः पूर्वपक्षसिद्धिरित्युपसंहरति—अतश्चेति। अत्र च केवलरूढेर्योगरूढेर्वा स्वीकारेण न कथमपि सिद्धान्तसिद्धिरित्युद्भिदधिकरणे योगरूढिखण्डनेनातिप्रसङ्गपरिहाराय प्राचीनप्रयोगस्य सहकारिकारणत्वं स्वयमुक्तं तदेवात्रत्यसिद्धान्तसिद्ध्यर्थं सर्वेषामावश्यकमिति सत्यं तथापीति पदद्वयेन सूचयन् सिद्धान्तमाह—सत्यमिति। यत्र पङ्कजादिपदे यौगिकत्वेनावयवार्थवृत्तेस्साधारण्यं तत्रेतरबोधवारणाय स्वतन्त्ररूढिकल्पनापेक्षया कॢप्तस्यैव प्राचीनप्रयोगस्य सहकारित्वकल्पने लाघवमिति तेनैव तद्वारणसंभववत् इहापि चमसाध्वर्युव्यतिरिक्तेष्वेव तत्प्रयोगात्तेनैव तदतिरिक्तबोधनिवारणसंभवेन नातिरिक्तरूढिनानात्वकल्पनकृतगौरवप्रसक्तिरित्यर्थः। तथात्वे इति। रूढिकल्पनापेक्षया लक्षणाङ्गीकारे बाधकाभावान्नामधेयत्वसिद्धान्तस्थैर्याय लघुभूतोपायकल्पने प्राचीनप्रयोगस्यैवातिप्रसङ्गपरिहाराय कारणत्वं तत्र मयोक्तमितरथा सोमेन यजेतेत्यत्रापि दीक्षासोमस्येत्यत्रेव सोमद्रव्यके कर्मणि रूढ्यन्तरकल्पनया सोमादिपदानां नामधेयत्वापत्तिः। अतस्तत्र यथारूढ्यनङ्गीकारेण मत्वर्थलक्षणैव स्वीक्रियते तद्वदुद्भित्पदेऽपि स्यादित्यर्थः।

**के ते सप्तदशेत्यपेक्षायां "ऋत्विग्भ्यो दक्षिणां ददाति" इत्युपक्रम्य अग्नीधे ब्रह्मणे उद्गात्रे इत्यादिना षोडशानामेव** सङ्कीर्तनात् तेषामेव ऋत्विक्त्वम्। **अत एव सत्रे यजमानानामेव ऋत्विक्त्वात्तेषामेव यजमानसहितानां दीक्षाश्रवणम्।** अतष्षोडश **तावत् समधिगताः ॥ १७ ॥**

## (१८)—स्वामिसप्तदशाः कर्मसामान्यात् ॥ ३८ ॥

### ॥ नियमस्तु दक्षिणाभिः ॥

**सङ्कीर्तनादिति।** यद्यपि ऋत्विग्भ्यो दक्षिणा विहिता तत्रानूद्यमानऋत्विक्त्वं नाग्नीधे ब्रह्मण इत्यनेनोपसंहर्तुं शक्यं तथापि पूर्वरीत्या सप्तदशस्त्ववगतेषु तदपेक्षितविशेषपूरणमेतेषामेव दक्षिणादाने विभागश्रवणात् तत्तद्वाक्यैः कर्तुं शक्यत एव। ततश्च नूनमेत एव ऋत्विज इति निश्चय इत्यर्थः। **दीक्षाश्रवणमिति।** अध्वर्युर्गृहपतिं दीक्षयित्वा इत्यादिवाक्ये चमसाध्वर्युव्यतिरिक्तऋत्विक्कार्ये विहितानां यजमानानामेव दीक्षाक्रमविधायके तावतामाग्नीध्राध्वर्य्वादीनां सङ्कीर्तनात् तावन्त एव ते इति नियमो लभ्यत इत्यर्थः। **अत षोडशेति।** तत्र ब्रह्मगणे ब्रह्मा ब्राह्मणाच्छंसी अग्नीत् पोतेति चत्वारः। उद्गातृगणे उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्य इति चत्वारः। होतृगणे होता मैत्रावरुणः अच्छावाको ग्रावस्तुदिति चत्वारः। अध्वर्युगणे अध्वर्युः प्रतिप्रस्थाता नेष्टा उन्नेता इति चत्वारः, एवं षोडशेत्यर्थः। अत्र चतुर्षु वर्गेषु ये प्रथमास्ते संपूर्णां प्राप्नुवन्ति, ये द्वितीयास्ते तदर्धमित्यर्धिनः, ये तृतीयास्ते तत्तृतीयांशमिति तृतीयिनः, ये चतुर्थास्ते चतुर्थांशमिति पादिन इति द्रष्टव्यम्।

सोम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विज इति श्रुतावुक्तानां मध्ये षोडशेमे इति निश्चयेऽपि सप्तदशः क इत्यपेक्षिते—

### ॥ स्वामीसप्तदशः ॥

दशसु चमसाध्वर्युषु एकतरस्य नियमेन सप्तदशत्वमिति निश्चयासंभवात् स्वामिसदस्ययोरेव तत्पूरकत्वयोग्यत्वाद्यद्यपि सदोगतकर्मप्रत्यवेक्षणस्योपकारिमात्रस्यापि ऋत्विक्शब्दान्तर्गतयज्युपलक्षितस्य सदस्ये सत्वेन ऋतुयजने कर्तृत्वमात्रेणोपपादितस्य ऋत्विक्त्वस्य सदस्य इव स्वामिन्यपि संभवेन सदस्य एव सप्तदश इति न पूर्वपक्षसिद्धिस्तथापि परार्थकर्मकारित्वावान्तरसामान्यात् सदस्य एव न तु स्वामी, तस्य पृथग्वरणाम्नानेन परार्थकारित्वावगतावपि स्वामिनस्तद-

**सप्तदशस्तु सदस्यः।** तस्यापि **पृथग्वरणाम्नानात् चमसविधानाच्चेति प्राप्ते—**

सदस्यकर्तव्यपदार्थाश्रवणात् वरणस्य **सक्तुन्यायेन विनियोगभङ्गं कल्पयित्वाऽदृष्टार्थत्वावगतेः सदस्यस्य** पाक्षिकत्वेन **सप्तदशश्रुतेः पाक्षिकानुवादत्वापत्तेः सत्रे तस्य दीक्षाऽनाम्नानाच्च स्वाम्येव सप्तदशः।** कर्मकरत्वेऽपि **वा न पत्नी सप्तदशत्वजनकीभूता, अपेक्षाबुद्धौ लिङ्गवैरूप्याङ्गीकारे प्रमाणाभावात्॥ १८॥**

---

## (१९)–ते सर्वार्थाः प्रयुक्तत्वात्॥ ३९॥

---

भावादित्यभिप्रेत्याह—**तस्यापीति। यत्तु** सिद्धान्ते **भाष्यकारेण** सदसि भवः सदस्य इत्यवयवयोगमाश्रित्य ब्रह्मण एव सदस्यत्वात् तेन षोडशसंख्यापूरणेऽपि सप्तदशो यजमान एवेत्युक्तं, तदयुक्तमिति सूचयितुं पृथक्पदम्। ततश्चाकाशो मे सदस्य इति केषांचित् शाखायां वरणस्य चमसस्य सदस्योपह्वयस्वेति मन्त्रस्य चाम्नानादित्यर्थः। न च ब्रह्माणं वसिष्ठं कुर्वीत यो यज्ञस्योल्बणं पश्येदिति श्रुतेः कृताकृतावेक्षणरूपसदस्यकार्यस्य ब्रह्मणैव सिद्धेस्तस्यैवायं वरणानुवाद इति वाच्यं, अनुवादवैयर्थ्यात्। न च कृताकृतावेक्षणार्थमेव पुनर्वरणमिति वाच्यं, अध्वर्य्वादिष्वपि तथापत्तेः; अतो यथैवाध्वर्य्वादिवरणविधौ उत्पत्तिगताध्वर्य्वादिसंज्ञाभेदात् तेषां भेदः पूर्वत्रोपपादितः, तथैव सदस्यं वृणीत इति वरणविधावुत्पत्तिगतसदस्यसंज्ञाभेदात् सदस्यस्यापि भेद आवश्यक एव। सदस्यशब्दस्य रूढत्वेन ब्रह्मणि योगासंभवात् पुनस्समन्त्रकवरणविधानानर्थक्यापत्तेश्च। अतः पृथगेव सदस्य इत्यर्थः। येन परार्थकर्मकारित्वावान्तरसामान्येन सदस्यः सप्तदश इत्युच्यते तदेव कर्माविहितमिति विहितकर्मकर्तृत्वाभावात् न तस्य ऋत्विक्त्वमित्यभिप्रेत्य सिद्धान्तमाह—**सदस्येति।** प्रत्यवेक्षणस्याविहितत्वेनानङ्गत्वात् न तत्र कर्तृत्वेन तस्योपयोगो येन तस्य वरणसंस्कार्यत्वं स्यात्। अत एवादृष्टार्थत्वं तद्वरणस्येत्याह —**वरणस्येति। पाक्षिकत्वेनेनेति।** कृताकृतत्वेन विधिदर्शनादिति शेषः। एवं प्राचीनैस्सिद्धान्तितार्थे विशेषं दर्शयति—**कर्मपरत्वेऽपि वेति।** सदस्ये विभागानाम्नानात् क्रमवाक्येप्यपाठात् पूर्वोत्तरपक्षयोर्दक्षिणाभावसाम्येऽपि ऋत्विग्धर्मा हिरण्यमालित्वादयः पूर्वपक्षे सदस्ये। सिद्धान्ते तु स्वामिनीति प्रयोजनभेदः स्पष्टत्वान्नोक्तः।

---

तत्तत्क्रतुषु **प्रमितानां तेषां तेषां कर्तॄणां अव्यवस्थयैवासति विशेषविधौ लिङ्गप्रकरणाभ्यां तत्तत्पदार्थकर्तृत्वं, न तु तयोः दुर्बलया आध्वर्यवादिसमाख्यया सङ्कोचः॥** स्थितं **तावदपर्यवसितम्॥ १९॥**

---

## (२०)—अग्नयश्च स्वकालत्वात् ॥ ४० ॥ तत्संयोगात्कर्मणो व्यवस्था स्यात्संयोगस्यार्थवत्त्वात् ॥ ४१ ॥

आहवनीयादयो**ऽग्नयोऽनारभ्याधीतवचनैर्होमाद्यनुवादेन विहिताः**

---

**॥ ते सर्वार्थाःप्रयुक्तत्वात् ॥**

अत्र सूत्रकृता ते सर्वार्थाः प्रयुक्तत्वात्, अग्नयश्च स्वकालत्वादित्येकवाक्यतया पठितम्। **तेन** सप्तदशानां पुरुषाणां यावच्छ्वयकार्यार्थत्ववत् अग्नीनामपि सर्वकार्यार्थत्वं पूर्वपक्षे साधनीयम्। **न च** तेषु तत् संभवति, एकादशे वैदिककर्मार्थत्वस्यैव वक्ष्यमाणत्वात्। अत्रैव तत्साधने तदधिकरणवैयर्थ्यापत्तेः। अतस्ते **सर्वार्थाः** तत्प्रयुक्तत्वादिति ऋत्विग्विषये पूर्वपक्षसूत्रं **अग्नयश्च स्वकालत्वा**दित्येतत्तु उत्सूत्रपूर्वपक्षनिरासाय सिद्धान्तप्रदर्शनपरमेवेत्येवं वाक्यभेदेनाधिकरणद्वयं वार्तिके साधितं, तदनुसन्धाय स्वयमपि तद्भेदेनाद्याधिकरणपूर्वपक्षमाह— **तत्तत्क्रतुष्विति। आख्या चैवं तदर्थत्वादित्यधिकरणोपपादितेन** समाख्यायास्तत्तद्विनियोगनियामकत्वेन गतार्थत्वाशङ्कानिरासमूचनाय **लिङ्गप्रकरणाभ्या**मित्युक्तम्। तत्र सिद्धस्यैव समाख्याया नियामकत्वस्य लिङ्गप्रकरणाभ्यां विरोधे सति बाधादसंभवेनेहाक्षेपात् तत्समाधानार्थमयमारंभ इति न गतार्थत्वमित्यर्थः। **स्थितमिति।** ततश्चास्य पूर्वपक्षस्य एकान्तरितसूत्रेण निराकरणात् मध्येऽग्नयश्चेति सूत्रेणान्तरागर्भिणीक्रियते तत्कारणं च सौत्रशब्देन सर्वार्था इति पदानुवृत्तौ लाघवमेवेत्याशयः।

---

**अग्नयश्च स्वकालत्वात्।**

एकादशे लौकिककार्यार्थत्वं निरस्य वैदिककार्यार्थत्वं साधयिष्यते, इह तु वैदिकमपि किं प्राकृतमेवोतप्राकृतवैकृतमपीति विचारेणापौनरुक्त्यमभिप्रेत्य विषयमाह—**आहवनीयादय इति। आदिपदेन** गार्हपत्यदक्षिणाग्न्योःसंग्रहः। यदाहवनीये जुहोतीत्यादीनां कस्यचित्प्रकरणे आम्नाने सति तत्प्रकरणगतहोमार्थताया एव प्राप्तौ प्रकृतिविकृत्यर्थत्वसंभवात् न विचारो युक्त

पर्णतान्यायेन प्रकृतिहोमाद्यर्था एव। विकृतौ हि ये तावद्धोमादयोऽतिदेशेन प्राप्यन्ते तेषु प्राप्तिकालवैषम्यात् स्पष्टमेव द्विरुक्तत्वम्। येऽप्यामनहोमादयोऽपूर्वास्तेषामपि विकृतिसम्बन्धबोधव्यतिरेकेणाङ्गग्राहकत्वानुपपत्तेः विकृतेश्च क्लृप्तोपकाराङ्गग्रहणार्थं पूर्वमतिदेशकल्पनावश्यंभावात् तस्य च प्रकृतावाहवनीयप्राप्तिमन्तरेणानुपपत्तेस्तेष्वपि द्विरुक्तत्वम्। अतस्तेषु नोपदेशेन, नापि यूपावटास्तरणबर्हिर्वदतिदेशेनाहवनीयप्राप्तिः। अतोऽधिकरणं विनैव ते इति प्राप्ते—

---

इत्यतः उक्तमनारभ्याधीतवचनैरिति। यद्यनारभ्याधीतवचनैर्विहितास्तदाऽस्यानारभ्याधीतन्यायादेव पूर्वपक्षसिद्धिमाह—पर्णतान्यायेनेति। तेष्विति। द्वारभूतहोमप्राप्तये अवश्यकल्प्यातिदेशे सति तेनैव तदङ्गाहवनीयादिप्राप्तेःपुनरुपदेशेन विधाने द्विरुक्तत्वमित्यर्थः। ननु विकृत्यङ्गत्वेनोपदिष्टहोमेषु द्वारप्राप्तेरनपेक्षणेनातिदेशकल्पनस्यानावश्यकत्वादुद्देश्यतावच्छेदकरूपाक्रान्तत्वेन स्युरेवोपदेशेनाहवनीयादय इत्यत आह—येऽपीति। विकृतिसम्बन्धेति। आमनहोमादीनां विकृत्यपूर्वोपकाररूपस्वभाव्यजनने कथमित्याकाङ्क्षया स्वाङ्गानामन्वयादिति शेषः। तेष्वपीति। ततश्च प्राकृताङ्गग्राहचतिदेशसिद्ध्यर्थमितराङ्गानामिवाहवनीयस्यापि प्रकृत्यपूर्वसाधनहोमार्थतया आहवनीयादिवाक्यानामेकदा विधायकत्वमङ्गीकृत्य पुनर्विकृत्यङ्गतया तद्विधायकत्वमेवाङ्गीकर्तव्यमिति द्विःशाब्दबोधजनकत्वापत्तिरूपं द्विरुक्तत्वमस्त्येवेत्यर्थः। प्रकारान्तरैस्तु आमनहोमेषु द्विरुक्तताप्रसक्त्यभावेपि विकृतेः प्रथमतःक्लृप्तोपकारप्राकृताङ्गसंबन्धसिद्ध्यर्थं प्रकृत्युपस्थितेरावश्यकत्वात् पूर्वोपस्थितप्रकृत्यर्थतैवाग्नीनामिति पूर्वपक्षोपपादनं कृतम्। अतिदेशेनेति। हविरासादनरूपप्राकृतद्वाराभावे अप्राकृतकार्ये यूपावटास्तरणबर्हिषि बर्हिर्धर्माणामप्राप्तिवत् प्राकृतहोमरूपद्वाराभावेऽतिदेशासंभवात् आमनहोमेषु तदप्राप्तिरित्यर्थः। अतोऽधिकरणं विनैवेति। यद्यपि प्रक्षेपरूपस्य होमस्य निराधारत्वानुपपत्त्या यत्किंचिदनियताधारे प्राप्ते प्रधानसादेश्यलाभायाहवनीय एव तदनुष्ठानं युक्तमिति वैधमधिकरणं लभ्यत एव तथाप्याहवनीयादीनां तदुद्देशेन विधानाभावे आहवनीयादौ तदनुष्ठाने अलौकिकाहवनीयानाशस्यैवापत्तेः न तत्र तत्प्राप्तिः। अत एव यत्राङ्गप्रधानयोरप्याहवनीयो विहितः तत्रैव जयादिहोमेषु प्रधानसादेश्यस्य नियामकत्वमङ्गीकृत्य तल्लाभायाग्निमत्कर्माङ्गत्वमेवाश्रीयते। प्रकृते तु आमनहोमेष्वाहवनीयादीनामङ्गत्वस्यैवाभावे न प्रधानसादेश्यानुरोधमात्रेण तत्रानुष्ठानप्राप्तिरित्यर्थः। यथैवाहवनीयस्य प्राकृतवैकृतोपदिष्टहोमविषयत्वं तथैवातिदेशप्राप्तश्रपणसाध्यहविष्कविकृतिषु विकल्पेन विहितयोः गार्हपत्यदक्षिणाग्न्योः उपदेशेन प्राप्त्यभावेऽपि प्रत्यक्षविहितश्रपणासु तासु द्वारलाभात् भवत्येव तयोरुपदेशेन प्राप्तिरित्यभिप्रेत्य यत्सूत्रेऽग्नयश्चेति बहुवचनमुपात्तं तदभिप्रायेण स्वयमपि

सत्यमतिदेशप्राप्तेषु नाहवनीयाद्युपदेशः। अपूर्वेषु त्वस्यानारभ्याधीतत्वादुपदेशेन[1] प्राप्तिरविरुद्धा। न ह्यामनहोमादीनां विकृतिसम्बन्धं विना नाङ्गग्राहकत्वं, उत्पत्तिवाक्ये इष्टसामान्यस्य भाव्यत्वबोधेनापि शाब्दबोधस्य पर्यवसन्नतया तदनुवादेनाहवनीयविधानोपपत्तेः। अतस्तेऽपि सर्वार्थाः॥

स्थितादुत्तरं—नात्र समाख्यया लिङ्गप्रकरणयोर्बाधः, किन्तु ताभ्यामव्यवस्थया प्राप्तानां कर्तॄणां व्यवस्थामात्रमपेक्षितं क्रियते। अतश्च हौत्रसमाख्याताः पदार्था होत्रा कर्तव्याः। आध्वर्यवसमाख्याताश्चाध्वर्युणा। औद्गात्रसमाख्यात। उद्गाता, सर्वेषु हि ऋग्वेद-यजुर्वेदसामवेदेषु ये पदार्था विहिताः तेषामेताः क्रमेण समाख्याः याज्ञिकानां प्रसिद्धाः। यौगिकाश्चैते शब्दाः न पदार्थानामध्वर्य्वादिसम्बन्धव्यतिरेकेण सम्भवन्ति इति तेषु तेषां योग्यत्वात्कर्तृत्वसिद्धिः॥ २०॥

---

## (२१)—तस्योपदेशसमाख्यानेन निर्देशः॥ ४२॥ तद्वच्च लिङ्गदर्शनम्॥ ४३॥

---

सर्वेषामप्यग्नीनां सर्वार्थत्वमुपसंहरति—अतस्तेपीति। अत एव घृते श्रपयतीति प्रतिप्रसवरूपेणोपदिष्टश्रपणे कृष्णलचरौ तयोरग्न्योःप्राप्तिः। अत्र चाधिकरणं विनैव ते इत्यनेनैव पूर्वपक्षे प्रयोजनस्य सूचितत्वात् तद्व्यतिरेकेण सिद्धान्ते प्रयोजनं स्पष्टत्वादेव पूज्यपादैर्नोक्तम्। एवं स्थिते पर्णाधिकरणे यत् प्रयोजनमुक्तं तदेव प्रयोजनमत्रापि ज्ञेयमिति प्रकाशकाराणां प्रयोजनोक्तौ प्रयासकरणं श्रममात्रं दुरुपपादं चेति ज्ञेयम्। दुरुपपादता चास्य विस्तरभयान्नोच्यते।

---

॥ स्थितादुत्तरं॥

यौगिकाश्चैते इति। होत्रादिशब्दात्तस्येदं कर्मेत्येवं राज्यशब्दवत्तद्धितप्रत्यये सति व्युत्पन्ना हौत्रादिशब्दाः तत्संबन्धिपदार्थानामभिधायकाः। नहि हौत्रादिसंबन्धस्तेषु केनचित्प्रमाणान्तरेण सिद्धः। अतः सिद्धवत् समाख्यानिर्देशान्यथानुपपत्त्या होत्रादीनां कर्तृत्वेन नियमविधिकल्पनात् तेषां कर्तृत्वसिद्धिरित्यर्थः।

---

1. Cal Edn. reads अतिदेशेन

अयं चोत्सर्गः वचनात् "यजमानस्य याज्या" इत्यादिकात्, विशेषसमाख्यया च पोत्रीयं नेष्ट्रीयं याजमानं इत्यादिकया अपोद्यते। न चैवं तादृशविषये सामान्यसमाख्याया निर्विषयत्वापत्त्याऽऽनर्थक्यप्रतिहतन्यायेन विकल्पापत्तिः। यथाशक्तिप्रयोगे पोत्रादीनामशक्तौ सविषयत्वोपपत्तेः। वस्तुतस्तु – हौत्रादिसमाख्यायास्सामानाधिकरण्यसम्बन्धेन ऋग्वेदविहितकर्मत्वमुपलक्षणीकृत्यैव तत्तत्पदार्थेषु होत्रादिविधायकत्वं, निरुक्तसम्बन्धेनाग्नीषोमीयप्राक्कालवृत्तित्वमुपलक्षणीकृत्योपांशुत्वविधायकत्वमिव "यत्किञ्चित्प्राचीनम्" इत्यस्य। अतश्च तद्वदेव केषुचित् पदार्थेषु तदभावेऽपि न क्षतिः। अत एव दक्षिणारहितकाम्यादौ यजमानस्यैव कर्तृत्वेऽपि समाख्याया न काचिदनुपपत्तिः॥ २१॥

---

॥ तस्योपदेशसमाख्यानेननिर्देशः॥

निर्विषयत्वापत्त्येति। हौत्रादिसमाख्ययापि विशेषरूपेणैव तत्तत्पदार्था उच्यन्ते विशेषसमाख्ययापि तत्तत्पदार्थमात्रमिति श्रुतिलक्षणाकृततारतम्याभावे यदाहवनीये जुहोतीत्यस्य पदशास्त्रेणेव विशेषसामान्यभावेन बाधासंभवात् संभवेऽपि वा तस्य निर्विषयत्वापत्त्या प्रमाणद्वयायातविकल्पापत्तिरित्यर्थः। अशक्ताविति। अकरण इति शेषः। हौत्रादिसमाख्या न प्रत्येकं तत्तत्पदार्थवृत्तिनी। किं तु ते पदार्था यत्र वेदे सन्ति तद्वेदविहितकर्मसामान्यवृत्तिनीति याज्यादिविशेषे हौत्रादिसमाख्याबाधेऽपि अन्यत्र तद्वेदविहितकर्मणि तस्याः सावकाशत्वात् सावकाशनिरवकाशन्यायेनात्र बाधो, न तु सामान्यविशेषभावेनेत्यभिप्रेत्याह। वस्तुतस्त्विति। तद्वदेवेति। ततश्चोपांशुत्वमग्नीषोमीयप्राग्भाविन्यपि दीक्षणीयापदार्थे तदीयस्वरेण निरवकाशेन बाध्यते। अग्नीषोमीयप्राक्कालवृत्तिपदार्थत्वस्य दीक्षणीयातिरिक्तेपि संभवेन तत्र सावकाशस्योपांशुत्वस्य दीक्षणीयायामभावेऽपि यथा न क्षतिस्तद्वदित्यर्थः। यत एवाध्वर्यवादिसामाख्यास्तत्तद्वेदविहितकर्मसामान्यपरत्वेन सावकाशा भवन्त्यत एव दक्षिणारहितकाम्ये आध्वर्यवसमाख्यातकाण्डपठिते दक्षिणाभावेनाध्वर्य्वादिवरणाभावात् अध्वर्य्वादिकर्तृत्वलोपेन केवलयजमानकर्तृत्वस्यैव प्राप्तिः। तत्राध्वर्यवादिसमाख्यायाः कर्मान्तरे सावकाशायाः बाधेऽपि न क्षतिरित्याह—अत एवेति। इदं च नाधिकरणान्तरं, किन्तु पूर्वस्यैवायं शेष इति अधिकारणारंभे उत्सर्गः अपोद्यत इति पदद्वयेन सूचितम्॥

---

(२२)—प्रैषानुवचनं मैत्रावरुणस्योपदेशात् ॥ ४४ ॥ पुरोनुवाक्याधिकारो वा प्रैषसन्निधानात् ॥ ४५ ॥ प्रातरनुवाके च होतृदर्शनात् ॥ ४६ ॥

ज्योतिष्टोमे "**मैत्रावरुणः प्रेष्यति चान्वाह च**" इति श्रुतम्। सन्ति च **तत्र केचित् केवलाः प्रैषाः "अग्नये समिध्यमानायानुब्रूहि," "यूपायाज्यमानायानुब्रूहि" इत्यादयः। केवलानि चानुवचनानि "प्रवो वाजा अभिद्यवः," "अञ्जन्ति त्वामध्वरे देवयन्तः"** इत्यादीनि उपदेशा**तिदेशप्राप्तानि। प्रैषोत्तरत्वाच्चैषामनुवचनत्वम्। कानिचित्तु प्रैषत्वे सत्येवानु-**

---

॥ प्रैषानुवचनम् ॥

यद्यपि भाष्यकारेणैतद्विषयवाक्यमग्नीषोमीयपशावाम्नातत्वेन लिखितं, तथापि तत्प्रदर्शनार्थं; वस्तुतस्तु ज्योतिष्टोमप्रकरण एवैतच्छ्रूयते इति वार्तिकोक्तिमाश्रित्याह—**ज्योतिष्टोमे इति। प्रकाशकारै**स्तु ज्योतिष्टोमप्रकरणाविशेषेऽपि दीक्षणीयाद्यङ्गप्रैषानुवचनानां नोदाहरणता, किंतु अग्नीषोमीयाङ्गप्रैषानुवचनानामेवेत्येतदर्थं अग्नीषोमीयक्रम एवाम्नातं वाक्यमुदाहरणमित्युक्तम्। तस्याप्यग्रे सोमाङ्गप्रैषान्तानुवचनानां हौत्रसमाख्यया होतृकर्तृत्वप्राप्तेः पूर्वपक्षे स्वयमुपपादितत्वात् तेषामप्युदाहरणत्वप्रतीतेर्दीक्षणीयाङ्गतन्निवारण एव तात्पर्यम्। **वस्तुतः** प्रकरणेन क्रमस्य बाधे सति सोमाङ्गत्वाविशेषात् अग्नीषोमीयवद्दीक्षणीयादिष्वपि तत्तत्प्राप्त्यनिवारणात् तदर्थमस्य मैत्रावरुणविधेः स्वतन्त्रमैत्रावरुणप्रयोजकत्वशक्तिकल्पनाभिया यत्रैव क्लृप्तो मैत्रावरुणस्तत्कर्माङ्गभूतप्रैषानुवचनोद्देशेन विधानस्यावश्यकल्पनीयत्वात् तेनैव तन्निवारणे सति अग्नीषोमीयक्रमाम्नातस्यैवास्योदाहरणत्वाग्रहो व्यर्थ एव। **यद्यपि** प्रकरणात् सोमाङ्गभूततदुद्देशेनैव मैत्रावरुणविधानं प्राप्तं, नतु तदङ्गभूताग्नीषोमीयाङ्गभूतेष्वपि, **तथापि** वाक्यसङ्कोचभिया अपूर्वसाधनत्वलक्षणायां प्रधानोपकारकत्वमात्रस्यैव लक्षणान्न बाधकम्। तावतापि दीक्षणीयादिषु मैत्रावरुणाभावान्न तत्प्रसक्तिरिति उपदेशात् सामान्यसमाख्याया बाधे उक्ते उपदेशप्रसङ्गेनोपस्थितेनानेनाप्युपदेशेन विरोधे सति समाख्याबाधेऽवश्यंभाविनि तद्गतसमस्तैकदेशविचारस्य प्रसङ्गादेव करणमित्येवं प्रासङ्गिकीं सङ्गतिं स्पष्टत्वादनुक्त्वा करिष्यमाणपूर्वसिद्धान्तपक्षद्वयोपपत्त्यै विषयशोधनिकामारभते—**सन्ति चेति। अनुब्रूहीत्यादय इति।** एते चाध्वर्यवसमाख्ययाऽध्वर्युकर्तृकाः। **अध्वर इत्यादीनीति।** एतानि हौत्रसमाख्यया होतृकर्तृकाणि। **उपदेशेति।** अग्नये समिध्येति प्रैषाः प्रवोवाजा इत्यनुवचनं च ज्योतिष्टोमाङ्गेषु अग्नीषोमीयादिषु दर्शपूर्णमासातिदेशेन

**वचनानि, यथा—"होता यक्षत्" इत्यादीनि। एषां च "प्रेष्य" इत्यध्वर्युप्रैषोत्तरभा-वित्वात्** "होतर्यज" इत्यन्ते **प्रैषत्वाच्चोभयरूपत्वम्।**

**तदिह मैत्रावरुणः प्रैषानुवचनोद्देशेन विधीयमानस्सर्वत्र स्यात्, न तु प्रैषान्ता-**नुवचनेष्वेव, **उद्देश्यविशेषणस्य साहित्यस्याविवक्षितत्वात्।** चशब्दस्यापि **प्रैषानुवचनरूप-धर्मिसाहित्यपरत्वेन प्रैषत्वानुवचनत्वरूपधर्मयोरैकाधिकरण्यरूपसाहित्यबोधकत्वाभावात्। तस्य च प्रतिप्रधानं गुणावृत्तिन्यायेनैवास्मन्मतेऽपि सिद्धेरनुवादकत्वाच्च। अतश्च सर्व-त्रैव समाख्याप्राप्तकर्त्रन्तरबाधेन वाक्यान्मैत्रावरुणनिवेशः।** नचात्रानेकोद्देशे **वाक्यभेदो दोषः, "अर्धमन्तर्वेदि मिनोति" इतिवदाख्यातैकत्वाभावात्। अत एवैकवाक्योपादान-गम्यसाहित्यस्योद्देश्यगतस्या**प्रतीतत्वादेव **न विवक्षापत्तिः।**

**न चैवमपि शुद्धप्रैषेष्वध्वर्युकर्तृकत्वस्य शुद्धानुवचनेषु च होतृकर्तृकत्वस्यैव समा-ख्यया प्राप्तेः कर्त्रन्तरानपेक्षत्वादेव न मैत्रावरुणविधिः प्रैषान्तानुवचनेषु तु प्रैषत्वेनाध्वर्यु-कर्तृकत्वस्यानुवचनत्वेन च होतृकर्तृकत्वस्य प्राप्तेर्विरोधेनोभयोरपि निवृत्तौ कर्त्रन्तरापे-क्षायां तत्रैव मैत्रावरुणविधिरिति पार्थसारथ्युक्तं युक्तमिति वाच्यम्, प्रैषान्तानुवचनाना-मपि हौत्र एव पाठस्य वार्तिकोक्तत्वेनाध्वर्युकर्तृकत्वाप्राप्तेः, उभयत्र पाठेन तत्प्राप्तावपि वा** विकल्पेनोभय**निवेशोपपत्तेर्निवृत्त्यप्रसङ्गाच्च।**

---

प्राप्तमितरदुपदेशेन प्राप्तमिति विवेकः। अध्वर्युप्रैषेति। मैत्रावरुणसंबोधनकाध्वर्युकर्तृक-प्रैषोत्तरभावित्वादित्यर्थः। होतर्यजेत्यन्ते इति। अयं च मैत्रावरुणकर्तृको होतारं प्रति प्रैषः तदनन्तरं सवषट्कारयाज्याप्रयोगो होत्रा क्रियते। अतः प्रैषान्तानुवचनत्वमिति स्थितिरित्यर्थः। **अनुवचनेष्वेवेति।** एवकारेण सिद्धान्त्यभिप्रेतो नियमो य उक्तस्स एव न त्वित्यनेन खण्ड्यते, न तु प्रैषान्तानुवचनेष्वपि मैत्रावरुणकर्तृत्वं, तस्य पूर्वपक्षेऽपीष्टत्वादिति सूचितम्। **चशब्द-स्यापीति।** चशब्देन प्रैषत्वानुवचनत्वधर्मयोर्यत्र साहित्यमस्ति मन्त्रे न तत्साहित्यमुच्यते। धर्मिसमभिव्याहृतस्य तद्वृत्तितत्प्रतिपादकत्वाभावात्। अतः प्रैषानुवचनसाहित्यं प्रतिप्रधानं गुणान्वयेन मैत्रावरुणेन उभयोः पाठादेकाधिकरणवृत्तित्वरूपं ममापि साहित्यविवक्षायामपि अनुवा-दत्वादुपपन्नमेवेत्यर्थः। उद्देश्यानेकत्वप्रयुक्तं वाक्यभेदमाशङ्क्य इष्टापत्त्या परिहरति—**नचात्रेति। अर्धमन्तर्वेदीति।** अर्धमन्तर्वेदीति वाक्ययोराख्यातद्वयश्रवणात् वाक्यभेदवदिहापि वाक्यभेद इष्ट एवेत्यर्थः। **अप्रतीतत्वादेवेति।** एकवाक्यताया एवाप्रतीतत्वात् दूरे तद्गम्यसाहित्यस्य प्रतीत्यविवक्षेत्यर्थः। **विकल्पेनोभयेति।** ततश्च प्रैषान्तानुवचनेष्वपि हौत्रसमाख्यया

**यदपि वार्तिके अग्नीषोमीयाद्यङ्गभूतेषु प्रैषान्तानुवचनेषु यजेतिशब्दस्य प्राकृतत्वात्तन्मात्रेऽतिदेशेनाध्वर्योः प्राप्तिः, 'प्रेष्य' इति** प्रैषान्तराम्नानाद्वा **"इतरमन्यः" इति न्यायेन प्रतिप्रस्थातुः, सोमाङ्गान्तर्वर्तियजेतिशब्दे तु "होतर्यज" इति लिङ्गानुरोधेन** समाख्यां बाधित्वा **मैत्रावरुणस्य, तदतिरिक्तपदार्थान्तरेषु होतुरेव।** ततश्चांश**भेदेन नानाकर्तृप्राप्तेरे**कपदार्थत्वेन च **कर्तृद्वयासम्भवात् प्रच्युतयोस्तयोर्मैत्रावरुणविधिरित्युक्तं,** तदपि **यजेतिशब्दस्याग्नीषोमीयादौ हौत्र एव प्रत्यक्षपठितत्वेन समाख्यया** आतिदेशिकाध्वर्य्वादिबाधेन **होतृप्राप्तेस्तस्य च "होतर्यज" इति लिङ्गेन बाधेऽपि तत्पुरुषस्य मैत्रावरुणस्यैव यजेतिशब्दे तदेकवाक्यतापन्नपदान्तरेषु च प्राप्तेरुपेक्षितम्।**

---

होतुर्विकल्पेनोभयोरपि वा कर्तृत्वेन नियमतः प्राप्तेः अनपेक्षित एव मैत्रावरुणो विधेय इत्यपेक्षितविधित्वानुरोधेन प्रैषान्तानुवचनेष्वेवेति सिद्धान्तकरणमयुक्तमित्यर्थः। **प्रैषान्तराम्नानाद्वेति।** पूर्वमध्वर्युणा मैत्रावरुणं प्रति होतायक्षदित्यादिहोतर्यजेत्यन्तस्य प्रैषस्य पाठार्थं प्रेष्येति प्रैषदानात् प्रैषप्रैषार्थयोरेककर्तृकत्वानुपपत्त्या होतर्यजेतिशब्दपाठे अध्वर्योः कर्तृत्वेन प्राप्तस्य लिङ्गेन बाधे सति न्यायेन तदीयपुरुषस्य प्रतिप्रस्थातुरेव प्राप्तिः। तत्पूर्वतने होतायक्षदित्यत्र तु मैत्रावरुणस्येति विरुद्धकर्तृद्वयप्राप्तिरित्यर्थः। **समाख्यां बाधित्वेति।** एषामनुवचनानां हौत्रे पाठेन हौत्रसमाख्यया होतुः प्राप्तावपि होतर्यजेति प्रैषस्य स्वात्मनि प्रैषकर्तरि प्रैषार्थकर्तृत्वस्य चासंभवाल्लिङ्गानुरोधेन होतर्यजेतिशब्दे होतुर्बाधे सति कर्तृतया तदीयपुरुषस्य मैत्रावरुणस्य न्यायेन प्राप्तिः। एतावति शब्दे मैत्रावरुणप्राप्तावपि अन्यत्रापवादाभावे उत्सर्गस्य प्रवृत्त्या हौत्रसमाख्याप्राप्तस्य होतुरेव होता यक्षदित्यनुवचने प्राप्तिरिति विरुद्धकर्तृद्वयप्राप्तिरित्यर्थः। **नन्वस्तु** अंशभेदेन विरुद्धकर्तृद्वयनिवेशः तावता तद्बाधार्थमेव मैत्रावरुणविधिः स्यात्। न त्वाकाङ्क्षितविधित्वलाभाय प्रैषान्तानुवचनेष्वेवेति सिद्धान्तसिद्धिरित्यत आह—**ततश्चेति। एकपदार्थत्वेनेति।** एकमन्त्रत्वे नैकपदार्थपाठेऽनवानं पठतीति विधिना एकश्वासेन विहितस्य पाठस्य कर्तृद्वये बाधापत्तिः। अत एकपदार्थत्वानुरोधेन एकतरकर्तृत्वत्यागे आवश्यके कस्य त्यागेन कस्य ग्रहणमथवा द्वयोरपि विनिगमनाविरहात् त्यागेऽन्यस्यैव ग्रहणमित्याकाङ्क्षायां मैत्रावरुणविधिः प्रवर्तत इति सिद्धान्तः साधित इत्यर्थः। तदेतत् **वार्तिकोक्तं** दूषयति—**तदपीति।** आतिदेशिककर्तृत्वापेक्षया यद्यौपदेशिकं कर्तृत्वं कल्प्यं चेद्दुर्बलमित्येतत् पादान्ते वक्ष्यते। प्रकृते एकादशाधिकरणन्यायेन अवभृथे औपदेशिकेन साङ्गावभृथदेशत्वेन क्लृप्तेनाब्देशेन कल्प्यस्याहवनीयादेरिव प्रत्यक्षपठितहौत्रसमाख्याप्राप्तहोतृकर्तृकत्वेनाध्वर्युकर्तृकत्वस्य बाध एवेति न तस्य प्राप्तिः! **यदि** तु प्रैषलिङ्गेन बाधितं तत्कर्तृत्वं **तदा** प्रमाणायातमैत्रावरुणकर्तृत्वे तदंशे सिद्धे होतायक्षदित्यादेर्होतर्यजे-

अबाधेऽपि वा **समाख्याया दुर्बलत्वेन यजेतिशब्दे तदेकवाक्यतापन्नपदान्तरेषु च प्रतिप्रस्थातुरेवैकस्य प्राप्तेर्न कर्त्रन्तरापेक्षा।** एवं सोमाङ्गभूतेष्वपि बोध्यम्। **अतस्सर्वत्रैव मैत्रावरुण इति प्राप्ते—**

वाक्यभेदाङ्गीकारे अनुषङ्गापत्तेश्चशब्दवैयर्थ्याच्च **पदद्वयेन प्रैषान्तानुवचनान्येव "अर्धमन्तर्वेदि" इतिवल्लक्षयित्वा तेष्वेव मैत्रावरुणविधानम्। चशब्देन वा धर्मिणोरितरेतरयोगस्य** स्वरूपे कार्ये वाऽसम्भवात्, **समुच्चयस्य च न्यायादेव प्राप्तेरानर्थक्यतदङ्गन्यायेन धर्मयोरेव प्रैषत्वानुवचनत्वयो**रितरेतरयोगप्रतीतेः, **निपातस्थले च परस्परान्वयस्य व्युत्पत्तिसिद्धत्वेन वाक्यभेदाभावात्** लक्षणां विनैव **परस्परयुक्तप्रैषत्वानुवचनत्वावच्छिन्नोद्दे-**

---

त्यन्तस्य एकपदार्थत्वानुरोधेन पूर्वभागेऽपि मैत्रावरुणस्यैव तत्प्राप्तेर्होतुरप्राप्त्या न द्विकर्तृत्वप्रसक्तिरिति तदेकवाक्यतापन्नेत्यनेन सूचितम्। **अबाधेऽपि चेति।** हौत्रादिविशेषप्रत्यक्षपठितसमाख्ययेति पूर्वत्र शेषः। तथा च प्रेष्येत्यध्वर्युकर्तृकप्रैषान्तराम्नानात् अध्वर्युकर्तृकत्वबाधेन प्रमाणायाता प्रतिप्रस्थातुः प्राप्तिर्होतर्यजेत्यंशे तदा तस्यैवैकपदार्थत्वानुरोधेन पूर्वभागेऽपि प्राप्तेर्न कर्त्रन्तरापेक्षेत्यर्थः। **एवं सोमाङ्गेति।** स्पष्टार्थमेतत्, **एतेन** पुरोनुवाक्यान्त्यप्रैषे होतुः समाख्यया कर्तृत्वे तदर्थे सवषट्कारयाज्याप्रयोगे **प्रैषेषु पराधिकारादिति** न्यायेन प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वात् अध्वर्युस्तु दर्शनादित्युत्तरपादवक्ष्यमाणाधिकरणन्यायेन वोभयत्र समाख्यानुग्रहात इतरमन्यस्तेषां यतो विशेषः स्यादिति मैत्रावरुणकर्तृकत्वकल्पनाक्लेशःस्यात्। न चासौ मैत्रावरुणः प्रेष्यति चानुचाहेति प्रत्यक्षे विधौ सति युक्तः। अतो होतृकर्तृकत्वानिर्ज्ञानात् अपेक्षितविधिरयमिति **प्रकाराकारोक्तमपास्तम्।** होतृकर्तृत्वाज्ञानेऽपि पूर्वोक्तरीत्या मैत्रावरुणकर्तृकत्वादिनिश्चये सत्यपेक्षितविधित्वासंभवात्। कल्पनाक्लेशेनापि मैत्रावरुणकर्तृत्वप्राप्तौ पुनस्तद्विधौ वैयर्थ्यप्रसङ्गाच्च। अतोऽपेक्षितविधित्वेन सिद्धान्तासिद्धेः सर्वत्रैव तत्प्राप्तौ अन्यथा सिद्धान्तोपपत्तिं दर्शयति—**वाक्यभेदेति। अनुषङ्गापत्तेरिति।** मैत्रावरुणपदस्येति शेषः। **स्वरूपे कार्ये वेति।** धर्मिणोःस्वरूपस्यार्थप्रकाशनरूपकार्यस्य च भेदेनेतरेतरयोगासंभवात् इतरेतरयोगस्यैककार्यान्वये सति समासेनैव गम्यत्वेन तदभावेऽसंभवात् तुल्यकल्पत्वेऽन्वाचयस्यापि अनुपपत्तेस्समुच्चयपरत्वं वक्तव्यम्। तस्य च धर्मिणोरेकस्मिन् प्रधानकार्ये न्यायेनैव सिद्धेरानर्थक्यमित्यर्थः॥ **इतरेतरयोगप्रतीतेरिति।** एकाधिकरणवृत्तित्वेनेतरेतरयोगप्रतीतेरित्यर्थः। **लक्षणां विनैवेति।** धवखदिरौ छिन्धीत्यादौ चशब्दाश्रवणे सतीतरेतरयोगप्रतीत्यर्थं धवखदिरपदयोः परस्परसहितलक्षणाऽऽश्रीयते। इह तु चशब्देनैव तत्प्रतीतेः निपातरूपचशब्दार्थस्य प्रैषानुवचनेऽन्वयव्युत्पत्तेः न लक्षणापीत्यर्थः।

**शेन मैत्रावरुणो विधीयते।** अत एव **प्रैषानुवचनान्यतरत्वावच्छिन्न एव लक्षणोपपत्तेर्न युक्तो** वाक्यसङ्कोच **इत्यप्यपास्तम्।**

वस्तुतस्तु **शुद्धानुवाक्यास्वपि कासुचित् मैत्रावरुणस्य** याज्ञिकसम्मतत्वा**च्चशब्दो नेतरेतरयोगार्थः। अपि तु धर्मिसमुच्चयार्थ एव सन्ननुवादः। नचैवं सार्वत्रिकत्वापत्तिः, अनुवादस्य सति सम्भवे सन्निहितगामित्वमिति नियमेन यानि केवलान्यनुवचनानि प्रैषान्तानुवचनानि च अधिकृत्यायं विधिः प्रवृत्तस्तद्विषयकत्वस्यैवाङ्गीकारात्॥ २२॥**

---

## (२३)—चमसांश्चमसाध्वर्यवः समाख्यानात्॥ ४६॥ अध्वर्युर्वा तन्न्यायत्वात्॥ ४७॥ चमसे चान्यदर्शनात्॥ ३८॥ अशक्तौ ते प्रतीयेरन्॥ ३९॥

---

**अत एवेति।** चशब्दवैयर्थ्यादेवेत्यर्थः। **वाक्यसंकोच इति।** लक्षणायामन्यतरत्वावच्छिन्ने तदङ्गीकारेण तस्य प्रत्येकवृत्तितया सर्वत्रैव मैत्रावरुणविधानसंभवेन वाक्यसंकोचो युक्त इत्यर्थः। एवं प्राचां रीत्या प्रैषान्तानुवचनेष्वेव मैत्रावरुणविधिरिति सिद्धान्ते उपपादिते तत्रानुपपत्तिं दर्शयन्निव लक्षणावाक्यभेदप्रसङ्गपरिहारेण वाक्यार्थं स्वयं दर्शयति— **वस्तुतस्त्विति। याज्ञिकसंमतत्वादिति।** अत एव सौत्रामण्यामैन्द्रवारुणसावित्राः पुरोडाशास्ते च पशुविभिन्नदैवत्यत्वात् न प्राकृतपशुपुरोडाशस्थानापन्नाः। एवं च तत्र प्रैषा न सन्ति। किन्त्वैष्टिक्य एवानुवाक्यायाज्यादय इति मते तदीयशुद्धानुवाक्यापाठेऽपि मैत्रावरुणस्यैव कर्तृत्वमुक्तं **नारायणवृत्तिकृता** न होतुरिति भावः। **वस्तुतस्तु** अनुवाक्यां च संप्रैषपूर्वां प्रैष्यादित्या**श्वलायन**सूत्रे संप्रैष एव मैत्रावरुणकर्तृत्वविधानात् तदुक्तं मैत्रावरुणकर्तृत्वमयुक्तमेव। एवं चैतत्सूत्रबलात् अग्निर्वृत्राणि जङ्घनदित्यादिशुद्धानुवाक्यापाठ एव मैत्रावरुणकर्तृत्वं याज्ञिकसंमतं द्रष्टव्यम्।

---

### चमसांश्चमसाध्वर्यवः

सामान्यसमाख्याया उपदेशेन बाधप्रसङ्गादुपदेशगतकृत्स्नैकदेशविचारं कृत्वा यो विशेषसमाख्यया सामान्यसमाख्याया बाध उत्सर्गेण उक्तस्तस्येहापवादकरणादापवादिकीं सङ्गतिं

चमसेषु **विशेषसमाख्यया चमसाध्वर्युरूपया तेषामेव होमादौ कर्तृत्वं,** समासान्तर्गता-**ध्वर्युपदस्य रूढ्या शुद्धाध्वर्युपदवदेव वरणादिनिमित्तत्वाविशेषात्। इयांस्तु विशेषः यत् तस्य सर्वकार्येषु विनियोगः, एतेषां तु चमसेष्वेवेति।** यदि तु **तत्तद्वरणानां भेदादनेक-शक्तिकल्पने** गौरवमाशङ्क्येत। **ततोऽस्तु एष्वप्यध्वर्युशब्दस्य** गौणत्वम्। **न च विनिगम-नाविरहः,** चमसाध्वर्युवरणवाक्ये **रूढिकल्पने चमसाध्वर्युपदस्यैव तत्कल्पनापत्तेः, अध्वर्युपद-स्य ततो भिन्नस्य शक्त्यन्तरकल्पनावश्यम्भावात् अतो** लाघवात्प्रचुरप्रयोगाच्चाध्वर्युपद-**स्यैव प्रसिद्धाध्वर्यावेव शक्तिः, इतरेषु तु गौणी, तथाऽपि तु ग्रहादौ तस्यापि होमादि-कर्तृत्वाद्धोमकर्तृत्वसादृश्यमात्रेणैतेषु गौणत्वोपपत्तेः सामान्यसमाख्यां बाधित्वा चमसेष्वे-तेषामेव होमादिकर्तृत्वमिति प्राप्ते—**

**गौणत्वस्यावश्यकत्वे** चमस**वृत्तिहोमादिकर्तृत्वेनापि गौणत्वोपपत्तौ स्वोपजीव्य-सामान्यसमाख्याबाधे प्रमाणाभावाच्चमसेष्वप्य**ध्वर्युरेव **होमादिकर्ता।** तस्यान्यत्र **व्यावृतत्वे**

---

पूर्वपक्षव्याजेनैव दर्शयन् पूर्वपक्षमाह—**चमसेष्विति। तेषामेव।** चमसाध्वर्यूणामेव। होमादावित्यादिपदेन चमसानामुन्नयनासादनाद्यपि संगृह्यते। अत्र **प्राचीनैश्चमसाध्वर्युपदस्य** चमसेष्वध्वर्युरिवाध्वर्यव इत्येवमध्वर्युगतहोमकर्तृत्वसादृश्येन गौणत्वात् तस्य चमसेष्वध्वर्युकर्तृत्वं विनाऽनुपपत्तेरुपजीव्यायाः सामान्यसमाख्यायाः नालब्धात्मिकया विशेषसमाख्यया बाध इति सिद्धान्तितम्। तत्र गौणत्वे प्रमाणाभावात् न सामान्यसमाख्यासापेक्षत्वं विशेषसमाख्याया इत्येतत् पूर्वपक्षे उपपादयति—**समासान्तर्गतेति।** अस्तु वा प्रमाणायातं गौणत्वं तथापि पूर्वपक्षसिद्धिमाह—**यदि त्विति।** अत्र **प्रकाशकारैः** विनिगमकान्तराभावेपि अध्वर्योश्चमसाध्वर्यु-सादृश्यासंभवः। नहि ग्रहग्रहणादावध्वर्युकार्ये कुतोऽपि चमसाध्वर्युप्राप्तिः संभाव्यते। चम-साध्वर्यूणां तु सामान्यसमाख्यया चमसेष्वपि संभवत्प्राप्तेः अध्वर्योः सादृश्यं संभाव्यत इति विनि-गमकमस्ति, तेन नोभयोः शक्तिः कल्प्येत्युक्तम्। तदेककार्यकर्तृत्वे सत्येव सादृश्यनियमे मानाभा-वात् तदभावेऽपि यजमानःप्रस्तर इत्यादिशतशःस्थलेषु तत्प्रतीतेर्दृष्टत्वादिहापि यथा चमसहोमकर्ता अध्वर्युः तथाऽयमपि स्वकार्यकर्तेत्येवं तत्संभवेन तस्य विनिगमकत्वानुपपत्तेः अयुक्तमित्युपेक्ष्य स्वयं विनिगमकान्तरमाह—**चमसाध्वर्युवरणेति। चमसवृत्तीति।** चमसेषु अध्वर्युर्यथा होमकर्ता तथैते इत्येवमादायापीत्यर्थः। **अध्वर्युरेवेति।** अत एव सवनमुखीयेषु मैत्रावरुणादिचमसेषु अध्वर्युरेव होमकर्ता भवतीत्यर्थः। **तस्यान्यत्रेति।** मध्यतःकारिणां चमसानां सदःप्रवेशात्

तु गौणसमाख्यया चमसाध्वर्यवः। तेषामप्यसम्भवे "इतरमन्यः" इत्येवं प्रतिप्रस्थात्रादयः ॥ २३ ॥

---

(२३)—वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः ॥ ५० ॥ तद्गुणाद्वा स्वधर्मः स्यादधिकारसामर्थ्यात्सहाङ्गैरव्यक्तश्शेषे ॥ ५१ ॥

औद्गात्रे सामवेदे श्येनश्श्रुतो ज्योतिष्टोमधर्मवान्। तत्र प्राकृताङ्गेष्वतिदेशेन नाना ऋत्विजः प्राप्ताः औपदेशिक्या औद्गात्रसमाख्यया बाध्यन्त इति तेषूद्गातैव कर्ता। समाख्या हि कर्तृप्रापिका। कर्ता च प्रयोगाङ्गम् प्रयोगश्च प्रयोगविधिना साङ्गस्यैको विधीयत इति समाख्ययाऽङ्गेष्वपि कर्तृविधिरुपदेशेन। अतश्च यथैव "अप्स्ववभृथेन चरन्ति" इत्यत्रापां देशत्वात् साङ्गभावनाविषयत्वप्रतीतेः प्राकृतेषु प्रयाजादिष्वग्निबाधकत्वं तथा प्रकृतेऽपि। न च समाख्यायाः प्रधानमात्रे श्रुताया अप्यङ्गविषयकत्वस्य कल्पनीयत्वेन प्रयोगविध्याश्रितत्वात् तस्यातिदेशप्रापिताङ्गविषयत्वेन तदपेक्षत्वादुपजीव्यचोदकप्रापितनानाकर्तृकत्वबाधानुपपत्तिरिति वाच्यं, सत्यपि तृतीयाश्रवणेऽपामप्यङ्गविषयत्वस्य कल्पनीयत्वेनोक्तविधयाऽग्निबाधकत्वानापत्तेः। न हि तृतीयायास्साङ्गवृत्तिकरणत्वे शक्तिः, अपि तु प्रधानकरणत्व एव, तत्तु अङ्गवैशिष्ट्यं विनाऽनुपपन्नमित्यङ्गविषयत्वं कल्प्यमेव। अतश्च शरादौ क्लृप्तोपदेशस्थल इव कल्प्योपदेशस्याप्यतिदेशबाधकत्वं वाच्यम्। अत एव यत्र

---

पूर्वं शुक्रामन्थिप्रचारेऽध्वर्योः व्यापृतत्वे एकदेवत्यत्वेन सहानुष्ठाय चमसाध्वर्युभिरेव तन्त्रेण होमकरणमित्यर्थः।

---

॥ वेदोपदेशात् ॥

पूर्वाधिकरणोपदिष्टपदार्थविषयसामान्यविशेषसमाख्ययोरविरोधे उक्ते तत्प्रसङ्गात् उपदिष्टसमाख्यायाः अतिदिष्टपदार्थविषयसमाख्यया सहाविरोधचिन्ता क्रियत इत्येवं प्रासङ्गिकीं सङ्गतिं स्पष्टत्वादप्रदर्श्य विचारविषयमाह—औद्गात्रेति। औद्गात्रमिति समाख्याते इत्यर्थः। एतच्चाध्वर्यवे यजुर्वेदे समाम्नातस्य वाजपेयस्याप्युपलक्षणम्। उपदेशेनेति। तथाच प्रधानवेदे पठितानामपि प्राकृताङ्गानां प्रधानप्रयोगविषयत्वात् गुणमुख्यव्यतिक्रमाधिकरणन्यायेन प्रधानवेदव्यपदेशात् तत्समाख्याप्राप्तकर्तृविधिः उपदेशेनेत्यर्थः। अत एव यत्रेति। अङ्गविषये

**प्रकृतावेव स्तोत्रशस्त्रादौ वेदान्तरीये विशेषसमाख्यारूपेणोपदेशेनैव कर्त्रन्तरप्राप्तिः तत्राङ्गविषये कल्प्यायाः प्रधानसमाख्याया बाध इष्ट एव। वर्णितं ह्येतत् गुणमुख्यव्यतिक्रमाधिकरणे।** प्रकृते त्वातिदेशिकत्वात्प्रधानसमाख्याया एव प्राबल्यमिति प्राप्ते—

इहापि **प्रयोगविध्याश्रितायास्तस्या अङ्गविषये कल्प्यत्वेनोपजीव्यातिदेशापेक्षत्वात् तेन च कर्तृविशिष्टानामेव च प्राप्तत्वेन कर्त्रपेक्षाभावात् समाख्याया आकाङ्क्षाविरहे श्रुत्यकल्पकत्वात्, कल्पकत्वेऽपि वा प्राकृताङ्गविषयत्वाभावात् न प्राकृतकर्तृबाधकत्वम्। नचैवमप्स्वपि तथात्वापत्तिः, अब्विधेः प्रत्यक्षत्वात्तासां च धात्वर्थान्वयस्याव्युत्पन्नत्वात् तृतीययाऽवभृथकरणकभावनायामन्वयावगतेर्देशत्वेन च भावनोत्पत्त्यन्वयित्वाभावेन तत्प्रयोगान्वयित्वात्, प्रयोगस्य चाङ्गप्रधानसाधारणत्वात् भावनान्वयद्वारा पाश्चात्यतद्विशेषणान्वयेऽविशेषेणोभयान्वयतात्पर्यावगत्या उपदेशेनैव प्रधान इवाङ्गेष्वप्यप्सिबाधात्। अत एव यत्र तृतीयाश्रवणाभावः यथा "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः" इत्यादौ तत्र प्रधानकर्मकभावनायामेवान्वयात्तस्यां चाङ्गान्वयाभावेन प्रधान एव प्राकृतस्वरादिबाधकत्वम्।** प्रकृते तु **समाख्यायाः प्रधानमात्रविषयत्वात्तस्य च स्वामिकर्तृकत्वेनान्यकर्तृकत्वानुपपत्तेस्स्वनिर्विषयत्वान्यथानुपपत्त्या कथञ्चिदानर्थक्यतदङ्गन्यायेनाङ्गमात्र-**

---

कल्प्यापि प्रधानसमाख्या उपदेशरूपत्वात् कल्प्यातिदेशप्राप्तसमाख्याबाधिका भवत्येव। यत्र तु विशेषेण तत्तदङ्गपुरस्कारेण प्रत्यक्षपठितैव समाख्या तया त्वङ्गविषये कल्प्यत्वेन प्रधानसमाख्या बाध्यते। यथा ज्योतिष्टोमस्याध्वर्यवसमाख्यानात् तदङ्गेष्वपि प्रधानसमाख्ययाऽध्वर्युकर्तृकत्वप्राप्तौ स्तोत्रशस्त्रादिषु औद्गात्रहौत्रसमाख्यातवेदादिषु पठितत्वेनौद्गात्रादिसमाख्यया विशेषरूपया प्रत्यक्षपठितया तस्या बाधात् उद्गात्रादिकर्तृकत्वमेव भवतीत्यर्थः। पूर्वोक्तमेव वैषम्यं दर्शयति— **प्रकृते त्विति।** तथा च यद्यपि प्रधानसमाख्याऽतिदिष्टोपदिष्टाङ्गविषया सती सामान्यरूपातिदिष्टमात्राङ्गविशेषविषयिण्या प्राकृततत्तत्समाख्यया बाध्येत तथापि तस्या अतिदेशप्राप्तत्वेन कल्प्यत्वात् अस्यास्सामान्यरूपाया अपि क्लृप्तत्वात् दौर्बल्यप्राबल्याभ्यां प्रधानसमाख्यात एव कर्तेत्यर्थः। **इहापीति।** यथा स्तोत्रादौ प्रधानसमाख्याप्राप्तकर्तृबाधस्तथा इहापीत्यपिशब्दार्थः। नन्वतिदेशप्राप्तकुशानां शरैरिवेहापि अतिदेशप्राप्तनानाकर्तृत्वस्यौपदेशिकेनोद्गातृकर्तृत्वेन बाध एव कुतो न स्यात् इतरथा श्येनप्रधाने यजमानकर्तृत्वेनातिदिष्टाङ्गेषु नानाकर्तृत्वेनावरोधे सति प्रधानसमाख्याया निर्विषयत्वापत्तेरित्याशङ्कां परिहरन् वैषम्यमुपपादयति—**प्रकृते त्विति।** उभयोर्बाध्यबाधकशास्त्रयोः क्लृप्तत्वे सति शरादिषु प्राप्तबाधो युक्तः। इह तु चोदकस्य क्लृप्तत्वात् **समाख्यया** श्रुतेः कल्प्यत्वात् न तद्बाधकत्वमपि तु क्लृप्ताविरोधेनैव तत्कल्पनं युक्तमिति

**विषयत्वकल्पनेऽपि क्लृप्तकर्तृकाङ्गविषयत्वकल्पने प्रमाणाभावात् कण्टकवितोदनाद्यौपदेशिकाङ्गविषयत्वमेव कल्प्यते। वस्तुतस्तु—तेषामपि विशिष्य** स्वसमाख्ययैव **कर्तृप्राप्तेर्न प्रधानसमाख्याविषयत्वं, अपि तु यानि वेदत्रयाविहितानि स्मृत्यनुमितवेदविहितान्यङ्गानि तद्विषयैव सेति ध्येयम्। अतः प्राकृताङ्गेषु नानैव कर्तारः।** किञ्च **समाख्यायाः पाठमात्रनिबन्धनत्वेन "उच्चैर्** ऋचा" इत्यादिवत् **विधाननिबन्धनत्वाभावात् प्राकृतानां च सामवेदेऽपठितत्वादपि तद्विषयत्वाभावः ॥ २४ ॥**

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां**
**तृतीयस्याध्यायस्य सप्तमः पादः**

---

वैषम्यं क्लृप्तकर्तृकाङ्गेति कर्तृपदेन सूचितम्। **स्वसमाख्ययैवेति।** कण्टकवितोदनाद्यङ्गविधीनामपि सामवेद एव पाठेन तत्राप्यौद्गात्रसमाख्याप्रवृत्तेः स्वसमाख्ययैवोद्गातृकर्तृत्वप्राप्तिरित्यर्थः। एतावता चौद्गात्रमिति समाख्यायास्सामवेदीयप्रयोगविधिविहितत्वनिबन्धनत्वमाश्रित्य चोदकापेक्षया दौर्बल्यं सिद्धान्तितम्। **वस्तुतस्तु** न तद्वेदीयविधिविहितविषयिणी सा, किन्तु सामवेदपाठविषयिणी सती येषां तद्वेदे पाठः तेष्वेव तत्कर्तृत्वप्रापिका न त्वतिदेशप्राप्तेषु तत्रापठितेष्वपीत्याह—**किंचेति। ऋचेत्यादिवदिति।** तत्र क्रियत इत्युपादानात ऋग्वेदेन यत्क्रियते विधीयते कर्म तदङ्गत्वेन तत्स्वरविधानसंभवेपीह समाख्याया विहितकर्मविषयत्वाभावात पाठप्रयुक्तत्वमेवेति व्यतिरेकविधया दृष्टान्तो द्रष्टव्यः।

**इति श्रीखण्डदेवान्तेवासिकविमण्डनशंभुभट्टविरचितायां**
**भाट्टदीपिकाप्रभावल्यां तृतीयस्य सप्तमः**
**पादः समाप्तः**

---

# अथ तृतीयाध्यायस्याष्टमः पादः.

(१)—स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात् ॥ १ ॥ वचनादितरेषां स्यात् ॥ २ ॥

वरणं **दक्षिणादानं च समाख्ययाऽध्वर्य्वादिभिरेव कार्यम्।** अध्वर्युश्च **यथा तान् स्वद्रव्येण परिक्रीणीते तदुपायं यजमानः कुर्यात्।** अध्वर्योश्च **"इतरमन्यः" इति न्यायेन वरणादिकं प्रतिप्रस्थाता कुर्यात्। स चाध्वर्युर्दक्षिणाम्नानात्** तेनानतस्स्वकृत्यं **कुर्यात्। ऋत्विगन्तरार्थं स्वद्रव्यं दातुं यजमान उपायान्तरं कुर्यादिति प्राप्ते—**

---

**॥ स्वामिकर्मपरिक्रयः ॥**

समाख्याया लिङ्गेन सह विरोधाविरोधविचारार्थमारंभणीयस्यास्य पादान्तरस्य प्रथमे **स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वादित्यस्मिन्** सूत्रे परिक्रयपदं वरणस्याप्युपलक्षणं पूर्वपक्षसिद्धान्तयुक्तेरुभयत्र तुल्यत्वादित्यभिप्रेत्याह—**वरणमिति** । दार्शपौर्णमासिकदक्षिणाया यजुर्वेदे समाम्नानेऽपि सौमिक्या यजुर्वेद इव सामवेदेप्याम्नानात् उद्गातुरध्वर्य्वादिभिरित्यत्र आदिपदेन संग्रहः। **ननु** प्रयोगवचनेन सर्वत्र स्वामिन एव साक्षात् कर्तृत्वप्राप्तौ परिक्रयबलात् प्रधानातिरिक्तकतिपयपदार्थेषु प्रयोजककर्तृत्वमाश्रीयते । तथा च परिक्रयस्य स्वामिप्रयोजककर्तृत्वापादनसामर्थ्यात्मकलिङ्गेन परिक्रये स्वामिकर्तृकत्वावगतेः आध्वर्यवादिसमाख्याबाध एवापद्यते । न च तत्तत्समाख्याबलेनैव इतरपदार्थेषु स्वामिनः प्रयोजककर्तृत्वं न परिक्रयवशादिति युक्तं, समाख्यामात्रेण प्रधानवाक्यावगतस्वामिसाक्षात्कर्तृत्वबाधायोगादित्यत आह—**अध्वर्युश्चेति** । परिक्रयसाधनीभूतोपायानुष्ठानेनैव परिक्रये स्वामिनः प्रयोजककर्तृत्वोपपत्त्या तादृशपरिक्रयद्वारा इतरकर्मणि तथाविधकर्तृत्वोपपत्तेः परिक्रयगतेन लिङ्गेनाविरोधात् न तद्बाध इत्यर्थः। न चाध्वर्योर्वरणदक्षिणादानानुष्ठाने स्वकर्तृकत्वासंभवे यजमानेनैव तदनुष्ठाने कथं न समाख्याबाध इत्यत आह—**अध्वर्योश्चेति** । अध्वर्योरसंभवे तत्पुरुषेण प्रतिप्रस्थात्रा तदनुष्ठानेऽपि तत्समाख्योपपद्यत एवेत्यर्थः। **तेनानत इति** । प्रतिप्रस्थातृदत्तदक्षिणादिनेत्यर्थः। **ऋत्विगन्तरार्थमिति** । अध्वर्युं यथा प्रतिप्रस्थाता स्वद्रव्येण परिक्रीणीते अध्वर्युश्च ऋत्विगन्तरान् तथा उपायान्तरं यजमानः कुर्यादित्यर्थः। एकं प्रतिप्रस्थात्रर्थं अपरं चाध्वर्योरर्थं इति उपायद्वयमुपायान्तरपदेन सूचितम् । परिक्रयातिरिक्ताङ्गेषु वैधपरिक्रयबलात् प्रयोगवाक्यावगतस्वामिकर्तृत्वबाधस्वीकारेऽपि परिक्रये-

**अवश्यं वृतोऽध्वर्युरन्यान् वृणीते; अन्यथाऽध्वर्युत्वासम्भवात्, वरणस्यादृष्टार्थत्वाद्यापत्तेश्च। तद्वरणं च येनादौ कर्तव्यं तस्याध्वर्युगणत्वसम्पत्तये वरणस्यावश्यकत्वात् तस्य चासमाख्यातककर्तृकत्वावश्यंभावात् वरणे तावत् समाख्याबाध आवश्यक एव। एवं दक्षिणादानेऽप्युपायान्तरकल्पने गौरवापत्तेः** प्रयोगवाक्या**वगतस्वामिकर्तृकत्वबाधापत्तेश्च समाख्याया एव केवलाया बाधः।**

**वस्तुतस्तु—सर्वत्र स्वामिकर्तृकत्वप्राप्तौ वरणेनैव दक्षिणादानेनाप्यन्यत्रान्यकर्तृकत्वे सिद्धे समाख्यया नियममात्रं क्रियत इति स्वलाघवानुरोधेनापि न समाख्या वरणभरणविषयिणी।** सत्यपि वा **तस्मिन् उपायान्तरकल्पनाद्यनुरोधेनैव दानमात्रे स्वामिकर्तृकत्वम्।** यत्र तु **वचनं यथा "य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यात्" इत्यादौ तत्राध्वर्व्यादीनामपि दानकर्तृत्वम्। तत्र हि स्वामिकर्तृकत्वे उपधानस्य सामानाधिकरण्येन तत्स-**

---

ऽविहितप्रयोजकव्यापराश्रयणेन तद्बाधो न युक्त इत्यभिप्रेत्याह—**प्रयोगवाक्येति**। **स्वलाघवेति**। वरणभरणयोः प्रमाणान्तरेणानियतकर्तृप्राप्तेः प्रत्युत स्वामिकर्तृत्वस्यैव नियमतः प्राप्तेः समाख्याया नियामकत्वासंभवात् तदर्थमपूर्वतयैव तस्याः कर्तृप्रापकत्वविधाने तात्पर्यकल्पनापत्तेः गौरवं; अतः स्वलाघवार्थं सा वरणभरणविषयिणी नेति भावः। कथमितरपदार्थसाधारणी समाख्याऽनादिसिद्धा न तद्विषयिणी स्यात् अन्यथा तदुपपत्त्यसंभवात् इत्यत आह—**सत्यपि वेति**। अयमर्थः। यद्यपि समाख्यायाः तद्विषयत्वात् तत्कर्तृत्वं प्राप्नोति, तथापि तदानीं परिक्रयविधेरपूर्वविधित्वापत्तिः। न ह्यध्वर्यूपादानप्रयोजनकस्य परिक्रयस्याध्वर्योः अपेक्षा तदुपादानस्य यजमानेनैवाकाङ्क्षितत्वात्। ततश्च यस्य यदाकाङ्क्षितं तत्तेनैव कर्तव्यं भवतीति यजमानस्योपादानसाधनत्वेनानियतोपायप्राप्तेः तदपेक्षया परिक्रय एवोपायो नियम्यत इति लाघवम्। तत्र तु अध्वर्योरनाकाङ्क्षितस्यैवापूर्व उपायः समाख्याप्राप्तकर्तृविशिष्टपरिक्रयविधिना विधेय इति गौरवमिति। तथा च तदनुरोधेन स्वामिकर्तृत्वे सिद्धे तदनुकूलतासंपादनद्वाराऽध्वर्योरेव प्रयोजककर्तृत्वाश्रयणेनाथवा बहुष्वाध्वर्यवेषु अनाध्वर्यवे चैकस्मिन् दानमात्रे भूम्ना गौणीमङ्गीकृत्य समाख्योपपादनीयेति मात्रशब्देन सूचितम्। एवमत्र दाने स्वामिकर्तृत्वस्य सिद्धान्तितस्यापवादप्रदर्शनार्थं **वचनादितरेषां स्यादिति** सूत्रान्तरं, तदर्थमाह— **यत्र त्विति**। अत्र वरदाने परिक्रयसामर्थ्यात् पूर्वत्र लिङ्गेन समाख्याबाधे उक्ते प्रकृते वरदानगतलिङ्गस्य उपधानकर्तृसामानाधिकरण्येन बाधो वक्तव्यः। तस्य च वाक्यरूपत्वात्तदपेक्षया दौर्बल्यमेवेति यजमानकर्तृकत्वमेव स्यात्, यदि तु सामानाधिकरण्यरूपवाक्यस्य सर्वथाऽनर्थक्यमेव स्यात तदा स्यादपि लिङ्गबाधः न त्विह तदस्ति। पूर्वन्यायेन दानस्य याजमानत्वे सति तद्बलादुपधानस्यापि आध्वर्यवसमाख्याबाधेन यजमानकर्तृत्वोपपत्तिरित्यत आह

**मानकर्तृकत्वावगते**स्तस्यापि **तत्कर्तृकत्वे 'उपदध्यात्' इति परस्मैपदानुपपत्तिः, तस्य ङित्परत्वेनोपधातृभिन्नगामिक्रियाफलकत्वावगतेः**। यदि तु **क्रियाफलस्याग्न्यादिगतत्वात्परस्मैपदोपपत्तिरित्याशङ्क्येत, ततः** प्राप्तोपधाना**नुवादेन दानस्य तत्कर्तृकत्वस्य च विधौ वाक्यभेदापत्तेः य इत्यनेन कर्तृप्राप्तिप्रतीतेश्चोपधानस्याध्वर्युकर्तृकत्वावसायात् तत्समानकर्तृकस्य दानस्यापि तत्कर्तृकत्वसिद्धिः** ॥ १ ॥

---

## (२)—संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन् ॥ ३ ॥ याजमानास्तु तत्प्रधानत्वात्कर्मवत् ॥ ४ ॥ व्यपदेशाच्च ॥ ५ ॥ गुणत्वेन तस्य निर्देशः ॥ ६ ॥ चोदनां प्रति भावाच्च ॥ ७ ॥ अतुल्यत्वादसमानविधानास्स्युः ॥ ८ ॥

---

—**तस्यापीति**। उपधानं तच्छब्दार्थः। ततश्च परस्मैपदश्रुतिसहकृतेन वाक्येन लिङ्गस्य बाधादध्वर्युकर्तृकमेवेदं वरदानमिति प्राचीनैः कृतं सिद्धान्तमाक्षिपन्निव युक्त्यन्तरमाह—**यदि त्विति**। यद्यपीष्टकानाङ्कर्मत्वात् तद्गतमेवोपधानफलं प्रतीयते तथापि तासां धात्वर्थकर्मत्वात् उपधानभावनायामिष्टं फलमाहवनीयाधाररूपस्थण्डिलनिष्पत्तिरूपं स्थण्डिलगतमेवेत्यभिप्रेत्य अग्न्यादिगतत्वादित्युक्तम्। **प्राप्तोपधानेति**। चित्रिणीरुपदधातीत्यादिभिरिति शेषः। **तत्कर्तृत्वस्य** यजमानकर्तृत्वस्य। **सिद्धकर्त्रिति**। सिद्धकर्तृकोपधानानुवादः आध्वर्यवसमाख्याप्राप्ताध्वर्युकर्तृत्वेनैव सिद्ध्यतीति यजमानकर्तृत्वे वाक्यार्थानुपपत्तेः यच्छब्दश्रुतिसहकृतवाक्येन युक्त एव लिङ्गस्य बाध इति भावः। अत्र चान्यो **वा स्यात् परिक्रयाम्नानादित्यत्रोक्तस्य** स्वामिनि परिक्रियायोगस्य स्वामिकर्तृकत्वं विनानुपपत्तेः तत्रैव स्वामिकर्तृकतासिद्धेः गतार्थताशङ्का "सिद्धे त्वेतस्मिन्नन्यो वा स्यात् परिक्रयादित्येतत् द्रष्टव्यम्" इति वार्तिक एव परिहृता।

---

॥ **संस्कारास्तु** ॥

वपनादिसंस्काराणां न कर्तृत्वांशपातित्वं येन यजमानर्त्विक्साधारण्यं स्यात् किन्तु यजमानर्त्विग्गतकर्तृत्वस्य प्रत्यक्षत एव तैर्विना सिद्धेः फलभोक्तृत्वांशपातित्वम्। अत एवर्त्विक्फलस्य दक्षिणादानादेरपि तैर्विना सिद्धेर्न तत्फलभोक्तृत्वांशपातित्वमपि तु प्रधानफलस्यैवोत्पत्त्यदर्शनात् तत्राप्य**पूर्वाधिकरणकौस्तुभ**दर्शितरीत्या जातेष्टौ पुत्रे फलिसंस्कारवारणाय प्रधानकर्तृत्वसमानाधि-

**वपनादयः** फलिसंस्कारा**स्समाख्यानादध्वर्युकर्तृकाः। तेनाध्वर्युणा क्षुरं दण्डकाष्ठं जलं च गृहीत्वा यजमानस्य केशवपनादि दन्तधावनं स्नानं च करणीयं** अञ्जनाभ्यञ्जनवदिति **प्राप्ते**—

" वपत " इत्यात्मनेप**दाद्वपनफलाश्रयस्य यजमानस्यैव तत्कर्तृत्वं प्रतीयते। अस्ति च तस्यापि छेदनाख्यवपनाधारत्वेन स्थाली पचतीतिवत् तत्कर्तृत्वं, तदादायैव " तस्मात्केशान् वपाम्यहं " इति प्रयोगः। यस्तु " नापितो वपति " इत्यादिप्रयोगः,** स छेदनानुकूल**क्षुरक्रियाकर्तृत्वमादाय। तत्प्रयोजककर्तृत्वमादायैव " नापितो यजमानं वापयति " इत्यादिप्रयोगः। अतश्च " वपत " इत्यात्मनेपदस्थले आधारत्वमादायैव कर्तृत्वोपपत्तौ क्षुरग्रहणकर्तृत्वेऽपि तात्पर्यकल्पने प्रमाणाभावः।** तेना**र्थाक्षिप्तस्य तस्य यजमानकर्तृकत्व-**

---

करणफलभोक्तृसंस्कारकत्वमेवेति पूर्वतनपादद्वितीयाधिकरणे निर्णीतमभिप्रेत्याह—**फलिसंस्कारा इति**। ततश्च तत्र ऋत्विक्संस्कारकत्वे निराकृतेऽपीहाध्वर्युकर्तृत्वनिराकरणाय समाख्याप्रवृत्त्यप्रवृत्तिविचार इत्यर्थः। **अञ्जनाभ्यञ्जनवदिति**। **एतेन** यजमानस्यात्र प्राधान्यात् यथैव प्रधानानि पुरुषार्थत्वात् यजमानकर्तृकाणि भवन्ति एवमेतेपीति वार्तिके **याजमानास्तु तत्प्रधानत्वात् कर्मवदिति** सिद्धान्तसूत्रानुसारेणोक्तं **तदपास्तम्**। अञ्जनाभ्यञ्जनादिष्विव परकर्तृत्वेऽपि यजमानगतप्राधान्याहानेः। **अत्र** सिद्धान्ते **प्रकाशकारैः** संस्काराः संस्कृतस्य कार्ययोग्यतामाधातुं क्रियन्ते। न च कश्चिद्योग्यताजननार्थं कर्तारं परिक्रीणीते स्वयमेव योग्यत्वादिति यथाश्रुत**शास्त्रदीपिकाग्रन्थस्वारस्येन** योग्यताजनकवपनादिक्रियागतेन लोकप्राप्ततत्तत्कर्तृकत्वरूपलिंगेन तथा **गुणत्वे तस्य निर्देश** इति सिद्धान्तगुणसूत्रविवरणपरभाष्यवार्तिकस्वारस्येन परिक्रयगतेन कर्मणि परिक्रीतस्य गुणभावसंपादकत्वलिङ्गेन च आध्वर्यवसमाख्याया बाधात नाध्वर्युकर्तृकत्वमिति सिद्धान्तितम्। **तदयुक्तं,** वपनादिक्रियासु तत्तत्केशवियोगादिफलजनकत्वरूपसामर्थ्यस्य स्वतस्सिद्धत्वेऽपि नापितादितत्तत्कर्तृकत्वस्य नैयत्याभावेन व्यभिचारितया लिङ्गत्वानुपपत्तेः। परिक्रयस्य इतरकर्मणि कर्तृतया प्राप्त्यर्थमिव वपनादिकर्मणि यजमानसंस्कारकेपि गुणत्वेनैव कर्तृत्वप्राप्त्यर्थमुपपत्तेश्च। न हि पूर्वपक्षिणाऽध्वर्युः संस्कार्य इत्येवमुच्यते। येन तत्र हि समाख्या नियामिका भवति। यत्र कर्तुरपेक्षा, क्व चासौ यदर्थः परिक्रयः। स च कर्तुः क्वचिद्गुणत्वमापादयितुं क्रियते न संस्कारायेति **वार्तिकोक्तं** दूषणमापद्येत। तेनापि संस्कारेषु गुणत्वेनैवाध्वर्योः कर्तृत्वाङ्गीकारात। अत एतादृशलिङ्गत्वमङ्गीकृत्य समाख्याबाधोपपादनं न युक्तं, किन्तु समाख्याया अत्र कर्त्रन्तरापेक्षाया अभावेनानियतकर्तृप्राप्त्यप्रसक्तेः प्रवृत्तिरेव नास्तीत्येव सकलग्रन्थतात्पर्यं वर्णनीयमित्यभिप्रेत्य कर्त्रन्तरापेक्षाभावेन हेतुनैव स्वयं सिद्धान्तमुपपादयति—**वपत इत्यात्मनेपदेति**। **स्वःच्छेदनेति**। परस्मैपदप्रयोगादिति शेषः। **तेनेति**। तथा च येन

**नियम एव प्रमाणाभावेऽध्वर्युकर्तृकत्वनियमस्य कः प्रसङ्गः** इति नापितकर्तृकमपि **तत्।** सोमे तु **" प्रवपति देवश्रूः " इति परस्मैपदप्रयोगात् अध्वर्युकर्तृकगोदानवपनोत्तरं ' नापिताय क्षुरं प्रयच्छति ' इति विधानात्तत्कर्तृकमेव** तत्। एवमन्यत्राप्यात्मनेपदयुक्ते **द्रष्टव्यम्। अत एव यत्र " तमभ्यनक्ति " " शरेषिकयाऽनक्ति " " दण्डेन दीक्षयति " इत्यादौ परस्मैपदनिर्देशः अधिकरश्रुतः, तत्र सत्यप्याधारत्वमादाया**त्मनेपदोपपत्त्या **यजमानकर्तृकत्वे व्यापारान्तरस्यापि विधेयत्वादध्वर्युकर्तृकत्वमिष्टमेव। स्नाने तु स्वनिष्ठव्यापार एव स्नातीति** परस्मैपदस्यापि प्रयोगाद**न्यकर्तृके च स्नापयतीत्येव प्रयोगात् यजमाननिष्ठव्यापारस्यैव विधेयत्वेनान्यकर्तृकव्यापारस्याविधेयत्वेन नाध्वर्युनियमः। न त्वत्र परस्मैपदादन्यकर्तृकत्वनियमः, स्नाधातोस्स्वरितेत्त्वाद्यभावेन** तदभावात्। **अतः फलिसंस्कारास्स्वामि-**

---

वाक्येन वपनादि विहितं न तेन क्षुरग्रहणादिपर्यन्तमपि तत्। यत्तु च्छेदनादि विहितं तत् यजमानकर्तृकमेव विहितमिति न तादृशमध्वर्योः संभवति येनाध्वर्योः वपनाधारता स्यात् क्षुरग्रहणादौ संभवतोऽपि कर्तृत्वस्याध्वर्यवकाण्डे पाठाभावेन समाख्याया अर्थाक्षिप्तक्षुरग्रहणादिपरत्वाभावादेवाप्राप्तत्वान्नाध्वर्योः प्राप्तिरिति **कःप्रसङ्ग** इत्यनेन सूचितम्। अतो लोकसिद्धनापितकर्तृत्वबाधे प्रमाणाभावाद्योग्यतया च सुतरां नापितप्राप्तौ कर्त्रन्तराकाङ्क्षाया अभावात् अनियतकर्तृप्राप्तौ तस्याः नियामकत्वस्यानुपपत्तेः युक्तमेव नापितकर्तृत्वमित्यभिप्रेत्याह—**इति नापितेति। यद्यपि** दन्तधावनादिष्विव वपनस्य छेदनानुकूलक्षुरग्रहणादिरूपव्यापाररूपत्वाङ्गीकारेणापि वपत इत्यत्र यजमानस्य कर्तृत्वोपपत्तौ न स्थाली पचतीतिवत् गौणमनन्यगतिकं कर्तृत्वं वपनाधारतामात्रेणाश्रयितुं युक्तं **तथापि** यजमानस्य कर्तुः सत एव तद्वाचकपदान्तरकल्पनया प्राधान्यकल्पनात्तस्य कर्तृत्वेन प्राप्तावपि नाध्वर्योः कथमपि प्राप्तिः। **वस्तुतस्तु** यजमानकर्तृत्वविशिष्टवपनान्तरस्य स्वसंस्कारकत्वेन विधौ विशिष्टविधिगौरवापत्तेः लाघवात्तत्तत्सिद्धकर्तृत्वविशिष्टत्वेन यथा प्राप्तवपनादीनां लोकतोऽवगतानां यजमानसंस्कारार्थत्वेन विनियोगमात्रस्यैव करणेन तदनुरोधेन न क्षुरग्रहणादिव्यापाराश्रयत्वेन यजमानस्य कर्तृत्वमाश्रीयते, किंतु वपने गौणमेव। यत्र तु दन्तधावनादौ लोकत एव स्वकर्तृत्वमेव प्राप्तं तत्र मुख्यतयैव तदुपपत्तेः नान्यस्य प्रसक्तिरिति **नापितकर्तृकमेवे**त्येवकारेण सूचितम्। **सोमे त्विति।** एतच्च यत्र समन्त्रकवपनं विहितं तस्योपलक्षणम्। अत एव चातुर्मास्येषु अध्वर्युकर्तृका एव वपनादयः। **तदिति।** गोदानवपनमित्यर्थः। **एवमिति।** व्याख्यातपूर्वमेतत्। **आत्मनेपदोपपत्त्येति।** यदाङ्क्ते नवनीतेनाभ्यङ्क्ते इत्याद्यात्मनेपदम्। विधेयत्वादित्यनेनाध्वर्युकाण्डपठितत्वेन समाख्ययाऽध्वर्युप्राप्तिस्सूचिता। **परस्मैपदस्यापि प्रयोगादिति।** परस्मैपदप्रयोगे सत्यपीत्यर्थः। **तदभावादिति।** ये स्वरितेतो ञितश्च धातवः भवन्ति तेभ्य

**कर्तृका एव। कर्तृसंस्कारास्तु हिरण्यमालित्वन्दयस्सामान्यविहिता**स्सर्वेषामेव। विशिष्य विहिता**स्तु तेषामेवेति** न तत्रापि **समाख्यया नियमः। तस्याः नियामकमात्रत्वेन प्रापकत्वाभावादिति** वक्ष्यते ॥ २ ॥

---

## (३)—तपश्च फलसिद्धित्वाल्लोकवत् ॥ ९ ॥ वाक्यशेषश्च तद्वत् ॥ १० ॥ वचनादितरेषां स्यात् ॥ ११ ॥

---

आत्मगामिक्रियाफले आत्मनेपदं परगामिक्रियाफले परस्मैपदमिति नियमः। ये तु न तथाभूतास्तेषु तु आत्मगामिक्रियाफलेऽपि विवक्षिते ग्रामङ्गच्छतीति प्रयोगदर्शनात् उपपन्नमेव परस्मैपदं साधुत्वमात्रार्थकतयेति भावः। **सर्वेषामेवेति।** यजमानर्त्विक्साधारण्येन सर्वेषामित्यर्थः बहुवचनश्रवणात् यजमानस्यापि ऋत्विक्त्वाविशेषाच्च। बहुवचनश्रवणादेवैषां न भोक्तृत्वांशपातित्वम्। बहुवचनबलादेव च विरूपैकशेषमङ्गीकृत्य पत्न्या अपि हिरण्यमालित्वादि भवत्येवेति **सर्वेषामेवेति** पदेन सूचितम्। अत एव ये फलिसंस्काराः कर्तृसंस्काराश्च ते फलित्वकर्तृत्वयोरविशेषात् उभयोरपीत्यभिधास्यते षष्ठे तस्या यावदुक्तमित्यधिकरणे पूज्यपादैः। **विशिष्य विहिता इति।** अध्वर्य्वादितत्तदृत्विग्विशेषसंस्कारकतया तत्तन्मण्टपप्राक्प्रत्यग्द्वारनिष्क्रमणादयो विहिता इत्यर्थः। **न तत्रापीति।** कर्तृसंस्कारकत्वेन विहितेषु विशिष्यविहितेषु च तेषामेव संस्कार्यत्वेन कर्तृत्वप्राप्तेरित्यर्थः। **वक्ष्यते।** एकान्तराधिकरण इति शेषः। प्रयोजनं पूर्वपक्षोपसंहार एव सूचितम्।

---

### ॥ तपश्च फलसिद्धत्वाल्लोकवत् ॥

अत्र पूर्वाधिकरणे फलिसंस्कारेषु फलिनः कर्तृत्वेन समाख्याया अप्रवृत्तेः साधितत्वादिहापि सिद्धाः तेषां तथैव साधनात् गतार्थता वार्तिके तपसः दुःखकरत्वात् कर्ता गुणभूतः समाख्यया नियम्यत इत्यधिकाशङ्कानिवृत्त्यर्थतया परिहृता। तत्र फलभोगयोग्यतासंपादकतया कर्तुः प्रतिकूलस्य दुःखकरस्य तपसो विध्यनुपपत्तेः तत्संस्कारत्वायोगेपि कथमपकारकस्य क्रत्वङ्गत्वेन विधानं विधेरिष्टभाव्यकत्वनियमादित्याशङ्क्य अदृष्टोपकारद्वारेण कर्तृसंस्कारार्थत्वेन प्रायश्चित्तादिवद्विधानमिति परिहृतं **प्रकाशकारैः।** तददृष्टार्थत्वेऽपि कर्तृसंस्कारकत्वे प्रमाणाभावात् अयुक्तमिति कर्त्रधिकरणन्यायेन सूचयन् शुद्धक्रतुधर्मत्वेनैव विधिमङ्गीकृत्याधिकाशङ्कां दर्शयति

सोमे " द्व्यहं नाश्नाति त्र्यहं नाश्नाति " इति श्रुतम्। तत्रायमशनप्रतिषेधः अनृतवदनप्रतिषेधवदेवारादुपकारको न फलिसंस्कारकः, आत्मनेपदाद्यभावात्। सत्त्वेऽपि वा स्वरितेत्त्वाद्यभावाच्च। अतश्च समाख्यानादध्वर्युकर्तृकत्वम्।

वस्तुतस्तु—अनृतवदनवदेव निषेध्याशनस्याविहितत्वादभावस्य चाननुष्ठेयत्वान्न समाख्याविषयत्वमिति कर्तृमात्रविषयत्वे प्राप्ते—

आरादुपकारकत्वपक्षे अशनस्य क्रतुवैगुण्यजनकत्वं तस्य च फलप्रतिबन्धकत्वमित्यादिकल्पनापेक्षया लाघवेनाशनाभावस्य दुःखजनकतया क्लृप्तत्वात्तद्दुःखस्य च स्वजनकीभूतपापनाशकत्वस्यापि क्लृप्ततया केवलं तत्पापस्य सोमफलप्रतिबन्धकत्वमात्रकल्पनया अशनाभावस्य यजमाननिष्ठफलप्रतिबन्धकाभावसम्पादकत्वमेव " यदाऽनशनस्तदा

---

—तत्रायमिति। प्रकरणपठितानामपि वपनादीनां नारादुपकारकत्वविधया न वा कर्तृत्वांशसंस्कारकतया क्रत्वङ्गत्वं, आत्मनेपदश्रुत्या यजमानगतफलाधानयोग्यताजननस्यैव द्वारत्वावगमात् न ह्यत्र द्वारताबोधकं तथा सतीत्यर्थः। सत्त्वेऽपीति। स्वरितेतो ञितश्च धातोः परतः प्रयुज्यमानस्यैवात्मनेपदस्य आत्मगामिक्रियाफलपरत्वनियमेव इह तादृशधातोरभावे आत्मगामिक्रियाफलस्यैव बोधे नियामकाभावादित्यर्थः। एवमध्वर्युमात्रकर्तृकत्वपूर्वपक्षं प्राचां रीत्योपपादितमयुक्तमेवेति दर्शयन् येषां यजमानप्रभृतीनामन्तः क्रत्वशनं प्राप्तं तत्प्रभृति प्रकृतसर्वर्त्विक्कर्तृकत्वं पूर्वपक्षे साधयति—वस्तुतस्त्विति। दुः खजनकतयेति। यद्यपि दृष्टादेवाशनाभावाद्दुःखोत्पत्तिसंभवेन तज्जनकत्वेनादृष्टान्तरकल्पनाऽयुक्ता, तथा दुःखस्यानिष्टत्वेन तत्साधनतयाऽनशनविधिरप्यनुपपन्न एव तथापि कार्यमात्रं प्रति साधारण्येनादृष्टकारणतायाः क्लृप्तत्वात् अस्य दुःखरूपत्वेन पुण्यजन्यत्वानुपपत्त्या पापजन्यत्वमेवावश्यकम्। अत एव तस्य नान्तरीयकतया नानशनफलत्वं, किंतु दुःखभोगैकनाश्यसोमफलप्रतिबन्धकीभूतपापनाशस्यैवेति तस्येष्टत्वात् तद्विधिरप्युपपद्यत इति। अनेनैव न्यायेन न मांसमश्नीयात् न स्त्रियमुपेयादित्यादिनिषेधबोधितमांसाशनस्त्र्युपगमनाभावयोरपि सोमफलप्रतिबन्धकाभावसंपादकत्वापत्तौ न क्रतुधर्मत्वं स्यादित्याशङ्कां परिहर्तुं वाक्यशेषानुसारादित्युक्तम्। व्याख्यातो ह्ययं वाक्यशेषः भाष्यकारेण मेधश्च यज्ञो यज्ञश्च त्यागस्त्यागं कर्तुमर्हः तपसा क्रियत इति वाक्यशेषो भवति। त्यागी च यजमानस्तस्माद्याजमानत्वमिति। अस्मिन्नर्थे वाक्यशेषगतलिङ्गं कल्पसूत्रकृतैवमुदाहृतं–यदा वै दीक्षितः कृशो भवति अथ मेध्यो भवति यदास्मिन्नन्तर्न किंचन भवत्यथ मेध्यो भवति यदाऽस्य कृष्णं चक्षुषोर्नश्यत्यथ मेध्यो भवति। पीवा दीक्षते कृशो यजते। यदास्याङ्गानि मीयन्ते जुहोत्येव तदिति विज्ञायत" इति।

**मेधार्हः"** इति वाक्यशेषानुसारात् कल्पयितुमुचितम्। अतश्च तस्य **लिङ्गादेव** यजमानमात्रनिष्ठत्वम्। न ह्यन्यसमवेतदुःखेनान्यदीयं पापं नश्येत्। न च ऋत्विग्गतपापस्य स्वामिगतफलप्रतिबन्धकत्वकल्पनं गौरवात्। अत एव यत्र "ऋत्विज उपवसन्ति" इत्यादिवचनं तत्रानृतवदनन्यायेनारादुपकारकत्वकल्पनं व्यधिकरणस्यैव वा फलप्रतिबन्धक-

---

अतश्चैवंविधं ज्ञापकमस्ति तत्र दुःखजनकपापस्य प्रधानगतफलप्रतिबन्धकत्वकल्पनं नान्यत्रेति। यथैव प्रायश्चित्तानुष्ठाने सति नान्तरीयकदुःखभोगेन तज्जनकीभूतोऽधर्मो नश्यति तदेव च प्रायश्चित्तफलमिति वचनाद्गम्यते एवमिहापि। यद्यपि वाक्यशेषस्य भाष्यकारीयव्याख्यानेन यागनिरूपितकर्तृत्वयोग्यताधानार्थत्वमेव प्रतीयते, न तु यागजन्यफलस्य यजमाननिष्ठत्वप्रतिबन्धकाभावसंपादकत्वेन भोक्तृत्वाधानार्थत्वं तथापि यागकर्तृत्वस्य तद्विनापि सिद्धेः फलभोक्तृत्वसिद्धावेव तदुक्तितात्पर्यं द्रष्टव्यम्। अत एव येषां तपसां न कर्माङ्गत्वं तेषामपरस्य फलसाधनस्याभावात् प्रतिबन्धकापायापेक्षाभावे न तदर्थत्वकल्पनं किंतु स्वर्गाद्यर्थत्वमेव द्रष्टव्यम्। **यजमानमात्रनिष्ठत्वमिति।** यथैव गुणाधानार्थानां संस्काराणां फलोपभोगयोग्यताजनकत्वेन यजमानकर्तृत्वं, तथाऽनशनादीनामपि फलोत्पत्तिप्रतिबन्धकापनयनेन योग्यताजनकत्वात्तत्कर्तृत्वमेवेत्यर्थः। **अत एवेति।** प्रतिबन्धनाशकत्वस्य गुणाधायकत्वस्य वा असंभवादेवेत्यर्थः। नहि ऋत्विक्कर्तृकोपवासेन ऋत्विक्फलस्य दक्षिणादेरुत्पत्तिप्रतिबन्धकपापक्षयः क्रियते। अश्रद्धयोऽपि दक्षिणादानसंभवात्। अत एव न यजमानगतफलप्रतिबन्धकपापक्षयः प्रमाणाभावात्। अतो योग्यताजननार्थत्वाभावात् नायमुपवासः संस्कारकर्म। अनृतवदनन्यायेन कर्तुः प्राधान्येनानुपादानेन प्रकरणादारादुपकारकविधया क्रत्वङ्गत्वात्। **एतेन** कर्तृत्वांशेन संस्कारकत्वमपास्तं हिरण्यमालित्वादीनां तु इनुप्रत्ययेन समासेन वाऽन्यपदार्थभूतकर्तृधार्यमाणतयैव विधानाद्धारणाख्यसंस्कारार्थत्वमिहतु तदप्रतीतेर्न ऋत्विक्संस्कारकत्वम्। अत एव **वार्तिके** शास्त्रदीपिकायां च एतदधिकरणान्ते वचनादृत्विजामपि स्यात् यथा ऋत्विज उपवसन्तीत्युक्त्वा गुणत्वाच्चेत्युत्तराधिकरणारंभे संस्कारास्सन्तो वचनादृत्विजां जाताः लोहितोष्णीषत्वहिरण्यमालित्वादय इत्युक्तेः स्पष्टमेव ऋत्विज उपवसन्तीत्यनेन विधीयमानस्य उपवासस्य संस्कारत्वेनाभिमतेभ्यो हिरण्यमालित्वादिभ्यो वैलक्षण्यन्दर्शितम्। एवं चोत्तराधिकरणे ऋत्विगुपवासस्यापि उदाहरणत्वं **प्रकाशकारै**रुक्तमपास्तमित्यारादुपकारकत्वकल्पनोक्त्या सूचितम्। पूर्वोक्तवाक्यशेषस्यानशनस्यान्येन फलोत्पत्तिप्रतिबन्धकपापनाशकत्वनियमज्ञापकत्वमङ्गीकृत्याभ्युच्चयवादेन पक्षान्तरमाह—**व्यधिकरणस्यैवेति।** एतावतापि ऋत्विक्कर्तृकोपवासेन स्वगतपापनिवृत्तिद्वारा यजमानगतफलोत्पत्तियोग्यताजननात् ऋत्विक्संस्कारार्थत्वमित्यपि ध्येयम्। **अत एव न तत्रेति।** ऋत्विजामि-

त्वादिकल्पनमिति द्रष्टव्यम्। अत एव न तत्र समाख्या नियामिका ॥ ३ ॥

---

## (४)—गुणत्वाच्च वेदेन न व्यवस्था स्यात् ॥ १२ ॥

ये ऋत्विक्संस्कारा हिरण्यमालित्वादयः तत्तद्वेदपठितास्ते समाख्यानादध्वर्य्वादिना कर्तव्याः बहुत्वस्योद्देश्यगतत्वेनाविवक्षितत्वात्। अथाप्यनुवादापेक्षा तदा तत्पुरुषैः कार्या इति प्राप्ते—

अनियतकर्तृप्राप्तौ समाख्यया लाघवेनापेक्षितनियममात्रकरणात् प्रकृते च संस्कार्यस्य प्रतिप्रधानावृत्तिन्यायेन सर्वस्यैव नियतप्राप्ततया नियमानपेक्षत्वाच्च समाख्यायास्तन्नियामकत्वम्। कर्त्रन्तरपरिसङ्ख्यापकत्वं तु वैरूप्यापत्तेरयुक्तम्।

यदि तु समाख्यायास्तत्तत्पदार्थवाचिन्याः वेदेनाख्या हिरण्यमालित्वविषयिण्याः परिसङ्ख्यापकत्वमेवेत्याशङ्क्येत तथाऽपि समाख्यया वचनस्य सङ्कोचायोगादेव सर्वविषयत्वनिश्चयः ॥ ४ ॥

---

होपादेयत्वेन तद्गतबहुत्वस्य विवक्षया सर्वेषामेव कर्तृत्वस्य नियमेन प्राप्तेः उद्देश्यत्वेन तदविवक्षायामपि वा वक्ष्यमाणरीत्या प्रतिप्रधानावृत्तिन्यायेनैव सर्वेषां प्राप्तेश्च नात्र समाख्याया नियामकत्वेन प्राप्तिः। अतश्च पूर्वाधिकरणे आत्मनेपदश्रुत्या इह चानशनादौ लिंगेन ऋत्विगुपवासादौ तपोरूपेपि वाक्येन श्रुत्या च समाख्याबाधो युक्त इति भावः।

---

॥ गुणत्वाच्च वेदेन ॥

तत्तद्वेदपठिता इति। औद्गात्रे सामवेदे श्येनं प्रकृत्य लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यादिविधिविहिता लोहितोष्णीषत्वादयः, आध्वर्यवे यजुर्वेदे वाजपेयं प्रकृत्य हिरण्यमालिनो ऋत्विजः प्रचरन्तीत्यादिविधिविहिता हिरण्यमालित्वादयः पठिता इत्यर्थः। पूर्वं व्यतिरेकेण हिरण्यमालित्वादौ यजमानातिरिक्तानामपि कर्तृत्वमुक्तं, तत्किं नियतमनियतमिति विचारेण वाक्येन समाख्याया विरोधाविरोधप्रदर्शनादस्य सङ्गतिं स्पष्टत्वादनुक्त्वा पूर्वपक्षमाह—ते समाख्यानादिति। तत्पुरुषैः—अध्वर्युपुरुषैः प्रतिप्रस्थात्रादिभिः, उद्गातृपुरुषैः प्रस्तोत्रादिभिः सहाध्वर्युणोद्गात्रा वा कार्याः। तावतैव बहुवचनसमाख्ययोरविरोधसंभवादित्यर्थः। स्पष्टमन्यत्।

---

## (५)—तथा कामोऽर्थसंयोगात् ॥ १३ ॥ व्यपदेशादितरेषां स्यात् ॥ १४ ॥

ये गुणजन्याः कामाः "यदि कामयेत वर्षुकः पर्जन्यस्स्यादिति नीचैस्सदो मिनुयात्" इत्यादयः ते मानाद्याश्रयस्य तावदाध्वर्यवत्वात्तत्सामानाधिकरण्याच्च कामयतेस्समान-कर्तृकत्वप्रतीतेः अध्वर्युनिष्ठा एव। अत एव यत्र "दध्नेन्द्रियकामस्य" इत्यादिवैयधि-करण्यं तत्र यजमानगामित्वमेव प्रक्षेपाख्यस्य होमस्याध्वर्यवत्वादिति प्राप्ते—

'मिनुयात्' इति ञितः परस्मैपदनिर्देशात् अध्वर्युभिन्नकर्तृकत्वावगतेस्सामानाधि-

---

॥ तथा कामोऽर्थसंयोगात् ॥

यद्यपि तथाकामोऽर्थसंयोगादिति सिद्धान्तसूत्रे काममात्रस्याध्वर्यवत्वयाजमानत्वविचार-विषयत्वं प्रतीयते तथापि प्रधानजन्यकामे शास्त्रफलं प्रयोक्तरीति न्यायेनैव याजमानत्वस्य सिद्धत्वात् पूर्वपक्षासंभवेन अङ्गाश्रितगुणजन्यकामानामेवोदाहरणत्वमाह—ये गुणजन्या इति। नीचैरिति। नाभिदघ्नः पर्यन्त इति वाक्ये नाभिप्रमाणाः प्रान्तः स्थूणा विहितास्तदपेक्षया नीचैरित्यर्थः। यस्तु यथा पुरस्तात् पश्चाच्चावस्थितौ हविर्धानप्राचीनवंशावुच्चौ तथा सदोमण्टपो नोच्चः किं तु नीचैः कार्य इति वचनार्थोऽधिकरणमालायां कृतः, स नाभिदघ्नापेक्षयैव नीचैस्त्वस्य याज्ञिकसंमतत्वात् उपेक्ष्यः। इत्यादीत्यादिपदेन "पशुकाम उक्थ्यं गृह्णीयात्," "यो वृष्टि-कामो योऽन्नाद्यकामो यस्स्वर्गकामस्स सौभरेण स्तुवीत" इत्यादिकामानां संग्रहः। सामानाधि-करण्यमात्रेण कामस्याध्वर्युकर्तृकत्वे समाख्याविरोधाविरोधचिन्तानुपपत्तेः तदुपपत्त्यर्थमाध्वर्यवत्वा-दित्युक्तम्। ततश्च समाख्यासिद्धं सदोमाने अध्वर्युकर्तृकत्वं मूलीकृत्यैव सामानाधिकरण्यस्यैक-कर्तृत्वसाधकत्वात् वाक्यसहकृततद्विरोधचिन्ता नायुक्तेत्यर्थः। अत्र भाष्ये वार्तिके च यजेत स्वर्ग-काम इत्यादिप्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानफलस्य यजमानार्थत्वात् प्रधानजन्यफल-स्येव प्रस्तरप्रहरणाद्यंगजन्यायुरादेः फलस्येव च गुणफलस्याप्यन्यप्रयुक्तेनाप्याश्रयेण गुणकर-णत्वनिर्वाहकेण जन्यत्वावश्यंभावेनाङ्गजन्यस्य यजमानार्थत्वमेवेत्यात्मनेपदश्रुत्या समाख्यामूलक-सामानाधिकरण्यबाधेन यो यजमानः कामयेतेत्येवार्थः इत्युक्तं तत् ददाति जुहोतीत्यादिषु आत्मनेपदाभावेपि प्रधानफलस्य शास्त्रफलं प्रयोक्तरीति न्यायान्तरेणैव यजमानगामित्वसिद्धे-रात्मनेपदश्रुतेर्व्यभिचारित्वेन सर्वोदाहरणाव्यापकत्वात् लिङ्गमात्रेण न सिद्धान्तसाधकत्वमित्यभि-प्रेत्य परस्मैपदश्रुतेरेव तद्बाधकतोपपादनेन सिद्धान्तमाह—मिनुयादिति। यदि सदोमानेन कर्तृभूताध्वर्युगतमेव काम्यमानं फलं विवक्षितं, तदा डुमिञ् प्रक्षेपण इति धातोः ञित्वात् स्वरितञितः कर्त्रभिप्राये क्रियाफले इत्यनुशासनशिष्टात्मनेपदं स्यादिति ञित इत्यनेन सूचितम्।

**करण्यबाधेन** याजमानत्वमेव । यत्रापि "**यो वृष्टिकामस्स सौभरेण स्तुवीत**" **इत्यादौ न परस्मैपदं तत्रापि** औद्गातृगामित्वं, **ऋत्विक्कामानुरोधेन यजमानफलसाधनीभूत**नित्यगुण**बाधानुपपत्तेः। अतस्तत्र सामानाधिकरण्यमात्मनेपदं च प्रयोजककर्तृत्वाभिप्रायेणैव व्याख्येयम्। अत एव यत्र न नित्यगुणबाधः बाधेऽपि वा साक्षादेव वचनं तत्र स्वामिभिन्नगामित्वेऽपि न क्षतिः यथा "आत्मने वा यजमानाय वा यं कामं कामयते तमुद्गायेत्" इति। अत्र पृथग्यजमानपदश्रवणाद्वाशब्दश्रवणाच्चात्मनेपदे**नोद्गातैवोच्यते। **अत एवानुषङ्गेण वाक्यभेदोऽप्यदोषः। 'तं' इत्यनेनोभयनिष्ठं वैकल्पिकं कामं परामृश्योद्देश्यत्वविधानाद्वा न वाक्यभेदः।** गायतेश्च "**गायन्ति यं सामगाः**" **इत्यादावर्थाभिधानेऽपि प्रयोगान्न कामरूपार्थस्योद्देश्यत्वविघातः** ॥ ५ ॥

---

**याजमानत्वमेवेति**। तथा च यदि कामयेत यजमानोऽथवा यजमानाय वर्षुकः स्यादित्यध्वर्युः कामयेतेत्येवंविधया श्रुतिर्व्याख्येयेत्यर्थः। यथैवात्मनेपदस्य सर्वोदाहरणव्यापकत्वेन सिद्धान्तसाधकत्वमेवं परस्मैपदस्यापीति सूचयन् सिद्धान्तसाधिकां मुख्यां युक्तिमुदाहरणान्तरोपपत्तिव्याजेन दर्शयति — **यत्रापीति। नित्यगुणेति**। सौभरस्य निधनस्थाने यन्नित्यतयाऽऽम्नातं अक्षरं तस्य गुणस्य बाधो न युक्तः। एवं प्रकृतेऽपि नाभिदघ्नः पर्यन्त इति नित्यतया विहितस्य यजमाननाभिदघ्नतारूपगुणस्याध्वर्युकामनानुरोधेनानुष्ठितनीचैस्सदोमानेन न बाधो युक्त इत्यर्थः। **उद्गातैवेति**। उद्गायेदित्यनेनोद्गातुः कर्तृत्वप्रतीतेः तत्सामानाधिकरण्येन श्रुते कामयत इति पदेऽपि उद्गातृगतैव कामना प्रतीयते। न ह्यत्रैतावता यजमानगतनित्यगुणस्य कस्यचित् बाधः संभाव्यते इति पूर्वाधिकरणपूर्वपक्षहेतोस्समाख्यायास्तोद्गातैवेत्यर्थः। न च तर्हि उद्गातुरेवेति नियमः इत्याशङ्कानिवारणाय यजमानपदश्रवणादित्युक्तम्, यजमानभिन्नस्योद्गातुः यजमानेन बाधो माभूदित्येतदर्थं पृथक्पदोपादानम्। तच्चात्मने इत्यपेक्षया पृथग्यजमानपदोपादानात् उभयोरपि कामोऽत्र विवक्षितः इत्युक्ते, आत्मने इत्यस्य ममाग्ने इतिवदात्मीयेनेत्युपचारेण यजमानपदैकार्थत्वापत्तेः न यजमानातिरिक्तस्य काम इत्याशङ्कानिवारणाय वाशब्देत्याद्युक्तम्। वाशब्दश्रवणं आत्मने इत्यस्य वैयर्थ्यापत्तेरप्युपलक्षणम्। अत्र प्रकाशकारैः कामशब्दोक्तस्य काम्यस्यार्थस्योद्देश्यत्वायोगात् तमित्यनेन लक्षितः कामवाचकः शब्द एवोद्गानाश्रितः आर्थवादिकफले विधेय इत्युक्तं, तदयुक्तं तमित्यनेन द्वितीयान्तेनैव फलसमर्पणेन तस्य शब्दपरत्वे फलान्तरानुपादानेन फले विधानानुपपत्तेः आर्थवादिकफलार्थत्वेन विधाने तमिति द्वितीयायास्तृतीयार्थे लक्षणापत्तेः। यत्तच्छब्दयोरेकार्थत्वेन कामनाविषयफलपरयच्छब्दसामानाधिकरण्यबाधापत्तेश्चेत्यभिप्रेत्य वाक्यार्थं सूचयति—**गायतेश्चेति**। इदं हि वाक्यं बृहदारण्यके

(६)—मन्त्राश्चाकर्मकरणास्तद्वत् ॥ १५ ॥ विप्रयोगे च दर्शनात् ॥ १६ ॥

इह येऽकरणभूताः कर्मफलप्रकाशकाः कर्माङ्गभूता मन्त्राः "आयुर्दा अग्ने" "अगन्म सुवः" इत्यादयः ते समाख्यानादाध्वर्यवा इति प्राप्ते—

यद्यप्येते लिङ्गादिनाऽऽहवनीयोपस्थानादौ विनियुक्ताः न सूक्तवाकादिवत् तृतीयया इतिकरणेन वा विनियुक्तत्वाभावादानुषङ्गिकफलकल्पकाः, तथाऽपि कर्मफलमेवोपस्थानादि-

---

प्रथमाध्याये, तृतीये ब्राह्मणे उद्गीथोपासनाप्रकरणे श्रुतम्। यद्यपि गातव्ययो ऋक्सामयोरेव गानकर्मत्वं युक्तं, तथापि तदन्यस्याप्युद्देश्यत्वेनान्वयविवक्षयार्थस्य यं गायन्तीत्यादौ कर्मत्वदर्शनादिहापि काम्यमानफलस्य उद्गानकर्मत्वं न विरुद्धमित्यर्थः। अत एव तद्भाष्ये आगानेन तं कामं साधयतीति व्याख्यातमाचार्यैः। अत्र च तमागायतीत्येवं पाठो न तूद्गायेदिति ध्येयम्।

---

॥ मन्त्राश्चाकर्मकरणास्तद्वत् ॥

ममाग्ने इत्यादिमन्त्राणां प्रोक्षणीरासादयेत्यादीनां चाध्वर्यवत्वस्य सिद्धान्तयितव्यत्वात् तद्व्यावृत्त्या विषयमाह—इह ये इति। अकरणभूता इत्यनेन पूर्वोक्तानां मन्त्राणां कर्मणि करणभूतानां निवृत्तिः। कर्मफलप्रकाशका इति। तेनायुर्यज्ञेन कल्पतामित्यादीनामेतदधिकरणसिद्धान्तरीत्या याजमानत्वेऽपि न पूर्वपक्षविषयत्वमिति सूचितम्। न केवलं प्राचीनोक्तरीत्या आशीर्मन्त्राणामेवोदाहरणत्वमपि तु यावत्कर्मफलप्रकाशकं प्रोत्साहकं मन्त्रमात्रं तावतस्समानन्यायात् तदिति सूचयितुमगन्म सुवरित्युक्तम्। अत्र च मन्त्राश्चाकर्मकरणास्तद्वदिति सिद्धान्तसूत्रे तद्वदित्यनेन कामानामिव याजमानत्वमिति अतिदेशकरणे सति किमर्थमधिकरणान्तरारंभ इत्याशङ्कानिरासाय पूर्वपक्ष्यभिप्रेतामधिकाशङ्कां सूचयन् तामनूद्य दूषयति—यद्यपीति। मन्त्राणां स्वतो विधायकत्वाभावात् इतिकरणादिना विनियोगानुपलंभाच्च तादृशफलान्तरकल्पनासंभवात् आशासनस्योत्साहनकरस्य यजमान इवाध्वर्यावप्यविशिष्टत्वात् मित्रुयादितिवत् परस्मैपदस्याश्रयणात् भवत्वाध्वर्यवत्वं कामवैषम्येणेत्याशंकार्थः। अत्र प्रकाशकारैः फलदेवतयोश्चेति नावमिकन्यायेन श्रुत्या कर्मफलप्रकाशकस्यागन्मसुवस्सुवरगन्मेत्यादेरिव लक्षणयापि कर्मफलप्रकाशकस्य तद्द्वारा कर्माङ्गत्वात् न मन्त्रानर्थक्यं ऋत्विक्संबन्धिनस्तु दक्षिणालाभस्य लक्षणया प्रकाशने तस्याकर्मफलत्वात् तद्द्वारा कर्माङ्गत्वायोगात् आनर्थक्यं मन्त्रस्य स्यादित्येवं सिद्धान्ते आयुर्दा अग्न इत्येतन्मन्त्राणां लक्षणया कर्मफलप्रकाशकत्वमगन्मेत्यादिमन्त्र-

**प्रयोज्यं प्रोत्साहनार्थं प्रकाशयन्ति ।** तत्र च यत्रैतत्**प्रकाश्यं फलं कर्मजन्यत्वेन क्लृप्तं तत्र** तत्र शक्त्यैव **नियतमनियतं वा प्रकाश्यते । अत एव दर्शपूर्णमासादौ स्वर्गायुरादेः फलत्वात् तत्तत्फलार्थप्रयोग एव तत्तन्मन्त्रः न फलान्तरार्थप्रयोगे ।** यत्र तु नैतत्प्रकाश्यस्य **कर्मफलत्वं तत्र लक्षणया कर्मफलमेवैतेन मन्त्रेण प्रकाश्यत इति द्रष्टव्यम् । तच्च फलं यजमानगा-म्येव, ऋत्विक्फलस्योपस्थानाय**प्रयोज्यत्वेन **तत्प्रकाशने तदङ्गत्वानुपपत्तेः । तस्य यजमाना-दाशास्यत्वेनार्थिं प्रत्यनाशास्यत्वाच्च । न च यजमानफलमेवाध्वर्युणाऽऽशास्यतां, 'मे' इति 'अगन्म' इत्यध्वर्य्वप्रकाशकत्वेन लिङ्गविरोधात् ।** अतो याजमाना एवैते । **अत एव यत्र नैतादृशं लिङ्गं तत्राध्वर्यवा एव ॥ ६ ॥**

---

वैलक्षण्येनोक्तं तदयुक्तमिति सूचयन् स्वर्गमन्त्रवदस्यापि श्रुत्यैव कर्मफलप्रकाशकत्वं दर्शयति । **तत्र च यत्रैतदिति । तच्छक्त्यैवेति ।** आयुरादिपदघटितमन्त्राणां लक्षणया कर्मफलप्रकाशकत्वं वदता स्वर्गस्यैव कर्मफलत्वमङ्गीकृतं भवेत्, ततश्च समानन्यायात् सार्वकामवाक्येनायुरादी-नामपि फलत्वावगमात् अगन्मेत्यादिमन्त्राणामपि लक्षणया आयुरादिप्रकाशकत्वापत्तौ श्रुत्या कर्म-फलप्रकाशकत्वाङ्गीकारेण वैषम्यप्रदर्शने प्रयोजनाभावात् । **यदि** तु व्रीहीणां मेधेति मन्त्रस्य शक्त्या व्रीहिविकारप्रकाशकस्य यवप्रयोगे लोपवदिहापि तत्तत्फलसाधनप्रयोग एव तत्तन्मन्त्राणां तत्तत्फलप्रकाशकानां तदितरफलकप्रयोगे लोप इत्युच्येत, **तदा** प्रकृतेप्या-युरादिमन्त्रस्य स्वर्गफलप्रयोगे लोप एव, न तु लक्षणया प्रकाशनं, तथात्वे स्वर्गमन्त्रस्यापि प्रकृतौ आयुरादिफलप्रकाशनार्थं लक्षणापत्त्या विकृतावपि विकृतिफलप्रकाशनोपपत्तौ ऊहानापत्तेरि-त्यर्थः । तदेव स्पष्टयति—**अत एवेति ।** आयुरादिफलकविकृतावस्य मंत्रस्य उपदिष्टव्रीहि-साध्यविकृतौ व्रीहिमन्त्रस्येव शक्त्या प्रकाशकत्वसंभवेऽपि यत्रान्यफलकायां विकृतावतिदिष्टे मन्त्रे ऊहेन च प्रयोगसंभवेऽपि यत्र प्रकृतावेवोपदिष्टो मन्त्रः यथा नित्यप्रयोगे तत्र भक्त्येव लक्षणया प्रकाशनमित्याह—**यत्र तु नैतदिति । अप्रयोज्यत्वेनेति ।** तस्योपस्थानसाध्यत्वाभावेनाप्रयोज्य-त्वेनेत्यर्थः । अतोऽत्र उपस्थानप्रयोज्ययजमानगतकर्मजन्यफलप्रकाशकत्वलिङ्गेनाध्वर्यवसमाख्याया बाधात् याजमानत्वमित्युपसंहरति—**अतो याजमाना एवेति ।** अत एव **यत्रेत्यनेन** व्यतिरेक-प्रदर्शनं कृतम् । तद्विषयप्रदर्शनमारंभ एव सूचितम् ।

---

## (७)—द्व्याम्नातेषूभौ द्व्याम्नानस्यार्थवत्त्वात् ॥ १७ ॥

ये मन्त्रास्सामान्यत आध्वर्यवसमाख्याते काण्डे समाम्नाताः पुनश्च याजमानेऽपि विशेषतस्समाख्यायन्ते, यथा आज्यग्रहणमन्त्रास्स्रुग्व्यूहनमन्त्राश्च, ते तावत् सत्यप्यभ्यासे प्रत्यभिज्ञायमानत्वात् विध्यभावाच्चाभिन्नाः। अतस्तत्र गुणभूतकर्तृद्वयस्य विकल्पः। विशेषसमाख्याबलाद्वा यजमान एव कर्ता। आज्यग्रहणस्रुग्व्यूहनादेर्वा निस्सन्दिग्धमाध्वर्यवत्वात्तदङ्गभूता मन्त्रा अपि तत्कर्तृका एव। न चैवं द्विःपाठवैयर्थ्यं, एकत्र स्वरूपज्ञानमन्यत्र विनियोग इत्येवं सार्थक्यादिति प्राप्ते—

एकपाठेनैवोभयसिद्धौ द्वितीयस्य वैयर्थ्यापत्तेस्तस्योच्चारणान्तरविधायित्वावगतेस्तस्य

---

॥ द्व्याम्नातेषूभौ ॥

यथा आज्यग्रहणेति। ते च शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि ज्योतिस्त्वा ज्योतिषि धा, अर्चिषि धा, पञ्चानां त्वा वातानां यन्त्राय धर्त्राय गृह्णामि, इत्याद्याः प्रयाजाद्यर्थस्य जौहवादेराज्यस्य चतुर्षु ग्रहणेषु चत्वारश्चत्वार इत्येवं षोडशकरणमन्त्राः। तथा स्रुचौ व्यूहति वाजस्य मा प्रसवेनेति विनियोगात् वाजस्यमेत्यादिस्रुग्व्यूहनमन्त्रा ज्ञेयाः। मन्त्राणां भिन्नत्वे कर्तृद्वयविकल्पसमुच्चयविचारासंभवात् तदर्थं मन्त्राभेदं साधयति—ये तावदिति। मन्त्राणामुच्चारणार्थं कर्त्रपेक्षणात् समाख्याद्वयप्राप्तकर्तृद्वयानुरोधेन न वारद्वयमावृत्तिः युक्ता, मन्त्राणां प्रधानत्वेन गुणानुरोधेन तस्या अन्याय्यत्वादिति गुणभूतेत्यनेनोक्तम्। विशेषसमाख्यया बाधिता सामान्यसमाख्या यथाऽन्यत्रानर्थिका सती गौण्याश्रीयते एवमिहापीत्याशयेन द्वितीयपूर्वपक्षमाह—विशेषेति। तत्कर्तृका एवेति। यत्राज्यग्रहणकार्यविधिस्तत्रैव प्रकाशकत्वेन मन्त्रापेक्षणात् तदानीमेव प्रयोज्यतया कर्त्रपेक्षायां आध्वर्यवसमाख्यया अध्वर्युकर्तृत्वेनैव निराकाङ्क्षत्वात न विशेषसमाख्या तद्विधिकल्पिकेत्यर्थः। एकत्रेति। नवमे सामवेदे कर्मविशेषे अयं सहस्रमानव इतीयं ऋक्प्रगीता अप्रगीता च पठिता सती अयं सहस्रमानव इत्येतया आहवनीयमुपतिष्ठते इति वाक्येन विनियुक्ता, तत्र पाठद्वयसार्थक्याय विकल्पेनोपस्थाने द्वयोर्निवेशपूर्वपक्षं कृत्वा अप्रगीतायाः प्रगाणार्थः पाठः। अज्ञातस्वरूपायास्सुखेन गानासंभवात्। प्रगीतायाः पाठस्तु विनियोगार्थ इति द्वयोरपि निवेशसंभवात् न विकल्प इति सिद्धान्तितं, तद्वदिहापि न द्विः पाठवैयर्थ्यमित्याशयः। उच्चारणान्तरविधायित्वेनेति। यद्यप्युच्चारणद्वयस्याप्यङ्गत्वे सति कर्तृद्वयस्याकाङ्क्षया समाख्याद्वयेन विनियोगो भवेन्न त्वेतदस्ति मन्त्रमात्रस्यैवोच्चारणं विनैवाङ्गत्वात्। तथा चाङ्गभूते मन्त्रे कर्त्रपेक्षायामन्यतरेणैवाकाङ्क्षाशान्तेः

च समाख्यान्तरेण कर्मान्तरसिद्धिः। उच्चारणान्तरप्रयोजनं तत्क्रियाप्रत्यवेक्षणमिति नादृष्टकल्पनाऽपि। यद्यपि च तत् नियमेन यजमानस्य न प्राप्तं, तथाऽपि द्विःपाठबलादेव तत्कल्पनमिति न दोषः। यत्र तु नैवंविधं प्रयोजनं कर्तृभेदो वाऽसम्भवी यथा "अयं सहस्रमानवः" इत्यस्यामौद्गात्र एव प्रगीताप्रगीतभेदेन समाम्नातायां, तत्रागत्याऽभ्युदयशिरस्कत्वं परिकल्प्योपस्थितिविनियोगपरत्वेन सार्थक्यमिति विशेषः॥ ७॥

---

(८)—ज्ञाते च वचनं न ह्यविद्वान् विहितोऽस्ति॥ १८॥

वाजपेयादौ यत्र "क्लृप्तीर्यजमानं वाचयति" इति श्रुतं, तत्र याजमानो मन्त्रः, वाचन-

---

विकल्प एवापद्यते न समुच्चयस्तथापि प्रकरणे पठितस्य मन्त्रस्याव्यापारात्मकस्येतिकर्तव्यताकाङ्क्षायामङ्गत्वायोगे यथैवोच्चारणरूपक्रियाद्वाराऽऽङ्गत्वं प्रकरणपाठार्थवत्त्वाय कल्प्यते पाठोऽपि चानुद्बोधितस्योपस्थित्यभावे अर्थप्रकाशकत्वस्य मन्त्रे संभवात् आवश्यकः एवमेव द्वितीयवारं प्रकरणपाठार्थवत्वाय उच्चारणान्तररूपक्रियाद्वारापि अङ्गत्वं कल्प्यते। अत एवोच्चारणप्रत्यक्षविध्यभावेऽपि स्वाध्यायाध्ययनविधिबोधितप्रयोजनवत्वविशेषसमर्पककर्मप्रकरणपाठावगताङ्गत्वान्यथानुपपत्त्या विध्यन्तरकल्पनया तस्य विहितत्वादङ्गत्वं निर्बाधमेवेत्युच्चारणद्वये कर्तृद्वयापेक्षायां युक्त एव तद्विविरित्यर्थः। अध्वर्युकर्तृकमन्त्रोच्चारणेन स्मृतिजननात् तस्या अनुष्ठाने उपयोगेपि यजमानकर्तृकोच्चारणान्तरस्य दृष्टप्रयोजनासंभवे अदृष्टार्थत्वापत्तेरिति मन्त्राणां वैरूप्यापत्तिरित्यत आह—**उच्चारणान्तरेति**। स्पष्टमन्यत्॥

---

**॥ ज्ञाते च वाचनम्॥**

**क्लृप्तीरिति**। आयुर्यज्ञेन कल्पतामित्यादयो मन्त्राः क्लृप्तिशब्देनोच्यन्ते। अत्र च स्वाध्यायविधिसिद्धज्ञानवदनुष्ठेयत्वरूपकर्मगतलिङ्गस्य शिक्षणरूपयाजनपरवाचयतिधात्वर्थगतलिङ्गेन सह विरोधाविरोधचिन्तायाः करिष्यमाणायाः समाख्याविषयत्वाभावेऽपि प्रासङ्गिकीं सङ्गतिं स्पष्टत्वादनुक्त्वा अनन्तरसङ्गतिमपि प्रासङ्गिकीं सूचयितुमाह—**याजमानो मन्त्र इति**। द्वयाम्नातमन्त्राणामाध्वर्यवत्वमात्रनिराकरणेन याजमानत्वे साधिते याजमानमन्त्रप्रसङ्गादेषामपि क्लृप्तिमन्त्राणामुपस्थितत्वात् तत्कर्तृगतज्ञत्वाज्ञत्वविशेषचिन्ता क्रियत इति **याजमानपदेन** सूचितम्। यजमानगतज्ञत्वाज्ञत्वविशेषचिन्ताहेतुं दर्शयति—**वाचनमिति**। अत्र वाचनं वचनानुकूलव्यापारसामान्यम्। तच्च खण्डशः कथने समस्तमन्त्रसारणेऽपि संभवीत्यन्यतर-

**माध्वर्यवमित्यविवादम्।** परं तु **वाचयतेः ब्रह्मचारिणो** गायत्र्युपदेशादौ **शिक्षणवाचित्वेन क्लृप्ततया प्रकृतेऽपि शिक्षणविधायित्वावगतेस्तस्य चादृष्टार्थत्वप्रसङ्गेन ज्ञातर्यसम्भवादुक्तविधाङ्गानुरोधेनाज्ञ एव वाजपेयादावधिकारी।** अतोऽन्येषां **क्रतूनामध्ययनविधिसिद्धज्ञानोपजीवनेन ज्ञात्रधिकारिकत्वेऽपि वाजपेयादौ तदसम्भवादज्ञस्यैव वाचनमिति प्राप्ते—**

वाचयतेर्वचनानुकूलव्यापारमात्रवाचित्वेन **क्वचिदन्यथाऽनुपपत्त्या शिक्षणग्रहणेऽपि स्मारणमात्रग्रहणेनापि प्रकृते वाचनोपपत्तेरज्ञानाक्षेपकत्वे प्रमाणाभावात् तज्ज्ञस्यैव वाचनम्।** तच्च **खण्डशो वा, इमं मन्त्रं ब्रूहि इत्येवं वेत्यन्यदेतत्॥ ८॥**

---

व्यापारमादाय ज्ञाज्ञयोर्वाचनेपि अध्वर्योः कर्तृत्वं स्वाध्यायाध्ययनविधिसिद्धज्ञानवदनुष्ठेयत्वरूपकर्मगतलिङ्गस्य वाचनगतलिङ्गस्यापि च सामान्यरूपतया तुल्यबलत्वेन परस्परं बाध्यबाधकभावायोगात्। अत एव द्वयोरप्यधिकारो वाजपेय इति प्राचां ग्रन्थेष्वाद्यः पूर्वपक्षः कृतः, तथाप्यस्मिन् पक्षे एकस्यैव वाजपेयविधेरंशे विद्याक्षेपशक्तिकल्पनमंशे नेत्येवं वैरूप्यापत्तेः, व्यापारसामान्यवाचित्वे मानाभावाच्चातिफल्गुतया तमुपेक्ष्य द्वितीयमेव पूर्वपक्षमाद्यत्वेन दर्शयति— **परं त्विति। गायत्र्युपदेशादाविति।** यथाशक्ति वाचयीतेत्यादिविधिविधेये इति शेषः। तथा च वाचनरूपाङ्गगतेन वाजपेयविशेषविषयकेन लिङ्गेन सिद्धज्ञानवदनुष्ठेयतारूपस्य कर्मसामान्यगतस्य लिङ्गस्य बाधादज्ञ एवाधिकारीति पूर्वपक्षमुपसंहरति — **अतोऽन्येषामिति।** अत्र **प्रकाशकारैः** शिक्षणरूपव्यापारस्यैव शक्त्या वाच्यत्वमङ्गीकृत्य प्रकृते विद्याक्षेपशक्तिकल्पनागौरवापत्तिभिया स्मारणरूपव्यापारलक्षकत्वमुक्तं तद्वचेः परतो णिचः व्यापारसामान्यवाचित्वात् अयुक्तमिति सूचयन् सिद्धान्तमाह—**वाचयतेरिति। तच्चेति।** अत्र वार्तिके खण्डशोऽथवा प्रैषादिवन्मन्त्रं ब्रूहि इत्येवमुभयथा स्मारणे दर्शितेऽपि क्लृप्तीरिति द्वितीयया कृत्स्नशः स्मृतिव्याप्यत्वावगतेः कृत्स्नोच्चारणं च विना कार्त्स्न्येन स्मृतिव्याप्त्यसंभवात् अध्वर्युणापि कार्त्स्न्येनोच्चारणं कर्तव्यं तच्च खण्डश एव भवतीति याज्ञिकाचारोऽप्यनुगृहीतो भवति। अत एव पूर्वाधिकरणसाधितोभयप्रयोज्यमन्त्रप्रसङ्गादुभयप्रयोज्यतयोपस्थितेषु क्लृप्तिमन्त्रेषु यजमानवाचनविध्यन्यथानुपपत्त्या यजमानप्रयोज्यत्वेऽवगते यजमानप्रयोक्तृगतज्ञत्वाज्ञत्वस्य विशेषचिन्तनात् प्रासङ्गिक्यनन्तरसङ्गतिरस्येति खण्डशो वाचनपक्षमेव **भट्टसोमेश्वरोऽनुमन्यते।**

**प्रकाशकारास्तु** ब्रूहीति स्मरणात् ज्ञस्य संभविष्यति वाचनमित्यधिकरणान्ते **शास्त्रदीपिका**लिखनमनुरुद्ध्य क्लृप्तिशब्दस्य कृत्स्नमन्त्रवाचित्वात् क्लृप्तीर्ब्रूहीत्येतावतापि

सिद्धान्ते ज्ञस्य कृत्स्नमन्त्रस्मृतिसिद्धेः अध्वर्योः कृत्स्नमन्त्रोच्चारणं विनापि कार्त्स्न्येन स्मृतिव्याप्यत्वसंभवात् न खण्डशो वाचनम्। एवं च लाघवेन विध्यर्थानुष्ठानोपपत्तौ भ्रान्तिमूल एवाध्वर्योः कृत्स्नप्रयोगो याज्ञिकानाम्। अत एव वार्तिकेऽयं पक्षो मूर्धनि निवेशितः। अनन्तरसङ्गतिरपि नोभयप्रयोज्यत्वेन प्रासङ्गिकी। किन्तु पूर्वं द्व्याम्नातेषु मन्त्रेषु केवलयाजमानत्वापवादेन अध्वर्युयजमानोभयप्रयोज्यत्वे उक्ते तद्वदिहापि वाचयत्यर्थशिक्षणसामर्थ्यात् प्राप्ताया अध्वर्युयजमानोभयप्रयोज्यतायाः अपवादस्यैव सिद्धान्तेन द्रष्टव्यतया ब्रूहीत्येतावतैव वाचनमध्वर्युणा कार्यमिति द्वितीयमेव पक्षं समर्थयन्ते।

**एवं मतभेदे** विद्यमानेऽपि यावता विना मन्त्रस्य स्मृतिर्न संभवति तावत एव व्यापारसामान्यस्य णिचाऽवश्यबोधनीयत्वेन अन्यतरव्यापारस्य वाचनपदार्थत्वखण्डनेनान्यतरस्मिन् मते नाभिनिवेष्टव्यमित्यन्यदेतदित्यनेन सूचितम्। न हि खण्डश एव कथनस्य अथ वा ब्रूहीत्येतावन्मात्रस्यैव वा वाचनपदार्थत्वमङ्गीकृत्य एकतरस्यैव विधानं निश्चेतुं शक्यते, सकृत्स्मारकापेक्षे ज्ञातरि खण्डशः कथने प्रयोजनाभावात्। असकृत्स्मारकापेक्षे ज्ञातरि ब्रूहीत्येतावता प्रयोजनासंभवाच्च। अतो ग्रामङ्गमयति चैत्रो मैत्रमित्यत्र यावता व्यापारेण ग्रामप्राप्तिर्भवति चैत्रस्य तावानेकानेकरूपो व्यापारः सर्व एव णिचा यथोच्यते, तथा वाचनस्य दृष्टार्थत्वसंपत्त्या यावता व्यापारेण एकानेकरूपेण स्मृतिर्यजमानस्यं भवति तावानेव णिचाऽभिधीयते। इतरथा एकतरस्मिन् पक्षे निष्प्रयोजनत्वस्य उपायान्तराक्षेपकत्वस्य चापत्त्या गौरवस्य दुष्परिहरत्वमेव। अत एव **वार्तिककृता** तच्च प्रयोजकत्वं द्वेधा भवति यदि वा खण्डशस्समर्प्यते अथ वा ब्रूहीत्यभिधीयत इति यथेष्टङ्कर्मेत्युक्तम्। यत्र यावदपेक्षितत्वेन वाचनमिष्टं तत्कर्म वाचयतेरर्थ इति हि तस्यार्थो वाशब्दोपि अनास्थापरो न विरुद्धत्वेन पक्षद्वयप्रतिपादनपरः। याज्ञिकानां अध्वर्योरपि मन्त्रप्रयोगानुष्ठानं यजमानगतस्मृतितारतम्यमपेक्ष्य सौकर्यार्थमेव न तु विध्यपेक्षितनियमादृष्टोत्पत्त्यर्थमित्याशयः।

अत्र मन्त्रपरत्वखण्डनेन कॢप्तिपदस्यार्थपरत्वस्य वचिधातोरभिधानार्थत्वस्य च समेषु वाक्यभेदः स्यादित्यधिकरणे कौस्तुभे स्वयमुपपादितत्वात्, कॢप्तीः प्रकाशयेत्येतादृशस्यैव प्रयोगस्यापत्तेः तद्विरुद्धमेव मन्त्रे ब्रूहीत्यभिधानमिति चिन्त्यम्। यत्तु भाष्यवार्तिकयोर्वाजपेये विद्याक्षेपशक्तिकल्पनागौरवपरिहारार्थं विदुष एवाधिकारसिद्धान्तसाधनानन्तरं ये वैशेषिकादयः स्वशास्त्रेणापि अनधिगतेन कर्मण्यनधिकारं[1] वदन्ति तन्निराकरणचिकीर्षया कियता पुनः विदितेन विद्वानधिक्रियत इति प्रश्नमुत्थाप्य विद्वत्तायाः शक्त्युत्पादनद्वारेण प्रत्यक्षेणैवोपकारित्वात् यावता

1. A. अधिकारं

(९)—याजमाने समाख्यानात्कर्माणि याजमानं स्युः ॥ १९ ॥ अध्वर्युर्वा तदर्थो हि न्यायपूर्वं समाख्यानम् ॥ २० ॥

दर्शपूर्णमासयोः "वत्समुपावसृजति" इत्यादीनि चतुर्विंशतिकर्माण्याध्वर्यवसमाख्यायुक्तानि प्रत्येकं भिन्नदेशे विधाय पुनस्तान्येव याजमानसमाख्यायुक्तानि "वत्सं चोपावसृजति उखां चाधिश्रयति" इत्याद्युक्त्वा "एतानि वै द्वादश द्वन्द्वानि दर्शपूर्णमा-

---

विदितेन विना न कर्म कर्तुं शक्यं तावता विदितेन विद्वानधिक्रियते। अतश्च यद्यपि स्वाध्यायाध्ययनविधिना सकलस्य वेदस्य परिग्रहः कर्तव्यत्वेनोक्तः। तथापि दर्शपूर्णमासौ कुर्वाणस्य न ज्यौतिष्टोमिकमन्त्रब्राह्मणमुपयुक्तमिति असदपि तदध्ययनं न दर्शपूर्णमासाधिकारं व्यावर्तयति, इष्टिवेदनेनैव तद्योग्यतायाः सिद्धत्वात्। तेन तद्याजिनस्तावानेव स्वाध्यायः। यत्त्वसौ सकलः पठ्यते तन्नित्यनैमित्तिककाम्यकर्मणां यथोपपन्नकालत्वात् तदानीन्तदध्ययनं व्रतनियमवत् न भवेत् प्रतिबन्धकवशाद्वा अशक्तिमुपजनयेत्। तदर्थमेव ब्रह्मचर्यकाल एवाधीतस्य सर्वस्य सर्वोपकारकत्वेन सौकर्यलाभात्। यस्तु कश्चिदशक्तः नाधीते सकलं, अग्निहोत्रदर्शपूर्णमासमात्रं च कथं चिदधिगच्छति नैतावता तस्य तत्रानधिकारः। एवं चानुपयुक्तकर्मान्तरविषयज्ञानाभावस्यानधिकारप्रयोजकत्वाभावे सति सुतरामनुपयुक्तबाह्यवैशेषिकादिशास्त्रज्ञानाभावस्य तदप्रयोजकत्वमिति दूरविप्रकृष्टमेव तदीयं ज्ञानम्। यत्त्वात्मज्ञानं तेन विना प्रवृत्तिरेव नास्ति अतः सर्वकर्मार्थमङ्गीकर्तव्यमिति प्रतिपादितं, तत् प्रस्तुताधिकरणस्यानुपयोगित्वात् अध्ययनविधेर्दृष्टार्थत्वप्रसाधनेनैव सुज्ञेयत्वाच्चोपेक्षितं पूज्यपादैरिति।

---

॥ याजमानसमाख्यानात् ॥

इह समाख्याभ्यामेकेन कर्त्रा कृतानामन्येन कर्त्रा कर्तुमशक्यत्वरूपलिङ्गस्य विरोधाविरोधचिन्तनात् प्रकरणसङ्गतिं पूर्वाधिकरणे यजमानस्य मन्त्रोच्चारणकर्तृत्वेऽध्वर्योश्च स्मारकत्वे स्थिते तदपवादेनाध्वर्योरेव कर्तृत्वसिद्धान्तसाधनादापवादिकीमनन्तरसङ्गतिञ्च स्पष्टत्वादनुक्त्वा विषयमाह —दर्शेति। अधिश्रयतीत्याद्युक्त्वेत्यादिपदेन अव च हन्ति दृषदुपले च समाहन्ति अधिच वपते कपालानि चोपदधाति पुरोडाशञ्चाधिश्रयति आज्यं च स्तंबयजुर्हरति अभिच गृह्णाति पत्नीं च सन्नह्यति प्रोक्षणीश्चासादयति आज्यं चेति वाक्यसंग्रहः। द्वादश द्वन्द्वानीति। अत्र च धेन्वावत्ससंयोगरूपमुपावसर्जनमेकङ्कर्म, दोहनेन संपादितं क्षीरं स्थापयितुमुखाधिश्रयणमपरं एतदुभयमेकं

सयोस्तानि सम्पाद्य यजेत" इति श्रुतत्। तदेषां द्याम्नातमन्त्रवदुभयकर्तृकत्वं तावन्न सम्भवत्यदृष्टार्थतापत्तेः। न चाभ्यासात्कर्मान्तरं, अन्यपरत्वात्। अत एवैककर्तृकत्वावश्यं-भावे विशेषसमाख्यानाद्याजमानत्वे प्राप्ते—

नैषां याजमानकाण्डे विधानं, आध्वर्यवे भिन्नदेशे विहितानामेव द्वयोर्मिथःप्रत्यासन्न-त्वाख्यद्वन्द्वतारूपगुणविधानार्थमनुवादात्। अतः पदार्थेषु तावदध्वर्युरेव कर्ता। न च द्वन्द्वतायामेव यजमानश्शङ्क्यः, अन्येन क्रियमाणानामन्येन द्वन्द्वतायास्सम्पादयितुमशक्य-त्वात्। द्वन्द्वता हि नाम एकया वत्सोपावसर्जनक्रियया धेनुवत्सयोः प्रत्यासन्नत्वसम्पा-दनम्। एकया चावहननक्रिययोलूखलमुसलयोः। एवं द्वादशसु क्रियासु द्रष्टव्यम्। न च तत्कर्त्रनुरोधेन प्रधानभूतपदार्थानां कर्तृबाधः, अङ्गगुणविरोधन्यायेन तदसम्भवात्। न च "तानि सम्पाद्य यजेत" इति क्त्वाप्रत्ययबलेनैव द्वन्द्वताया यागसमानकर्तृकत्वाव-

---

द्वन्द्वं, एवमवघातः दृषदुपलयोः शम्यया हननमित्युभयं द्वितीयं द्वन्द्वं, अवहतानां तण्डुलानां दृषदि निक्षेपोऽधिवापः कपालोपधानञ्चेत्युभयं तृतीयं द्वन्द्वं, कपालेषु पुरोडाशाधिश्रयणं आहवनीये आज्याधिश्रयणं चेत्युभयं चतुर्थं द्वन्द्वं, वेदिपांसूनां च्छिन्नेन तृणेनाध्वर्युणा ग्रहणं कृत्वा उत्करे हरणं स्तंबयजुर्हरणं तत्रैवाग्नीध्रस्य तेषामभिग्रहणमित्युभयं पञ्चमद्वन्द्वं, इतरत् द्वन्द्वद्वयं स्पष्टार्थं; इमानि सप्त स्फ्यश्च कपालानि चेत्युपक्रम्योक्तानि पञ्चेत्येवं द्वादशेत्यर्थः। अदृष्टार्थत्वापत्तेरिति। द्वया— म्नातानां मन्त्राणां द्विरुच्चारणविधिकल्पकद्विःपाठान्यथानुपपत्त्योच्चारणभेदेन, दृष्टप्रयोजनभेदेन च कर्तृद्वयाकाङ्क्षयोभयकर्तृत्वमावश्यकं, युक्तं च। इह तु तत्तत्क्रियाभेदाभावादेकस्याश्चैकेन सकृदनुष्ठितायाः प्रयोजनकर्त्रपेक्षयोरभावाद्यदपरेण पुनरनुष्ठानङ्कर्तव्यं तददृष्टार्थमेवापद्यत इत्यर्थः। **गुणविधानार्थमिति**। काण्डद्वयेप्याख्यातसाम्येप्यध्वर्यवेऽनन्यपरविधिश्रवणात्तत्रैव उत्पत्ति-विधिर्याजमाने तस्य गुणविधानार्थतयापि संभवेन कर्मोत्पत्तिविधिर्नास्तीत्यर्थः। अतश्च यत्रैवोत्प-न्नानि कर्माणि कर्तव्यत्वेनावगतानि तत्रैव कर्त्राकाङ्क्षायामाध्वर्यवसमाख्यया अध्वर्योरेव कर्तृत्वे-नान्वयात् न पुनस्तन्निरपेक्षेषु यजमानस्य कर्तृत्वेनान्वय इत्याह—**अतः पदार्थेष्विति**। **द्वन्द्वता-यामेवेति**। द्वन्द्वतारूपस्य गुणस्यैव याजमानकाण्डे समाम्नानात् तत्रैव यजमानस्य कर्तृत्वमस्त्वि-त्यर्थः। द्वयोः द्वयोः पदार्थयोः प्रत्यासन्नकरणं द्वन्द्वता, न चान्यकर्तृकाणां पदार्थानामन्यः प्रत्यासन्नतां कर्तुं शक्नोतीत्यभिप्रेत्योत्तरमाह—**अन्येनेति**। **द्वन्द्वता हि नामेति**। अत्र च पूर्वोक्तरीत्या द्वयोः क्रिययोः द्वन्द्वताया विधानात्तयोरेव प्रत्यासन्नत्वमात्रं वक्तुं युक्तं, न तूलूखलमुस-लयोः धेनुवत्सयोर्वा द्वन्द्वता विहितेति तयोः प्रत्यासन्नत्वापादनेन द्वन्द्वतोपपादनं याज्ञिकाचार-

**गतेर्वचनादेवाङ्गनिष्ठादपि पदार्थेषु समाख्याबाध इति वाच्यं, क्त्वाप्रत्ययस्य प्रयोजकत्वे-नाप्युपपत्तेः प्रधानसमाख्याबाधकत्वानुपपत्तेः। एवं द्वन्द्वतानिष्ठसमाख्याऽपि प्रयोजक-त्वाभिप्रायेणैव व्याख्येया। अतस्स्मारणमात्रं याजमानं पदार्थास्त्वाध्वर्यवा एव ॥ ९ ॥**

---

## (१०)—विप्रतिषेधे करणः समवायविशेषादितरमन्यस्तेषां यतोविशेष-स्स्यात् ॥ २१ ॥

**दैक्षे पशौ यूपपरिव्याणे आध्वर्यवः करणमन्त्रः "परिवीरसि" इत्ययं श्रुतः। तथा "युवा सुवासाः" इत्ययं क्रियमाणानुवादी हौत्रोऽपि। तौ च द्वावपि "यूपाय परिवी-**

---

विरुद्धं चिन्त्यम्। **एतेनोदाहरणाक्षेपद्वित्रीयश्लोकविवरणे** एतादृशद्वन्द्वतोपपादनं **विधिरसाय-नोपपादितमपास्तम्।** अधिवापकपालोपधानादौ क्रियाविशेषेण द्वयोः प्रत्यासन्नत्वासंभवेन क्रियाविशेषेण द्वयोः प्रत्यासन्नत्वसंपादनं द्वन्द्वता नामेति तदुक्तलक्षणस्यापि अयुक्तत्वाच्च। अतोऽत्र चतुर्विंशतिक्रियोपादानेनैव द्वादशद्वन्द्वत्वं युक्तम्। यदि त्वेतत्समर्थनीयमित्याग्रहः तदा स्फयादिद्वन्द्वपंचकस्य विप्रकृष्टत्वेन न तदादाय द्वादशद्वन्द्वत्वं किन्तु द्वन्द्वपदे द्वन्द्वसंपादक-कर्मलक्षणया द्वादशद्वन्द्वसंपादकानि कर्माणीत्यर्थो **वेदभाष्यकार**कृतार्थविरोधेनाङ्गीकर्तव्यः। एवं च धेनुवत्सरूपद्वन्द्ववत् अन्यत्रापि द्वन्द्वकल्पना सुधीभिरूह्या। आज्यपदघटितवाक्ययोराज्यस्य न पृथग्ग्रहणम्। अपि तु पुरोडाशाधिश्रयणमादाय द्वादशत्वमुपपादनीयम्। अत एव द्वन्द्व-संपादिन्यो द्वादशक्रिया इति **विधिरसायन**कृतविवरणं संगच्छत इति दिक्। स्पष्टार्थमन्यत्।

---

**॥ विप्रतिषेधे करणम् ॥**

यदि द्वयोर्मन्त्रयोः प्रयोगस्यैककालत्वं न भवेत्तदा मन्त्रान्ते न कर्मादिसंनिपात इति द्वादशि-कन्यायेन परिव्याणात् प्राक्करणमन्त्रे होत्रा पठिते क्रियमाणे परिव्याणे पुनर्होत्राऽपरमन्त्रपाठः शक्यत एव कर्तुमिति न हौत्राध्वर्यवयोः एककर्तृकत्वात् प्रकृतिवत् कुण्डपायिनामयने युगपत् प्रयोक्तुमशक्तेः अवश्यावहेये अन्यतरस्मिन् कतरो गृह्यतामित्ययं करिष्यमाणविचारः युज्येत इत्येतदर्थं ऐकका-ल्यं साधयति—**तौ च द्वावपीति**। परिव्याणपूर्वभाविपदार्थसमाप्त्योपस्थापितपरिव्याणात् प्राक् यूपाय परिवीयमाणायानुब्रूहीति प्रैषदानसमय एव परिव्याणारंभकालस्तादृशपरिव्याणसङ्कल्प-प्रभृति समाप्तिपर्यन्तंदीर्घः क्रियमाणताकालः क्रियमाणानुवादिनो मन्त्रस्य। तदन्तरा च परिव्या-

**यमाणायानुब्रूहि" इति प्रैषवशादेतदुत्तरपाठाच्चैतत्प्रैषाव्यवहितोत्तरक्षणे एककालीनौ, साङ्गपरिव्याणभावनाकरणसमानकालीनत्वाच्च क्रियमाणानुवादित्वाविरोधः।** सोमविकृतौ **च कौण्डपायिनामयने तथैव प्राप्तौ। तत्र च "यो होता सोऽध्वर्युः" इति श्रुतम्।** तस्य च **सत्रत्वात् सत्रे चानतिप्रयुक्तवरणजन्यहोतृत्वाध्वर्युत्वादेरानत्यभावेनाभावात् "यो होता" इत्यत्र होत्रध्वर्युपदाभ्यां तत्कार्यलक्षणया कार्यद्वयेऽप्येककर्तृकत्वं विधीयते। अतश्चौपदेशिकैककर्तृकत्वबलेन प्राकृतैककालकत्वबाधात् प्रथमतः करणमन्त्रः पश्चादपर इत्याद्यः पक्षः। होतृत्वादेरध्यवसायमात्रनिमित्तकत्वस्य स्थापितत्वात् सत्रेऽपि तत्सम्भवेन पदद्वये कार्यलक्षणायां प्रमाणाभावात् जघन्य एवाध्वर्युपदे तल्लक्षणामङ्गीकृत्याध्वर्यवपदार्थानां होतृसंस्कारकत्वेन विधानम्। अप्राकृतकार्यकारित्वापत्तेः होतृपदे कर्मत्वलक्षणापत्तेश्च**

---

णारंभसन्निपाती करणमन्त्रपाठकालस्समस्त्येवेति अपरस्यापि कालसत्वात् सोऽपि पठनीयत्वेन प्राप्त एव। इतरथा स उन्नेयान् भवतीति मन्त्रस्य क्रियमाणानुवादित्वस्य चानापत्तेः। अत एव करणमन्त्रत्वानुरोधेन मन्त्रान्त एव कर्मादिसन्निपातन्यायेन परिवीरसीति वर्तमानपरिव्याणलिङ्गं विरुद्धं वर्तमानसामीप्येनैव नेयम्। अत ऐककाल्याद्विरोधसंभूतेः युक्तो विचार इत्यर्थः। **सोमविकृताविति**। सोमविकृतिर्द्वादशाहः तस्य सत्रात्मकस्य गवामयनं सत्रं विकृतिः तस्य विकृताविर्थः। **तत्र चेति**। तथा च श्रुतिः यो होता साऽध्वर्युः स पोता, य उद्गाता स नेष्टा सोच्छावाकः, यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता, यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत्, यः प्रति प्रस्थाता सो ऽग्नीत् स उन्नेता गृहपतिर्गृहपतिःसुब्रह्मण्यःसुब्रह्मण्य इति। अनया च श्रुत्या होतुद्गातृमैत्रावरुणप्रस्तोतृप्रतिप्रस्थातृणां पञ्चानां स्वस्वकार्ये सतामेवान्ययोश्च द्वयोर्द्वयोः कर्मकर्तृत्वविधानात्, अन्येषां दशानामध्वर्य्वादीनां ऋत्विजां निवृत्तिबोधनद्वारा षण्णामेव विधानादृत्विक्समासो बोध्यते। **तथा च** हौत्रमाध्वर्यवं च एकेन होत्रा कर्तव्यं भवति। न च तदुभयमेकेन कर्तुं शक्यमित्यन्यतरस्य हानोपादानसन्देहे प्राचीनैरेकतरस्य हानेनोपादानेन वाऽनियमपूर्वपक्षमुक्तमयुक्तमिवेति सूचयन् आद्यं पूर्वपक्षमाह—**तस्य चेति**। नान्यतरस्य उपादानं हानं वा, अपि तु द्वयोरपि क्रमेणोपादानमेवेत्याद्यपूर्वपक्षोपपत्त्यर्थमौपदेशिकैककर्तृत्वेत्याद्युक्तम्। ततश्च यत्र साङ्गप्रधानप्रयोगविधिना अङ्गप्रधानानामेककर्तृत्वमेककालत्वं च उपदिष्टं तत्राप्येककर्तृत्वानुरोधेन अशक्त्योपदिष्टमपि ऐककाल्यं बाधित्वा पूर्वोत्तरानुष्ठानं भवति तत्र किमु वक्तव्यमौपदेशिकेन एककर्तृत्वानुरोधेन आतिदेशिकैककाल्यं बाधित्वा पूर्वोत्तरानुष्ठानमित्यर्थः। **यद्यप्येकेन** होत्रा हौत्राध्वर्यवान्तःपातितया मन्त्रद्वये प्रयुज्यमाने पूर्वं करणः पश्चादपर इत्येवं क्रमे नियामकं न दृश्यते, **तथापि** परिव्याणे प्रथमतः क्रियमाणे तत्समानकर्तृतया तन्मन्त्रस्य झटित्युपस्थितस्यैव प्रथमतः अनुष्ठानं युक्तमित्याशयः।

**होतैव वा तत्कर्तृत्वेन विधीयते। तथाऽपि तु "** परिधौ **पशुं नियुञ्जीत" इत्यत्र परिधित्वाविरोधेनेव होतृत्वाविरोधेनैव कर्तृत्वविधानात् हौत्रः क्रियमणानुवाद्येव तेन प्रयोक्तव्यः। अपरस्तु तेन कालान्तरे अन्येन वा तत्पुरुषेण तस्मिन्नेव काले प्रयोक्तव्यः इति प्राप्ते—**

**पुरोडाशकपालवदग्निपरिधानार्थस्यैव परिधेः पशुनियोजने विनियोगाद्युक्तं परिधिधर्माणां सत्वक्त्वादीनां प्राबल्यम्। प्रकृते त्वध्यवसायनिमित्तहोतृत्वेनैवाध्वर्यवे विनियोगाद्धो**तृकार्यस्य **प्रयोजकत्वकल्पने प्रमाणाभावादाध्वर्यवस्य करणस्यैव प्रत्यक्षवाक्यावगतशेषित्वेन प्राबल्यान्ना**तिदेशिक**समाख्याप्रमाणकक्रियमाणानुवादिनः प्राथम्यम्।** न वा **कालान्तरे तस्य होत्रा पाठः। "स उ श्रेयान् भवति" इति लिङ्गावगतक्रियमाणानुवादित्वबाधापत्तेः। नापि करणमन्त्राव्यवहितोत्तरक्षणे होत्रा तस्य पाठः "यूपाय" इत्यादिप्रैषे होतुः कर्तृत्वेन प्रैषार्थे तदसम्भवात्।** अतस्तस्मिंस्तत्काल **एव होतृपुरुषोऽन्यः कश्चिदन्तरङ्गोऽध्वर्यादिः कर्ता। तस्य कार्यान्तरव्यापृतौ तु बहिरङ्गोऽपि ॥ १० ॥**

---

**परिधाविति।** परिविद्वर्थ्यर्थत्वात् उभयधर्मा स्यादिति पूर्वाधिकरणे परिधेर्यूपस्थानापन्नतयोभयार्थस्य उभयधर्मकत्वमिति साधिते द्वयोर्धर्मयोर्विरोधे परिधेस्सतो यूपकार्ये विधानात् परिधित्वानुपमर्देन यूपधर्मकत्वमिति यौप्यस्तु विरोधे न स्यात् मुख्यानन्तर्यादिति द्वादशद्वितीयपादाधिकरणे वक्ष्यते। तद्वदिहेत्यर्थः। परिधित्वाविरोधेनेत्यस्याग्रे यूपधर्माणामितीवशब्दात प्राक् पूरणीयम्। **होतृकार्यस्येति।** होतृकार्यप्रयुक्तत्वेनेह विधानाभावेन होतृकार्यस्य होतृत्वे प्रयोजकत्वकल्पने प्रमाणाभाव इत्यर्थः। **नातिदेशिकेति।** अनेन च वाक्येन इह प्रत्यक्षायास्समाख्याया विरोधाभावेप्यातिदेशिकहौत्रसमाख्याया विरोधाविरोधविचारात् प्रकरणसंगतिस्सूचिता। आध्वर्यवेष्वपि केषुचित् करणमन्त्रेषु यो होतेत्यादिवाक्येन समाख्याया बाधाद्धोतैव कर्ता नाध्वर्युरिति पूर्वाधिकरणसाधिताध्वर्यवत्वापवादादनन्तरसंगतिस्स्पष्टैवेति न सूचिता। ननु तर्हि क्रियमाणानुवादिनो लोपः, कालान्तरे वा पाठः स्यादित्याशंकां, निराकरोति—**नवेति।** अतः प्रधानभूताध्वर्यवपदार्थानुरोधेन विरोधे गुणभूतहोतृकर्तृकपदार्थस्य न होत्रानुष्ठानं, किन्तु होतृपुरुषेणेत्येतत्प्रतिपादकं **विप्रतिषेधेकरणस्समवायविशेषात् इतरमन्यस्तेषां यतो विशेषः स्यात्** इति सूत्रगतमितरमन्य इति भागं विवृणोति—**अतस्तस्मिन् काले इति। अध्वर्यादिरिति।** अध्वर्यादिः मैत्रावरुणादिः, बहिरङ्गस्तदुत्तरभावी तृतीयी पादीवेत्यर्थः। एवमत्र प्रधानाध्वर्यवानुग्रहकरणे स्थिते यद्वादशोपान्त्याधिकरणे यजमानसंस्कारा अञ्जनाभ्यञ्जनादयस्सत्रे सर्वेषामुत गृहपतेरेवेति संदिह्य गृहपतेरेवेति पूर्वपक्षोत्तरत्वेन सर्वेषामेवेति सिद्धान्तसाधनानन्तरं यत्र याजमानार्त्विज्ययोर्विरोधो यथा उत्तरवेदेस्समीपे दक्षिणत ऊर्ध्वस्थितिः अध्वर्योः होत्रादेश्च सदसि

## (११)—प्रैषेषु च पराधिकारात् ॥ २२ ॥

“ प्रोक्षणीरासादय ” इत्यादयः प्रैषाः, प्रैषार्थाश्च प्रोक्षण्यासादनादयस्समाख्यानादध्वर्युणैवैकेन कर्तव्याः। न च स्वस्मिन् स्वस्य प्रैषानुपपत्तिः “ चेतो वृथा खिद्यसे ” इत्यादाविव स्वस्मिन्नपि स्वस्योपदेशसम्भवात्। वस्तुतो नैवायं प्रैषः अपि तु “ प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च ” इति चकारेण लोटोऽपि प्राप्तकालतायां विधानात्प्राप्तकालतायामयं लोट्। प्रोक्षण्यासादनस्य प्राप्तः काल इति। युष्मदर्थको मध्यमपुरुषस्तु साधुत्वार्थः। अथवा हे प्रोक्षण्यासादन तव प्राप्तः काल इति क्रियायां चेतनत्वाध्यारोपेण सः। यत्र तु ‘अग्नीदग्नीन् विहर’ इत्येव प्रैषस्तत्रास्तु सम्बोधनानुरोधेन प्रैषार्थस्याग्नीध्रकर्तृकत्वम् वस्तुतस्तु हे अग्नीत् ममाग्निविहरणस्य प्राप्तः कालः इति व्याख्यातुं शक्यत्वात् न तत्रापि समाख्याबाध इति प्राप्ते—

समाख्यानुरोधेन मध्यमपुरुषस्य साधुत्वेन क्रियायां चैतन्याध्यारोपेण व्याख्याने प्रमाणाभावात्सम्बोधनमध्यमपुरुषयोश्चादृष्टार्थत्वापत्तेः प्रैषत्वसमाख्याबाधापत्तेश्च प्राप्तकालार्थ-

---

स्थितिरित्यार्त्विज्यस्य, दक्षिणतो ब्रह्मयजमानावासाते कर्मणः क्रियमाणस्येति दक्षिणत उपवेशनस्य च याजमानस्य च भवति तादृशस्थले येयजमानास्ते ऋत्विज इति वचनेनार्त्विज्योद्देशेन यजमानानाङ्गुणत्वेन विधानात् प्रधानभूतार्त्विज्यानुग्रहेण यजमानैस्स्वधर्मस्यैव त्याग इति विप्रतिषेधेपरमिति गुणसूत्रेण यदुक्तं तदपेक्षितत्वात् सर्वेषामेव यजमानानां संस्कार। इत्यभिहिते तर्हि स्वार्थलोभेनार्त्विज्यस्यापि त्यागोऽस्त्वित्याशङ्कोत्तरत्वेनैतदधिकरणसिद्धमेव प्रसंगात्; अथवोत्तराधिकरणे केषामार्त्विज्यमिति करिष्यमाणविचारोपयोगितया मध्ये सूत्रकृतोपक्षिप्तमिति न कथमपि गतार्थत्वशङ्कालेशोऽपीति ध्येयम्।

---

॥ प्रैषेषु पराधिकारात् ॥

इत्यादय इति। आदिपदेनेध्माबर्हिरुपसादय, स्रुवंच स्रुचश्च संमृड्ढि, पत्नीं सन्नह्याज्येनोदेहि इत्यादयः संगृहीताः। न च स्वस्मिन्निति। अनेन प्रैषगतपरविषयत्वलिङ्गेनाध्वर्यवसमाख्याया विरोधाविरोधसूचनद्वारा प्रकरणसंगतिरुक्ता। अनन्तरसङ्गतिस्तु पूर्वाधिकरणे अध्वर्युकर्तृकत्वापवादे उक्ते उत्तराधिकरणेऽध्वर्युकर्तृकत्वसिद्धान्तेन तदपवादः साधयिष्यते तदुपोद्घातत्वेनेह भिन्नकर्तृत्वविचारणात् द्रष्टव्या। प्रैषत्वसमाख्याबाधापत्तेरिति। प्रैषार्थलोडन्तत्वेनैव

कत्वानुपपत्तेःप्रैषस्यापि स्वस्मिन्नौपचारिकत्वापत्त्या एकत्राध्वर्युसमाख्याबाधेनोभयोर्भिन्न-कर्तृकत्वमेव ॥ ११ ॥

---

## (१२)—अध्वर्युस्तु दर्शनात् २३ ॥ गौणो वा कर्मसामान्यात् ॥ २४ ॥

तत्रापि बहुषु प्रधानभूतेषु प्रैषार्थेषु समाख्याबाधे प्रमाणाभावादेकस्मिन् "प्रोक्षणीरासादय" इत्यादिप्रैष एवाध्वर्युबाधेनान्यकर्तृकत्वम्। अत एव तिर्यञ्चं स्फ्यं धारयित्वा सम्प्रैषमाह यद्यन्वञ्चं धारयेत् स्फ्यो वज्रेणाध्वर्युं क्षिण्वीत" इति धारयितुर्भिन्नमध्वर्युं दर्शयतीति प्राप्ते—

प्रैषार्थेष्वन्यकर्तृकत्वेऽपि प्रयोजकत्वेनाप्यध्वर्योः कर्तृत्वोपपत्तेस्समाख्यायाः कुत्राप्यबाधात् प्रैषार्थान् अन्य एव कुर्यात्। प्रैषोच्चारणं त्वध्वर्युः। स च सोमादावसति विशेषवचने प्रतिप्रस्थात्रादिस्तत्पुरुषः। दर्शादौ त्वाग्नीध्र एव, कर्मकरत्वेन याज्ञिक-

---

एतेषु प्रैषत्वसमाख्यायाः सत्वात् तस्याश्च प्राप्तकालार्थत्वेऽनुपपत्तेर्विशेषसमाख्यासहकृतपरविषयत्वलिङ्गेन सामान्यसमाख्याया बाध इत्यर्थः। स्पष्टमन्यत्।

---

॥ अध्वर्युः ॥

ननु मुख्यं वा पूर्वचोदनाल्लोकवदिति न्यायेनानुपसंजातविरोधे प्रैषे अध्वर्युणोक्ते जघन्यानां तत्पदार्थानां सति विरोधे अन्य एव कर्ता स्यादिति कथं पूर्वपक्षोत्थानमित्यत आह·—बहुषु प्रधानभूतेष्विति। ततश्च प्रैषार्थपदार्थान् प्रति प्रैषस्याङ्गत्वात् तेषां बहुत्वाच्च द्वादशोक्ताङ्गगुणविरोधन्यायभूयोल्पविरोधन्यायाभ्यां पूर्वपक्षारंभ इत्यर्थः। अग्निविहरणादिरूपप्रैषार्थे अग्नीध एव प्रैषानुपपत्त्यैव कर्तृत्वसिद्धेस्तदीयप्रैषेऽध्वर्योः कर्तृत्वं निस्सन्दिग्धमिति सूचयितुं प्रोक्षणीरासादयेत्युक्तम्। अत एव तिर्यञ्चमिति। तिर्यञ्चं स्फ्यं धारयेत्, यदन्वञ्चं धारयेत् वज्रेणाध्वर्युङ्क्षिण्वीतेति श्रुत्या तिर्यक्स्फ्यधारणं प्रैषदात्रा कर्तव्यं भवति। वेद्यां स्फ्यमुष्टिभागमुपरि धृत्वाऽग्रञ्चाधो यदा क्रियते तदा पार्श्ववर्तिधाराद्वयं यदा पूर्वपश्चिमयोः कृतं भवेच्चेत्तदन्वंचंधारणं भवति तदेव यदादक्षिणोत्तरयोः कृतं भवति तदा तिर्यग्धारणमित्यनयोः भेदः। तत्र तेनान्वञ्चंधारणं न कार्यं तस्य वज्ररूपत्वात् तेन वज्रेण धृतेनाध्वर्युं नाशयेदित्यर्थकतया वज्रधारकस्यैव प्रैषकर्तृत्वात्तस्य चाध्वर्य्वपेक्षया भेदप्रतीतेः न प्रैषकर्ताऽध्वर्युः किन्त्वन्य इत्यर्थः। यद्यप्यत्र पूर्वपक्षे अग्नीदन्य इति विशिष्योक्तं भाष्यादिषु तथाप्यध्वर्युबाधे तत्पुरुषत्वेन प्रतिप्रस्थात्रादेः सोमादौ प्राप्तावपीह

**प्रसिद्धत्वादिति ध्येयम्।** यत्तु लिङ्गं **तत् यद्यध्वर्युरन्वञ्चं धारयेत् तदा स्फ्यस्तं क्षिण्वीते-त्यर्थेऽपि बाधकाभावात् धारणप्रैषयोराध्वर्यवत्त्वेऽप्युपपन्नम्। स्फ्यधारणमपि कल्पसूत्रे-ष्वाध्वर्यवमेव प्रसिद्धमित्यत्रत्यवार्तिकं** प्रौढिवादः ॥ १२ ॥

---

दर्शपूर्णमासयोस्तदभावे अग्नीध एव तदीयत्वेन प्राप्तौ नियामकाभावात् सामान्यतोऽन्य इत्युक्तम्। यदि तु स्फ्यधारकस्यैव सतो लिङ्गदर्शने प्रैषकर्तृत्वप्रतीतेः तद्वारकत्वस्याग्नीध एव सत्वात् सामान्यतो लिंगदर्शनेनाग्नीध एव प्राप्तिरविकलेत्युच्येत, **तदा**ऽस्तु भाष्याद्यनुसारेणान्यपदमग्नीद्विशेषपरमपि यथाधिकारं प्रतिप्रस्थात्रादीनामपि क्वचित्प्रैषकर्तृत्वात् तत्साधारण्येन संग्रहायाध्वर्युभिन्नत्वोपा-धिना प्रयुक्तमिति न विरोधः। **ननु** परिक्रयाम्नानानर्थक्यभिया परिक्रयादिप्रयोजकव्यापारद्वारा मुख्यकर्तृत्वाश्रयणेऽपीह कस्यचिदानर्थक्याभावात् किमिति तदाश्रयणमित्यत आह—**कुत्रापीति।** आनर्थक्याभावेप्युभयगतसमाख्याया अबाधार्थमेव तदाश्रयणमितरथा प्रैषे अन्यकर्तृत्वाश्रयणे-ऽध्वर्योः कथमपि प्रैषे संबन्धाभावे तद्गतसमाख्याबाधापत्तिरित्यर्थः। **यत्तु** स्फ्यधारकप्रैषकर्त्रे-पेक्षयाऽध्वर्योः कर्मत्वप्रतीत्यान्यत्वप्रतीतेर्न प्रैषकर्तृत्वमित्यर्थे लिंगमुक्तं तत्परिहर्तुं तत्रत्याध्वर्यु-शब्दस्याध्वर्यवपदार्थकर्तृत्वसादृश्येनाग्नीध्रे गौणत्वमुक्तं **भाष्यवार्तिकयो**स्तदर्थभेदनापि उपपत्तौ गौणत्वाश्रयणे प्रयोजनाभावात् अयुक्तम्। किंच स्फ्यधारणकर्तुरेवान्वंचधारणे स्फ्यकर्तृक-हिंसनकर्मत्वप्रतीतेराग्नीध्रस्य कर्माङ्गत्वाङ्गीकारे तस्यैव प्रैषकाले धारणापत्त्या कल्पसूत्रोक्ताध्वर्यवत्व-विरोधापत्तिरित्यभिप्रेत्याह—**यत्तु लिङ्गमिति। प्रौढिवाद इति। यद्यपि** अध्वर्युर्यद्यन्वञ्चं धारयेत् तदा स्फ्य आग्नीध्रमथवा स अध्वर्युर्वज्रेणाध्वर्युं क्षिण्वीतेत्यर्थेऽपि न स्फ्यधारणस्याध्वर्यवत्त्वविरोधः, **तथापि** प्रैषदानोत्तरमध्वर्युणाऽग्नीधे स्फ्यदानात् तत्कर्तृकान्वंचधारणेनाग्रे करिष्यमाणेन तस्याग्नीधो हिंसनाप्रसक्तौ परकर्तृकान्वंचधारणे तस्य हिंसनप्रसक्तेर्वक्तुमयोग्यत्वात् अध्वर्युकर्तृकान्वंच-धारणेनाध्वर्योरेव हिंसनं वक्तुमुचितं, अत एव तैत्तिरीयशाखायां वज्रो वै स्फ्यः यदन्वञ्चं धारये-द्वज्रोऽध्वर्युः क्षिण्वीतेति अध्वर्योरेव प्रथमान्ततया धात्वर्थाश्रयत्वं स्पष्टं प्रतीयते न त्वाग्नीध्रस्य, तत्र तमित्यध्याहारक्लेशापत्तेः अध्वर्युपदस्य तत्रापि लक्षणायां तस्यैव स्फ्यधारणापत्त्या पूर्वोक्त-कल्पसूत्रविरोध इत्याशयः। क्षिण्वीतेति च क्षिणुहिंसायामिति तनादिगणपठितस्य स्वरितेतः क्षिणुधातोः आत्मनेपदे लिङन्तं रूपम्। तत्र हिंसारूपप्रयोजकव्यापारमपेक्ष्याध्वर्युं क्षिण्वीतेति भाष्यादिधृतशाखान्तरवचने कर्मत्वेन प्रयोगः। प्रयोज्याध्वर्युनिष्ठव्यापारमपेक्ष्य तैत्तिरीये प्रथमान्तप्रयोग इति न कोऽपि विरोधः। **यदि** तु भाष्यकारादिधृतो वज्रेणाध्वर्युं क्षिण्वीतेति तृतीयान्तवज्रपदपाठः तदा वज्रस्य स्फ्यरूपस्य कर्तृभूतस्यैव करणत्वेनान्वयासंभवात् आवश्यके

(१३)—ऋत्विक्फलं करणेष्वर्थवत्त्वात् ॥ २५ ॥ स्वामिनो वा तदर्थत्वात् ॥ २६ ॥ लिङ्गदर्शनाच्च ॥ २७ ॥

ये इतिकरणेन **तृतीयया वा विनियुक्ताः करणमन्त्रास्तेषां मान्त्रवर्णिकक्रियाजन्यफलकत्वं, न तु " आयुर्दा अग्ने " इत्यादिवत् प्रधानफलानुवादकत्वमित्युक्तं** कौस्तुभे ।

तदत्र " **ममाग्ने वर्चो विहवेष्वित्ति पूर्वमग्निं परिगृह्णाति " इत्यादावग्न्यन्वाधानक्रिया तावदाध्वर्यवी,** मन्त्रलिङ्ग**वशेन प्रधानभूतक्रियायां समाख्याप्राप्तकर्तृबाधानुपपत्तेः ।**

---

ऽध्वर्योः कर्तृकर्मत्वानुपपत्तिपरिहारार्थमध्वर्युपदे गौणत्वांगीकारेऽपि स्रुग्धारणस्याध्वर्यवत्वानुपपत्त्यभावात् अत्रत्यं वार्तिकं प्रौढिवाद इत्येतत्पूज्यपादवचनमेव प्रौढिवाद इति ध्येयम् ।

---

॥ ऋत्विक्फलं करणेष्वर्थवत्वात् ॥

प्रत्यगाशीरूपाणां कर्मजन्यफलप्रकाशकानां मन्त्राणां फलस्य यजमानगामित्वात् लिङ्गवशेन समाख्यां बाधित्वा यजमानप्रयोक्तृत्वं प्राक्साधितं, तेनैव न्यायेन करणमन्त्राणामपि फलवाचकपदघटितानां याजमानत्वमेव सिद्धमिति किमत्र चिन्त्यत इत्यत आह—**ये इतिकरणेनेति । कौस्तुभे इति** । मन्त्राधिकरण इति शेषः । **अयमर्थः** ये अकरणमन्त्राः तेषामङ्गभूतक्रियाङ्गत्वाभावात् प्रकरणेन साक्षात् प्रधानाङ्गभूतास्सन्तः प्रधानफलप्रकाशनेन दृष्टार्थास्तत्फलस्य यजमानगामित्वेन यजमानेनैव प्रयोज्या भवन्ति । ये तु श्रुत्या वाक्येन प्रकरणबाधेनाङ्गभूतक्रियाङ्गतामापन्नाः करणभूतास्तेषां दृष्टद्वारा क्रियाङ्गत्वनिर्वाहाय क्रियायास्तत्संबन्धिनो वा प्रकाशनावश्यकत्वे तस्याः क्रियायाः मन्त्रान्तर्गतपदप्रतिपाद्यफलजनकत्वाभावे मन्त्रस्य तदीयप्रकाशनद्वारा करणत्वानुपपत्तेः अवश्यं क्रियाजन्यं प्रधानफलातिरिक्तं फलङ्कल्पनीयम् । न ह्यत्रैतत्फलं यजमानगाम्येवेति नियन्तुं शक्यते प्रधानफलत्वाभावादतो न तेन याजमानत्वनियमस्सिद्ध्यति। प्रत्युत क्रियायाः निस्सन्दिग्धतया आध्वर्यवत्वात् तदङ्गभूतस्याध्वर्यवत्वं क्रियासमानकर्तृत्वानुरोधेन सिद्धमेवेति न सर्वथा याजमानत्वप्रसक्तिः इत्यभिप्रेत्याह— **तदत्रेति** । नन्वग्नेस्सकाशाद्यजमानेनैव फलस्याशासनीयत्वात् स्वगामिफलप्रकाशनावश्यकत्वेन मन्त्रप्रयोगे कर्तव्ये सति तत्समानकर्तृत्वानुरोधेन क्रियाया अपि याजमानत्वमित्याशङ्कायामाह—**मन्त्रलिङ्गेति** । प्रत्यगाशीष्ट्वरूपलिङ्गस्यापि अङ्गभूतमन्त्रविषयत्वात् दुर्बलाया अपि समाख्यायाः प्रधानभूतक्रियाविषयत्वेन भिन्नविषयतया न तेन बाधस्सं-

न चयाजमानेन मन्त्रेणाध्वर्युगतक्रियाप्रकाशनं, "वयं त्वेन्धानाः" इति मन्त्रलिङ्गेन क्रियासमानकर्तृकत्वस्य मन्त्रे प्रतीतेः। अतश्च मन्त्रक्रिययोरप्याध्वर्यवत्त्वात्फलमपि वर्चःप्रभृति तद्गतमेव, अन्यथा "ममाग्ने" इति "मह्यं नमन्तां" इत्यादिमन्त्रलिङ्गविरोधापत्तेः। न च साङ्गप्रधानविधायिफलवाक्यगतात्मनेपदानुरोधेनाङ्गफलानामपि स्वर्गकामकर्तृकत्वावगतेर्यजमानगामित्वमिति वाच्यं, श्रुतस्याप्यात्मनेपदस्य सावकाशतया तेन कल्पितस्यापि लैङ्गिकस्याध्वर्युवृत्तित्वस्य बाधानुपपत्तेः। न चात्मनेपदार्थस्यैतद्विषये बाधे विधेरग्न्यन्वाधानविषयेऽनुष्ठापकत्वस्यापि बाधापत्तिः, प्रमाणाभावात्। अतोऽग्निसंस्कारार्थानुष्ठापितक्रियाजन्यानुषङ्गिकफलस्य क्रत्वनुपयोगिनोऽप्याध्वर्यवत्वेऽपि न काचित्क्षतिरिति प्राप्ते—

---

भवति अङ्गभूतमन्त्रगतलिङ्गावगतयजमानसमानकर्तृत्वानुग्रहेण प्रधानभूतक्रियागताध्वर्यवत्वबाधस्त्वङ्गगुणविरोधन्यायेनैव निरस्त इत्यर्थः। नन्वङ्गप्रधानयोराक्षेपलभ्यसमानकर्तृत्वस्य हौत्रसमाख्यया बाधेन याज्यायां होतृकर्तृकत्वं यागे तु अन्यकर्तृकत्वमितिवदिहापि प्रत्यगाशीष्ट्वलिङ्गेनाक्षेपलभ्यसमानकर्तृकत्वबाधमङ्गीकृत्य मन्त्रे याजमानत्वस्य क्रियायामाध्वर्यवत्वस्य च स्वीकारोऽस्तु। एतेन न ह्यन्येनोच्यमानाः अध्वर्योः क्रियां प्रकाशयन्तीति शास्त्रदीपिकोक्तमपास्तमिति आशङ्कामनूद्य परिहरति—**न च याजमानेति**। तथा च वयं त्वेन्धानास्तनुवं पुषेमेति मन्त्रे एवास्मच्छब्दोत्तमपुरुषयोः प्रयोगेण क्रियासमानकर्तृत्वस्य याज्यावैलक्षण्येन मन्त्रलिङ्गेनैव प्रतीतेः तदुपष्टब्धसमाख्यया प्रत्यगाशीष्ट्वलिङ्गस्य सामान्यरूपस्य बाधो नायुक्त इत्यर्थः। अतोऽकरणमन्त्रवैषम्यमुक्तमुपसंहरन् प्रस्तुताधिकरणविचारे पूर्वपक्षमाह—**अतश्चेति**। अकरणमन्त्रेषु यद्गामिफलं तस्य मन्त्रप्रयोक्तृत्वमिति निर्णीतम्। इह तु वैपरीत्येन यस्य मन्त्रप्रयोक्तृत्वं तद्गतमेव फलमित्येव पूर्वपक्षारंभात्, सिद्धान्ते च मन्त्रस्यान्यप्रयोक्तृत्वेऽपि फलं यजमानगतमेव तेन प्रकाश्यत इति स्थापनात् अकरणवैषम्यान्तरमपि आध्वर्यवत्वादिति हेतुना सूचितम्। यत्त्वत्र भाष्यवार्तिकयोर्यजमानगतफलप्रकाशकत्वसिद्धान्ते साधकमुपन्यस्तं तदनूद्य दूषयति—**साङ्गेति**। यदपि वार्तिकादिगतमात्मनेपदश्रुत्येतिपदं विधिश्रुतिपरमङ्गीकृत्य दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्ययं हि विधिः साङ्गप्रधानं विदधत् प्रधानवदितराङ्गवच्चान्वाधानमपि यजमानं प्रति विदधत् तस्यैव वर्चः प्रभृत्यन्वाधानफलमवगमयन् लिङ्गेन विरुद्ध्यते। विधेश्च यद्यन्वाधानांशे बाधस्ततोऽस्याविधानादन्वाधानमेव न स्यात्। अतो न बाधस्संभवतीति प्रकाशकारैरुक्तं तदप्यनूद्य दूषयति—**न चात्मनेपदार्थस्येति**। पूर्वमग्निं परिगृह्णातीति वचने प्रत्यक्षत एवाग्नेः संस्कार्यत्वश्रवणेन वयं त्वेन्धाना इत्यत्रापि कर्मापेक्षायां त्वाशब्दोपात्ताग्नेः कर्मत्वेनान्वयाच्चान्वाधानक्रियाया अग्निसंस्कारार्थत्वात् तदर्थप्रधानविध्यनुष्ठापिततत्क्रियाया यत्फलमानुषङ्गिकं तस्य यजमानगतत्वा-

"यां कां चन **यज्ञे ऋत्विज आशिषमाशासते यजमानस्यैव सा" इत्यनन्यथासिद्ध-लिङ्गानुगृहीतात्मनेपदश्रुत्या यजमानगामित्वावगतेरेतल्लिङ्गबलादेव च यत्र नात्मनेपदश्रवणं यथा 'जुहुयात्' इत्यादौ तत्रापि यजमानगामित्वम्।** अतश्च **तदनुरोधेन "मम" इति मम यजमानस्येत्येवं व्याख्येयम्। 'मह्यं' इत्यादौ तु अस्मच्छब्देन यजमान एवोपचारा-दभिधीयते इति न दोषः॥**

प्रयोजनं **सत्त्रेऽङ्गयन्वाधानाभावादूहानूहरूपप्रयोजनासम्भवेऽप्यर्थानुसन्धानविशेषरूपं द्रष्टव्यम्।**

---

भावेपि अनुष्ठानोपपत्तेर्नाध्वर्य्यवत्वे किंचिद्बाधकमित्यर्थः। ममेति लिङ्गस्यान्यथाप्युपपन्नत्वेन बाधाप्रसक्तेस्सावकाशाया अप्यात्मनेपदश्रुतेः संकोचापत्तेः लिङ्गोपष्टब्धत्वेन प्राबल्याच्च यजमान-गतमेव फलमिति सिद्धान्तमाह—**यां काञ्चनेति**। अत्र **वार्तिके** ममेत्यादिमन्त्रगतपदोपपत्त्यर्थं यजमानपदाध्याहारोऽथवा गौणत्वमिति पक्षद्वये उक्ते तत्राद्यपक्षस्याद्यमन्त्रपादे संभवेपि उत्तर-पादत्रयेऽसंभवेनाव्यापकत्वादभ्युच्चययुक्तित्वं गौणत्वपक्षस्यैव मुख्यत्वमिति **प्रकाशकारैः** मम-शब्दे गौणत्वपक्षान्तरपर**शास्त्रदीपिका**नुरोधेनोक्तम्। तद्यत्र ममेत्यस्याग्रे यजमानपदाध्याहारे-णापि वाच्यार्थाबाधसंभवे गौणत्वाश्रयणेन तत्र तद्बाधस्यान्याय्यत्वादुत्तरपादत्रयेऽध्याहारेणापि वाच्यार्थानुपपत्तौ अगत्या गौणत्वाश्रयणमित्येवं व्यवस्थितविकल्पप्रदर्शनपरतयापि वार्तिकोक्तेः उपपत्तेश्चायुक्तमिति तुशब्देन सूचयन्नाह—**अतश्चेति**। यत्त्वत्र प्रकाशकारैः यजमानवृद्धौ सत्रादावध्वर्य्वेकत्वात् मम मह्यमित्यनयोः अनूहः पूर्वपक्षे। सिद्धान्ते तु यजमानवाचिनि ममेत्य-त्रास्माकं इत्यूह्यं, मह्यमित्यत्रास्मभ्यमिति प्रयोजनमुक्तं तद्दूषयन् स्वयं प्रयोजनमाह—**प्रयोजन-मिति**। सत्रादेः परंपरया सोमयागविकृतित्वाद्दर्शपूर्णमासेष्टिविकृतित्वाभावेन तदङ्गान्वाधाना-प्राप्तौ मन्त्रस्यैवाप्राप्तेरूहानूहप्रयोजनासंभव इत्यर्थः। साक्षात्सत्रानङ्गभूतसूक्तवाकमन्त्रान्तर्गतायुरा-शास्ते इति भागेन तदङ्गभूतदीक्षणीयादिषु अतिदेशप्राप्तत्वात् सत्रे आयुराशासते एते यजमाना इत्यूहो वक्ष्यते नवमे। तथैव दीक्षणीयाद्यङ्गभूतान्वाधानमन्त्रेप्यूहोऽनिवार्य एवेति सत्रेऽन्वाधाना-भावात् इत्युक्तिर्द्वादशे अमन्त्रकसोमार्थान्वाधानेनैव दीक्षणीयादिषु प्रसङ्गसिद्धेः वक्ष्यमाणत्वेन तदर्थं तदीयमन्त्राप्राप्त्यभिप्रायेण न विरुद्ध्यत इति ध्येयम्। **अर्थानुसन्धानेति**। विहवेषु विगतहवनस्पर्धास्थानेषु वर्चस्व्यहं भविष्यामीत्यत्रास्मच्छब्दार्थे अध्वर्युत्वेन स्वस्वरूपार्थानुसन्धानं पूर्वपक्षेऽध्वर्युणा कर्तव्यम्। सिद्धान्ते च यजमानत्वानुसन्धानमित्येवमनुसन्धाने विशेष इत्यर्थः।

## (१४)—कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् ॥ २८ ॥

यत्र तु "**मा मा सन्तासं**" **इत्यादौ इतिकरणविनियुक्त एवासन्तापनादिरूपं फलं**

---

अधिकरणमालायान्तु विशिष्टहवनं येषां यज्ञानां तेषु वर्चस्तेजसोपलक्षितं फलं ममास्तु इत्यर्थो दर्शितः ।

---

### ॥ कर्मार्थं तु फलं तेषाम् ॥

आहवनीयवायव्यभागस्थस्याध्वर्योरुत्तराधारार्थमाहवनीयनैर्ऋत्यदेशे अभिक्रमणे करणत्वेन विनियुक्तस्य अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा संताप्तमिति मन्त्रस्यापि करणत्वान्यथानुपपत्त्या असंतापरूपफलकल्पनया तद्वारा फलप्रकाशकत्वेऽपि पूर्वाधिकरणन्यायेन करणमन्त्रत्वाविशेषात् यजमानगतमेव तत्फलमिति पूर्वपक्षमपवादत्वेनैव स्पष्टतयोपेक्ष्यापवादरूपेण सिद्धान्तमेव दर्शयति—**यत्र त्विति**। एतच्चाभिक्रमणे मन्त्रकरणकत्वाभिधानमेत एवाक्रमणप्रत्याक्रमणे मन्त्रवती भवत इत्या**पस्तम्बसूत्रा**नुसारेणोक्तम् ।

**वस्तुतस्तु** अतिक्रमणप्रकाशकत्वस्य अस्मिन् मन्त्रेऽनुपलम्भात् असंतापस्य विपरीतत्वेनातिक्रमणफलत्वानुपपत्तेः मन्त्रलिङ्गानुपपत्त्या प्रार्थनाविधिकल्पनयाऽसन्तापरूपं फलं प्रार्थनक्रियाया एवेति युक्तम् । अत एव स्रुगग्रेषु शास्त्रदृष्ट्या स्थितस्य यज्ञाधिपतेर्विष्णोः पुरस्तात् स्थितस्याहवनीयस्य च मध्येऽतिक्रमणे क्रियमाणेऽध्वर्योः उभयविषयं प्रार्थनमेव मन्त्रे प्रतीयते । स मन्त्रः परमतिक्रमणकाले अर्थात पठनीयः । **एवं स्थिते** मन्त्रगताग्नाविष्णू इति पदस्य स्रुक्स्रुवपरत्वमङ्गीकृत्य स्रुक्स्रुवप्रार्थनापरत्वकल्पनया नाभिदेशे स्रुक्स्रुवयोर्धारणे अयङ्करणमन्त्र इत्य**धिकरणमालोक्तमपास्तम्**। पूर्वलिखिता**पस्तंबसूत्र**विरोधात्, स्वयमेव वेदभाष्ये कृतेन पूर्वोक्ताग्निविष्णुपरव्याख्यानेन विरोधाच्च। एवं च प्रार्थनाफलत्वेऽपि प्रस्तुताधिकरणविचारोपपत्तिरिति इतिकरणेन विनियुक्तस्येति सामान्योक्त्या **पूज्यपादै**स्सूचितम् । समिद्धतराहवनीययज्ञाधिष्ठातृविष्णुदेवतयोरन्तरा संचारेऽध्वर्योः सन्तापनिवारणं यथाऽपेक्षितं तथा चेद्यजमानस्य नापेक्षितं भवेत् तदा ऋत्विक्फलस्य यजमानानपेक्षणात् साङ्गप्रधानप्रयोगविधिगतात्मनेपदश्रुतेर्या कात्र्नेति लिङ्गोपष्टब्धाया बाधापत्त्या यजमानगामित्वं कल्प्येत । न त्वेतदस्ति । यजमानेनापि स्वकर्माविघातार्थं तदीयसन्तापनिवृत्तेरपेक्षितत्वेन तावतैव तत्फलस्यात्मगामित्वोपपत्त्या आत्मनेपदश्रुतेरविरोध-

**ऋत्विग्गामित्वेऽपि क्रतुविरोधिसन्तापनिवर्तकतया** तदुपयोगि **तत्र** "यजमानस्य **सा**" **इति षष्ठ्याः परम्परयाऽप्युपपत्तेर्लिङ्गानुरोधात् ऋत्विग्गाम्येव** ॥ १४ ॥

---

## (१५)—व्यपदेशाच्च ॥ २९ ॥

एवं **यत्रापि "तन्नौ सह" इत्यादौ** द्विवचनाद्यनुपपत्तिस्तत्रापि **ऋत्विग्गामित्वम्** ॥ १५ ॥

---

संभवादित्यभिप्रेत्याह—**तदुपयोगीति**। तत्फलस्याध्वर्युगामित्वे आत्मनेपदोपपत्तावपि **यां** काञ्चनेति लिङ्गगतयजमानपदोत्तरषष्ठ्यनुपपत्तिं परिहरति—**यजमानस्येति**। एवं च मेत्यात्माभिधायकपदगतलिङ्गेनात्मनेपदश्रुतेरविरोधे सति मेतिपदस्य न गौणत्वाश्रयणमिति मुख्येन लिङ्गेन ऋत्विग्गामीत्ययमर्थः एवकारेण सूचितः।

---

॥ **व्यपदेशाच्च** ॥

**तथाकामोऽर्थसंयोगात्** इत्यधिकरणे गुणकामेषु याजमानत्वे स्थापिते यत्र तु आत्मनेवा यजमानायवेति व्यपदेशस्तत्र वाशब्दबलादुभयोरपि काम इति **व्यपदेशात् इतरेषां स्यादित्युत्तरसूत्रे**णोक्तम्। ततश्च तेनैवेहापि उभयगामित्वसिद्धेर्यद्यपि न पृथगेतदारंभणीयं **तथापि** तत्र ब्राह्मणगतकामानामुभयार्थत्वं साधितमिह तु मन्त्रप्रसङ्गात् मन्त्रगतङ्कल्प्यमानफलमुदाहृत्य विचार इत्यपौनरुक्त्यमभिप्रेत्य, यत्र विधिना फलं बोध्यते तत्रोभयगामित्वं यत्र वाऽन्यगतङ्कल्प्यमपि फलं स्वामिनोऽपेक्षितं, तत्र तत्तत्स्वामिगतमपि शक्यते वक्तुमिहतु मन्त्रानुरोधेन क्लेशेन कल्प्यमानफलस्य भद्राख्यस्याकर्मार्थत्वेन यजमानेनानपेक्षणात् आत्मनेपदश्रुतिविरोधात् न ऋत्विग्गामीति विशेषाशङ्कां सिद्धान्तेनैव निरस्यति—**एवमिति**। दक्षिणहविर्धानमण्टपे सोमाभिषवाधारफलकयोरधस्ताच्चतसृषु आग्नेयादिविदिक्षु चत्वार उपरवनामका गर्ता अरत्निमात्रखाता अधोभागे परस्परं मिलिता ऊर्ध्वभागे परस्परं प्रादेशमात्रव्यवहिता भवन्ति। तत्रैकस्मिन्नुपरवे अधोभागे यजमानो दक्षिणहस्तं प्रसारयति। तथैवान्यस्मिन्नध्वर्युः स्वहस्तं प्रसार्याधस्ताद्यजमानहस्तं गृह्णाति तदा यजमानः किमत्रेति मन्त्रेण फलं पृच्छति। अध्वर्युश्च भद्रमित्यनेनोत्तरं ब्रूते। ततो यजमानस्तन्नौ सहेति अध्वर्युं प्रत्याहेत्यर्थके तन्नौ सहेत्यादिके इत्यर्थः। **द्विवचनाद्यनुपपत्तिरिति**। कल्प्यमानस्य फलस्य द्विवचानानुपपत्त्या उभयगामित्वेनैव कल्पनात् अध्वर्युगामित्वेपि स्वामिगामित्वानपायात् आत्मनेपदोपपत्तेः स्वाविरोधेन परार्थस्याकर्मार्थत्वेपि अपेक्षोपपत्तेः स्वामिगामि सत् अध्वर्युगाम्यपि। तत्र च

(१६)—द्रव्यसंस्कारः प्रकरणाविशेषात्सर्वकर्मणाम् ॥ ३० ॥ निर्देशात्तु विकृतावपूर्वस्यानधिकारः ॥ ३१ ॥

बर्हिर्धर्माणां **प्रकृतावङ्गप्रधानसाधारण्यमुक्तम्।** अतश्च **दैक्षपशावपि "बर्हिषा यूपावटमवस्तृणाति" इति विहिते यूपावटस्तरणबर्हिष्यपि दार्शिका बर्हिर्धर्मा भवेयुरिति प्राप्ते-**

---

वचनप्रतिवचनसामर्थ्यात् समाख्यया च मन्त्रपाठस्याध्वर्युकर्तृकत्वावश्यंभावे प्राप्तेपि विभज्यैव मन्त्रपाठ इत्याशयः। प्रयोजनमध्वर्युणापि फलं न काम्यं पूर्वपक्षे किन्तु यजमानेनैव। सिद्धान्ते तु तेनापीति स्पष्टमेव। बहुयजमानके तु तन्त्रस्सहेत्यूहस्तूभयपक्षेप्यविशिष्ट इति **प्रकाशकाराः।** **यद्यपि** सत्रेऽन्येषां यजमानानामार्त्विज्यावरुद्धत्वात् अन्वारंभादिषु क्रत्वर्थेष्विव गृहपतेरेव प्रश्नोत्तरदानेपि कर्तृत्वात्तस्यैव सम्मुखस्य तन्त्रावित्यस्मदादेशेनैकस्यैव परामर्शसंभवात् अध्वर्युद्वितीयतयाऽविकृत एव प्रयोग इति नोहप्रसक्तिस्**तथापि** बहुयजमानेऽहीने क्रत्वर्थेष्विवोत्तरदानेपि अनियमप्राप्तावपि सर्वेषामेव स्वस्वफलाकांक्षित्वात् फलिसंस्कारेष्विव सर्वैरपि कर्तव्येषूत्तरदानेषु सर्वेषामेव संमुखानां फलप्रकाशनानुरोधेनावश्यक एवोह इत्यभिप्रायेणैतत् द्रष्टव्यम्।

---

॥ **द्रव्यसंस्काराः** ॥

**अहीनो वा प्रकरणाद्गौण** इत्यारभ्य पूर्वाधिकरणसमाप्तिपर्यन्तं प्रतिज्ञातस्य श्रुत्यादिसमाख्यान्तानां प्रमाणानां परस्परं विरोधाविरोधविचारारंभस्य समाप्तौ अधुना यावदंगत्वेनौपदेशिकश्रुत्या प्राकृतानां पदार्थानां विनियोगः प्रकृतौ कृतस्तावदंगत्वेनैवातिदेशप्रापितोपदेशशास्त्रेणापि अथवाऽतिदेशेनैव वा विनियोगः, किं वा तदतिरिक्ताप्राकृताङ्गत्वेनापीत्येवमौपदेशिकश्रुत्यादीनामतिदेशप्राप्तत्वेन रूपेण पृथग्भूतानां तेषामेव च विरोधाविरोधविचारकरणात् महाप्रकरणसंगतिं स्पष्टत्वादर्थान्तरारंभाच्चानपेक्षितामनंतरसङ्गतिं च स्पष्टत्वादुपेक्ष्य विषयप्रदर्शनपूर्वकं पूर्वपक्षमारचयति —**बर्हिर्धर्माणामिति।** अत्र **भाष्यकारेणो**त्सूत्रपूर्वपक्षोत्तरत्वेन निर्देशात्तु विकृतावपूर्वस्यानधिकार इत्युत्तरसूत्रमवतारयता तत्र करिष्यमाणविचारे स्मरणार्थं प्रातिसूत्रमेतदित्युक्तं ; **वार्तिककृता** तूत्सूत्रपूर्वपक्षाय सूत्रेण स्मारणमयुक्तमिति अपरितोषादस्यैव प्रथमसूत्रस्य पूर्वपक्षसूत्रत्वमुत्तरस्य च सिद्धान्तसूत्रत्वमङ्गीकृत्यैकाधिकरण्यमुक्तमिति मतभेदं सूचयितुं उक्तमित्युक्तम्। **अतश्चेति।** **यथैव प्रकृतौ** बर्हिर्लुनातीत्यादिविधिनोपदेशरूपेणाङ्गप्रधानसाधारणबर्हिरर्थत्वं बोधितं, तथैवाति-

**प्रकृतौ "बर्हिषि हवींष्यासादयति" इति वचनादङ्गप्रधानसाधारणहविरासादनार्थ एव बर्हिषि धर्माः, न कार्यमात्रार्थे इत्युत्तराधिकरणे वक्ष्यते। यद्यपि वा** परिभोजनीयादिवत **प्राकृतकार्यमात्रार्थत्वं स्यात्, तथाऽपि नाप्राकृतकार्ये यूपावटस्तरणार्थे बर्हिषि भवेयुः, उपकारपृष्ठभावेनैव पदार्थानामतिदेशेन विकृतावप्राकृतकार्यकारित्वकल्पनानुपपत्तेः। न हि प्रकृतौ येन केन चित्सम्बन्धेनापूर्वसम्बन्धिबर्हिष्ट्वमुद्देश्यतावच्छेदकं, येनाप्राकृतस्यापि तत्सम्बन्धाद्धर्मग्राहकत्वं शङ्क्येत, सम्बन्धविशेषग्राहकप्रमाणबलेन तावद्विशेषाणामेव प्रवेशेनानुपस्थितसामान्यस्योद्देश्यतावच्छेदककोटावप्रवेशात्। न च तथाऽपि यूपावटस्तरणभावनाया धर्माकाङ्क्षायामेव फलचमसन्यायेन धर्मग्राहकत्वं, लौकिकधर्मग्रहणेनापि आकाङ्क्षानिवृत्तौ उपदेशातिदेशयोरभावात्। फलचमसे तु स्थानापत्त्या भक्षानुवादबलाच्चातिदेशकल्पनमिति विशेषः॥ १६॥**

---

देशेन दैक्षविकृतावपि तच्छास्त्रप्रवृत्तेः तत्र तेन दैक्षाङ्गप्रधानसाधारणबर्हिरर्थत्वं शक्यत एव बोधयितुमिति यूपावटास्तरणबर्हिरर्थत्वम्।

यद्यपि दशमाद्ये शास्त्रातिदेशः, सप्तमे प्रकृतिप्रकरणपठितानां धर्माणां पारिप्लवत्वं च निराकरिष्यत इति नात्र तदादाय पूर्वपक्षः, किन्तु प्रकृतिवदित्यतिदेशेन यथा प्रकृतावङ्गैरुपकृतं तथा विकृतावप्युपकर्तव्यमित्यर्थस्य बोधितस्य यथाप्रकृत्यनुष्ठान एवाबाधसंभवात् प्रकृतौ च बर्हिर्धर्मैः प्रकृतितदङ्गबर्हिस्साधरण्येनोपकर्तव्यमिति सिद्धावेव यूपावटास्तरणार्थे बर्हिषि ते धर्मा इत्यर्थः। अतश्चेतिशब्देन उक्तस्याङ्गप्रधानसाधारण्यस्य हेतुताबोधकेन पशावपीत्यपिशब्देन सूचितः।

यस्त्वत्र **प्रकाशकारैः** शास्त्रातिदेशमनंगीकृत्यैव[1] उपहोमादिन्यायेनोपदिष्टापूर्ववैकृताङ्गान्वयात् पूर्वमेव कॢप्तोपकारित्वेन प्राकृतानां विकृतिभावनान्वयादिहापि दैक्षे पशौ यूपावटास्तरणापेक्षया पूर्वमेव लवनादिधर्माणामन्वयेनैव, यूपावटास्तरणार्थे बर्हिषः तस्यैवाग्नेय्याग्नीध्रमुपतिष्ठत इति विहितोपस्थाने क्लृप्तापूर्वसंबन्धित्वेन प्रकृताग्नेय्या इव इहापि कॢप्तापूर्वसम्बन्धितया लाघवेनोपादानात् बर्हिषः तद्द्वारा च लवनादिधर्माणां साधारण्यमिति पूर्वपक्ष उपपादितः। न चासौ युक्तः, उपादानलाघवानुरोधेन यथासिद्धधर्मवतः परप्रयुक्तस्यैव तस्योपादानेप्युपदेशातिदेशयोरभावे प्रयोजकत्वफलकसाधारण्यपूर्वपक्षस्यानुत्थानेन तत्करणस्यानुचितत्वात्। अतिदेशेन साधारण्यस्य प्राकृतद्वारैव तत्र तत्र

---

1. A. अङ्गीकृ

## (१७)—विरोधे च श्रुतिविशेषादव्यक्तश्शेषे ॥ ३२ ॥

**प्रकृतावपि न समन्त्रकबर्हिर्लवनादिधर्माणां प्रकृत्यपूर्वसम्बन्धिबर्हिर्मात्रार्थत्वं, अपि तु हविरासादनार्थबर्हिरर्थत्वमेव । अत एव पवित्रविधृत्यादिबर्हिषि नैते संस्काराः । "त्रिधातु पञ्चधातु वा बर्हिर्लुनाति" इति विहितलवनसंस्कृतस्य बर्हिषस्तथैव सन्नद्ध-स्यासादितस्य "त्रिधातु पञ्चधातु वा बर्हिस्स्तृणाति" इति वचनेन सर्वस्यैव स्तरणे विनियोगात् । अमन्त्रकलवनमात्रसंस्कृतस्य परिभोजनीयाबर्हिषः प्राकृततदितरसर्वकार्या-र्थत्वेन तत एव पवित्रादिकरणोपपत्तेः ॥ १७ ॥**

---

## (१८)—अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् ॥ ३३ ॥

**सोमे "पुरोडाशशकलमैन्द्रवायवपात्रे प्रास्यति, आमिक्षां मैत्रावरुणपात्रे, धाना**

---

मीमांसकैरङ्गीकारात्तदभावे उपकारान्तरकल्पनया साधारण्याङ्गीकारे शास्त्रातिदेशं विना तदसंभवात् शास्त्रातिदेशपक्षाङ्गीकारापत्तेश्च । अतो यूपावटास्तरणार्थे अन्यस्मिन्नेव बर्हिष्यु-पादीयमाने पूर्वोक्तरीत्या बर्हिर्धर्माणां प्रकृतिवद्भावबोधिताङ्गप्रधानसाधारण्यानुरोधेनानुष्ठानमित्येव पूर्वपक्षयुक्तिशरीरं भाष्यवार्तिकशास्त्रदीपिकादिग्रन्थेषु स्पष्टं प्रतीयमानं नान्यथाकर्तव्यमित्याशयः । **परिभोजनीयादिवदिति ।** पवित्रविधृत्यादिसकलदर्भकार्याणामर्थे क्रियमाणाः स्वतन्त्रदर्भमुष्टीः परिभोजनीयानामिकाः तद्वदित्यर्थः । बर्हिषा यूपावटमवस्तृणातीत्यस्याज्येन यूपमनक्तीत्ये-तदुपलक्षणार्थत्वात् यूपाञ्जनसाधनाज्येपि उत्पवनादयो धर्मा भवन्तीत्यपि द्रष्टव्यम् । निगदव्याख्यातमन्यत ।

---

॥ उत्तराधिकरणं च ॥

"तत्र, समावच्छिन्नाग्रौ प्रादेशमात्रौ पवित्रे करोति" इति विहितं पवित्रं, तथा वेद्यां स्तीर्णबर्हिषः प्रस्तरस्य चास्तृतस्यासंसर्गार्थमरत्निमात्रे दर्भपवित्रे तिर्यग्वितते "अरत्निमात्रे विधृतीकरोति" इति वचनविहिते विधृती पवित्रविधृतीशब्दयोरर्थः । तथा तत्र त्रिधातु पञ्चधातुवेत्यत्र मुष्टिपरिमितबर्हिषश्च यो यथा त्रिः पञ्चधा वा संपद्यते तथा लवनास्तरणे कुर्यादित्यर्थः ।

---

आश्विनपात्रे" इति श्रुतम्। तत्र शकलपदस्योत्तरार्धादिपदवदेकदेशवाचित्वेन स्वतन्त्र-पुरोडाशाक्षेपकत्वाप्रसक्तेः प्रातस्सवनिकसवनीयपुरोडाशावयवपरत्वं तावन्निर्विवादम्। आमिक्षादौ तु तदभावात् "पयसा मैत्रावरुणं श्रीणाति" इतिवत् लौकिकामिक्षादिग्राहकत्वेनोपपत्तौ क्लृप्तप्रतिपत्तिबाधेन सवनीयगततद्ग्राहकत्वे प्रमाणाभाव इति प्राप्ते—

द्वितीयया प्रासनस्यामिक्षादिप्रतिपत्तित्वावगमात् तदंशे औपदेशिक्या तया आतिदेशिकप्रतिपत्तिबाधोपपत्तेः प्रातस्सवनिकसवनीयसम्बन्धिनामेव पुरोडाशादीनां ग्रहणम्॥ १८॥

---

(१९)—विकृतौ सर्वार्थश्शेषः प्रकृतिवत्॥ ३४॥ मुख्यार्थो वाऽङ्गस्या-चोदितत्वात्॥ ३५॥

अनारभ्य "यज्ञाथर्वणं वै काम्या इष्टयस्ता उपांशु कर्तव्याः" इति श्रुतमुपांशुत्वं प्रधा-

---

॥ अपनयस्त्वेकदेशस्य॥

अत्र वार्तिके पूर्वाधिकरणन्यायेन विधृतिपवित्रयोरर्थे बर्हिरन्तरस्येवेहापि पुरोडाशान्तर धानान्तराणां ग्रहणमिति पूर्वपक्षं प्रापय्य एकदेशद्रव्याणामुत्पत्त्यप्रयोजकत्वात् न स्वतन्त्रपुरोडाशान्तराद्याक्षेपः। अपि तु प्रकृतयागीयशेषभूतानां प्रतिपत्तिकर्मविधानादिति सिद्धान्तितम्। तत् पयस्यादिपदानामेकदेशवाचित्वाभावेन एकदेशद्रव्यत्वेनाप्रयोजकत्वसिद्धान्तयुक्तेस्तत्राव्यापनात् चतुर्थे गतार्थत्वाच्चायुक्तमित्यभिप्रेत्य यच्छास्त्रदीपिकायां पयस्याद्यर्थं चैतदधिकरणमित्युक्तं, तदनुसृत्य पुरोडाशकपालन्यायेन गतार्थत्वसूचनद्वारा पयस्यादिवाक्ययोः पूर्वपक्षमाह—तत्रेति। वस्तुतस्त्वत्र यदि केवलश्शकलशब्दः स्यात् तदा तस्य ससंबन्धिकार्थपरत्वात् प्रतिसंबन्ध्यपेक्षया प्रकृतस्यैव पुरोडाशस्य तत्त्वेनान्वयात् उत्तरार्धाधिकरणन्यायेन सिद्धत्वं स्यात्। इह तु पुरोडाशशकलपद-श्रवणात् शकले प्रतिसंबन्धित्वेन स्वपदोपात्तपुरोडाशस्य तत्त्वेनान्वयेपि पुरोडाशपदस्य ससंबन्धि-कार्थवाचित्वाभावे प्रकृतपुरोडाशग्रहणे प्रमाणाभावेन पयस्यादिष्विवागतार्थत्वमेव तद्विषयेऽपीति भाष्यवार्तिकयोस्तदुदाहरणं नायुक्तमिति ध्येयम्। क्लृप्तप्रतिपत्तीति। अतिदेशप्राप्तप्राकृत-प्रतिपत्तीत्यर्थः। स्पष्टार्थमन्यत्।

---

उत्तराधिकरणं च

तत्र यज्ञाथर्वणमिति। यज्ञेषु मध्ये अथर्वणवेदविहितकर्मणामिव गोप्याः काम्या

**नवदङ्गेष्वपि मन्त्रोच्चारणसत्त्वात् काम्यशब्दस्य च कामप्रयोजकत्वेनाङ्गेष्वपि प्रयोगोपपत्तेः, जनकत्वमात्रपरत्वेऽपि चोद्देश्येष्टिविशेषणत्वेनाविवक्षितत्वादिष्टीनामेवाविवक्षितत्वे सोमेऽपि तदापत्तेः साङ्गेष्ट्यङ्गमिति प्राप्ते—**

**अङ्गेषु क्वचिदपि काम्यशब्दप्रयोगाभावात् जनकत्वसम्बन्धेन प्रधानमात्रपरत्वावगतेः काम्यत्वेष्टित्वोभयपरामर्शकतच्छब्दस्य चोद्देश्यपरत्वेनोभयविवक्षोपपत्तेः प्रकृतौ प्राकरणिक-**त्रैस्वर्यावरोधे **निवेशासम्भवेऽपि काम्यविकृतीष्टिप्रधानमात्रे निवेशः। न ह्यत्र "उच्चैः प्रवर्ग्येण" "अप्स्ववभृथेन" इत्यादिवत् करणविभक्तिनिर्देशः, येन साङ्गस्य भवेत्। तव्यप्रत्ययेन कर्मत्वाभिधानात्तु प्रधानमात्र एव निवेशः॥ १९॥**

---

## (२०)—सन्निधानविशेषादसम्भवे तदङ्गानाम्॥ ३६॥

**श्येने "दृतिनवनीतमाज्यं भवति" इति श्रुतं दृतिनवनीतं** प्रकरणाच्छ्**येनप्रधा-**

---

इष्टयः। तस्मादुपांशु कर्तव्या इत्यर्थः। **त्रैस्वर्यावरोधे** इति। मन्द्रया आज्यभागान्तं परं मध्यमया उत्तमयाऽनूयाजा इति विशेषतो विहितमन्द्रमध्यमोत्तमरूपत्रैस्वर्यावरोधे इत्यर्थः। **तेनानारभ्याधीत**न्यायेन प्रकृतावेव निवेशाशङ्का परास्तेति ज्ञेयम्।

---

**सन्निधानविशेषादसंभवे**

अत्र पूर्वोत्तराधिकरणेषु च सङ्गत्यादि सुधीभिरूह्यम्। विस्तरभयान्नोच्यते। पूर्वपक्षे आज्यपदस्य उद्देश्यपरत्वाभावात् किमुद्देशेन किं विधीयते इत्यपेक्षायामाह—**प्रकरणादिति**। **यद्यप्याज्यस्य** सिद्धरूपत्वेन न प्रकरणग्राह्यत्वं संभवति, **तथाप्य**धिकाराख्यप्रकरणेनोपस्थितश्येन-वाचकपदकल्पनया तस्योद्देश्यत्वात् तदङ्गं प्रसूनं बर्हिरेककपालाङ्गमिवेत्यर्थः। अत एवाग्रे सन्निधानादिति वक्ष्यति। अत्र **प्रकाराकारै**श्चित्राधिकरणे समासाभावे द्वयोः पदार्थयोः विशेषण-विशेष्यभावानुपपत्तेः पदार्थद्वयविधाने वाक्यभेदापत्त्या विशिष्टविधिनिरासादिह कथं तदङ्गीकारेण पूर्वपक्षोत्थानमित्याशङ्क्य तत्र वाक्यभेदापत्त्या तदनङ्गीकारेपीह इति नवनीतमिति पक्षद्वयेपि बहु-व्रीहित्वेन यौगिकत्वात् सामानाधिकरण्यनिर्दिष्टं द्रव्यं श्रुत्यैव ब्रूते विष्णवे शिपिविष्टाय इन्द्राय प्रदात्रे इतिवत्। तेन तद्वदेव न वाक्यभेदो विशिष्टद्रव्यविधावपीत्येवं समाधानेन पूर्वपक्षं प्रापय्य विधिं विनापि मन्त्रार्थवादाभ्यामेव विशिष्टप्रसिद्धेर्विष्णवे शिपिविष्टायेत्यादौ न वाक्यभेदः। इह तु दृतिनवनीतपदे बहुव्रीहित्वेन यौगिकत्वेपि अन्यपदार्थमात्रशक्त्या निरूढलक्षणया वा उक्तं,

**नाङ्गम्।** न ह्यत्राज्यानुवादेन इत्यधिकरणकनवनीतप्रकृतिविधिः, आज्यस्य नवनीतप्रकृतिकत्वस्य प्राप्तत्वात् तदनुवादेन इत्यधिकरणत्वविधावेकप्रसरताभङ्गापत्तेश्च। अतो बहुव्रीहिसमासार्थ एवैको इत्यधिकरणकनवनीतप्रकृतिकः सन्निधानाच्छ्येने द्रव्यतया विधीयते। आज्यपदं तु तस्यैव नवनीतप्रकृतिकत्वादनुवादः अन्यपदार्थतात्पर्यग्राहकं चेति नानेकविधेयता। अत एव श्येनोऽप्याज्यद्रव्यकत्वादुपांशुयाजविकार एव। गमकान्तरसत्त्वे तु सोमप्रत्याम्नायमात्रमाज्यमिति प्राप्ते—

विशिष्टविधिगौरवाद्यापत्तेरतिदेशप्राप्ताज्योद्देश्यपरत्वमेवाज्यशब्दस्याङ्गीकृत्य तदुद्देशेन

---

न त्वाज्यमेव तदित्यन्यतः प्रसिद्धम्। अतोऽवश्यं तत्रापि पृथग्विधिव्यापारात् पञ्चदशान्याज्यानीतिवत् वाक्यभेदापत्तेरन्यतरोद्देशेनान्यतरविधिरेव वाच्य इति सिद्धान्तितम्। तत्पूर्वपक्षे सामानाधिकरण्यहेतुकद्रव्यपरत्वस्याशङ्कानिरासहेतोः पञ्चदशवाक्येऽपि समत्वात् इतरथा तत्रापि सामानाधिकरण्यानुपपत्तेस्तत्रापि वाक्यभेदानापत्त्या विशिष्टविधित्वोद्धारापत्तेः। सिद्धान्ते च शिपिविष्टत्वादिगुणस्य विष्ण्वादिगतत्वेन प्रसिद्धिवदिहापि आज्ये नवनीतप्रकृतित्वस्य लोकत एव प्रसिद्धेस्तुल्यत्वात् पृथग्विधिव्यापाराप्रसक्तेः। वस्तुतः शिपिविष्टत्वादिगुणानां प्रसिद्धत्वेनानुवादसंभवेपि तद्वृत्तिदेवतात्वस्य पार्थक्येन विशिष्टरूपेण वा विधानार्थं पृथग्विधिव्यापारस्यावश्यकत्ववदिहापि तथा स्वीकारे बाधकाभावात्। प्रत्युत वैश्वदेवीशब्दे आमिक्षापदस्येव इहाज्यपदस्य तात्पर्यग्राहकत्वमात्रकल्पनया एकपदार्थ एव विधिव्यापारकल्पनेन वाक्यभेदानापत्तेः अयुक्तं पूर्वपक्षखण्डनमिति सूचयन् विशिष्टविधिपूर्वपक्षोपपत्तिं दर्शयति—**न ह्यत्रेति।** दृतौ चर्मभाजने निहितं नवनीतं यस्येति व्यधिकरणबहुव्रीहौ अन्यपदार्थेन सह नवनीतस्य प्रकृतित्वरूप एव संबन्धः प्रतीयत इत्यभिप्रेत्याह— **इत्यधिकरणकेति। नानेकविधेयतेति।** ततश्च पञ्चदशवाक्यसाधारण्येनैव पूर्वोक्तरीत्या विशेषाशङ्कया विशिष्टविधित्वपूर्वपक्षे नैवविधेयानेकतेत्याशयः। अत्र पूर्वपक्षे प्राचीनैः आज्येन द्रव्येण प्रत्याम्नानात सोमद्रव्यस्य बाध इत्युक्तं तेन च सोममात्रस्य बाधोऽन्यान्यङ्गानि तु तान्येवेति प्रतीयते तत्र विशेषं दर्शयति—**अत एवेति। गमकान्तरसत्त्वे त्विति।** श्येने सह पशूनालभत इति अतिदेशप्राप्ताग्नीषोमीयादिपशूनां त्रयाणां साहित्यविधानरूपगमकं सोमविकृतित्वे उपपद्यते इतरथा पशूनामतिदेशानापत्तेरित्यर्थः। **गौरवाद्यापत्तेरिति।** आदिपदेनाज्यपदस्य तात्पर्यग्राहकत्वकल्पनया निरर्थकत्वापत्तिः संगृह्यते। अनेन चोक्तरीत्या पूर्वपक्षिणा यो वाक्यभेदपरिहारः कृतः स युक्त एवेति सूचितम्। अन्यथा विशिष्टविध्यङ्गीकारेण गौरवापादनमात्रस्याविशेषकरत्वानापत्तेः। वाक्यभेदापत्तिभिया विशिष्टविधित्वानुपपत्तेरेव

**इत्यधिकरणकनवनीतप्रकृतिकत्वमेव** प्रयोगान्तःपातितया **विधीयते । आज्यं चाङ्गेष्वेव प्राप्त**मिति तन्मात्रविषयता ।

यत्तु **दृतिनवनीतपदस्य तत्पुरुषत्वमङ्गीकृत्य दृत्यधिकरणकनवनीतमेवाज्यपदलक्षित-तत्कार्योद्देशेन द्रव्यतया पक्वघृतरूपाज्यप्रत्याम्नायत्वेन विधीयत इति न्यायसुधाकृतोक्तं, तत् आज्यपदे साम्प्रतिकलक्षणापत्तेस्तदपेक्षयाऽऽनुशासनिकनिरूढलक्षणापादकबहुव्रीह्य-ङ्गीकारस्यैव न्याय्यत्वादुपेक्षितम्। यदि तु किञ्चिद्रमकान्तरं भवेत् तदा तदेवास्तु ॥ २१ ॥**

---

## (२१)—आधानेऽपि तथेति चेत् ॥ ३७ ॥ नाप्रकरणत्वादङ्गस्य तन्निमि-त्तत्वात् ॥ ३८ ॥

---

वक्तमुचितत्वापत्तेश्च । अत एव पञ्चदशवाक्येप्येतादृशप्रकारेण वाक्यभेदपरिहारसंभवमभि-प्रेत्यैव **कौस्तुभे** आज्योद्देशेन सङ्ख्याविधाने लाघवं पुरस्कृत्यैव आज्यैः स्तुवत इति वाक्ये आज्य-पदं स्तोत्रनामेति साधितं **पूज्यपादैर्न** तु वाक्यभेदापत्तिमात्रादेवेति ध्येयम् । **प्रयोगान्तः पाति-तयेति ।** श्येनप्रयोगमध्ये नवनीतं दृतावानीय तत् प्रतप्याऽऽज्यं संपाद्य तेनाज्यद्रव्यकाङ्गानीति सिद्धान्तः । तमिममेव सिद्धान्तं **न्यायसुधाकृता** पूर्वपक्षीकृत्य तत्पुरुषाङ्गीकारेणान्यथा सिद्धान्तः कृतः तन्मतमनूद्य दूषयति—**यत्त्विति । यद्यपि** बहुव्रीहिमाले अन्यपदार्थे लक्षणापत्तेः तदपेक्षया तत्पुरुषे समासान्तर्गतपदोपस्थापितार्थस्य झटित्युपस्थितेस्तदर्थे लक्षणायां लाघवमभिप्रेत्यैव **निषादस्थपत्यधिकरणे** बहुव्रीह्यनङ्गीकारेण तत्पुरुषमादाय पूर्वपक्षः कर्मधारयमादाय सिद्धान्तश्च साधयिष्यते इति बहुव्रीह्यपेक्षया तत्पुरुषाश्रयणं युक्तं **तथापि** पदान्तरे सांप्रतिकलक्षणान्तरापत्त्या तत्पुरुषाश्रयणे लक्षणाद्वयापेक्षया आनुशासनिकनिरूढलक्षणापादकबहुव्रीहिरेव युक्त इति तद-पेक्षयेत्यनेन सूचितम् ।

**अत्र** चोत्सूत्रपूर्वपक्षोत्तरत्वेन एकस्मिन्नेव **"सन्निधानविशेषात् असंभवे तदङ्गानां"** इति सिद्धान्तसूत्रे पठिते सूत्रकृताऽनन्तर**माधानेपि तथेति चेन्नाप्रकरणत्वादङ्गत्वस्यातन्निमित्तत्वा**-दिति सूत्रद्वयं पठितं, तत्पूर्वाधिकरणशेषतयैवाशङ्कासमाधानपरं सत् युज्यत एवेति नाधिकरणा-न्तरमित्यभिप्रेत्य **शास्त्रदीपिकायां** त्यक्तमपि भाष्यवार्तिकयोर्व्याख्यातम् । तद्यद्यपि नाधि-करणान्तरपरतया स्फुटं प्रतीयते **तथापि** विशेषाशङ्कादर्शनमात्रेणाधिकरणान्तरपरतया व्याचष्टे—

---

सर्वत्र धर्माणां अनारभ्याधीतप्राकरणिकसाधारण्येनापूर्वोपकारक एवान्वयात्पवमानेष्ट्याधानादीनामपि च श्येनापूर्वोपकारकत्वात् तत्रापि दृतिनवनीतमिति प्राप्ते—

यदुपकारकता वैधप्रमाणप्रमिता तदुपकारक एव धर्माणां निवेशः। न तु अर्थसमाजग्रस्तोपकारकत्वेऽपि, श्येनोपकारकयजमानाज्यभोजनादावपि दृतिनवनीतत्वापत्तेः। न चाधानादेश्श्येनोपकारकत्वं शास्त्रे प्रमितम्, अग्निमार्थत्वस्यैव तत्प्रमितत्वात्। अतश्श्येनप्रयोगवर्तितदुपकारकाज्य एव तन्निवेशः॥ २१ ॥

---

## (२२)—तत्काले वा लिङ्गदर्शनात ॥ ३९ ॥ सर्वेषां वाऽविशेषात् ॥ ४० ॥ न्यायोक्ते लिङ्गदर्शनम् ॥ ४१ ॥

एवं चेत्सुत्याकाल एव श्येनवैशेषिकाणां "सहपशूनालभते" इत्यादीना दर्शनात् दृतिनवनीतत्वस्यापि सुत्याकालाङ्गाज्य एव निवेश इति प्राप्ते—

सामान्यतो दृष्टेन वाक्यसङ्कोचायोगात्सर्वार्थत्वम्। न हि पशुसाहित्यस्यापि सुत्याकालत्वे श्येनाङ्गत्वं प्रयोजकं, अपि तु प्रधानप्रत्यासत्तितुल्यकालोत्कर्षवाक्याबाधरूपहेतुत्रयम्। न चात्र तदस्ति। अतस्सर्वार्थतैव॥ २२ ॥

---

॥ आधानेपि तथेति चेत् ॥

स्पष्टार्थम्।

---

### तत्काले लिंगदर्शनात्

सह पशूनिति। अतिदेशप्राप्तानां पशूनामग्नीषोमीयादीनां साहित्यमङ्गं विशेषरूपेण विहितं सुत्याकाल एव भवतीति सामान्यतो दर्शनात् यद्यत् श्येनीयमपूर्वमङ्गं तत्तत्सुत्याकाल एवेति कल्पनेनास्याप्याज्यस्य सुत्याकाल एवाङ्गत्वात्तत्कालीनाज्यद्रव्यकाङ्गेष्वेव निवेश इति पूर्वपक्ष्याशयः। अपि त्विति। पशूनां हि विधीयमानं साहित्यं कस्मिन् देशे इत्यपेक्षायां यत्रैव प्रधानसोमयागप्रत्यासत्तिस्त्रयाणां पशूनां भवति। सच सवनीयस्यैव सुत्यादिवसकालीनत्वात् तत्रैव लभ्यते । तथा च तत्र द्वयोः पूर्वोत्तरयोः अनुष्ठाने स्वस्थानातिक्रममात्रेण तुल्यकाल उत्कर्षोऽपकर्षश्च भवतः। इतरथाऽग्नीषोमीयस्य सवनीयस्य चानूबन्ध्यास्थाने उत्कर्षे अग्नीषोमीयस्य विलंबितकालता, सवनीयस्य चादूरकालता, तथैवाग्नीषोमीय-

## (२३)—मांसं तु सवनीयानां चोदनाविशेषात् ॥ ४१ ॥ भक्तिरसन्निधाव-न्याय्येति चेत् ॥ ४३ ॥ स्यात्प्रकृतिलिङ्गाद्वैराजवत् ॥ ४४ ॥

षट्त्रिंशदाब्दिके शाक्यानामयनाख्ये सत्रे "संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति तत्र यान् मृगान् हन्ति तेषां तरसास्सवनीयाः पुरोडशा भवन्ति" इति श्रुतं मांसं 'भवन्ति" इति विधिभावनाप्रत्यासन्नत्वापुरोडाशस्य तदुद्देशेनैव विधीयते। विधेरेव हि प्रवर्तनार्थं भावनाभाव्यसाकाङ्क्षत्वम्। अतस्तत्प्रत्यासन्नस्यैव तदुचितं, न सवनीयानाम्। यदा तु "पुरोडाशास्सवनीयाः" इति भवदेवादिधृतः पाठस्तदा प्राथमिकत्वाद्विधेय-

---

स्थानेऽनूबन्ध्यसवनीययोरपकर्षेपि एकतरस्यापद्यते। वाक्यं च सवनीयस्थाने साहित्याश्र-यणेन संकुचद्वृत्तिकं भवतीति हेतुत्रयं; न ह्यत्र तत्रियमस्ति, प्रत्युत दृतिनवनीतवाक्यस्या-विशेषप्रवृत्तस्य संकोचरूपो बाध एवापद्यते। अत एव प्रधानप्रत्यासत्तिलोभमात्रेण सुत्याकाल एव निवेश इत्यपि निरस्तमित्यर्थः।

---

### मांसं तु सवनीयानां

अत्र च भाष्यपुस्तकेषु पुरोडाशसवनीयपदयोरन्यतरस्य प्राथम्येन पाठद्वैविध्यं दृष्ट्वा ग्रन्थकारैरपि विसंवादेनैव श्रुतः पाठः। तत्र **शास्त्रदीपिकानुसारेण** स्वयं प्रथमतः सवनीय-पदस्य प्राथम्यमङ्गीकृत्य पूर्वपक्षमाह—**भवन्तीति**। पुरोडाशपदस्य प्रथमतः पाठे सप्तदशा-रत्निर्वाजपेयस्य यूप इत्यत्र प्राथम्याद्वाजपेयपदस्यैवोद्देश्यसमर्पकत्ववत् पुरोडाशपदस्य तत्समर्पकत्वं युज्यते। सवनीयपदप्राथम्ये तु तस्यैव तत्परत्वापत्या कथं पुरोडाशस्योद्देश्यत्वेन पूर्वपक्षसिद्धि-रित्यत आह—**विधीति**। **सर्वपुरोडाशेति**। अग्नीषोमीयाङ्गभूतपशुपुरोडाशसाधारण्येन सर्व-पुरोडाशकार्ये इत्यर्थः। **यद्यपि** पुरोडाशोद्देशेन तरसं प्रकृतित्वेनापि शक्यत एव विधातुं, अत एव **न्यायसुधाकृता** एतदेवाङ्गीकृत्य न च तरसेन पुरोडाशासंभव इत्याशङ्क्याज्यमिश्रणेन तत्संभव एव सिद्धान्तितः। अतः पूर्वपक्षे पुरोडाशस्थानापत्तौ मानाभावात् न तत्कार्योद्देशेन विधानं युक्तं **तथापि** सामानाधिकरण्यानुपपत्तिपरिहारार्थं एकत्र क्वचिल्लक्षणाश्रयणे उपक्रमस्थ-तरसपदे प्रकृतित्वलक्षणापेक्षया जघन्ये पुरोडाशपद एव सा युक्तेत्यभिप्रेत्य प्राचीनैरनुक्तमपि कार्ये विधीयत इत्युक्तम्। दूषितं च न्यायसुधाकृन्मतं **धर्ममात्रे** तु **कर्मस्यादित्यधिकरणे कौस्तुभे** तत्रैव द्रष्टव्यम्। नवमे च धान्यमसीत्यधिकरणे वक्ष्यते। सवनीयपदमवयुत्यानुवाद इति

तरसप्रत्यासन्नत्वाच्च पुरोडाशकार्यस्यैवोद्देश्यत्वं स्पष्टमेव । न च पुरोडाशस्य सवनीयपदेन विशेषणं, विशिष्टोद्देशापत्तेः। अतस्सर्वपुरोडाशकार्ये तरसं विधीयते। सवनीयपदं तु सवनीयासवनीयपुरोडाशमात्रे गौणं लाक्षणिकं वा। अतः पुरोडाशमात्रस्थाने तरसं, न धानाज्यादिस्थाने इति प्राप्ते—

सवनीयपदवत्पुरोडाशपदेऽपि कार्यलक्षणापत्तेः प्राथमिकसवनीयपदमेव सवनीययागोद्देश्यतापरम्। प्रथमायास्तु द्वितीयार्थे लक्षणोभयवादिसिद्धैव। अतः सवनीययागोद्देशेन धानादिपञ्चकबाधेन तरसं विधीयते। पुरोडाशपदं त्वेकं जघन्यं च पुरोडाशवत्त्वसम्बन्धेन सवनीययागेषु लाक्षणिकमनुवादः। दृष्टश्च "पुरोडाशानलंकुरु" इत्यादौ पुरोडाशशब्दस्सवनीयसम्बन्धिहविःपर इति तस्य सवनीययागलक्षकत्वं सुकरमेव ॥

तदेवं श्रुत्यादिषट्प्रमाणकमङ्गत्वं निरूपितम्। अतः परं प्रयोज्यत्वं निरूपयिष्यते ॥२३॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयस्याध्यायस्याष्टमः पादः.
अध्यायश्च समाप्तः.

---

शास्त्रदीपिकोक्ते पक्षे तस्य सवनीयपुरोडाशस्यैकत्वात् बहुवचनान्तेनावयुत्यानुवादो न संभवतीत्ययुक्ततां मत्वाऽऽह—सवनीयपदं त्विति। लिङ्गसमवायेन गौणमथ वा गौण्यपेक्षया लक्षणायास्संबन्धमात्रापेक्षत्वेन लघुत्वाल्लाक्षणिकं वा सवनीयपदमित्यर्थः। अत्र च सिद्धान्ते तस्मात्सवनीयानां धानादीनां स्थाने मांसं चोदनाविशेषादिति भाष्यवार्तिकादिग्रन्थेषु सवनीयपदं हविःपरं सत् तदुद्देशेन मांसविधिरिति भ्रमं निराकर्तुं पूर्वपक्षे आपाद्यमानं दोषान्तरं एतादृशवाक्यार्थाङ्गीकारे सूचयन् सिद्धान्तमाह—सवनीयपदवदिति। तथा च पूर्वपक्षे यथा पदद्वये लक्षणापत्तिः तथा सवनीयपदस्य हविःपरत्वेपि पदद्वये लक्षणापत्तिः। अतः सवनीयपदं यागपरमभिप्रेत्याह—प्राथमिकेति। स्पष्टार्थमन्यत्। अस्य तरसस्य न दृतिनवनीतवत् सर्वाङ्गसाधारण्यमपि तु सुत्याकालीनयागाङ्गत्वमेव इत्यापवादिकी अन्तरसङ्गतिः। अध्यायार्थमुपसंहरति—तदेवमिति। कश्शेषः केन हेतुना शेषः कथं च विनियुज्यते, श्रुत्यादीनि च विनियोगे कारणानि तेषां च बलवदबलवत्ता इत्यादिप्रतिज्ञातार्थनिरूपणमेवंशब्दार्थः।

इति श्रीकविमण्डनशंभुभट्टविरचितायां
भाट्टदीपिकाप्रभावल्यां तृतीयस्य
अष्टमः पादः
अध्यायश्च समाप्तः

---

# अथ चतुर्थाध्यायस्य प्रथमः पादः.

## (१)——अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ॥ १ ॥

**एवं सिद्धे शेषिनिरूपिते शेषत्वे** प्रयोजकनिरूपितं प्रयोज्यत्वमिदानीं निरूप्यते। तच्च **परोद्देशप्रवृत्तकृतिव्याप्यत्वम्। कृतिव्याप्यत्वं चानुष्ठाप्यत्वरूपं कालादिव्यावृत्तं वाज-**

---

अज्ञानतिमिरध्वंसि सत्यज्ञानप्रकाशकं ।
सर्वाभीष्टप्रदं नौमि श्रीरूपं सुन्दरं महः ॥ १ ॥

यो वेदशास्त्रार्णवपारदृश्वा यज्ञादिकर्माचरणेऽतिदक्षः
सदाशिवाराधनशुद्धचित्तस्तं बालकृष्णं पितरं नमामि ॥ २ ॥

श्रीखण्डदेवं प्रणिपत्य सद्गुरुं मीमांसकस्वान्तसरोजभास्करम् ।
अत्यन्तसंक्षिप्तपदार्थतत्कृतौ प्रभावलीटिप्पणमातनोम्यहम् ॥ ३ ॥

शिष्येणात्र गुरोः कृतावपि मयाऽप्युद्भाव्यते काचना-
संभूतिस्तदपि प्रचारचतुरे नैषा पुरोभागिता ।
किंतु क्ष्मातिलकाः कुशाग्रधिषणाः सिद्धान्तबद्धादराः
मद्वाक्यं परिहृत्य तत्कृतिमलङ्कुर्वन्त्विदं मे मतिः ॥ ४ ॥

॥ **अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा** ॥

अत्र 'प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते' इति **शास्त्रदीपिकाग्रन्थादन्तर्भावितणि-** जर्थविवक्षया क्तिप्रत्ययन्तेन प्रयुक्तिशब्देन प्रयोजकत्वमध्यायार्थ इति भ्रमं व्यावर्तयन्नाह— **प्रयोजकत्वनिरूपितप्रयोज्यत्वमिहेति**। तृतीये शेषत्वस्यैव निरूपणीयत्वेनोक्तत्वादिह तत्समानाधिकरणस्य प्रयोज्यत्वस्यैव निरूपयितुमुचितत्वादिति भावः। परोद्देशप्रवृत्तकृतिव्याप्य- त्वलक्षणं कर्तुं योग्येषु सनादिदेशदर्शपूर्णमासोत्तरत्वकालरथन्तरसामत्वव्रीह्यादिरूपसंस्कार्येषु अतिव्याप्तमित्यत आह—**कृतिव्याप्यत्वं चेति**। यद्यपि वाजपेयाधिकरणकौस्तुभे अनुपा- देयपञ्चकवृत्त्युद्देश्यत्वमुपपादितं न कृतिव्याप्यत्वं तथापि कृतिसमवायाघटितसंबन्धेन प्रकृतभाव-

**पेयाधिकरणे कौस्तुभ एवोपपादितम्। अतश्च कालादेः कृतिकारकत्वघटिताङ्गत्वसत्त्वेऽपि प्रयोज्यत्वाभावः,** अङ्गत्वाच्च **प्रयोज्यत्वस्य भेदः।** तेन यदुद्देशप्रवृत्तकृतिव्याप्यत्वं **यस्य तत् तत्प्रयोज्यं, यथा दध्यानयनप्रयाजादि आमिक्षादर्शपूर्णमासादेः। यन्निष्ठकृतिव्याप्यतानिरूपितोद्देश्यताशालि यत् तत् तस्य प्रयोजकं, यथा आमिक्षादर्शादि दध्यानयनादेः।**

---

नान्वयित्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वरूपोद्देश्यत्वलक्षणे तत्र निरूपिते प्रकृतविधिबोधितानुष्ठानविषयत्वरूपस्य प्रकृतविधिप्रयुक्तिविषयत्वस्य प्रतियोगिविधयोक्तप्रायत्वात् तदेव कृतिव्याप्यत्वापरपर्यायमनुष्ठाप्यत्वं विवक्षितं; तेन स्वाश्रयसंबन्धबोधकविधिप्रमितपरोद्देशप्रवृत्तकृतिसाध्यत्वं लक्षणं फलितवृत्त्या ज्ञेयम्। स्वपदं प्रयोज्यत्वधर्मपरं समादिदेशादीनां कर्तुं योग्यानामनुपादेयानां च यद्यप्यस्ति कृतिसाध्यत्वं तथापि स्वतस्सिद्धसमादिदेशाद्युपजीवनेनैव समादिदेशादिविधिप्रवृत्तेः नैव समादिदेशादिविधिभिः समादिदेशादि कर्तव्यमिति बोध्यते इति न स्वाश्रयसंबन्धबोधकविधिप्रमितत्वं तस्येति नातिव्याप्तिः। न चैवं व्रीहिभिर्यजेतेत्यादिद्रव्यविधायकविधिभिरपि तत्तद्द्रव्यादीनां कृतिसाध्यत्वं बोध्यत इति दुरुपपादमेव द्रव्यादिषु प्रयोज्यत्वमिति वाच्यं; विहारदेशप्रापणादिरूपार्थस्य द्रव्यविधिभिरेवाक्षिप्तत्वात् यैर्व्रीहिभिर्यजेत तान् विहारदेशमाप्तान् कृत्वेति विधिकल्पनेन विहारदेशप्रापणादिरूपक्रियाविष्टत्वेन रूपेण कृतिसाध्यत्वस्य स्वाश्रयसंबन्धबोधकविधिप्रमितत्वाक्षतेः एतदर्थमेव प्रमितपर्यन्तानुधावनम्। **अङ्गत्वाच्चेति। एतेन** यत् परोद्देशप्रवृत्तकृतिव्याप्यत्वलक्षणमङ्गत्वमेव विनियोगविधिनिरूपणे **न्यायप्रकाशकृतोक्तं** तत् कर्त्रादावव्याप्तेः प्रयोज्यत्वापेक्षया भेदासहत्वाच्चायुक्तमिति सूचितम्। **नन्वेवं** सर्वदैव स्वाश्रयसंबन्धबोधकविधिप्रमितकृतिसाध्यत्वात् व्रीह्यादिद्रव्येषु व्रीहीन् प्रोक्षतीत्यादिविधिगतसंस्कार्यत्वेन संप्रतिपन्नप्रयोजकत्वेषु प्रयोज्यत्वलक्षणस्यातिव्याप्तिरित्यत आह—**तेन यदुद्देशेनेति।** यदि घटत्वादिवदेकरूपं प्रयोज्यत्वं स्वीकृत्य एकरूपलक्षणं क्रियते तदोभयधर्मवस्तु साङ्कर्यापादनद्वारा सामान्यलक्षणाव्याप्त्यादि शङ्क्येत, न त्वेतदस्ति। किंतु निरूपकभेदेन भिन्नस्यैव तस्याङ्गीकारात् विशेषलक्षणान्येव स्वीक्रियन्ते। पूर्वोक्तसामान्यलक्षणकरणं तु अध्यायार्थस्य एकरूपताज्ञापनार्थमेव। ततश्च व्रीहिषु व्यक्त्यैक्येऽपि व्रीहिभिर्यजेतेति विधिप्रमितयागोद्देशप्रवृत्तकृतिसाध्यत्वं[1] विहारदेशप्रापणादिरूपक्रियाविष्टत्वेनेति प्रयोज्यत्वम्। एवं व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणादिनिष्ठविधेयतानिरूपितोद्देश्यताशालित्वमपूर्वसाधनत्वेन रूपेणेति प्रयोजकत्वमप्युभयविधधर्मवत्त्वेपि न दोषः। अत्र चोद्देश्यत्वं नेप्सिततमत्वरूपेण जन्यत्वाख्यं येन कालादौ

---

1. R. व्याप्यत्वं.

उद्देश्यता चात्रानुपादेयपञ्चकसाधारणी ग्राह्या, तेन कालनिमित्तादेः प्रयोजकत्वाविघातः। यद्यपि विधिरेव सर्वत्रानुष्ठापकः प्रवर्तनारूपत्वात्। प्रवर्तनारूपो हि विधिः इष्टसाधनत्वमिव कृतिसाध्यत्वापरपर्यायं प्रयोज्यत्वमपि विषयस्याक्षिपतीति भवति प्रयोजकः, तथाऽपि स यदुद्देशेन प्रयोजयति तस्यापि प्रयोजकत्वव्यवहारश्शास्त्रे। अत्र च यद्यपि न प्रयोज्यत्वावच्छेदेन तन्निरूपणं प्रति शेषत्वनिरूपणस्य हेतुत्वं, निमित्ताद्यङ्गत्वाभावेऽपि नैमित्तिकस्य तत्प्रयोज्यत्वेनाङ्गत्वे व्यापकत्वस्यैव पुरोडाशकपालादेस्तुषोपवापं प्रति कारकत्वे-

---

न स्यात्। किन्तु वाजपेयाधिकरणलक्षणलक्षितंसर्वसाधारणमित्याह—उद्देश्यता चात्रेति। तच्च कृतिसमवायाघटितसंबन्धेन प्रकृतभावनान्वयित्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वं प्रागुक्तप्रायम्। अस्ति चेदं समादिदेशाद्यनुपादेयचतुष्टये यागादिरूपोद्देश्ये चमसादिविधायकवाक्येषु अधिकरणत्वानुष्ठापकत्वकर्मत्वादिसंबन्धेन तत्तद्वाक्योपात्तभावनान्वयित्वे सति तत्तद्विधिबोधितानुष्ठानविषयत्वात्। यत्र वाक्ये यस्योद्देश्यत्वं विवक्षितं तद्वाक्यमेव प्रकृतपदेन विवक्षितं कर्त्रादेराख्यातोपात्तस्य तु कृतिनिरूपितसमवायघटितसंबन्धेनैव भावनान्वयान्नोद्देश्यत्वं, किं तूपादेयत्वमेव कर्तृकत्वादिसंख्याया अपि कृतिनिरूपितसमवायभिन्नसामानाधिकरण्यसंबन्धेन भावनान्वयादुद्देश्यत्वापत्तिः। अतस्समवायाघटितेत्युक्तम्। सामानाधिकरण्यस्यापि कृतिसमवायघटितत्वात् नातिव्याप्तिः। एवं च कर्तरि तद्गतसंख्यायां च नोद्देश्यत्वं न वोक्तविधलक्षणं प्रयोज्यत्वं किं तूपादेत्वमेव। क्वचिदेकत्वादेरनुपायत्वोक्तिः यथाशक्युपबन्धप्रयोजकीभूतोपादेयत्वनिषेधपरेति उपपादितमेव कौस्तुभे प्रकरणान्तराधिकरणे। कालनिमित्तादीनां तूद्देश्यत्वात् प्रयोजकत्वमेव, यागादीनां तु किंचिन्निरूपितं प्रयोज्यत्वं किंचिन्निरूपितं प्रयोजकत्वमपि। एवं स्थिते एतदध्यायार्थनिरूपणस्य पूर्वाध्यायार्थनिरूपणहेतुमत्वसङ्गतिलोभेन शेषशेषिगतप्रयोज्यप्रयोजकभावस्यैवैतदध्यायार्थत्वं न त्वतद्भूतनैमित्तिकनिमित्तगतस्य तस्येति प्रकाशकारोक्तमुपेक्ष्यम्, पूर्वोक्तरीत्या सर्वस्यापि तत्त्वोपपत्तेः। इतरथा बार्हद्गिरजातेष्टिदधिग्रहवैश्वानरेष्टिषष्ठीचित्यादिषु नैमित्तिकतदभावविचारस्यात्र करिष्यमाणस्यासङ्गतत्वापत्तेः क्वाचित्कहेतुमत्तया तदुत्तरनिरूपणेऽप्यसङ्गतिपरिहारोपपत्तेर्वक्ष्यमाणत्वादिति विवेकः। धूमवह्न्योः परस्परं व्याप्यव्यापकभावे सति धूमज्ञानस्य वह्निज्ञानं प्रति हेतुत्वं युज्यते। न त्वत्र तथा प्रयोज्यत्वाङ्गत्वयोः व्याप्यव्यापकभावोऽस्ति। येनोहापोहात्मकमनोव्यापारजन्यविलक्षणज्ञानरूपप्रयोज्यत्वनिरूपणं प्रति तथाविधाङ्गत्वनिरूपणस्य हेतुत्वं भवेत्। अतस्सूत्रपदोक्तहेतुहेतुमद्भावसंगतिः कथमिति शङ्कते—अत्र चेत्यादिना। अङ्गत्वे व्यापकत्वाभावदर्शनेनापि व्याप्यव्यापकभावो नास्तीत्यर्थस्य सिद्धत्वात् पुनरङ्गत्वे व्याप्यत्वखण्डनकरणं व्यतिरेकव्याप्तिरपि

नाङ्गत्वसत्त्वेऽपि तत्प्रयोज्यत्वाभावेन व्याप्यत्वस्याप्यभावात्। अतो नावच्छेदकावच्छेदेन हेतुहेतुमद्भावः, तथाऽपि क्वचिद्दध्यानयनादिनिष्ठप्रयोज्यत्वनिरूपणे तन्निष्ठशेषत्वनिरूपणस्य उपयोगात्सामानाधिकरण्येन तन्निरूपणं प्रत्यङ्गत्वनिरूपणस्य हेतुत्वात्सङ्गत्युपपत्तिः। अत्र प्रयोज्यत्वं क्वचित् क्रत्वर्थपुरुषार्थविचारद्वारेण निरूप्यते क्वचिदन्यद्वारेण क्वचित्साक्षादेवेति प्रयोज्यत्वमेवाध्यायार्थः। क्रत्वर्थपुरुषार्थत्वं तु तृतीयसिद्धमप्युदाहरणविशेषनिष्ठतया प्रयोज्यत्वसिद्ध्यर्थं विचार्यत इति विवेकः॥ १॥

---

(२)—यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ॥ २ ॥

वक्ष्यमाणयोः क्रत्वर्थपुरुषार्थयोर्लक्षणमुच्यते। तत्र तन्त्ररत्ने तावत् स्वयंप्रार्थित-साध्याधीनानुष्ठानं पुरुषार्थः। तदुपकारकं क्रत्वर्थ इत्युक्तम्। तन्न। फले काम्यकालादौ "न कळञ्जं भक्षयेत्" इति निषेधेषु चाव्याप्त्यापत्तेः, अनुष्ठेयत्वाभावात्, निषेधेषु स्वयं-प्रार्थितसाध्याप्रसिद्धेश्च। क्रत्वर्थलक्षणस्य आधानादावतिव्याप्तेश्च।

---

नास्तीति द्योतयितुं, तेन यत्र प्रयोज्यत्वं तत्राङ्गत्वं यत्र प्रयोज्यत्वाभावः तत्राङ्गत्वाभावः इत्युभयस्यापि न व्याप्तिरिति भावः। क्वचिदिति। यदि दध्यानयनं दधिसंसृष्टपयोजन्यविकारमात्रोद्देशेन विधीयते तदा तु विकारत्वाविशेषात् आमिक्षावाजिनयोः स्यात् प्रयोजकत्वम्। यदि आमिक्षोद्देशमात्रेणैव विधानं तदाऽऽमिक्षोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वात् तन्मात्रमेव प्रयोजकं, तत्प्रयोज्यं च दध्यानयनं भवति। तथा चामिक्षोद्देशप्रवृत्तकृतिकारकत्वेन विहितत्वरूपाङ्गत्व-ज्ञानादेव दध्यानयनप्रयोज्यत्वज्ञानमिति भवति सामानाधिकरण्येन हेतुहेतुमद्भावसंगतिरिति भावः। ननु प्रयोज्यत्वस्याध्यायार्थत्वे कथं सूत्रकृता क्रत्वर्थपुरुषार्थयोर्जिज्ञासेत्युक्तमत आह—अत्र प्रयोज्यत्वमिति। क्रत्वर्थत्वपुरुषार्थत्वद्वारेण मुख्यं प्रयोज्यत्वमेव लक्षणया सूत्रकृतोक्तमित्यर्थः।

---

॥ यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाविभक्तत्वात् ॥

यथाश्रुततन्त्ररत्नोक्तलक्षणमनूद्य दूषयति—तन्नेति। सप्तमे ब्रह्मवर्चसकाममुपनयीत इत्येवमाद्याः काम्यकालाः। साध्याप्रसिद्धेः इति। साध्यपदं जन्यत्वाभिप्रायमिप्रेत्य, नरकाभावादिरूपस्य जन्यत्वाभावादिति भावः। वस्तुतस्तु पुरुषार्थ-क्रत्वर्थनिषेधेषु निषेध्यैदमर्थ्यफलकत्वेनैव पुरुषार्थत्वादिव्यवहारस्य कर्त्रधिकरणे प्राचीनैः स्वयं चोक्तेः निषेधेषु च पुरुषार्थत्वादिलक्षणस्य उक्तविधप्रयोज्यत्वप्रयोजकत्वविचारानु-

यदपि शास्त्रदीपिकायां इतिकर्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्वं तद्भिन्नत्वं करणफलवृत्तिपुरुषार्थत्वमित्युक्तम्। तदपि न, क्रत्वर्थनिषेधानामक्रियात्वेनानितिकर्तव्यतात्वेन तेष्वव्याप्तेः, आधानाध्ययनयोरुभयभिन्नत्वस्य तन्त्ररत्ने स्वयुक्तत्वेन तत्र पुरुषार्थलक्षणस्यातिव्याप्तेश्च। तस्मात् स्वयंप्राथितकर्त्रुद्देश्यतानिरूपितविधेयताकत्वं पुरुषार्थत्वम्। स्वयंप्राथितत्वं च शास्त्रानधीनेष्टसाधनताज्ञानजन्येच्छाविषयत्वं, स्वर्गपश्वादौ हीष्टसाधनता न शास्त्रगम्या। इदं च स्वर्गस्य देशविशेषरूपत्वे। सुखविशेषरूपत्वे तु शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वं बोध्यम्। यागक्रतूपकारादौ तु सा शास्त्रगम्येति ते न स्वयंप्रार्थिताः, स्वर्गादयश्च तथा। अतः तदुद्देशेन विधीयमानयागादिर्भवति पुरुषार्थः। फलस्य पुरुषार्थत्वव्यवहारो भाक्त इत्युक्तमेव "फलं च पुरुषार्थत्वात्" इत्यत्र। उद्देश्यताविधेयत्वे च स्वरूपसम्बन्धरूपविषयताविशेषात्मके लक्षणघटके, न तु साध्यत्वानुष्ठेयत्वात्मके।

---

पयुक्तत्वेन इहानुष्ठेयक्रियागततल्लक्षणस्यैव निषेध्यसाधारणस्य वक्तुं शक्यत्वात् निषेधेष्वेतदव्याप्त्यभिधानमेकरूपत्वासंभवाभिप्रायकमेव ज्ञेयम्। तस्मादिति। इदं हि लक्षणं नापूर्वं किन्तु पूर्वोक्तस्यैव यथाश्रुतस्य तन्त्ररत्नोक्तलक्षणस्यायं निष्कर्षः। अन्यथा तन्त्ररत्नलक्षणे फलेऽव्याप्तिदूषणं दत्वा स्वलक्षणेऽपि प्रसक्तस्य तस्यैवाव्याप्तिदोषस्य परिहाराय फलस्य पुरुषार्थत्वव्यवहारो भाक्त इत्युक्तेः अविशेषकत्वापत्तेः। तन्त्ररत्नकृतापि भाक्तं व्यवहारमादायाव्याप्तिपरिहारस्य कर्तुं शक्यत्वात्। अतो व्याख्यानरूपेणैव पूर्वापरविरोधः सुपरिहरः। अथवा स्वमते फले पुरुषार्थत्वव्यवहारस्य भाक्तत्वसंभवेऽपि शास्त्रदीपिकायामाहत्य करणफलयोः साम्येनैव पुरुषार्थत्वस्य स्वीकृतत्वेन भाक्तत्वस्य वक्तुमशक्यत्वादव्याप्तिदूषणापरिहारेण वा तद्विरोधपरिहार इति ध्येयम्। न शास्त्रगम्येति। यद्यपि देशविशेषरूपस्य स्वर्गस्य तत्तद्भोगसाधनत्वं पुराणार्थवादेतिहासादिभिरेव बुद्ध्यते तथापि शास्त्रपदं विधिरूपशास्त्रपरमिति न दोषः। सुखविशेषरूपत्वे स्वर्गस्यैव इष्टत्वेन इष्टसाधनत्वाभावात् न तज्जन्येच्छाविषयत्वं निरुक्तलक्षणं संभवतीत्यत आह—शास्त्राधीनेष्टसाधनतेति। विषयताविशेषात्मके इति। विषयतायां विशेषश्च विशेष्यत्वं तेन विधेयताविशेष्यताशाल्येव लक्ष्यं, नतु विधेयतावच्छेदकमपि। तेन दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति विधिना तृतीयाश्रवणेन साङ्गयोर्दर्शपूर्णमासयोः फलसंबन्धविधानात् स्वर्गनिष्ठोद्देश्यतानिरूपितविधिविषयताकत्वं यथा दर्शपूर्णमासयोः तथा अङ्गानामपीति अङ्गेष्वतिव्याप्तं लक्षणमित्युक्तं परास्तम्। तत्र प्रयाजादिषु विधेयतावच्छेदकत्वेपि विधेयताविशेष्यत्वाभावात्। अत एव नाङ्गप्रधानानां समफलतेति दिक्। यद्यपि यदर्था निषेध्यक्रिया तदर्थो निषेध इति नियमानुरोधेन तत्तत्फलजनकक्रियाविषयत्वरूपं पुरुषार्थत्वादि-

**लेन निषेधस्थले** नरकाभावोद्देशेन निवृत्तिविधानात्**फलोद्देशेन च** कालविधानाच्चाव्याप्तिः। पुरुषार्थेष्वभ्यनुज्ञाविधिषु **च दोषाभावोद्देशेन तत्तत्क्रियाविधानाच्चाव्याप्तिः। एवं च स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वमेवेह क्रत्वर्थत्वम्।** क्रतुशब्दो ह्यस्मिन् **प्रकरणे**

---

लक्षणं स्वयं कृतमेव **कर्त्रधिकरणे, तथापि** तत्तत्फलजनकक्रियागुणादिगतपुरुषार्थत्वादिलक्षणे अप्येते पुरुषार्थक्रत्वर्थाभावसाधारण्येनैकरूपत्वात् लघुभूते इति सूचयन् निषेधेष्वपि तदन्वयं दर्शयति—**नरकाभावोद्देशेनेति।** कलञ्जभक्षणादीनां नरकसाधनत्वे निषेधवाक्येन प्रमिते अर्थात् कलञ्जभक्षणाभावस्य नरकप्रागभावपरिपालनं फलमित्यार्थिकमुद्देश्यत्वमभिप्रेत्य नरकाभावोद्देश्यत्वोक्तिः। न तु शाब्दोद्देश्यतालाभायेति भावः। **निवृत्तिविधानादिति।** यद्यपि निषेधेषु रागाद्यर्थप्राप्तामाख्यातार्थप्रवृत्तिमनूद्य निवर्तनाविधानं तत्र तत्रोक्तं, वक्ष्यते च निवृत्तिविधानं, अत एव प्रजापतिव्रतेषु संकल्पलक्षणासिद्धान्त उपपद्यते, **तथापि** गर्दभाभिधानीनिवृत्तेरिवास्याः फलरूपायाः अपि वेदतात्पर्यविषयत्वेन स्वरूपसंबन्धरूपविषयतात्मकविधानं लक्षणसमन्वयायोक्तं न विरुद्ध्यत इति ज्ञेयम्। **कालविधानादिति।** ब्रह्मवर्चसादिफलोद्देशेन सप्तमवर्षादिरूपकालविधानादित्यर्थः। **पुरुषार्थाभ्यनुज्ञाविधिष्विति।** ते च "खादन्मांसं न दोषभाक्" "विवाहेऽनृतं वदेत्" इत्यादयः।

यत्तु तन्त्ररत्ने आधानाध्ययनयोः क्रत्वर्थपुरुषार्थोभयविधकर्मभिन्नत्वमुक्तं **तत्** क्रत्वर्थपुरुषार्थभेदेन कर्मद्वैविध्यमात्रप्रतिज्ञापराद्यसूत्रविरोधापत्तेः अयुक्तमिति सूचयन् क्रत्वर्थराश्यन्तर्भावेण सौत्रप्रतिज्ञाविरोधं परिहर्तुं क्रत्वर्थत्वमुपपादयति—**क्रतुशब्दो हीति। भिन्नपर इति।** दानहोमाद्यङ्गानां क्रत्वर्थराश्यन्तर्भावाय स्वयंप्रार्थितभिन्नपर एव क्रतुशब्दो वक्तव्यो न तु मुख्यतया यज्ञरूपक्रतुपर इत्यर्थः। एवं चाहवनीये जुहोति यदेव विद्यया करोतीत्यादिशास्त्रगम्येष्टसाधनताज्ञानजन्येच्छाविषयत्वेनाग्न्यर्थज्ञानयोः स्वयं प्रार्थितभिन्नत्वोक्त्या परंपरयाऽनयोः क्रतूपकारकत्वेन क्रत्वर्थत्वं पूर्वोक्तलक्षणलक्षितमप्यस्तीति सूचितम्। एतच्चानयोः क्रत्वर्थतोपपादनं षष्ठोक्ततन्त्ररत्नरीत्या आधानस्यानित्यत्वमध्ययनस्यावश्यकक्रत्वपेक्षितत्वेन आवश्यकतया नित्यत्वेऽपि स्वतोऽनित्यत्वमभिप्रेत्याग्न्यर्थज्ञानमात्रार्थत्वेनापि कृतम्। एतदेवाभिप्रेत्य **प्रकाशकारैरपि** अपूर्वसाधनांशे यत्र विहितं तत् पुरुषार्थं यच्च तदंशे विहितं तत् क्रत्वर्थमित्येवं तल्लक्षणभेदाङ्गीकारेणाग्न्यर्थज्ञानयोः स्वरूपेणैव भाव्यतया पुरुषार्थकर्मराश्यन्तर्भाव उक्तः। **वस्तुतस्तु** आधानाकरणे प्रत्यवायश्रवणात् अनधीयाना इति वचनात् आधानाध्ययनयोःनित्यतयैव स्वतो विधानस्य षष्ठे पूज्यपादैर्वक्ष्यमाणत्वात् उक्तलक्षणक्षितं पुरुषार्थत्वमेव सूपपादमिति व्यर्थमेवैतत्प्रयासकरणमिति ध्येयम्।

**स्वयमप्रार्थितपरः। तेनाधानाध्ययनयोः ज्योतिष्टोमाद्यर्थत्वाभावेऽपि तादृशाग्न्यर्थज्ञानार्थत्वात्क्रत्वर्थत्वोपपत्तिः। क्रत्वर्थनिषेधेषु** चोक्तविधया **क्रतुवैगुण्यपरिहारोद्देशेन निवृत्तेर्विधेयत्वान्नाव्याप्तिः "नातिरात्रे" इत्यादौ च क्रतुसाद्गुण्यस्याङ्गान्तरजन्यत्वेऽपि षोडशिग्रहणाभावं प्रत्यु**द्देश्यत्वाविघाताच्च **सा।**

---

यत्तु प्रकाशकारोक्तं क्रत्वर्थपुरुषार्थलक्षणद्वयं तद्वस्तुगत्या अग्न्यर्थज्ञानयोरपूर्वसाधनत्वात् अपूर्वसाधनांशेन आधानाध्ययनयोर्विधानेन क्रत्वर्थत्वापत्त्या स्वोक्तपुरुषार्थत्वव्याघातापत्तेः यथाश्रुतं तावदयुक्तम्। यदि त्वपूर्वसाधनत्वरूपावच्छिन्नोद्देश्यतानिरूपितविधिविषयत्वं क्रत्वर्थत्वमिति विवक्षितं, तदा क्रत्वर्थनिषेधाव्यापनात् नैकरूपमित्युपेक्षितं **पूज्यपादैः। उक्तविधयेति।** यया विधयाऽर्थात् पुरुषार्थनिषेधेषु नरकाभावस्योद्देश्यत्वमुक्तं अत्रैव प्राक् तयैव विधया नानृतं वदेदित्यादिदर्शपूर्णमासादिप्रकरणपठितेषु क्रत्वर्थनिषेधेष्वपि क्रतुवैगुण्यपरिहारस्योद्देश्यत्वमित्यर्थः। **उद्देश्यत्वाविघातादिति।** यद्यप्यतिरात्रे षोडशिनं गृह्णातीत्यत्रातिरात्रस्य अधिकरणत्वं प्रतीयते। तेन च यदाहवनीये जुहोतीतिवत् अतिरात्रस्याङ्गत्वमेवापद्यते तथाप्याहवनीयदेशादेरिव मुख्यस्याधिकरणत्वस्यासंभवात् सप्तम्या उद्देश्यत्वार्थकत्वाङ्गीकारेपि दधिनिरूपितस्य जन्यत्वापरपर्यायस्योद्देश्यत्वस्य दध्ना जुहोतीत्यत्र होमस्येवास्य संभवात् अगत्या स्वापूर्वसाधनीभूतातिरात्रोपकारं षोडशिग्रहणेन कुर्यादित्येवं अतिरात्रपदे लक्षणया अतिरात्रोपकारस्योद्देश्यत्वं वक्तव्यम्। अत एव षोडशिग्रहणमतिरात्रोपकारजनकं प्रवर्तनाविषयत्वात् इत्यनुमानेन षोडशिग्रहणेऽवच्छेदकावच्छेदेनातिरात्रोपकारजनकत्वे बुद्धे नातिरात्रे षोडशिनं गृह्णातीत्यनेन निषेधेन कस्मिंश्चिदतिरात्रप्रयोगे तदुपकारजनकं न षोडशिग्रहणमित्यर्थः। षोडशिग्रहणमतिरात्रानुपकारकं निवर्तनाविषयत्वादित्यनुमानेन बोध्यते। न ह्यत्र न कलञ्जं भक्षयेदिति पुरुषार्थनिषेधेष्विव निषेध्यस्य नरकसाधनत्वं नानृतं वदेदिति क्रत्वर्थनिषेधेष्विव क्रतुवैगुण्यजनकत्वं वाऽनुमातुं शक्यते, विधिनेष्टसाधनत्वस्य प्रमितत्वात्। ततश्च षोडशिग्रहणे इष्टसाधनत्वाभावे[1]-ज्ञाते प्रवृत्तिकारणीभूतज्ञानाभावादेव प्रवृत्तिप्रतिबन्धेऽर्थात् षोडशिग्रहणे निवर्तते निषेधवाक्येषु च सामान्यतः यत्प्रतियोगिनः यज्जनकत्वं बुद्ध्यते तत्प्रतियोगिकाभावस्य तदभावजनकत्वबोधकत्वं क्लृप्तमिति षोडशिग्रहणस्यातिरात्रानुपकारकत्वे बोधिते अतिरात्रोपकारजनकत्वरूपातिरात्रानुपकारजनकत्वाभावः षोडशिग्रहणाभावे अर्थात् बुद्ध्यते। एवं च नरकाभावक्रतुवैगुण्याभावयोरिव षोडशिग्रहणाभावं प्रत्यपि क्रतुसाद्गुण्यस्योद्देश्यत्वं पार्यन्तिकं निर्बाधमेव। यद्यप्यभावात् भावो-

---

1. A. आदष्टसाधनत्वाभावे

**एवं** क्रत्वर्थाभ्यनुज्ञाविधिष्वपीति **सर्वं समञ्जसम्॥**

यद्वा—**नानेन लक्षणकरणम्। अपि तु—फलस्यापीतरांशवत् भावनाविशेषणत्वाद्विधेयत्वम्। न ह्यन्यांशयोरपि विशेषणत्वातिरिक्तं विधेयत्वम्। यदि तु विशिष्टभावनाविधावर्थादितरांशयोर्विधिरुच्येत तत् फलस्याप्यविशिष्टमिति प्राप्ते—**

**विशिष्टभावनाविधाने आर्थिकविशेषणविधेरावश्यकत्वात् तस्य च यदंशेऽप्राप्तिस्तदंश एव कल्पनात् फलस्य च रागप्राप्तत्वेन तत्कल्पने प्रमाणाभावादविधेयत्वम्॥**

**प्रयोजनं—पूर्वपक्षे श्येनफलस्याभिचारस्य विधेयत्वान्निषेधाविषयत्वम्। सिद्धान्ते तु रागप्राप्तत्वात् "न हिंस्यात्" इति निषेधविषयत्वम्। न च हिंसाशब्दस्य मरणानुकूलव्यापारवाचित्वात्तस्य च वैरिमरणाख्याभिचारफलकश्येनरूपस्य विहितत्वात्कथं निषेधविषयत्वमिति वाच्यं, "अभिचरन् यजेत" इति सामानाधिकरण्यात् श्येनसमानकर्तृकत्वावगतेः अभिचारपदस्य मरणानुकूलश्येनकर्तृनिष्ठविषदानादिरूपव्यापारवाचित्वावगतेस्तस्यैव श्येनफलत्वावसायात् रागप्राप्तस्य तस्य निषेधविषयत्वोपपत्तेः। एवं चावश्यं**

---

तपत्त्यसंभवात् सर्वदा वा अभावसत्त्वेन क्रतूपकारफलापत्तिः, **तथापि** षोडशिग्रहणाभावस्य निषेधावगतकारणत्वान्यथानुपपत्त्या षोडशिग्रहणभिन्नाङ्गविशिष्टषोडशिग्रहणाभावस्यैव कारणत्वं कल्प्यते। तथा चातिरात्रापूर्वसाधनीभूतषोडशिग्रहणजन्योपकारः षोडशिग्रहणभिन्नेतराङ्गजन्यः षोडशिग्रहणाजन्यत्वे सति प्रधानोपकारकत्वात् यथा समिदादिजन्योपकारेष्वित्यनुमितिरपि **यथैव** षोडशिग्रहणविधिसाफल्याय षोडशिग्रहणं फलबाहुल्यजनकोपकारजनकं अभ्यनुज्ञाविधिविषयभिन्नत्वे सति निषेध्यत्वसमानाधिकरणविधेयत्वादिति द्वितीया फलभूमानुमितिरपि विधितात्पर्यविषयीभूता स्वीक्रियते, **तथैव** निषेधवाक्यतात्पर्यविषयीभूता अस्तु नामेत्यभिप्रायेणैव क्रतुसाद्गुण्यस्याङ्गान्तरजन्यत्वेऽपि षोडशिग्रहणाभावं प्रत्युद्देश्यत्वाविघातादित्युक्तम्, स्पष्टं चेदं ध्वनितं अतिरात्रानुपकारकत्वानुमितिद्वारा तद्व्यतिरेकेणेतराङ्गैः क्रतुमहोपकारसिद्धेरप्यनुमानमित्यादि **भाट्टरहस्ये** इत्यलं विस्तरेण। **क्रत्वर्थाभ्यनुज्ञाविधिष्वपीति।** ते च यत्र कूश्माण्डैर्जुहुयादिति कूश्माण्डहोममुपक्रम्य "पयो व्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्य" इत्येवं विधिभिः इतरनिवृत्तितात्पर्यकैः पयोऽतिरिक्तभक्षणनिषेधपूर्वकं पय आदिव्रतविधाने यदि मन्येतोपदस्यामीत्योदनन्धानास्सक्तून्घृतमित्यनुव्रतयेदात्मनोऽनुपदासायेत्येवं विधिना अशक्त्या आत्मनाशः स्यादिति संभावना चेत् तदा पूर्वोक्तनिषेधातिलङ्घनजनितदोषाभावोद्देशेन ओदनादीनामभ्यनुज्ञानं क्रियते तथाविधविधिरूपा ज्ञेयाः। **यद्वेति।** वाक्यार्थविचारे प्रवृत्तानां लक्षणकरणे प्रयोजनाभावादिति शेषः। **यद्वेति। गोदोहनेन पशुकामस्य**

श्येनेन विषदानाद्युत्पत्तिः तेन वैरिमरणं, न तु श्येनेनैव साक्षादिति ध्येयम्। यत्तु—वैरिनिष्ठो मरणानुकूलव्यापार एवाभिचारपदार्थः तत्र च यजमानस्य श्येनद्वारा प्रयोजककर्तृत्वमिमि तस्य निषेधाविषयत्वेऽपि यजमानस्य पापोत्पत्तिरिति केनचिदुक्तम्, तच्छ्येनस्यैव तथा सति प्रयोजकव्यापारत्वात्तस्य च विहितत्वात् तत्कर्तृत्वेन यजमाने पापोत्पत्त्यनुपपत्तेरुपेक्षितम्। यत्र तु "वैरिमरणकामो यजेत" इति श्रुतं तत्र वैरिमरणानुकूलकर्तृनिष्ठलौकिकव्यापाराभावेऽपि वैरिमरणरूपपरानिष्टचिन्तनादेव पापमिति ध्येयम्। अभिचारार्थकर्मणस्तामसधर्मत्वस्मरणाद्वा तथा। प्रकृतेऽपि तथैवास्तु॥

यद्वा—गोदोहनादीनां षष्ठीश्रुत्या पुरुषार्थत्वावगमेऽपि प्रकरणात्क्रत्वङ्गत्वं, इतरथा प्रणयनस्य चमसलोपेनाङ्गाभावाद्वैगुण्यापत्त्या विगुणप्रणयनाश्रिताद्गुणादपि फलानुपपत्तेः। अत उपजीव्यत्वाद्दुर्बलमपि प्रकरणं विनियोजकम्। अथवा षष्ठी सम्बन्धमात्रवाचिनी हीषादिन्यायेन सार्वकाम्यवाक्यप्राप्तपशुप्रयोजकप्रणयनजनकत्वसम्बन्धेनैव प्रकरणानुरोधेन पशूद्देशेन गोदोहनं विधत्ते। न तु साक्षादिति प्राप्ते—

दुर्बलप्रकरणानुरोधेन परम्परासम्बन्धाङ्गीकारे प्रमाणाभावात् हीषादिवन्नियमविधिलाघवाभावाच्च साक्षादेवोद्देश्यत्वं पशूनाम्। प्रणयनवैगुण्यस्य च परप्रयुक्तगोदोहनजन्योपकारमात्रोपजीवनेन प्रणयनस्य तत्प्रयोगेऽनङ्गचमसाग्राहितयाऽनाशङ्क्यत्वात्पुरुषार्थत्वमेव तस्येति पशुप्रयुक्तमेव गोदोहनमिति स्वतन्त्रपशुकामनायामेव तत्कर्तव्यम्।

---

प्रणयेदिति वचनेनेति शेषः। हीषादिन्यायेनेति। ब्रह्मसामस्तोत्राश्रितस्य सौभरसाम्नो यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौभरेण स्तुवीतेति वाक्यत्रयेण वृष्ट्यन्नाद्यस्वर्गरूपफलत्रयसंबन्धे बोधितेऽपि शाखाभेदेन सौभरसाम्नः निधनाख्यान्तिमावयवाधारतया विहितानां हीषूऊर्क् इत्यक्षराणामेव सौभराश्रितानां हीषिति वृष्टिकामाय निधनं कुर्यात् ऊ इति स्वर्गकामाय ऊर्गित्यन्नाद्यकामायेति वाक्यैस्स्वतन्त्रवृष्ट्यादिफलार्थत्वमिति पूर्वपक्षिते नियमविधिलाघवानुरोधेन वृष्टिकामादिशब्दैः वृष्टिसाधनसौभरलक्षणया, अथवा स्वसाधनसौभराधारत्वरूपपरंपरासंबन्धेन वृष्ट्याद्यर्थतयैव विधानमिति त्रयाणामप्यक्षराणां व्यवस्थाविधायकत्वमेव वृष्टिकामादिवाक्यानामिति द्वितीयद्वितीयपादान्त्याधिकरणे उक्तो हीषादिन्यायः। तेन न्यायेनेह सुतरां संबन्धसामान्यवाचकषष्ठीश्रवणे परंपरासंबन्धाङ्गीकरणं न दोष इति भावः। हीषादीत्यादिशब्देन यथा वासिष्ठानां नाराशंसो द्वितीयः प्रयाज इति वाक्येन स्वाभिलषितफलजनकदर्शपूर्णमासाङ्गत्वरूपपरं-

यत्तु भाष्यकारादिभिः "ब्राह्मणः प्रतिग्रहादिना द्रव्यमार्जयेत् जयादिना राजन्यः" इत्यादिविधिमुदाहृत्यानारभ्याधीतस्यापि प्रतिग्रहादिनियमस्य फलकल्पनाभिया क्रत्वर्थत्वावसायात् तादृशविशिष्टोपायार्जितं द्रव्यमपि सर्वं क्रत्वर्थमेव। अत एवाव्यभिचरितहिरण्यादिसम्बन्धात् तन्नाशे इष्ट्यादीनामपि क्रत्वर्थत्वसिद्धिरिति पूर्वपक्षयित्वा श्रुत्याद्यभावाद्दृष्टकल्पनस्य च क्रत्वर्थत्वपक्षेऽपि तुल्यत्वान्नियमस्य क्रत्वर्थत्वानुपपत्तेः आर्जनस्य च रागप्राप्तत्वेनाविधेयत्वात् तदार्जितद्रव्यस्य दृष्टार्थत्वाद्विहिताविहितसाधारणपुरुषकृत्यमात्रशेषत्वमेव इतरथा जीवनपरिलोपात् सर्वतन्त्रपरिलोपापत्तेः। किञ्च द्रव्यार्जनरूपाङ्गोपक्रमणे सर्वक्रतूनामुपक्रमात् "यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपातयेत्" इत्यनारम्भरूपातिपातदर्शनानुपपत्तिः। अत आर्जनं तावत्पुरुषार्थं, नियमोऽप्यदृष्टार्थत्वेऽपि पुरुषार्थ एव। एवं क्षामवत्यादयोऽपि पुरुषार्था एव, क्रत्वर्थत्वे प्रमाणाभावादिति सिद्धान्तितम्, तत् प्रतिग्रहनियमस्य फलकल्पनाभयात् क्रत्वर्थत्वे हिरण्यधारणादेरपि क्रत्वर्थत्वापत्तेस्तेन गतार्थत्वाच्चोपेक्षितम्। किञ्च नियमस्य क्रत्वर्थत्वेन भृतिवननादिवत् तदार्जितद्रव्यस्य क्रत्वर्थत्वेऽपि भोजनाद्यर्थमनियतद्रव्योपायाक्षेपप्रतिबन्धे प्रमाणाभावान्न सर्वस्य द्रव्यस्य क्षामवत्यादीनां वा क्रत्वङ्गता। अत एव सिद्धान्ते जीवनलोपापादनमसङ्गतम्। किञ्च अस्तु वा तत् तथाऽप्यतिपातनस्यानारम्भरूपत्वे प्रमाणाभावात् यागाकरणस्यासमा-

---

परासंबन्धेन नराशंसप्रयाजविधिः वासिष्ठोद्देशेनेति षाष्ठिकान्यायो गृह्यते। तत्प्रतिग्रहादिनियमस्येत्यादि। ननु हिरण्यं सुवर्णं धार्यमित्यत्र सुवर्णोद्देशेन लौकिकक्रियासाधनीभूतसुवर्णोद्देशेन वा धारणसंस्कारविधौ आनर्थक्यात् श्रुतकर्मत्वान्यथानुपपत्त्या स्वर्गार्थवादिकफलकल्पनानुपपत्तेः परिशेषात् क्रतुगतसुवर्णोपस्थितिरिति पूर्वपक्षे प्रकरणाभावात् अव्यभिचरितक्रतुसंबन्धाभावेन च न क्रत्वर्थत्वं, प्रत्युतानारभ्याधीतत्वात् विश्वजिन्न्यायेन स्वर्गार्थत्वे प्राप्ते रात्रिसत्रन्यायेन दुर्वर्णोऽस्य भ्रातृव्यो भवतीत्यार्थवादिकफलस्य झडित्युपस्थितत्वात् सक्तुन्यायेन हिरण्यविशिष्टधारणमेव फलोद्देशेन विधीयत इत्येवमर्थवादोपस्थितफलभरेण खण्डित्वा पुरुषार्थत्वं सिद्धान्तितम्। तद्वत् प्रतिग्रहादिनियमस्यार्थवादिकफलाभावात् इह तु भवतु क्रत्वर्थत्वमित्याशङ्कोदेत्येवेति कथं हिरण्यधारणाधिकरणेन गतार्थत्वमित्यस्वरसादाह—किंचेति। ननु पूर्वपक्षे प्रतिग्रहनियमस्य क्रत्वर्थत्वस्यैव शिलोञ्छायाचितनियमानामापदि कृषिवाणिज्यनियमस्यापि क्रत्वर्थत्वाच्चौर्यादेश्च वाक्यान्तरे निषेधात् अनियतद्रव्योपायाक्षेपप्रतिबन्ध एवेति युक्तमेव जीवनलोपापादनमित्यत आह—किं चास्तु वेति। अनारम्भरूपत्वे प्रमाणाभावादिति वदता अकरणस्यासमापनस्य वाऽतिपातनपदार्थत्वे प्रमाणं वक्तव्यम्। तदपेक्षया वृद्धानां भाष्यकारादीनां व्यवहारस्यैव शक्तिग्राह-

**पनस्यैव वा अतिपातनत्वाङ्गीकारेण तद्दर्शनोपपत्तिः**। अनारम्भरूपत्वेऽपि **वा द्रव्यार्जनस्य प्रयोगबहिर्भूताङ्गत्वाङ्गीकारेण, प्रयोगान्तःपातेऽपि वा भृतिवननप्रयाजादिवदेव प्रतिप्रयोगावृत्त्यङ्गीकारेणातिपातदर्शने न काचिदनुपपत्तिः।**

वस्तुतस्तु **नायं प्रतिग्रहादिनियमविधिः, फलकल्पनापत्तेः, "प्रतिग्रहसमर्थोऽपि प्रसङ्गं तत्र वर्जयेत्" इति तस्य पापजनकत्वश्रुतेश्च। नापि प्रतिग्रहाद्यतिरिक्तोपायान्तरपरिसङ्ख्या, चौर्यादीनां सर्वसाधारणप्रतिषेधेनैव परिसङ्ख्यातत्वात्, शिलोञ्छदायादीनां**

---

कत्वात् कालातिपातो जात इत्यादौ दृष्टत्वाच्चानारंभरूपत्वमेवातिपातनस्येत्यत आह—**अनारंभरूपत्वेपि चेति**। प्रयोगांतःपातित्वांगीकारे कदाचित्तदङ्गोपक्रमेण तदारंभः स्यात्। पूर्वपक्षिणा तु प्रयोगबहिर्भूतमेवाङ्गमुक्तमिति तदारंभेऽपि दर्शपूर्णमासप्रयोगानांरभात अतिपातदर्शने नानुपपत्तिरिति **प्रयोगबहिर्भूताङ्गत्वस्वीकारेणेत्यस्य** भावार्थः।

**वस्तुतस्तु** प्रयोगान्तःपातिनः प्रतिप्रयोगावृत्तेरिव पुण्याहवाचनस्य केषांचिन्मते प्रयोगबहिर्भूतस्यापि तत्तत्कर्मव्यक्त्यङ्गत्वादपि प्रतिकर्मप्रयोगमावृत्तिवदस्यापि तथाविधत्वेऽपि प्रतिकर्मप्रयोगमावृत्तिरुपपद्यत एवेत्युभयथापि लिंगदर्शनोपपत्तिः भवत्येवेति ज्ञेयम्। **वस्तुतस्त्वित्यादि**। ननु प्रतिग्रहसमर्थोपीति निषेधावगतानिष्टाजनकत्वमात्रबोधकत्वं यदि प्रतिग्रहविधेः तदा विवाहातिरिक्तेऽनृतवदनसामान्यनिषेधस्येव प्रतिग्रहनिषेधस्यापि क्वचित्सावकाशत्वं वक्तव्यम्। नहि शिलोञ्छसंभवे तन्नियमेनैव व्यावृत्तस्य प्रतिग्रहस्य रागतः प्राप्तिः संभवति, येन तामादाय सावकाशत्वं स्यात् शिलोञ्छासंभवे त्वेकविषयत्वमेव निषेधविध्योरिति नैव सावकाशता। किंच प्रतिग्रहनियमविध्यभावे शिलोञ्छासंभवेऽनियतद्रव्यार्जनोपायेषु प्राप्तेषु तन्मध्ये प्रतिग्रहोपाये दोषो नास्तीति शतशो बोधितेपि अन्येषामुपायानामनुष्ठानस्यावर्जनात् तेषामप्यनुष्ठाने दोषानापत्तेः[त्तिः]। अपि च शिलोञ्छासंभवे प्रतिग्रहस्य सदा दुष्टत्वे विगानपूर्वकं प्रतिग्रहानाचरणं शिष्टानां विरुद्ध्येत। जयकृष्यादीनां तु क्षत्रियवैश्यपुरस्कारेण निषेधादर्शनात् उत्तरवाक्येषु अभ्यनुज्ञाविधित्वस्य वक्तुमशक्यत्वाच्च। अतः कथं प्रतिग्रहादिविधीनामभ्यनुज्ञाविधित्वं संभवतीति चेत्।

**अत्रोच्यते**। **यथैव** रागप्राप्तस्यानृतवदनस्य सामान्यपुरुषार्थनिषेधे सति कथमप्यप्राप्तस्य पुरुषार्थनिषेधमुलंघ्यापि अनृतवदनं कृत्वापि क्रतुं संपादयिष्यामीत्येवं प्रवृत्तपुरुषवृत्तिमादाय नानृतं वदेदिति क्रतुप्रकरणस्थनिषेधेन क्रतुवैगुण्यजनकत्वं बोध्यते, यथा वा रागप्राप्ते स्त्रीगमने

मुख्यवृत्तित्वेन परिसङ्ख्यानुपपत्तेश्च, जयवाणिज्यादीनां ब्राह्मणपुरस्कारेण आपद्वृत्तित्व-विधानादेवानापदि प्रतिषेधाच्च। अतो ब्राह्मणस्य प्रतिग्रहविधिः दायसिलोञ्छाद्यसम्भवे दोषाभावमात्रबोधकतयाऽभ्यनुज्ञाविधिरेव। दायसिलोञ्छादीनां तु निषिद्धत्वाभावात् मुख्यवृत्तित्वमेव। सोऽपि च "त्रीणि कर्माणि जीविका" इत्यादिवचनात्प्रकरणाद्य-भावाच्च पुरुषार्थः।

---

ऋतौ भार्यामुपेयादिति विधिना ऋतुकालनियमविधानात 'यथाकामी भवेद्वापि स्त्रीणां वरमनु-स्मरन्' इत्यादिवाक्येन अनृतावपि गमनस्य स्त्रीकामनया विहितत्वात्।

"ऋतौ नोपैति यो भार्यां अनृतौ यश्च गच्छति।
तुल्यमाहुस्तयोः पापमयोनौ यश्च गच्छति॥

इति **बौधायनीये** अनृतुगमननिषेधेन ऋतुनियमं स्त्रीकामनानियमं चोल्लङ्घ्य पुरुषःप्रवर्तते तां प्रवृत्तिमुपजीव्य तथाविधप्रवृत्तस्य निषेधेन नरकसाधनत्वं बोध्यते। एवमिहापि शिलोञ्छनियमजन्या-दृष्टानपेक्षस्तमुलंघ्य प्रतिग्रहे प्रवर्तते। तं प्रतिषेधेन नरकसाधनत्वं बोध्यत इति शिलोञ्छसंभवविषये-ऽस्त्येव निषेधस्य सावकाशत्वम्। एवमेव निषेधस्य सावकाशत्वं नियमविधिवादिभिरपि स्वीकृतमेवेति **तन्त्ररत्नग्रन्थादनुमीयते**। तद्ग्रन्थे हि पूर्वं यावज्जीवादिनियमवत् प्रत्यवायपरिहाररूपं प्रयोजनमुक्तं तेन नियमस्यापि पुरुषार्थत्वात् न तद्वशेनापि द्रव्यार्जनं क्रत्वर्थमित्युपसंहृत्य किमि-दानीं प्रतिग्रहः प्रत्यवायक्षयकरः? यद्येवमजस्रमेव यथाशक्ति प्रतिग्रहीतव्यं स्यात्। तत्र प्रतिग्रहसमर्थोऽपि प्रसंङ्गं तत्र वर्जयेदिति प्रतिषेधादित्यनेन सदा प्रतिग्रहे इष्टापत्तौ दोषमिव प्रदर्श्यान्ते "दायशिलोञ्छायाचिताभावे यथाकथंचित् द्रव्योपादाने अवश्यंभाविनि प्राप्ते प्रतिग्रहादिनैव कुर्वतो दृष्टसिद्धिरिति कल्प्यते" इत्यनेन ग्रन्थेन दायशिलोञ्छाद्यभावे प्रतिग्रहादि-नियमविधिप्रवृत्तिरिति विषये प्रदर्शिते अर्थात् दायशिलोञ्छसंभवविषयत्वं निषेधस्येति ध्वनितं भवतीति।

**एतावान् परं विशेषः**। नियमविधित्ववादिना हि पक्षेऽप्राप्तस्य प्रतिग्रहस्य फलोद्देशेन विधाने न हिंस्यादिति निषेधः यागीयपशुहिंसायामिव विधिस्पृष्टे निषेधो नैव प्रवर्तत इति निषेधा-लोचननिरपेक्षयैव नियमविधिप्रवृत्तिः स्वीक्रियते। **पूज्यपादैस्तु** पक्षे रागतः प्राप्तस्यैव निषिद्धस्य पुनर्विधिरिति फलाश्रवणादुपस्थितदोषप्रागभावपरिपालनरूपफलबोधक इति धर्मिकल्पनातो धर्म-कल्पनस्य न्याय्यत्वात् लाघवाच्चाभ्यनुज्ञाविधिरित्यङ्गीक्रियते। निषेधस्य सावकाशत्वं तूभयमतेपि

" न्यायागतेन द्रव्येण कुर्यात्कर्माणि वै द्विजः।
अन्यायोपगतं द्रव्यं गृहीत्वा यो ह्यपण्डितः।
धर्माकाङ्क्षी तु यजते न धर्मफलमश्नुते ॥"

---

शिलोञ्छादिसंभवे समानम्। न चाभ्यनुज्ञाविधिपक्षे शिलोञ्छाद्यसंभवे कृषिवाणिज्याद्यनुष्ठाने दोषानापत्तिरिति पूर्वोक्तं दूषणं, तत्तद्व्यवस्थाविधायकवाक्यान्तरैः तत्तन्निषेधैश्च तेषामनुष्ठानाप्रसक्तेः। षण्णां तु कर्मणां मध्ये त्रीणि कर्माणि जीविकेत्यादिवाक्यैस्त्रयाणामेव जीवनार्थत्वेन विधानाच्च। नाप्युभयमतप्रसक्तं प्रतिग्रहे शिष्टानां निष्कंपप्रवृत्त्यापत्तिदूषणं केवलमभ्यनुज्ञाविधिवादिनैव परिहर्तव्यमिति युज्यते। प्रतिग्रहानुष्ठाने दोषाभावापेक्षया प्रतिग्रहत्यागस्य

" प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम्।
ये लोका दानशीलानां स तानाप्नोति पुष्कलान ॥

इत्यादिवाक्यैः फलसाधनत्वबोधनात् प्रतिग्रहाननुष्ठाने उभयविधस्यापि फलस्य लाभाय शिष्टानां निकम्पप्रवृत्त्यभावव्यवहारोपपादनस्योभयमतेपि तुल्यत्वात्। अतः प्रतिग्रहस्यैव भृतकाध्यापनार्त्विज्यादीनामपि इतरवचनैर्निषेधात् तदवगतानिष्टाजनकत्वमात्रबोधनायैवादिपदोपात्तयाजनाध्यापनसहितप्रतिग्रहविधिः अभ्यनुज्ञाविधिरेवेति सिद्धम्। एवमेव न हिंस्यात्सर्वाणि भूतानि प्राणिपीडनं न कुर्यादित्यादिसामान्यनिषेधैर्युद्धकृष्यादीनामवगतानिष्टाजनकत्वबोधनद्वारा जयादिनेत्युत्तरविधीनामपि अभ्यनुज्ञाविधित्वमवसेयमिति दिक्।

परन्तु यदत्र **पूज्यपादैः** प्रतिग्रहादिविधेः परिसंख्याविधित्वं खण्डितं तन्मृग्यं प्रतिग्रहविध्यभावे चौर्यादीनामिव अनुपदस्वलिखितप्रतिग्रहनिषेधवाक्येन प्रतिग्रहस्यापि निषेधात् अप्राप्तेः, विधेयप्रतिग्रहसमुच्चितोपायान्तराणामप्राप्त्या तदाशङ्काया एवासंभवात्। **यदा** तु यवैर्यजेतेति शास्त्रसत्वे कथमपि व्रीहिभिर्यजेतेति शास्त्राभावेऽपि पुरोडाशप्रकृतित्वेन यवातिरिक्तव्रीहिगोधूमादिद्रव्याणां पक्षेपि प्राप्त्यभावेनासंभवदपि व्रीहिशास्त्रस्य नियमविधित्वं यवविध्यन्तराप्रवृत्तिसहितव्रीहिशास्त्राप्रवृत्तिमादाय समर्थ्यते। अत एव नियमविधिलक्षणे पाक्षिकायोगश्च एतद्विध्यप्रवृत्तिनिमित्तको विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिमित्तको वा लक्षणघटक इत्युक्तं **मन्त्राधिकरणे**। एवमिहापि प्रतिग्रहनिषेधशास्त्रान्तराप्रवृत्तिसहितप्रतिग्रहविधिशास्त्राप्रवृत्तौ विधेयप्रतिग्रहसमुच्चितोपायान्तराणामपि न्यायतौल्येनास्त्येव प्राप्तिरित्युच्येत, **तदा** चौर्यादिप्राप्तिरप्यनेन न्यायेन तुल्यैवेति परिसंख्याविधित्वं गौरवभियैव वादिद्वयेन खण्डनीयम्, न त्वप्राप्त्येति।

**इत्यादिवचनैस्तु मुख्यगौणसाधारणवृत्त्युपायानामधिकारितारतम्येन क्रत्वर्थत्वस्यापि बोधनात् संयोगपृथक्त्वन्यायेनोभयार्थत्वेऽपि न दोषः। यदि तु सिलोछन्वदेः**

---

**यदपि** प्रतिग्रहादिविधीनामभ्यनुज्ञाविधित्वमुक्तं **तदप्यापाततः**। विवाहार्थानृतवदनस्येवाभ्यनुज्ञाविधिविषयत्वे प्रतिग्रहादीनामपि धर्मत्वानापत्तेः। इष्टापत्तौ—चत्वारो वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयान् स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छः :, अन्यच्चापरिगृहीतम्। एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाय दण्डयुद्धाधिकानि। क्षत्रियवद्वैश्यस्य दण्डयुद्धवर्जं कृषिगोरक्षवाणिज्याधिकं परिचर्या शूद्रस्येतरेषां वर्णानामित्याद्यापस्तंबगौ**तमवसिष्ठमनुवचनेषु** वर्णधर्मव्यवस्थाप्रदर्शकेषु याजनाध्यापनदानादिसाधारणधर्मत्वप्रदर्शनं प्रतिग्रहादीनां विरुद्ध्येत। अतो ब्राह्मणादीनामव्यवस्थया द्रव्यार्जनोपायेषु प्राप्तेषु व्यवस्थाविधायका एव प्रतिग्रहादिविधयः। पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्यामिक्षा वैश्यस्येतिवत् इत्येव युक्तम्। सर्वव्यवस्थापकस्मृत्यन्तरैर्व्यवस्थालाभमादाय प्रत्यक्षश्रुतेरन्यथासिद्धत्वकथनस्याप्रयोजकत्वेनेतरस्मृतीनामेवैतच्छ्रुतिसिद्धार्थतात्पर्यमूलकत्वकल्पनस्यैव न्याय्यत्वात्। इतरव्यवस्थाविध्यभावमादायैव हीषादिवाक्यानां नियमविधित्वस्य पूर्वोक्तहीषादिन्यायसिद्धस्यान्यत्रापि शतशोऽङ्गीकारात्। अत्रापि सर्वव्यवस्थापकविध्यभावे अव्यवस्थाप्राप्तिसंभवाच्च। त्रीणि कर्माणि जीविकेत्यस्यापि अभ्यनुज्ञाविधित्वस्यैवापत्तेस्तेन प्रतिग्रहादीनामभ्यनुज्ञानस्यापि प्राप्तत्वेन प्रतिग्रहादिविधेर्निष्फलत्वस्यापि वक्तुं शक्यत्वाच्च। त्रीणि कर्माणीत्यस्यापि व्यवस्थाविधायकत्वाभावे उपायान्तरानुष्ठानस्य ब्रह्मणाप्यनिवारणाच्च।

अतः क्वचिद्व्यवस्थाविधावाश्रयणीये एकप्रणीतव्यवस्थास्मृतिसत्त्वेऽन्यप्रणीतस्मृत्यन्तरवैयर्थ्यापादनस्य व्यर्थत्वात्। प्रत्युत यावद्व्यवस्थाविधायकस्मृतिमूलत्वं प्रतिग्रहादिश्रुतीनाम्। **अथवा** भावार्थाधिकरण**शास्त्रदीपिकोक्त**रीत्या प्रतिग्रहादिविधीनां स्मृतिरूपत्वेऽपि स्मृत्यन्तरत्वमेव वा कल्पयितुं युक्तमिति प्रतिग्रहादिविधीनां व्यवस्थाविधायकत्वमेवाङ्गीकार्यम्। तत्पक्षेपि लाघवस्य तुल्यत्वात्। फलाश्रवणेपि "सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखं ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं बलं वित्तं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानम्" इत्या**पस्तंबगौतमादिभिः** साधारणासाधारणानां वर्णधर्माश्रमधर्मवर्णाश्रमधर्मगुणधर्म नैमित्तिकधर्माणां पञ्चानामपि फलसंबन्धस्य विधानात्। इतरफलाभावे तस्यैव निषेधेषु तत्तत्स्मृतिबोधितानिष्टस्यैव फलत्वकल्पनौचित्याच्च। अत एव पूर्वोदाहृतव्यवस्थाप्रदर्शका**पस्तम्बा**दिवाक्येषु एतान्येव क्षत्रियस्याध्यापनयाजनप्रति-

**कश्चित्फलश्रवणं भवेत्, तदा जीवनाश्रितयावज्जीवसिलोञ्छनियमस्यैव फलजनकत्वं बोध्यं, न तु प्रतिग्रहस्येति** व्यर्थोऽयं **विचारः**। कृत्वाचिन्तात्वेन वा **बोध्यः** ॥ २ ॥

---

ग्रहणानि परिहाप्य युद्धदण्डाधिकानीत्यादिना नियम्यमाननियतकर्मणां स्पष्टं प्रदर्शनमेतन्नियम-विधिश्रुतिमूलमेव । मूलमूलिभावस्य समानविषयत्वक्लृप्तेः । स्पष्टतरञ्च

श्रेयान् स्वधर्मो विगुणःपरधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥

इति **भगवद्गीता**वचने तत्तद्वर्णाश्रमधर्माणां स्वधर्मत्वसमाख्यापुरस्सरं स्वभावनियतत्वेन हेतुना अर्जुनस्य युद्धादिकमेव स्वभावनियतं न भिक्षाटनादि । अतो नियतं युद्धं कुर्वतः पापं नास्ति । अनियतं भिक्षाटनादि कुर्वतः पापमिति वैषम्यं प्रदर्श्य प्रतिग्रहयुद्धादिविधीनां नियम-विधिरूपत्वमुक्तम् । अभ्यनुज्ञाविधित्वे हि कथंचित् युद्धकृष्यादीनां सामान्यनिषेधाक्रान्तत्वेपि गोरक्षवाणिज्ययोः क्वापि निषेधानुपलंभात् तद्विषयेऽनिष्टाजनकत्वबोधनं दुरुपपादमेव । न च प्रतिग्रहविधेर्नियमविधित्वे नियमेन सदा प्रतिग्रहानुष्ठानापत्तिरिति वाच्यं, द्रव्यार्जनस्यैव प्रति-ग्रहादिप्रयोजकत्वेनावघातादिष्विव नियमादृष्टस्याप्रयोजकत्वात्, द्रव्यार्जनोद्देशेन कदाचित् सर्वदा वा प्रवृत्तेरबाधकत्वात् । तेन यदा द्रव्यार्जने पुरुषेण प्रवर्तितव्यं तदा प्रतिग्रहादिनैवेति नियमे सति यदा द्रव्यार्जने न प्रवर्तते तदा नियमलोपेपि न क्षतिः । अत एव “द्विजातीनामध्य-यनमिज्या दानं, ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमस्तु; राज्ञोऽधिकं रक्षणं सर्वभूतानां न्याय्यदण्डत्वं” इत्यादि**गौतमस्मृतौ** पूर्वेषु साधारणेषु द्विजातिधर्मेषु अध्ययनेज्यादा-नेषु नियमः अदृष्टार्थत्वात । असाधारणेषु तेषु तेषु अधिकधर्मेषु न नियमो वृत्त्यर्थत्वात इति व्याख्यातं पूर्वेषु नियमस्त्वितिपदं **निबन्धकारैः**।

**यत्तु** प्रतिग्रहसमर्थोऽपीति निषेधेन पापजनकत्वश्रुतेर्न प्रतिग्रहनियमविधिरित्युक्तं । **तन्न**। निषेधस्यासत्प्रतिग्रहपरत्वस्य ‘ये लोका दानशीलानां स तानाप्नोति पुष्कलान्’ इत्युत्तरार्धे फल-श्रवणात् । काम्यनिषेधपरत्वस्य वा भवदुक्तरीत्या शिलोञ्छसंभवपरत्वस्य वाङ्गीकारेण विरोधाभावात

“याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः” ।

इति **मनुस्मृतौ** विशुद्धापादानकप्रतिग्रहस्य वृत्त्यर्थत्वेन विधानात्, अविशुद्धापादानकप्रतिग्रह-परत्वस्यापि वक्तुं शक्यत्वाच्च ।

अत एव निषेधस्य विशुद्धप्रतिग्रहाप्रवृत्तेः अविशुद्धप्रतिग्रहपरत्वे सिद्धे यदा विशुद्ध-प्रतिग्रहेण न जीवति तदा विशुद्धप्रतिग्रहसंभवपराविशुद्धप्रतिग्रहनिषेधाप्रवृत्तेः अविशुद्धप्रतिग्रह एव कर्तव्यो न जयवाणिज्यादीत्ययमर्थो **अपवादाभावे उत्सर्गस्य प्रवृत्तिरिति** न्यायेन प्रतिग्रह-नियमविधिलभ्य एवेत्यभिप्रायेण ।

'अजीवंस्तु स्वधर्मेण ब्राह्मणः स्वेन कर्मणा ।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥

इति **मनुस्मृतिगतं** स्वेन कर्मणेति पदं व्याख्यातं **निबन्धकारैः** ।

॥ **वस्तुतस्तु**—

मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् ।
दाता तत्फलमाप्नोति प्रतिग्रही न दोषभाक् ॥

इत्यादिवचनैः प्रत्यक्षं दातृहस्तापादानकस्वहस्ताधिकरणकप्रतिग्रहस्यैव दुष्टत्वप्रतीतेः प्रसङ्गं प्रत्यक्षं वर्जयेदित्येव निषेधार्थः । ततश्च निषेधस्य सावकाशत्वात् नियमविधित्वे न किंचिद्बाधकम् । तस्मात् सर्वेप्येते नियमविषय एवेति स्थिते पुरुषार्थत्वक्रत्वर्थत्वबोधकसंयोगपृथक्त्वसत्त्वे व्यर्थो विचार इत्येव दूषणं साधु । न च न्यायागतादिवाक्यैः क्रत्वर्थत्वबोधने प्रयोगबहिर्भूतस्याप्य-ङ्गत्वात् प्रतिक्रतुप्रयोगं नियमेन द्रव्यार्जनानुष्ठानापत्तेः शिष्टाचारविरोधापत्तिरिति वाच्यम् । न्यायागतस्य वित्तस्य यागादिकरणत्वं लोकत एव बुद्धमित्युपायनियमस्य यावत्पुरुषकृत्यमात्र-प्रयुक्तद्रव्यार्जनानुनिष्पादितपुरुषनिष्ठादृष्टजनकस्य क्रतुजनकत्वमात्रबोधनात् अग्निविद्ययोरिव वित्तादिसामर्थ्यस्यापि नियमेन क्रतुविधिप्रयोज्यत्वाभावात् परप्रयुक्तनियतद्रव्यलाभेनैव क्रतुसिद्ध्या न तदननुष्ठानोपपत्तिः । तदभावे तु तदर्जयित्वापि क्रतुकरणं षष्ठे वक्ष्यत एवेत्यलं विस्तरेण । **व्यर्थ इति** । यद्यपि क्रत्वङ्गत्वपूर्वपक्षे नियमातिक्रमेण कदाचित् क्रतुकरणे श्रौताङ्गश्रेषप्रायश्चित्तं ; पुरुषार्थत्वसिद्धान्ते तु तदतिक्रमे पुंसः स्मार्तमेव तदिति भिन्नं प्रयोजनं लभ्यते तथापि पूर्ववचनैरुभयार्थताया अपि बोधनात् सिद्धान्तेपि पूर्वपक्ष इव तत्प्राप्तिरस्त्येवेति निष्प्रयोजनो विचार इत्यर्थः । यदि त्वस्मिन् पक्षे तदतिक्रमेण क्रत्वतिरिक्तलौकिककर्मकरणेपि पुंसस्स्मार्तप्रायश्चित्तप्राप्तिरपि अधिकं भिन्नं च तल्लभ्यत एवेत्युच्येत तदा अन्यतरार्थत्व-खण्डनेन एकतरार्थत्वसाधनायानारभ्यमेवाधिकरणमिति सूचयन् प्रकारान्तरेणारंभं दर्शयति— **कृत्वाचिन्तात्वेनेति** ।

---

(३)—तदुत्सर्गे कर्माणि पुरुषार्थाय, शास्त्रस्यानतिशङ्क्यत्वात् न च द्रव्यं चिकीर्ष्यते तेनार्थेनाभिसम्बन्धात्क्रियायां पुरुषश्रुतिः ॥ ३ ॥ अविशेषात्तु शास्त्रस्य यथाश्रुति फलानि स्युः ॥ ४ ॥ अपि वा कारणाग्रहणे तदर्थमर्थस्यानभिसम्बन्धात् ॥ ५ ॥ तथा च लोकभूतेषु ॥ ६ ॥

"**तस्य व्रतं**" **इत्युपक्रम्य** स्नातकपुरस्कारेण
"**नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदाचन ।**
**नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्**"

**इत्यादि प्रजापतिव्रतं श्रुतम् । तत्रापि भाष्यकारादिभिः प्रतिषेधत्वे पर्युदासत्वे चोभयथाऽपि फलकल्पनाभिया क्रत्वर्थत्वमाशङ्क्य अनारभ्याधीतत्वात् श्रुत्याद्यभावेन च क्रत्वर्थत्वानुपपत्तेः पर्युदासत्वमङ्गीकृत्य पुरुषार्थत्वं सिद्धान्तितम् । तदपि** कळञ्जभक्षण-प्रतिषेधहिरण्यधारणन्यायेन **क्रत्वर्थत्वशङ्कानुपपत्तेरुपेक्षितम् ।**

**विचारस्त्वेवमेवात्र कर्तव्यः । किमयं प्रतिषेधः पर्युदासो वेति । सिद्धान्ते आर्थ-वादिकफलप्रयुक्तत्वात् प्रतिषेधपक्षे च तदभावादध्यायसङ्गतिः । तत्र नञः प्रधानान्वय-**

---

**॥ तदुत्सर्गे कर्माणि ॥**

**स्नातकपुरस्कारेणेति** । **यद्यपि** "उपक्रमे श्रुतं ब्रह्मचारिव्रतपदं यत" इति **शास्त्रदीपिका**सिद्धान्तग्रन्थात् यद्यप्यस्मिन्नधिकरणे ब्रह्मचारिधर्मभूतप्रजापतिव्रतान्तर्गतं नेक्षेतो-द्यन्तमित्येतदुदाहृत्य विचारितं **तथापि** समानन्यायत्वात् स्नातकव्रतान्तर्गतेपि एतत्सिद्धान्त-प्रवृत्तिरित्याशयेनाह—**न इति** । संस्कारकाण्डीयचतुर्विंशतिमतव्याख्याने **भट्टोजिदीक्षितकृते** प्रजापतिव्रतसंज्ञा ब्रह्मचारिधर्मान्तर्गतधर्मविशेषाणामेव भातीति स्नातकपुरस्कारेणेत्युक्त्वा प्रजापति-व्रतम् श्रुतमिति वचनमयुक्तम् **तथापि** समानन्यायत्वात् स्नातकधर्मान्तर्गतानामपि नेक्षेतोद्यन्तमि-त्यादीनामुदाहरणत्वज्ञापनायेति ज्ञेयम् । **कलञ्जभक्षणप्रतिषेधेति** । **ननु** स्वर्गकामार्थिनो निषेधेऽधिकारः प्रवृत्तमात्रस्य वेति सन्देहे प्रवृत्तमात्रस्यैवाधिकार इत्यर्थप्रतिपादकषाष्ठिक-**कलञ्जभक्षणन्यायेन** प्रवृत्तमात्रस्यानिष्टजनकत्वबोधनात् पुरुषार्थत्वे सिद्धेपि फलकल्पनाभिया प्रसक्तक्रत्वर्थत्वशङ्कापनोदायारभ्यमेवाधिकरणमित्यत आह—**हिरण्यधारणन्यायेनेति** । तत्रापि

स्याभ्यर्हितत्वाद्भावनान्वयव्युत्पत्तेर्धात्वर्थाद्यन्वयस्य लक्षणादिभियाऽनुपपत्तेः पर्युदासत्वायोगाद्रागप्राप्तोद्यदादित्येक्षणभावनायाः प्रतिषेध एवायं पुरुषार्थः कळञ्जभक्षणादिप्रतिषेधवत्। अतश्च निषेधेनेक्षणस्यानिष्टसाधनत्वाक्षेपेऽपि फलान्तराकाङ्क्षाभावात् "नैतावता हैनसा युक्तो भवति" इत्यार्थवादिकपापक्षयफलकल्पनानुपपत्तेः नार्थवादिकफलप्रयुक्तत्वम्। अर्थवादस्त्वीक्षणजन्यप्रत्यवायाभावबोधनद्वारा ईक्षणनिन्देति प्राप्ते—

"तस्य व्रतं" इति व्रतशब्देनोपक्रमस्थेनानुष्ठेयक्रियाप्रतिपादनात् तदनुरोधेनोपसंहारस्थो निषेधोऽप्यनुष्ठेयामेव क्रियां विधत्ते। अत एव नञीक्षतिभ्यामीक्षणाभावसङ्कल्परूपक्रियैव लक्षणया विधीयते, मानससङ्कल्पस्य प्रवृत्तिनिवृत्त्यविनाभूतत्वात्। ईक्षतिरेव वा लक्षकः नञ्पदं तात्पर्यग्राहकम्।

नचैवमुद्यदादित्यस्य पदार्थैकदेशे ईक्षणे अन्वयापत्तिः, कारकाणां प्रथमतो भावनान्वयस्यैव स्वीकारेणैकदेशान्वयाप्रसक्तेः। यन्मते हि सोमादीनां प्रथमत एव धात्वर्थेऽन्वयस्तन्मत एवेदं दूषणं न त्वस्मन्मते। अतोऽनीप्सितकर्मत्वेन सक्तुवल्लक्षितकरणत्वेनैव वा भावनान्वयः। पार्ष्ठिकान्वये तु समस्तपदघटितवाक्यस्यैव कल्पनान्न कोपि दोषः। अतश्चोद्यदादित्येक्षणाभावसङ्कल्पभावनैवोदये निमित्ते विधीयते। णमुलादिवत् शतृप्रत्ययेन

---

क्रत्वर्थत्वशङ्काया आर्थवादिकफलश्रवणादेव निरस्ताया अत्रापि समत्वादिति भावः। **उदये निमित्त इति।** अतश्चोद्यदादित्येक्षणाभावसंकल्पभावनैव विधीयत इत्युक्त्या सङ्कल्पकोटौ निविष्टस्यापि उद्यत्पदार्थस्य एकदाऽन्वयात् पुनरुदये निमित्त इत्युक्तिः **तन्त्ररत्नकाराद्यभि**प्रेतमुदयस्य निमित्तत्वमर्थादिति द्योतयति, तेनादित्योदयस्य निमित्तत्वप्रतिपादनात् तत्तदवस्थे आदित्ये तदीक्षणाभावः संकल्पयितव्यः नोद्यन्तमीक्षेत नास्तं यन्तमीक्षेतेत्येवं प्रत्यहम् भिन्नः संकल्पः कार्य इति **तन्त्ररत्ने** स्थितम्। श्लोकोप्युदाहृतस्तत्र—

> त्रिसन्ध्यं जपताऽनेन सावित्रम् नेक्षेत इत्ययम्।
> आदित्यम् ध्यायता कार्यः संकल्पः पापनाशनः॥ इति॥

कथं शतृप्रत्ययेन निमित्तत्वं प्रतीयत इत्यत आह—**णमुलादिवदिति।** यद्यपि सर्वत्र णमुल्पौनः पुन्यं पूर्वक्रियोत्तरकालत्वं वा वदति न निमित्तत्वं **तथापि** "यावति विन्दजीवोः" इति सूत्रेण विहिते णमुलि यावज्जीवम् इत्यादौ प्रतीयत एव निमित्तत्वं; यावच्छब्दोऽत्राभिव्याप्त्यर्थः, तेन संबन्धमात्रार्थत्वेऽपि णमुलः जीवनसंबन्धमभिव्याप्याग्निहोत्रभावनाविधाने अर्थाज्जीवनस्य नित्यं सत्वात् प्रत्यहमग्निहोत्रमनुष्ठेयम् इत्यर्थात् निमित्तत्वं भासते। अत एव

जीवगतावधारणार्थत्वे यावच्छब्देन सुबन्तेन सह "यावदवधारणे" इति सूत्रेणाव्ययीभावे यावज्जीवमित्यादौ न तत्प्रतीतिः। एवमादिपदोपात्तया भिन्ने जुहोतीत्यत्र सप्तम्याऽपि "यस्य च भावेन भावलक्षणम्" इति सूत्रानुशिष्टया परिचायकत्वरूपलक्षणत्वाभिधानात् होमकर्मकर्तव्यतायाः भिन्नं कपालं परिचायकमिति वाक्यार्थे अवगते अर्थादेव निमित्तत्वं प्रतीयत इति फलति। एवमत्रापि "लक्षणहेत्वोः क्रियायाः" इति सूत्रेण शयाना भुञ्जते यवना इत्यत्रेव लक्षणार्थत्वं शतृप्रत्ययस्य निर्विवादम्। यद्यपि तत्र सिद्धानुवादकत्वेन परिचायकत्वरूपलक्षणत्वं न निमित्तत्वपर्यवसायि तथाप्यत्रेक्षणाभावसंकल्पकर्तव्यतायाः उदयस्य परिचायकत्वोक्तौ युक्तमेवार्थान्निमित्तत्वम्। अत्र च प्रतिषेधेष्वकर्मत्वात् इति **षाष्ठिकाधिकरणतन्त्ररत्न**दर्शितरीत्या सप्तमीयच्छब्दशतृप्रत्ययानामर्थत एव निमित्तताबोधकत्वमभिधानादित्युक्तिरार्थिकाभिधानपरतयैव ज्ञेयेति भावः।

एतच्च **तन्त्ररत्न**कारमतश्चतुर्विंशतिमतव्याख्याने **संस्कारकाण्डे** अत्र वदन्तीत्यादिना खण्डितम्। तथा हि-शतृप्रत्ययो लटश्शतृशानचावित्यनेन लक्षणहेत्वोः क्रियाया इत्यनेन च विहितः। तत्रायं हेतावेवेत्यत्र प्रमाणाभावः। किंच हेतुः फलमिति व्याख्यायार्जयन् वसतीति वैयाकरणैरुदाहृतत्वात् अर्जनफलवानितिवत् प्रकृते उदयफलसंकल्पवानिति विवरणाभावान्न तदन्वयः। **अथ** लक्षणं परिचायकमिति व्याख्याय शयाना भुञ्जते यवना इति चोदाहृत्य शयनोपलक्षितभोजनकर्तार इति विवरणात् तद्वदिहापीत्यभिमतम्, तर्हि उदयपरिचायकं यदीक्षणं तदभावसंकल्पस्य व्रतान्तरसंकल्पकाले सकृदेव चानुष्ठाने को विरोधः? नाप्यत्र शतृबलाद्वर्तमानत्वप्रतीतिः अर्जयन्नवात्सीत् अवत्स्यदितिवत्। तथा च **पाणिनिः** धातुसंबन्धे प्रत्यया इत्यसूत्रयत्। उत्पत्स्यमानोऽपि सोमयाजिपुत्रो भवत्वित्यादिभाष्यादावुदाहृतम्। वसन् ददर्शेत्यादि**माघीयप्रयोगश्चै**वं सङ्गच्छते।

किञ्च,

> नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम्।
> क्षुदन्तीं जृम्भमाणां वा न चासीनां यथासुखम्॥
> नाञ्जयन्तीं स्वके नेत्रे।

इत्यादावपि तथात्वापत्तौ बहु व्याकुलीभावः स्यात्। तस्मात् समावर्तनप्रयोगे पुरुषार्थानीमान्यपि व्रतानि संकल्पयेदित्युक्तम्। न च प्रत्यहं संकल्प इत्यंशे **तदुत्सर्ग** इत्याद्यधिकरणस्य कश्चिद्व्यापारोऽस्ति। क्रत्वर्थत्वं पूर्वपक्षीकृत्य पुरुषार्थतासमर्थनमात्रेणाधिकरणपर्यवसानात्। व्याख्यातृवचसश्च प्रासंगिकस्य व्याकरणादिविरुद्धत्वेनोपेक्षणीयत्वादिति दिक्।

**निमित्तत्वाभिधानात्, तत्फलं** चार्थवादिकमघक्षयः। **अतस्सिद्धं भावनातिरिक्ते नञ्स्सम्बन्धात्पर्युदासः स च फलप्रयुक्त इति। नन्वेवमपि नञः भेदवद्वाचित्वस्य "तदन्यतद्विरुद्धतदभावेषु नञ्" इति प्रसिद्धेरुद्यत्पदेनैव सम्बन्धाङ्गीकारादुद्यद्भिन्नादित्येक्षणस्यैवाघक्षयफलकत्वेन विधानोपपत्तेर्न सङ्कल्पलक्षणा। न च सुबन्तसम्बन्धे नञ्समासापत्तिः,** नानूयाजेष्वितिवदुपपत्तेः। **न च नञः आदित्यपदेन वा सम्बन्धः उद्यत्पदेन वेत्यत्र विनिगमकाभावः,** विशेष्यसाकाङ्क्षत्वस्यैव **विनिगमकस्य सत्त्वादिति चेत्—तथात्वेऽपि उद्यन्तमिति सुबन्तपदस्य निपातान्वयव्युत्पत्त्यभावेन उद्यद्भिन्नेऽपि पदद्वयलक्षणाया आवश्यकत्वात्। तथात्वे स्वभावेनैव तादृशादित्येक्षणस्य सर्वदा जायमानत्वेनाघक्षयोपपत्तेर्**विधिवैफल्याच्च। **स्वरसतः प्रतीयमाननिषेधस्य सङ्कल्पलक्षणयाऽप्य**परित्यागेन **भवदु-**

---

**वस्तुतस्तु** नोपरक्तमित्यादिष्विवावैरूप्याय लटश्शतृशानचावित्यनेनैव शतृप्रत्ययो युक्तः इति सर्वेषामेव संकल्पानामनैमित्तिकत्वमेव। इतरथा विनाप्यर्थवादं नैमित्तिककर्मणां पापक्षयजनकत्वस्य यावज्जीवाधिकरणेनैव सिद्धत्वादर्थवादवैयर्थ्यापत्तिः। तस्मात् सकृदेव संकल्पो युक्त इति। **आर्थवादिकमिति।** एतावता हैनसा वियुक्तो भवतीत्यर्थवादो ज्ञेयः। अनेन चैतावता ह्येनसाऽयुक्तो भवतीति पुरुषसंबन्धात् दोषः कीर्त्यत इत्यत्रत्यभाष्ये दोषोक्त्या प्रजापतिव्रतानामकरणनिमित्तदोषपरिहारार्थत्वस्यैतावता कर्मणा सता पापेनायुक्तो भवतीत्येवं हिरण्यधारणाधिकरणन्यायसुधादर्शितरीत्या चावगतेरकरणनिमित्तपापक्षयः फलं बोध्यत इत्यर्थः। **नानूयाजेष्विति।** विभाषाधिकारे नञ्समासविधानात् वाक्यसमासयोः विकल्पेन प्रयोगस्साधीयानिति भावः। **विशेष्यसाकाङ्क्षत्वस्येति।** आदित्यपदेन सह नञर्थस्यान्वये विशेष्यसाकांक्षत्वापत्तिरूपं दूषणं उद्यत्पदार्थस्य नञर्थान्वयवादिना यद्युच्यते तर्हि उद्यन्तमित्यस्यापि विशेष्यसाकांक्षस्य नञर्थेप्यन्वयः दुरुपपादः विशेष्यसाकांक्षत्वापत्तेरिति दूषणस्य तवापि सत्वात्। अत एव सामानाधिकरण्ये शतृप्रत्ययात् आदित्यपदार्थेनैवान्वयस्य योग्यत्वाद्विशेष्यसाकांक्षत्वरूपनियामकोद्भावनमाश्रयासिद्धमित्यवधेयम्। **विधिवैफल्यादिति। एतदापाततः** उद्यद्भिन्नादित्येक्षणस्याघक्षयजनकस्य सर्वदा सत्वेप्यौदासीन्यवारणार्थत्वेनाथवा उद्यद्भिन्नादित्येक्षणमघक्षयजनकं उद्यदादित्यदर्शनं तु स्नातकस्याघकारीत्येवमर्थस्य विधिमन्तरेणाशक्यत्वात् विधिसाफल्योपपत्तेः। **अपरित्यागेनेति। अयम्भावः।** वस्तुतः प्रधानान्वयस्याभ्यर्हितत्वेन नञर्थस्य भावनायामेवान्वय उचितः। परंतूपक्रमानुरोधेनेक्षतिधातुना संकल्पलक्षणायामपि नञर्थस्य धात्वर्थत्वात् मन्मते साक्षादेव क्रियान्वयो जातस्तव तु आदित्यपदार्थेनान्वय इति निषेधत्यागः। **अथवा** क्रियाभावप्रतिपादने नञः सामर्थ्येपि उपक्रम-

**क्तपर्युदासानुपपत्तेश्च। अस्मिन्नुदाहरणे तथाऽङ्गीकारेऽपि "न वारिस्थं" इत्यत्र "एकादश्यां न भुञ्जीत" इत्यादौ च सङ्कल्पलक्षणाया आवश्यकत्वाच्च॥**

**प्रयोजनं स्पष्टमेव। सूत्राण्यप्यस्मिन्नेव विचारे सुधीभिर्योज्यानि॥ ३॥**

---

विरोधात्तं विहाय एकपदोपात्तत्वप्रत्यासत्त्या झटित्युपस्थिततद्विशेषणेक्षणाभावप्रतिपादनेन निषेधत्यागः तव तु विप्रकृष्टविशेषणभेदप्रतिपादने सर्वथा निषेधलोप इति। **न वारिस्थमित्यत्रेति।** यथैव हि आदित्यं सदा पश्येदित्यादिवाक्येषु न प्रतिबिम्बितादित्यदर्शनं प्राप्नोति आदित्यत्वाभावात्, एवमुद्यदादिविशेषणभिन्नमादित्यमीक्षेतेत्युक्तौ प्रतिबिम्बितादित्यदर्शनस्य प्राप्त्यभावात् प्रतिबिम्बितादित्यभेदस्य सदाऽऽदित्ये सत्वेन तद्भेदकथनस्य प्रयोजनाभावात् न तत्र वारिस्थपदार्थस्य नञर्थे अन्वयः कर्तुं शक्यते। न च प्रतिबिम्बितादित्यदर्शनमपि कदाचित् स्नातकस्य रागतः प्राप्नोतीति तन्निषेधाय वारिस्थभेदोऽवश्यं वक्तव्य एवेति वाच्यं; तथात्वे प्रतिषेधस्यैवापत्त्या पर्युदासानुपपत्तेरिति भावः। **एकादश्यामिति।** यथैवादित्यपदार्थस्य नञर्थान्वये विशेष्यसाकांक्षत्वापत्तिदूषणं त्वयैवोक्तं तथैवैकादशीपदार्थस्य नञर्थान्वये तत्समानमित्यगत्या संकल्पलक्षणयैव पर्युदासोऽङ्गीकर्तव्य इति भावः। आदिशब्देन **तैत्तिरीयशाखायां** दर्शपूर्णमासप्रकरणे दाक्षायणयज्ञसन्निधौ पठितानि "तस्यैतद्व्रतं नानृतं वदेत् न मांसमश्नीयात् न स्त्रियमुपेयात्," इत्यादीनि विशेष्यान्तरपदरहितानि अत्रोदाहरणत्वेन ज्ञेयानि। न चोभयत्रापि आख्यातेन पुरुषानभिधानात् कथं पुरुषार्थत्वमिति वाच्यं; तस्य व्रतमित्युपक्रमे तस्येतिपदेन केवलपुरुषमात्रस्य क्रतुयुक्तपुरुषस्य वोपादानेन प्राधान्यावगतेराख्यातेन गुणत्वेनोक्तस्यापि **वैमृधान्यायेन** पदान्तरकल्पनया प्राधान्योपपत्तेः। एवं च कर्त्रनभिधानात् कथं पुरुषधर्म इत्यर्थे **तन्त्ररत्नकाराणां** प्रयासकरणं व्यर्थमेव।

**वस्तुतस्तु** नेक्षेतोद्यन्तमित्यादौ उद्यदादिभिन्नमिति पर्युदासाश्रयणे उद्यद्विशेषणस्य प्रतियोगिताकत्वसंबन्धेन नञर्थान्वयस्येव युगपत् इतरविशेषणानामपि तदन्वयोपपत्त्या सकलविशेषणभेदप्रतीतेः नेक्षेतोद्यन्तमस्तंयन्तमुपरक्तं मध्यनभोगतं वारिस्थमादित्यमित्येतावतापि सिद्धेः चतुर्णां नञामुपादानं व्यर्थमापद्येत। सङ्कल्पलक्षणायां तु अनन्यपरविधिपुनःश्रवणरूपादभ्यासात् सङ्कल्पभेदसिद्धिरेव तत्तन्नञ्घटितवाक्यानां भिन्नं भिन्नं प्रयोजनमित्यपि युक्तं वक्तुम्।

---

(४)—द्रव्याणि त्वविशेषेणानर्थक्यात्प्रदीयेरन् ॥ ७ ॥ स्वेन त्वर्थेन सम्बन्धो द्रव्याणां पृथगर्थत्वात् तस्माद्यथाश्रुति स्युः ॥ ८ ॥ चोद्यन्ते चार्थकथासु ॥ ९ ॥ लिङ्गदर्शनाच्च ॥ १० ॥

"स्फ्यश्च" इत्याद्युपक्रम्य श्रुतस्य यज्ञायुधवाक्यस्य तृतीये उदाहृतस्यैव साक्षात्प्रधानभूताग्नेयाद्युद्देशेन उत्पत्तिवाक्याविहितद्रव्यकोपांशुयाजोद्देशेनैव वा स्फ्यादिद्रव्यविधायकत्वं, इतरथा समस्तवाक्यवैयर्थ्यापत्तेः, यज्ञशब्दस्य तत्साधनोद्धननादिलक्षकत्वापत्तेश्च। तस्मादुद्धननादिवाक्यैस्स्फ्यादीनामुद्धननाद्यर्थत्वेऽप्याज्येन सह विकल्पेनोपांशुयाजार्थत्वमपीति प्राप्ते—

सम्भरणविध्येकवाक्यत्वादस्य तदर्थवादत्वेनाप्युपपत्तेरनन्यशेषभूतेन "सर्वस्मै वा" इति वाक्येन विहितस्याज्यस्य पाक्षिकत्वापादकत्वानुपपत्तेः, उद्धननादिक्रियाभेदेऽपि च दशत्वस्य सम्भरणरूपैकक्रियासम्बन्धादेवोपपत्तेरायुधशब्दस्य च प्रयोजकत्वमात्रलक्षणयाऽप्युपपत्तौ साधनत्वलक्षकत्वाभावात् यज्ञशब्देऽपि तदनापत्तेर्नैतस्य स्फ्यादिविधायकत्वम्। तदेतदर्थवादत्वस्य तृतीयसिद्धत्वेन पूर्वपक्षोत्थानाभावेऽपि शिष्यहितार्थमुक्तमिति द्रष्टव्यम्।

यत्त्वत्र भाष्यकारादिभिर्लिङ्गमुक्तं स्फ्याद्याकारस्य द्वयवदानेन विकलत्वात् पूर्वपक्षे परिधानीये कर्मणि "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च" इति यज्ञपात्रकरणकदाहानुपपत्तिरिति, तत् पूर्वपक्षे उद्धननाद्यर्थपात्राणां पृथक्सत्त्वात् तेषां च यज्ञसाधनत्वाभावेऽप्यायुधशब्दाभावेन प्रयोजकतयैव यज्ञपात्रत्वोपपत्त्या दाहोपपत्तेरुपेक्षणीयम्॥ ४॥

---

॥ द्रव्याणि त्वविशेषेण ॥

उद्धननाद्यर्थपात्राणां पृथक्सत्वादिति। ननु दश यज्ञायुधानीत्यनेन प्रधानयागोद्देशेन स्फ्यादिविधानमित्येतदधिकरणपूर्वपक्षस्य पात्रैक्येपि संभवात् स्वयमपि च स्फ्यादीनामुद्धननाद्यर्थत्वेपि आज्येन सह विकल्पेन उपांशुयाजार्थत्वमपीति पूर्वपक्षोपसंहारे सूचितत्वात् पृथक्पात्रसंपादनं किमुद्धननाद्यर्थमुत दाहार्थं? आद्ये यज्ञप्रयुक्तैरेव पात्रैः प्रसङ्गेनोद्धननादिकार्यसिद्धेः प्रधानोत्तरकार्यस्यापि स्फ्यादिसाध्यस्य द्वयवदानेन स्फ्याद्याकारनाशस्य एकशृङ्गावयवनाशे अवयविगोनाशस्येव वक्तुमशक्तेः स्फ्यादिजात्यनपगमेन सूपपादत्वात् पुरोडाशवच्च प्रतिप्रयोगावृत्त्या पात्रभेदसत्वेन बहुप्रयोगानन्तरं बहुद्वयवदानेन विकलत्वापादनस्य परिहर्तुं शक्यत्वात् निरर्थकमेव तत्संपादनं; अत

(५)—तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात् ॥ ११ ॥ एकश्रुतित्वाच्च ॥ १२ ॥ प्रतीयत इति चेत् ॥ १३ ॥ नाशब्दं तत्प्रमाणत्वात्पूर्ववत् ॥ १४ ॥ शब्दवत्तूपलक्ष्यते तदागमे हि तद्दृश्यते तस्य ज्ञानं हि यथाऽन्येषाम् ॥ १५ ॥ तद्वच्च लिङ्गदर्शनम् ॥ १६ ॥

**"पशुना यजेत" इत्यादौ यत्रोपादेयपश्वादिगता सङ्ख्या विभक्त्युपात्ता, सा किं विवक्षिता न** वेति चिन्तायां **"सत्त्वप्रधानानि नामानि" इति स्मृत्या प्रातिपदिकार्थपश्वादेर्विभक्त्युपात्तसङ्ख्याविशेष्यत्वरूपसत्त्वसमाख्यया विभक्त्युपात्तसङ्ख्यायाः प्रातिपदिकार्थे**

---

एव न द्वितीयः। दाहस्यापि तैरेव संभवात् आहिताग्निशरीरप्रतिपत्त्यर्थे दाहे पुरोडाशकपालवत् परप्रयुक्तयज्ञपात्राणां करणत्वप्रतीत्या गुणत्वावगतेः प्रयोजकशक्तिकल्पनस्याभावाच्च। अतः पात्रैक्येपि **भाष्यकारदर्शितदाहानुपपत्तिपरिहारसंभवात्** किमर्थमुद्धननाद्यर्थं पृथक्पात्रसंपादनमिति चेत्।

**अत्रोच्यते। यद्यपि** प्रयोगान्तर्बहिष्ट्वेन पात्रसंपादनं **तथापि** क्रतुप्रयोगाद्बहिः आधानप्रयोगकाले अरण्याहरणकाले सर्वक्रत्वर्थं पात्राहरणप्रतीतेः तेषां चोत्तरक्रतुसंबन्धाभावे यज्ञियैः केतुभिस्सहेति मन्त्रलिङ्गबाधापत्तेः अगत्या आहृतानां तेषामुद्धननादिद्वारा यज्ञोपयोगित्वं वक्तव्यमित्यावश्यक एवोद्धननाद्यर्थं पात्रभेदः तवापि। एतावान् विशेषः। प्रतिप्रयोगं संपादितान्यपि पात्राणि स्थापितानि सन्तीति दाहकरणत्वं तेषामप्यस्तु। एतावता तन्त्रेणाहृतानामविकलानामादाहं सत्वेन दाहोपपत्तिरुक्ता युक्तैव। **अथ वा** उद्धननादिषु पुरोडाशकपालवत् स्फ्यादीनां परप्रयुक्ततया साधनत्वाश्रवणाद्यागस्येव तेषामपि प्रयोजकत्वाभिधानान्न्याय्य एव प्रयोजकत्वे पात्रभेद इति दिक्।

---

**तत्रैकत्वम्।**

**इति चिन्तायामिति। ननु** एकत्वविवक्षाऽविवक्षाविचारस्य क्रत्वर्थत्वपुरुषार्थत्वविचारात्मकत्वाभावेन कथमध्यायसङ्गतिरिति। **सत्यं; तथापि** पूर्वपक्षे एकत्वाविवक्षा नाम सर्वात्मना व्यर्थमेकवचनमिति नार्थः वेदाक्षरे व्यर्थत्वापादनस्य स्वाध्यायविधिनैव निरस्तत्वात्। किन्तु पशुविशेषणत्वेन प्रतीयमानत्वात् एकः पशुरिति बोधोऽस्तु। न तावता क्रियान्वयः। यदि क्रिया-

प्रति पदश्रुत्या योग्यतारूपलिङ्गेन च विशेषणत्वावगमात् वाक्यीयक्रियान्वयानुपपत्तेः तद-भावेऽपि क्रियाया अवैगुण्यान्न विवक्षिता सङ्ख्या। न चैकत्वादेः पश्वन्वयेऽपि तद्विशिष्ट-स्यैव पशोः कारकान्वयद्वारा क्रियासम्बन्धाल्लोहितोष्णीषादिवत् पशुविशेषणस्यापि विवक्षोपपत्तिः, सङ्ख्याकरणत्वयोर्विभक्त्या युगपदुपादानेन सङ्ख्यायाः प्रथमतः पश्वन्वय-मभिधाय पश्चाद्विशिष्टस्य पशोः कारकान्वयाभिधाने विरम्यव्यापारापत्तेः।

न च त्वयाऽपि सङ्ख्यायाः पदश्रुत्या पश्वन्वयाङ्गीकारात् युगपदन्वयद्वयस्य शाब्द-बोधस्य च विरुद्धत्वात्प्रथमतश्शुद्धस्य पशोः कारकान्वयमङ्गीकृत्य पश्चात्सङ्ख्यायाः पश्वन्वयाङ्गीकारे तवापि विरम्यव्यापारापत्तिरिति वाच्यम्, तथाऽपि भावनान्वितकारक विशेषणविशेषणस्यासमस्तपदस्थले भावनान्वयव्युत्पत्त्यभावेनाविवक्षोपपत्तेः। इतरथा-ऽऽरुण्यस्याप्यानुशासनिकमत्वर्थलक्षणयैकहायनीं प्रत्येव विशेषणत्वोपपत्तौ प्रथमतः क्रिया-न्वयमभ्युपगम्यपार्ष्ठिकैकहायनीसम्बन्धसिद्धान्तभङ्गापत्तेः। अत्र च लौहित्यादेर्भावना-न्वितकारकविशेषणत्वेऽपि समस्तपदत्वान्न क्षतिः। वारवन्तीयादेस्तु क्त्वाशब्दोक्त-भावनायामेवान्वय इति न काचित्क्षतिः। अत एव सोमारुण्यादीनामपि न प्राथमिको धात्वर्थान्वयः। अपि तु भावनान्वय एवेत्युक्तं तत्र तत्र।

---

न्वय्येकत्वं तदा क्रियातोऽवतरत्पशुद्वायागाङ्गं भवति। ततश्च भावनायां विधिना विहितायां यद्यपि तद्विशेषणान्यपि विशेषणविधिना विधीयन्ते तथापि अतद्विशेषणानाङ्क्नाप्यविधेयत्वात् भावना-विशेषणीभूतपशुकरणत्वबोधार्थमवश्यमुच्चार्यमाणा तृतीया नान्तरीयकत्वात् एकत्वमपि प्रतिपादयति। न त्वेतावता तस्य क्रियान्वितत्वेन यागाङ्गत्वमित्यविवक्षापदसूचितयागाङ्गत्वाभावरूपपूर्वपक्षकरणात् शेषशेषिभाव एव प्रयोज्यत्वसिद्ध्यर्थं विचार्यत इति भावार्थः। सूचितश्चायमर्थः भाष्यतन्त्ररत्नयोः। ननु सत्वसमाख्याया वाक्यापेक्षया दुर्बलत्वात् वाक्यीयक्रियान्वयस्यैवापत्तौ यागाङ्गत्वं स्यादेवेत्यत आह—पदश्रुत्येति। न चैकत्वादेरिति। इयं च पूर्वपक्षिरीत्या भवतु एकत्वस्य पश्वन्वयः तथापि तद्विशिष्टस्य कारकान्वयद्वारा क्रियान्वयोऽस्त्वित्यभिप्रायिका सिद्धान्तिन आशङ्का। सा च पूर्वपक्षिणा संख्याकरणत्वयोरित्यादिना खण्ड्यते। तेन च खण्डनप्रकारेण पूर्वपक्ष्युक्तैकत्वस्य पश्वन्वय एव स्वाभिमतः खण्डितो भवतीति व्यर्थोऽयं संख्याकरणत्वयोरित्यारभ्येति वाच्यमित्यन्तो-ग्रन्थः; केवलं वाग्युद्धमेव प्रतिपादयतीति ज्ञेयम्। अतश्च तथापीति ग्रन्थप्रतिपादितेनैव सा शङ्का निवारणीया। आनुशासनिकेति। "गुणवचनेभ्यो मतुपो लुगिष्टः" "गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति" इत्येवमादीन्यनुशासनानि। एतच्च पूर्वपक्षकरणं कुशकाशावलंबनेन न तु लौहित्यवैलक्षण्ये काचन युक्तिरस्ति। भावनान्वितकारकविशेषणविशेषणस्य विवक्षाऽविवक्षायां हि

किञ्च न प्रत्ययार्थस्यैकत्वस्य प्रकृत्यर्थे पशुं प्रति प्रकारता, प्रत्ययार्थप्राधान्यभङ्गापत्तेः, अपि तु पशोरेव करणत्वं प्रतीव एकत्वं प्रत्यपि प्रकारता। अतश्चैकत्वस्य करणत्ववत् विधेयभावनायामप्रकारत्वादविवक्षेति प्राप्ते—

पशोः करणत्व एवान्वयो न त्वेकत्वेऽपि प्रमाणाभावात्। अतश्च पशोस्तद्द्वारा भावनान्वयवत् सङ्ख्याया अपि बलीयस्या समानाभिधानश्रुत्या आधेयत्वेन सामानाधिकरण्येन वा प्रथमतः कारकान्वयस्यैवाङ्गीकारात् पश्चाच्च पदश्रुत्यादिना आधारत्वसम्बन्धेन पश्वन्वयोपपत्तेर्निरुक्तव्युत्पत्त्यैव संख्याया भावनासम्बन्धित्वाद्विवक्षितत्वम्। न चैवं "यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्" इत्यादावेकपदवैयर्थ्यं 'गां' इत्यनेनैवैकत्वविधानोपपत्तेरिति वाच्यम्, एकत्वविधिवत् गोत्वविधेरपि प्राप्तदक्षिणानुवादेन "धेनुर्दक्षिणा" इतिव-

---

न समस्तपदत्वासमस्तपदत्वे नियामके किन्त्वन्वयव्युत्पत्त्यव्युत्पत्ती। समासस्थले हि समाससमाख्यादिना अनुभवेन च परस्परान्वयोपि स्वीक्रियते, यथा लोहितोष्णीषा ऋत्विजः प्रचरन्ति अश्वाभिधानीमादत्त इत्यत्र लोहिताश्वयोः सुबन्तार्थतया साक्षात्भावनान्वययोग्ययोरपि तं विहायोष्णीषाभिधानीपदार्थयोः। तथा च भावनान्वितकर्तृत्वकर्मत्वादिविशेषणोष्णीषाभिधानीविशेषणयोः लोहिताश्वयोः परस्परान्वयस्य व्युत्पन्नत्वात् विवक्षा। एवमिहापि सत्वसमाख्यया अनुभवेन च एकत्वस्य पशावन्वये जाते तद्विशिष्टकरणत्वस्य भावनान्वयान्नाव्युत्पन्ननिबन्धनाविवक्षाप्रसक्तिरित्यभिप्रेत्य प्रकारान्तरेण पूर्वपक्षरचनामाह— **किं चेति**। **अयं भावः**। सत्यं भावनाविशेषणविशेषणं व्युत्पन्नं चेत् विवक्षितमेव। न तु पशावेकत्वान्वयो व्युत्पन्नः प्रत्ययार्थप्राधान्यभङ्गापत्तेः। अपि तु पशोरेव एकत्वविशेषणत्वम्। न च तर्हि सुतराङ्करणत्ववत् एकत्वस्यापि साक्षादेव भावनान्वये विवक्षा स्यादिति वाच्यं, करणत्ववदेकत्वस्य भावनायामप्रकारत्वात्। विशेषणविशेष्यभावो हि आकाङ्क्षाधीनः। भावनायाश्च क्रियात्वादस्ति कारकाकाङ्क्षा कारकाणां च कारकसमाख्ययाऽस्ति क्रियान्वयाकाङ्क्षा। अत एव कारकाणामेव क्रियान्वयो नेतरेषामिति मर्यादयैव धात्वर्थस्य क्रियारूपत्वं प्रदूष्य कारकरूपत्वं साधितं **वाजपेयाधिकरणभावार्थाधिकरणयोः**। अतश्चैकत्वस्य कारकत्वाभावेन भावनायां प्रकारतयाऽन्वयायोग्यत्वात् पशौ चाव्युत्पन्नत्वात् युक्तैवाविवक्षा। **प्रमाणाभावादिति**। ननु प्रत्ययार्थप्राधान्यस्मृतेरेव प्रमाणस्य सत्वात् कुतो नान्वय इति वाच्यं; करणत्वप्राधान्यमात्रेणापि प्रत्ययार्थप्राधान्यस्मृतेरुपपत्तेः। सत्वप्राधान्यस्मृतेः समानाभिधानश्रुतेश्च बाधापत्तेः प्राथमिकान्वयेन समानाभिधानश्रुतेरुपपन्नत्वेपि सत्वप्राधान्यस्मृतेः पाश्चात्यान्वयाभिप्रायेण उपपन्नत्वमाह—**पश्चादिति**। ननु प्राप्तदक्षिणानु-

द्विशिष्टकारकान्तर**विधानेनापत्तौ द्वादशशतसङ्ख्यावत्सामान्यविहिताश्वादीनामपि बाध-प्रसङ्गात्तन्निवृत्त्या** दानाश्रित**स्यैकत्वस्यैव गोरुद्देशेन विधानार्थमेकग्रहणोपपत्तेः, अतो विवक्षितैव सङ्ख्या। अत एव "कर्णा याम्याः अवलिप्ता रौद्राः नभोरूपाः पार्जन्यास्तेषामैन्द्राग्नो दशमः" इति दशमत्वदर्शनमुपपन्नम्॥ ५॥**

---

## (६)—तथा च लिङ्गम्[1] ॥ १७ ॥

**भवतु सङ्ख्या शब्दार्थत्वाद्विवक्षिता। लिङ्गं तूपादेयगतमप्यशब्दार्थत्वादविवक्षितम्। न हि तत् प्रातिपदिकार्थः, सिंहादिपदात्तदप्रतीतेः, तस्य लिङ्गत्रयसाधारण्येन लिङ्गविशेष-व्यभिचाराच्च। नापि प्रत्ययार्थः, व्यभिचारादेव। नापि टाबादीनां सुब्विकाराणां "तस्माच्छसो नः पुंसि" इत्यादीनां, विलिङ्गे वृक्षादौ विपरीतलिङ्गे मक्षिकादौ च प्रयोगेण व्यभिचारादेव। अतश्शब्दानुशासनमात्रमेवेदं, न लिङ्गं नाम कस्यचिच्छब्दस्यार्थः इत्यविवक्षितमिति प्राप्ते—**

---

वादेन गोत्वैकत्वोभयविधाने वाक्यभेद इत्यत आह—**विशिष्टकारकान्तरेति**। ननु मूल-ग्रन्थेषु गोसंख्यासंबन्धो विधीयत इत्यभिधानात् गोरुद्देशेनैकत्वं विधीयत इति भाति। तच्चायुक्तं धातोरत्यन्तपारार्थ्यापत्तेः। अतोऽतिदेशेन प्राप्स्यमाणमपि दानं अतिदेशप्रवृत्तेः पूर्वमेतद्विधिना विधीयते। तत्फलं च गोगतसख्याश्वादीनां निवृत्तिर्भवत्वित्याशङ्कां वारयन्नाह—**दानाश्रितेति**। **अयमर्थः**। यथैव गोरुद्देशेन संख्याविधाने धातोर्वैयर्थ्यं, गोकर्मकदानोद्देशे वाक्यभेददोषः तथा अतिदेशप्राप्तेः पूर्वमपि विधाने विशिष्टविधिगौरवं दोषः। अतो **गुणकामाधिकरणन्यायेन** दान-स्याश्रयत्वेनान्वये बाधकाभावाद्दानाश्रितमेकत्वं गोरुद्देशेन विधीयते। **यद्यपि यत्र गुणः कारकता-**मापद्यते स आश्रय इत्याश्रयलक्षणात् दधिनिरूपितजन्यत्वरूपाश्रयत्वस्य होम इव एकत्वनिरूपित-जन्यत्वं दाने असंभवि **तथापि** प्राङ्मुखताश्रये भोजनादाविव साक्षाज्जन्यत्वाभावेऽपि स्वाश्रयजन्य-त्वरूपमाश्रयत्वं निर्बाधमेवेति न धातुवैयर्थ्यमिति।

**वस्तुतस्तु** आश्रयत्वापेक्षया उद्देश्यत्वेनान्वयस्य युक्तत्वाद्दानोद्देशेनैवैकत्वस्यारुण्यस्येव द्रव्यपरिच्छेदद्वारा करणत्वेन विधाने बाधकाभावः। किं तद्द्रव्यमित्यपेक्षायां यथैव क्रये करण-त्वेनान्वितस्याप्यारुण्यस्य अरुणयेति स्त्रीलिङ्गनिर्देशान्न वासः प्रभृतिक्रयसाधनान्तरे निवेशः। तथैव एकामिति स्त्रीलिङ्गनिर्देशादतिदेशप्राप्ता गौरेव सेति तत्रैवैकत्वस्य निवेशः। न गिरा-

---

1. अस्याधिकरणस्य प्रभावली न दृश्यते मातृकासु

सिंहस्सिंही इत्यादावनन्यथासिद्धलिङ्गप्रतीतेर्लिङ्गमपि क्वचित् टाबादीनां सुब्विकाराणां च क्वचिच्च तिसृचतस्रादिप्रादिपतिकविकाराणां वाच्यम्। अतश्च तत् क्वचित्सङ्ख्यावत् सुवर्थत्वेन क्वचिच्च प्रातिपदिकार्थत्वेनैव विवक्षितम्। यत्र तु बाधस्तत्र साधुत्वार्थं तच्छब्दप्रयोगः ॥ ६ ॥

---

(७)—आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयेत ॥ १८ ॥ चोदनायां त्वनारम्भो विभक्तत्वान्न ह्यनेन विधीयते ॥ १९ ॥ स्याद्वा द्रव्यचिकीर्षायां भावोऽर्थे च गुणभूतताऽऽश्रयाद्धि गुणीभावः ॥

यजति जुहोतीति वा यत्र श्रुतं, तत्र यजेस्तावत् देवतोद्देशविशिष्टद्रव्यत्यागवाचित्वात् त्यागांशस्यादृष्टविधया आरादुपकारकत्वं, उद्देशांशस्य त्वदृष्टविधया तदुपकारकत्वमेव। अत एवोद्देशाङ्गभूतदेवतायाः त्यागाङ्गभूपद्रव्यापेक्षया दुर्बलत्वम्। प्रक्षेपस्तु तत्र

---

गिरेतिवत् गोपदानुवादोऽप्येतादृशे विषये अधिकस्तात्पर्यग्राहकः। तेन च गोगतद्वादशशतसंख्यामात्रनिवृत्तिः फलमिति।

---

॥ आश्रयिष्वविशेषेण ॥

देवतोद्देशविशिष्टेति। शक्तिग्रहे वृद्धव्यवहारस्यैव प्रमाणत्वात् विशेषणविशेष्यभावे न विनिगमनाविरहशङ्का कार्या। अत एव यथैव संयोगानुकूले व्यापारे पृथक्पृथक् संयोगव्यापारयोर्वा शक्त्यङ्गीकारेपि गमनत्वमुभयवृत्तिजातिरूपमखण्डोपाधिरूपं वा सर्वैरपि स्वीक्रियते तथैव प्रक्षेपाङ्गक्रियाद्वयवृत्तियागत्वमखण्डोपाधिरूपं स्वीकृतं सर्वप्रदानाधिकरणे तृतीयचतुर्थपादे वार्तिककारमतोपपादने पूज्यपादैः। उद्देशांशस्येति। अर्थदेवतात्वपक्षे इदं द्रव्यं देवतास्वामिकं भूयादित्याकारकमानसाध्यवसायः द्रव्यत्यागसमानाधिकरण उद्देशपदार्थः। शब्ददेवतात्वे तु शब्दोच्चारणमात्रमुभयरूपस्याप्यदृष्टविधयैव त्यागांगत्वं समानाभिधानश्रुत्येत्यर्थः। अत एवेति। ऐन्द्रः पुरोडाशः आग्नेयं पयः इत्यादौ देवतासादृश्येन प्राप्तमपि क्रमेण सान्नाय्याग्नेययागविकारत्वं प्रदूष्य द्रव्यसादृश्यस्य बलवत्त्वात् क्रमेण आग्नेयसान्नाय्यविकारत्वमुक्तं अष्टमप्रथमचरणे विप्रतिपत्तावित्यधिकरणे। अत्रानुपदं लिखिष्यमाणैतदधिकरणवार्तिकतत्ररत्नग्रन्थात् प्रक्षेपस्याप्य-

त्यागाङ्गद्रव्यसंस्कारक **एव।** **जुहोतिस्थले तु तदङ्गमेव अदृष्टविधयेतरौ।** समप्रधानौ **वा प्रक्षेपेण सह। अत एवोभयत्र मन्त्रस्तत्तदङ्गभूतदेवतादिप्रकाशनार्थ एवेति स्थितिः। यत्र तु स्वाहाकारस्विष्टकृत्सूक्तवाकपशुपुरोडाशपिष्टलेपादिहोमवाजिनेज्यादौ परकीयं द्रव्यं देवता वा प्रक्षेपांशेनोद्देशांशेन मन्त्रेण वा संस्क्रियते, यथा स्वाहाकारसूक्तवाकपशुपुरोडाशादौ**

---

दृष्टार्थत्वं भाति तन्निराकरोति—**त्यागांगद्रव्यसंस्कार एवेति।** स च त्यक्तस्य द्रव्यस्य किं कर्तव्यमित्यपेक्षायां प्रतिपत्तिरूपो दृष्ट एव। **इतराविति** : ननु **जुहोतिरासेचनाधिकःस्या-** दिति सूत्राद्देवतोद्देशविशिष्टद्रव्यत्यागरूपयाग एव यदा प्रक्षेपप्रधानः तदा होमपदार्थ इति प्रतीतेः देवतोद्देशस्य द्रव्यत्यागाङ्गत्वं विहाय प्रक्षेपाङ्गत्वकल्पनं निर्मूलमित्यत आह—**समप्रधानाविति।** वृद्धव्यवहाराद्धोमपदार्थे त्रयाणामपि प्राधान्यात् समप्रधानत्रितयक्रियावृत्तिहोमत्वमखण्डोपाधि-रूपमित्युक्तमेव पूर्वोक्तवार्तिकमतोपपादने **पूज्यपादैः।**

अत्र देवतोद्देशविशिष्टद्रव्यत्यागो हि यागपदार्थः तत्र द्रव्यस्य यागं प्रति करणत्वं स्वरूपेण, देवतायास्तु अर्थरूपायाश्शब्दरूपाया वा शब्दद्वारैव करणत्व-मिति तु दशमे वक्ष्यते। स च देवतोद्देशः देवताप्रकाशकमन्त्रान्तर्गत एव; ततश्च याज्यादिमन्त्रपाठवेलायां तदन्तर्गतदेवतापदोच्चारणस्यैव देवतोद्देशत्वात्तादृशदेवतोद्देश-कालीनद्रव्यत्यागरूपे यागपदार्थे नान्योन्यमन्त्रातिरिक्तो देवतोद्देशपदार्थः स्वीकार्यः प्रमाणाभावात्। अत एव दशमे **पार्थसारथिना** मन्त्रस्येष्टदेवतास्मरणार्थत्वे तद्घटितत्वात् यागस्यापीष्टदेवता-स्मरणार्थत्वेन दृष्टार्थत्वमित्यभिप्रेत्यैव स्विष्टकृद्यागस्येष्टदेवताप्रकाशनेन कृतार्थत्वमुक्तं चतुर्थ-चरणे **स्विष्टकृदित्यधिकरणे** स्पष्टं चात्रैव। कथमित्याह—पशुपुरोडाशस्य देवतोद्देशेन यः प्रक्षेपःतस्यादृष्टादृते न किंचित्प्रयोजनमस्ति। यो हि मन्त्रेण देवतोद्देशः तन्मन्त्रेण देवता स्मर्यते। त्यागप्रक्षेपयोस्तु न किञ्चिद् दृष्टमस्तीत्यादिना ग्रन्थेन मन्त्रीयदेवतोद्देश एव यागस्वरूपघटकः प्रतीयते **वार्तिकतन्त्ररत्नयोः।** न चामन्त्रकेषु तूष्णींहोमेषु मन्त्राभावेन देवतोद्देशपदार्थलो-पापत्तिः। एतादृशविषयेषु स्वाहान्तचतुर्थ्यन्ततत्तन्नामपदानामेव मन्त्राणामङ्गीकारेण तदुपपत्तेः। तत्र क्वचित् प्रजापतिदेवत्येषु प्रजापतिं मनसा ध्यायतीति वचनात् मनसैव प्रजापतिं ध्यात्वा स्वाहा-शब्दस्यैव वचनेनोच्चारणमिति तत्र देवतात्वमगत्या ज्ञानघटितमेव सर्वैः स्वीकर्तव्यम्; न त्वेतावता मन्त्राभावो वक्तुं शक्यते। न च व्याहृतिकरणकहोमेषु भूरादिशब्दानामेव स्वाहान्तानां मन्त्रत्वात् तद्गतभूरादिशब्दोच्चारणस्य देवतोद्देशपदार्थत्वे विधिगतशब्दस्यैव त्यागकाले उच्चारणापत्त्या भुव इदं न ममेति त्यागानुष्ठानापत्त्या अगत्या अग्नय इदमित्यादित्यागानुरोधेनाग्न्यादिपदघटितानां भिन्नाना-मेव देवतोद्देशानां होमस्वरूपघटकत्वं वक्तव्यमिति वाच्यं; तत्राग्निवायुप्रजापतिदेवतानां भूरित्यग्नये

**आग्नेयादिदेवताः** मन्त्रदेवतोद्देशाभ्यां, **स्विष्टकृति प्रक्षेपांशेन तदीयं द्रव्यं, मन्त्रेणैव तदीया**

---

जुहोतीत्यादिवाक्यान्तरैर्विधानात् तत्तद्द्रव्याहुतिमन्त्राणां लक्षणया मनोतास्थाग्निपदेनाग्नीषोमप्रकाशनवत् इहापि लक्षणया तदुद्देशोपपत्तेः। न च याज्यामन्त्रादिपाठान्तर्गतदेवतावाचकपदोच्चारणकाले मानसद्रव्यत्यागस्य यजमानेन कर्तुं शक्यत्वात् यागपदार्थनिविष्टदेवतोद्देशनिर्वाहाय अग्नय इदं न ममेति त्यागानुष्ठानस्य निष्फलत्वापत्तिरिति वाच्यं; इष्टपत्तेः, मानसकर्मणो वाचिकतासंपादनार्थत्वेनैव वचनबलात तथाविधानुष्ठानोपपत्तेश्च। अतो मन्त्रांतर्गतदेवतावाचकपदोच्चारणातिरिक्तो नान्यः कश्चन देवतोद्देशो नामास्तीति ये वदन्ति तन्मतं निर्दलयन्नाह— **मन्त्रदेवतोद्देशाभ्यामिति**। एकरूपेण द्रव्यत्यागक्रियासमानाधिकरणदेवतोद्देशपदार्थलाभे न तद्व्यधिकरणदेवतोद्देशपदार्थः स्वीकर्तुमुचितः प्रत्यक्षवचनेन।

नामगोत्रे समुच्चार्य तुभ्यं संप्रदद इति।
न ममेति स्वस्वताया निवृत्तिमपि कीर्तयेत्॥

इति दानसमानन्यायतौल्येन शिष्टाचारानुमितवचनेन वा पूर्वोक्तवाचनिकत्यागस्यापि विधानात्।

**वस्तुतस्तु** देवतावाचकशब्दोच्चारणस्यैव देवतोद्देशपदार्थत्वं तत्रैव वृद्धव्यवहारेण यजिपदशक्तिनिर्णयादिति देवताधिकरणे नवमे निरूपयिष्यत इति न तत्र प्रमाणान्वेषणप्रयोजनमपीति ध्येयम्। किंच स्विष्टकृद्यागे यदि मान्त्रवर्णिकप्रधानदेवतोद्देश एव देवतोद्देशपदार्थः तदा स्वाहाकारसूक्तवाकादिष्विवाग्न्यादिदेवतानामेव देवतात्वापत्तिः। अग्निस्विष्टकृन्मात्रदेवतोद्देशस्यैव तद्यागघटितत्वे इष्टदेवताप्रकाशकत्वहानिरिति महत्सङ्कटम्। अतः याज्ञिकाचारात् अद्यावधि तथैवानुष्ठानात् स्विष्टकृद्यागे अग्नये स्विष्टकृत इदं न ममेति त्यागसमानाधिकरण एव देवतोद्देशः स्विष्टकृद्यागघटित इत्येवं वक्तव्यम्। तेनैव न्यायेनान्यत्रापि तस्यैव देवतोद्देशपदार्थत्वमस्तु तदङ्गभूतो मन्त्रः परं उद्देशांशवत् प्रधानदेवतास्मारकोऽस्त्विति अभिप्रायेणैव मन्त्रेण वोद्देशांशेन वेति **पूज्यपादोक्तिरिति** भावः।

**ननु** यन्मते मन्त्रान्तर्गत एव देवतोद्देशस्तन्मते मन्त्राणां स्मारकत्वेन तदन्तर्गतदेवतोद्देशस्य स्मारकत्वेन दृष्टार्थत्वात् पशुयागीयदेवतास्मरणवत् स्वदेवतास्मरणमपि पशुपुरोडाशीयदेवतोद्देशेन क्रियत एवेति तेनैव न्यायेनाग्नेयादिदेवतोद्देशस्यापि तथात्वात् कुतः पशुपुरोडाशयाग एवाश्रयिकर्मत्वव्यवहारः। त्यागकालीनचतुर्थ्यन्तपदोच्चारणस्य देवतोद्देशत्वमतेऽपि पदार्थोपस्थितिविधया प्रधानदेवतास्मरणवत् स्वीयदेवतास्मरणमपि दुर्निवारमेव। ततश्चोद्देशांशस्यादृष्टार्थत्वोक्तिः

**देवताः**, उद्देशांशस्य स्विष्टकृद्देवताकत्वात्, **पिष्टलेपहोमादौ प्रक्षेपेण तदीयं द्रव्यमेव। सर्वत्र प्रमाणं तत्र तत्रोक्तं, वक्ष्यते च। न च तस्य पदार्थैकदेशत्वान्निष्प्रयोजनत्वेऽपि न क्षतिः, विहितपदार्थान्यथाऽनुपपत्त्या तदवयवानामप्यर्थाद्विहितत्वेन प्रयोजनाकाङ्क्षोपपत्तेः। अतस्सोऽप्यदृष्टार्थ एव सन् फलवत्प्रक्षेपाद्यङ्गं तत्संस्कार्यद्रव्याद्यङ्गमेव वेति तत्संस्कार्यद्रव्यदेवतादावेव प्रोक्षणादिवददृष्टं जनयतीति सन्निपत्योपकारकस्तत्प्रयुक्तश्चेति प्राप्ते—**

---

व्याहन्यते। न च पशुयागीयदेवतास्मरणं नाग्नीषोमत्वेन रूपेण ; किंतु पशुयागानुष्ठानकाले प्रागनुभूतदेवतात्वेन रूपेण। स्वस्वदेवतागतं देवतात्वं तु अधुनैवानुभूयत इति न प्रागनुभूतत्वं, येन तत्स्मारकत्वं स्यादिति वाच्यं ; यक्ष्यमाणदेवतासंस्कारे स्वाहाकारयागे प्रयोगावधारणकालेऽन्वाधानकाले वाऽनुभूतानां स्मरणवदिहापि तदुपपत्तेरिति चेत्। अत्रोच्यते।

**सत्यं**, देवतोद्देशेन स्मरणं जायते तथाप्युच्चारणस्य देवतात्वस्वरूपघटकत्वात् देवतात्वस्य च दृष्टद्वारा द्रव्यादिवदङ्गत्वाभावेनादृष्टविधयैव द्रव्यत्यागाङ्गत्वं सर्वेषां निर्विवादमेव। अत एव देवतांशे न प्रतिनिधिः। अतश्चोच्चारणेन मन्त्रेण वा स्मृताया देवतायास्समानाभिधानश्रुत्या तत्तद्द्रव्यत्यागाङ्गत्वमदृष्टविधयैवेत्यभिप्रेत्योद्देशांशस्यादृष्टार्थत्वोक्तिः **पूज्यपादानाम्**। न च तर्हि पशुपुरोडाशीयदेवतोद्देशस्य समानाभिधानश्रुत्या अभिक्रमणस्य प्रयाजाङ्गत्ववत् स्वद्रव्यत्यागाङ्गत्वस्यैवापत्त्या न दुर्बलेन प्रमाणेन प्रकरणेन पशुयागाङ्गत्वं स्यादिति वाच्यम्। देवतोद्देशविशिष्टद्रव्यत्यागरूपस्य पशुपुरोडाशयागस्य समुदितस्यैव प्रकरणादङ्गत्वेऽवधारिते पश्चात् केनचिदंशेन दृष्टद्वारा केनचिददृष्टद्वारेति कल्पने केवलदेवतोद्देशस्य प्रधानयागाङ्गत्वाकल्पनात् समानाभिधानश्रुत्यवगतस्वद्रव्यत्यागाङ्गत्वाविरोधोपपत्तेः। अत एवाग्नेयादियागीयदेवतोद्देशस्य स्मारकत्वेपि परकीयदेवतास्मारकत्वाभावमात्रेणैवाश्रयिकर्मत्वाभावव्यवहारः। आश्रयिकर्मत्वलक्षणे मूले परकीयत्वेन द्रव्यदेवतानिवेशात्। अतो न काचनानुपपत्तिः। स्विष्टकृद्यागस्योद्देशांशेनेष्टदेवतास्मारकत्ववादिनः **पार्थसारथेर्मतनिरासायाह—उद्देशांशस्य स्विष्टकृद्देवताकत्वादिति। यद्यपि** शेषात् स्विष्टकृते समवद्यति, उत्तरार्धात् स्विष्टकृते समवद्यतीत्यादिवचनेषु स्विष्टकृन्मात्रस्यैव देवतात्वं पात्नीवतं गृह्णातीत्यत्र केवलपत्नीवत इव प्रतीयते तत्र स्विष्टकृच्छब्दस्य योगरूढत्वपक्षे पङ्कजपदात् कमलपदासमभिव्याहृतादपि कमलबोधस्येव विनाप्यग्निशब्दं तस्योपस्थितेः। केवलयौगिकत्वपक्षे तु विशेष्यापेक्षायां येयजामहे अग्निंस्विष्टकृतं अग्नेस्स्विष्टकृतोहमित्यादिमन्त्रेषु अग्नेः संकीर्तनाद्यद्यपि अग्निर्विशेष्यमस्तु; तावतापि त्यागकाले विधिगतस्विष्टकृच्छब्दोच्चारणमेव प्राप्नोति, तथापि **तैत्तिरीयशाखायां** यदग्नये स्विष्टकृते समवद्यतीत्युत्पत्तिवाक्याच्चतुर्थीद्वयबलेनाग्नीवरुणौ स्विष्टकृतौ यजतीत्यत्रेवोभयोरपि देवतात्वात्

**विशेष्यतया प्रतीतस्य त्यागांशस्य प्रक्षेपाद्यङ्गत्वे प्रमाणाभावात्, देवतादेश्च दृष्टमात्रापेक्षत्वेनादृष्टोपकारानपेक्षत्वात् प्रकरणात्त्यागांशस्यारादुपकारकत्वमेव प्रयाजादिवत्। तत्र त्वेतावान् विशेषः, यत् परप्रयुक्तद्रव्यदेवतोपजीवि तत् न परप्रयुक्तद्यभावे स्वातन्त्र्येण तत्तद्द्रव्यदेवताक्षेपकत्वम्। अत एवैककपालस्य सर्वहोमे** स्विष्टकृति त्यागस्य लोप एव, **स्वोपकारकद्रव्यस्य नाशादिनिमित्ताभावेनाज्येनापि समापनायोगात्। चयनादावयागे**

---

अग्नये स्विष्टकृत इदं न ममेति याज्ञिकानां त्यागानुष्ठाने न विरोधः। **पूज्यपादानामग्न्यादिप्रधान**देवतास्मारकत्वभङ्गतात्पर्यिकैव केवलस्विष्टकृद्देवताकत्वोक्तिः न त्वग्निदेवताकत्वनिरासतात्पर्यिका। अत एव अपूर्वाया एवाग्निस्विष्टकृद्देवताया विधानादित्युक्तं **दशमचतुर्थचरणे पूज्यपादैः**। सोप्यग्निः कर्मकार्यादित्यलत्यसूत्रान्तरे भाष्यकारलिखितात "देवा वै स्विष्टकृतमब्रुवन् हव्यं नोवहेति सोब्रवीत् वरं वृणै भागो मेऽस्त्विति वृणीष्वेत्यब्रुवन् सोब्रवीदुत्तरार्धादेव मह्यं सकृत्सकृदवद्यति" इत्यर्थवादात सुष्ठु देवानामिष्टं हव्यवहनरूपङ्करोतीति व्युत्पत्त्या हव्यवहनकर्ता आहवनीयरूप एवान्नाद्येन देवा अग्निमुपामन्त्रयन्तेति तैत्तिरीयशाखापठितादर्थवादादन्नादरूपाहावनीयस्यैव प्रतीतेः। **एतेन** सुष्ठु इष्टं यागं कृतवानिति व्युत्पत्त्या स्विष्टकृन्मात्रस्य देवतात्वे स्विष्टकृच्छब्देन सर्वासामेव प्रधानदेवतानां क्रोडीकारात् अग्निविशिष्टस्विष्टकृद्देवताकत्वे वा आग्नेयाग्नेरेवाभिधानात् भवत्येव प्रधानदेवतास्मारकत्वमुद्देशांशेनेत्ययास्तं, प्रधानदेवतापेक्षया विजातीय-स्यैवाग्नेः प्रयोगावधारणकाले निश्चितस्यैव देवतात्वादिति दिक्। **स्विष्टकृति त्यागस्य लोप एवेति। वस्तुतस्तू**त्तरार्धाभावे स्वातंत्र्येणोत्तरार्धाक्षेपकत्वाभावेपि अनियतद्रव्याक्षेपप्रतिबन्धे प्रमाणाभावात् न गुणभूतोत्तरार्धानुरोधेन प्रधानभूतत्यागस्य लोपो युक्तः। अत एवाक्षाभ्यंजनतुषोपवापादीनां पद्पांसुपुरोडाशकपालाभावेनैव लोपो वक्ष्यते। किं तु सदृशप्रतिनिधिन्यायेन लोकसिद्धपुरोडाशोत्तरार्धेनाथवा ध्रौवाज्येन स्विष्टकृद्यागस्संपादनीय एव। न चैतादृशविषये ध्रौवाज्यप्राप्तौ न्यायेन हविर्नाशादिनिमित्तेष्वपि तत्प्राप्तेर्यस्य सर्वाणीति वचनवैयर्थ्यं स्वप्रयुक्तद्रव्योपजीविषु द्रव्यादिनाशे पुनर्द्रव्यान्तरोत्पत्तिप्रसक्तिनियमार्थत्वेनाज्यविधायकतया सार्थक्योपपत्तेः परप्रयुक्तद्रव्योपजीविषु तु हविरन्तरोत्पत्तिप्रसक्त्यभावेनैतद्विध्यप्रवृत्तावपि स्विष्टकृद्यागस्य परप्रयुक्तद्रव्यस्य स्वरूपेणायोग्यतया अभावे द्रव्यापेक्षिणो ध्रौवाज्यं वचनं विनैव प्रवर्तत इति न बाधकम्। यदा तु आज्यनियमवन्निर्दिष्टद्रव्यकेषु यदा ध्रौवाज्यं तद्धविनाशादिनिमित्त एवेत्यपि नियम इत्यनुत्पन्नद्रव्यकेन ध्रौवाज्यप्राप्तिरिति विभाव्यते तदा अस्तु लौकिकेनैवाज्येन प्रधानभूतत्यागांशसंपादनमिति न काचित् क्षतिः। न चात्र प्रक्षेपस्य संस्कारकत्वात् संस्कार्योत्तरार्धाभावे सर्वथा लोपापत्त्या तादृशस्थले ध्रौवाज्यस्य प्रक्षेपानापत्तिः प्रक्षेपस्य त्यागसंबन्धिद्रव्यमात्रप्रतिपत्त्यर्थ-

वाचनिकप्रयाजादिविनियोगेऽपि च न स्वाहाकारयागः। प्रकृतौ तु द्रव्यनाशे "यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैता देवताः परिसङ्ख्याय यजेत" इति वचनादाज्येन समापनम्। सन्निपत्योपकारकत्वे तु संस्कार्याभावादिडावल्लोप एवेति विशेषः ॥ ७ ॥

---

## (८)—अर्थे समवैषम्यमतो द्रव्यकर्मणाम् ॥ २१ ॥

एवं तावत्क्रत्वर्थपुरुषार्थविचारद्वारेण प्रयोजकत्वं चिन्तितम्। इदानीं तु साक्षादेव तच्चिन्त्यते। तत्सिद्ध्यर्थस्तु काचित्कोऽङ्गाङ्गिभावविचार इति सुखग्रहणार्थं प्रतिज्ञामात्रमिदम् ॥ ८ ॥

---

## (९)—एकनिष्पत्तेस्सर्वं समं स्यात् ॥ २२ ॥ संसर्गरसनिष्पत्तेरामिक्षा वा प्रधानं स्यात् ॥ २३ ॥ मुख्यशब्दाभिसंस्तवाच्च ॥ २४ ॥

चातुर्मास्येषु प्रथमे पर्वणि "तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्" इति श्रुतम्। तत्र दध्यानयनस्य आमिक्षा वाजिनं चेत्युभयं प्रयोजकं उतामिक्षैवेति चिन्तायां—दध्यानयनवाक्ये तावत् तप्तपयोऽधिकरणकदध्यानयनमात्रं श्रुतं, न तु पयसो दध्नो वा प्राधान्यं, सप्तम्या प्राधान्यानभिधानात्। तथात्वे उद्देश्यविशेषणत्वेन तापस्याविवक्षापत्तेश्च।

---

त्वेन त्यागगतद्रव्यनिरूपितप्रयोजकत्वाप्रयोजकत्वयोरौदासीन्यात् दैवात् प्रधानप्रयुक्तद्रव्यलाभे तत्संस्कारकत्वेपि तदभावे त्यागसंबन्धिद्रव्यसंस्कारार्थमनुष्ठानावश्यकत्वात्। आवश्यकं चेदमाज्येन समापनं सिद्धान्तेऽपि। अत एव लोहितनिरसनस्य यागत्वमते लोहितनाशे आज्येन त्यागांशकरणम् लोहितस्य स्वरूपेणाभावे येन केन केनचित् द्रव्येण त्यागांशसमापनं स्वयमेव वक्ष्यते तदधिकरणे। अतः सर्वथा न लोपः। एवमेव वाजिनयागे विज्ञेयमिति युक्तं भाति।

---

॥ एकनिष्पत्तेः ॥

अत्र तंत्ररत्नकाराभिप्रायविदस्तु आनयत्यादयो धातवः यथा नित्यं सकर्मकाः तथा नित्यद्विकर्मका इति द्विकर्मकत्वं धातुधर्मः, तत्र यत्राजां ग्रामं नयतीत्यादौ द्वितीयान्तद्वय-

न चानयतेर्द्विकर्मत्वात् पयसो व्याप्यमानत्वेन दध्यपेक्षयाऽपि प्राधान्यावगतिः। द्विकर्मकधातुस्थलेहि अधिकरणत्वादिकारकान्तराविवक्षायां कर्मकारकसंबन्धमात्रविव-

---

प्रयोगस्तत्र ग्रामङ्गमयति चैत्रो मैत्रमित्यादिवत् संबन्धानुकूलप्राप्तिलक्षणव्यापारानुकूलो व्यापारो धात्वर्थः। तत्र प्राप्तिजन्यसंबन्धाश्रयत्वमादाय ग्रामस्य प्राप्त्याश्रयत्वमादायाजायाः कर्मत्वम्। एवमेव त्यजनोपसर्जनत्याजनादिव्यापारवाचिदुह्यादिधात्वर्थयोगेपि ज्ञेयम्। तथा च क्रियाजन्य-फलशालित्वरूपकर्मत्वस्योभयत्र सत्वात् तत्तद्व्यापाराश्रयनिरूपितप्राधान्यमुभयोरपि। यत्र तु सकर्मकत्वानुरोधेन क्रियाजन्यफलशालित्वे कर्मत्वे विद्यमानेपि ग्रामे गच्छति नरके पतित इत्यादौ अधिकरणत्वविवक्षा, तत्र सप्तमीप्राप्तावपि न कर्मत्वहानिरिति द्विकर्मत्वं स्थिरमेव। नहि द्वितीयान्तपदप्रयोग एव कर्मत्वप्रतीतिः कर्माख्याते ग्रामादीनां तदनापत्तेः। न चाकथितं चेति सूत्रवैयर्थ्यं; अपादानत्वविवक्षायां पञ्चम्यादिविभक्तिवत् संबन्धसामान्यविवक्षायां षष्ठीप्राप्तिनिवारणार्थत्वेन सार्थक्यात्। अतश्च प्रकृते पयसि सप्तमीश्रवणेऽपि द्विकर्मकत्वापत्तेः व्याप्यव्याप्यस्य सुतरां व्याप्यत्वमिति न्यायेन क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीत्यत्र मैत्रावरुण-स्येव दध्यपेक्षया पयसः प्राधान्यात्। तस्यैव प्रधानपरामर्शकसेति तच्छब्देन परामर्शादामि-क्षोद्देशेन दध्यानयनविधानात् न वाजिनं प्रयोजकमिति पूर्वपक्षं खण्डयन्ति। तदनूद्य दूषयति—**न चेत्यादिना।** अयंभावः। यथैव कचित् गमयतीत्यादौ व्यापारभेदविवक्षया द्विकर्मकत्वेऽपि न गच्छतीत्यादावपि तत, द्वितीयकर्मण आकांक्षाभावात्, एवमजां ग्रामं नयतीत्यादौ कर्मद्वय-सत्वेपि न सर्वत्र तस्या द्विकर्मकत्वं गान्दोग्धि अजां नयतीत्यादौ निराकांक्षत्वस्यानुभूयमान-त्वात्। प्रत्युत अजां नयति कुत्र गान्दोग्धि कस्मै इत्येवाकांक्षोदेतीति ग्रामे पयसे इत्येव सप्तम्यन्तचतुर्थ्यन्तपदयोरन्वय उचितः। **एतेन** द्विकर्मकत्वं धातुधर्म इत्यपास्तम्। तथा च दध्यानयति कुत्रेत्याकांक्षायां पयसीत्यधिकरणत्वेनैवान्वेतीति न तस्य क्रियाजन्य-फलशालित्वं, तथात्वे परत्वात् कर्मसंज्ञया द्वितीयाया एवापत्तौ सप्तम्यनापत्तेः। नहि कर्माख्याते ग्रामस्य क्रियाजन्यफलशालित्वेन कर्मणः प्रथमान्तत्वमात्रेण कर्तृत्वं केनाप्यङ्गीक्रियते। न वा तत्र कर्मत्वस्य प्रथमार्थत्ववत् लक्षणया सप्तम्यर्थत्वं प्रकृते वक्तुं शक्यं मुख्यार्थसंभवे लक्षणायां प्रमाणाभावात्। अतो न द्विकर्मत्वेन क्रियाव्याप्यमानत्वेन पयसः प्राधान्यम्। अकथित-सूत्रविहितकर्मसंज्ञाप्रयुक्तः पारिभाषिकः परं द्विकर्मकत्वव्यवहारः नयत्यादीनां तावतापि यदि द्वितीया भवेत्; तदापि संबन्धसामान्यबोधकषष्ठ्यपवादिका सा संबन्धमात्रमेवाभिदध्यात्, न तु क्रियाव्याप्यमानत्वं तद्गतं प्राधान्यं वा। वस्तुतस्तु अकथितसूत्रस्य प्रवृत्तिरेव नास्तीत्याह—

क्षायां च सम्बन्धसामान्ये षष्ठीप्राप्तौ "अकथितं च" इति कर्मसंज्ञाकरणात् द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्, प्रकृते सप्तमीश्रवणेनाधिकरणत्वविवक्षाऽवगतेर्द्वितीयकर्मप्रसक्त्यभावाच्च ।

दध्नस्तूपयोगाभावादेव सक्तुवन्न प्राधान्यावगतिः । न ह्यामिक्षा नाम दधिपयोरूपा रसघनीभावादिधर्मभेदेनार्थान्तरत्वात् । "तस्यै शृतं तस्यै दधि तस्या आमिक्षा तस्यै वाजिनम्" इति भेदेन व्यपदेशाच्च । "गोपयसोर्यत्" इति विकारवाचियत्प्रत्ययान्तपयस्याशब्दपर्यायत्वाच्च । "जुषन्तां युज्यं पयः" इति तु धान्यशब्दवद्विकारपरम् । अतश्च दध्यानयनस्य स्ववाक्ये उद्देश्याभावात्सामर्थ्येन दधिसंसृष्टपयोजन्यामिक्षार्थत्वाङ्गीकारे च जन्यत्वाविशेषेण वाजिनार्थत्वस्याप्यवगतेरुभयं प्रयोजकमिति प्राप्ते—

"सा वैश्वदेवी" इति सर्वनाम्नः प्रकृतपरामर्शित्वात्पूर्ववाक्ये यत्प्राधान्येन निर्दिष्टं तदामिक्षेत्यवधार्यते न त्वर्थान्तरम् । रसश्च मधुराम्लरूपस्तयोरेवावधार्यत इति न ततोऽप्यर्थान्तरम् । घनीभावस्तु पीयूषादिवदभेदेऽप्युपपन्न एव । पृथङ्निर्देशोऽप्यवस्थान्तरात् । विकारार्थकयत्प्रत्ययस्मृतिरपि तच्छब्दानुरोधेनावस्थापरैव । तस्मान्नामिक्षाऽर्थान्तरं, अपि तु दधि पयो वा, तत्रापि विशेषस्त्ववग्रमे अतिदेशविशेषसिद्ध्यर्थं

---

प्रकृत इति । धान्यशब्दवदिति । सतुषावस्थावाचकोऽपि धान्यशब्दः तद्विकारत्वेन पेषणकाले तण्डुलेषु प्रयुज्यते धान्यमसि धिनुहीति मन्त्रे । तद्वदिहापीति भावः । अवधार्यत इति । एतावता च नेदमामिक्षापदशक्तिग्राहकमात्रमिदं वचनं; तस्य सद्यस्कालीनातञ्चनजन्यजलासंपृष्टघनीभूते पयसि व्यवहारादेव सिद्धेः । किंतु तदातञ्चनं क्वचित् काञ्जिकादिनापि भवति, क्वचित् दध्नापि भवति । तत्र काञ्चिकाजन्यामिक्षाव्यावृत्तये तप्तपयोधिकरणकदधिजन्यामिक्षाद्रव्यकविश्वेदेवदेवताकयागविधानमात्रमेव क्रियते । तदर्थमेव पयसो वा दध्नो वा सेति तच्छब्देनाभेदो बोध्यत इत्येव तात्पर्यार्थः ।

यद्यपि द्वितीयया दध्नः प्राधान्यं पयसश्च सप्तम्या गुणत्वमिति तच्छब्देन दध्येव परामृष्टुमुचितं, तथाप्यम्लांतरेणाप्यामिक्षासंपत्तेः लोकव्यवहारात् पय एवामिक्षा । दध्नः स्वल्पावयवसंसर्गेऽपि बहुतरावयवसंबन्धमादाय व्यञ्जनसंसृष्टे शाके शाकपदप्रयोग इव पयश्शब्दव्यवहार एव प्रायो दृश्यत इति । अत एव जुषन्तां युज्यं पय इति मन्त्रवर्णे पयश्शब्दप्रयोगादपि पय एवामिक्षा । तथा चामिक्षात्वेन तस्यैव यागे विनियोगात् अगारे गावो वास्यन्तामितिवत् सप्तम्या संस्कार्यत्वमेवोच्यते । द्वितीयया च सक्तुन्यायेन तृतीयार्थ उच्यत इत्येवमष्टमाध्यायद्वितीयपादसिद्ध-

**निरूपयिष्यते**। तत्सिद्धं **स्ववाक्य एवामिक्षारूपोद्देश्यसम्बन्धित्वावगतेर्दध्यानयनं तत्प्रयुक्तमेव। न तु वाजिनप्रयुक्तं, तस्य तच्छब्दाद्यभावेनार्थान्तरत्वप्रतीतेः, तज्जन्यत्वेऽपि शेषित्वानवगमात्। अतश्च तस्यानुनिष्पन्नत्वात् तद्यागस्यानिष्पन्नप्रतिपत्तित्वावगतेस्तदभावेऽपि च परप्रयुक्तदध्यानयनोपजीवित्वावगतेर्न तत्प्रयोजकत्वं वाजिनस्य कल्पनीयं गौरवप्रसङ्गात्**॥

**प्रयोजनं पूर्वपक्षे वाजिनयागस्यार्थकर्मत्वेन** समप्राधान्यापत्ते**रामिक्षायागविकारेऽनतिदेशः। सिद्धान्ते त्वनुनिष्पन्नप्रतिपत्तित्वेनामिक्षायागाङ्गत्वात्तद्विकारेऽतिदेशः।**

**सोमेश्वरस्य तु सिद्धान्तेऽपि वाजिनयागेऽर्थकर्मत्वं वदतः आमिक्षायागाङ्गत्वानापत्तेस्तद्विकारेऽतिदेशो न सिद्ध्येत्। "अष्टौ हवींषि" इत्यस्य च विनिगमनाविरहेणावयुत्यानुवादत्वस्य तन्मते आपत्तेश्च।**

---

विशेषनिर्णयं विनापि प्रधानपरामर्शकतच्छब्दबलेनान्यतरस्य यस्मिन् पयसि दध्यानयति तस्मै पयसि यद्दध्यानयति इत्युभयथाप्युद्देश्यताबोधकयत्तद्योगस्य संभवात् यत्रैव यच्छब्दयोगः तदुद्देशेन यत्किंचिद्विधीयते तदुद्देश्याभेदः सर्वनाम्नाऽऽमिक्षाया बोध्यत इत्यामिक्षाया उद्देश्यत्वं स्ववाक्ये, न तु वाजिनस्येति अप्रयोजकं वाजिनमित्येतदधिकरणसिद्धान्तस्य सिद्धत्वात् पयोरूपत्वमात्रनिर्णये अनास्थां प्रदर्श्य सिद्धान्तमुपसंहरति—**तत्सिद्धमिति। आमिक्षानाश इवेति।** यद्यप्यामिक्षानाशे सिद्धान्ते आज्येनैव यागः, तथा वाजिननाशे पूर्वपक्षेऽपि तेनैव याग इति नामिक्षायै दध्यानयनप्रयोजनकत्वहेतुना दध्यानयनोत्पत्तिरूपो विशेषो दृश्यते। अत **आमिक्षानाश इवेति** व्यतिरेकदृष्टान्तानुपपत्तिः, तथापि न्यायेन तावत् आमिक्षायां तत्प्रयोजकत्वं प्रसक्तं यथा तथा वाजिनस्यापि तन्न कल्पनीयम्। आज्येन समापनं तु वचनेन भवतु नामेत्यभिप्रायेणैतद्बोध्यम्। **समप्राधान्यापत्तेरिति।** वस्तुतस्तु अर्थकर्मत्वपक्षेपि समप्राधान्यापादने प्रमाणाभावः। न च **फलवत्सन्निधावफलं तदङ्गमिति न्याये** विद्यमानेऽपि प्रकृते पर्वचतुष्टयरूपचातुर्मास्यसमुदायावच्छिन्नतत्तत्समुदायिनामेव फलसंबन्धेन वैश्वदेवपर्वान्तर्गताग्नेयाद्यष्टयागानां पृथक् फलसंबन्धाभावात् न फलवत्त्वं येन तदङ्गत्वं प्रकरणाद्वाजिनयागस्य स्यात्। अतोऽविशेषात् सर्वेषामेव प्राधान्यमापद्यत एवेति वाच्यम्। न्यायेन विलंबितकालसंबन्धवत उपांशुयागस्य दर्शपूर्णपदाविषयस्याङ्गत्वे प्राप्तेऽपि "शिरोवा एतद्यज्ञस्य क्रियते यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीय" इत्यादिलिङ्गदर्शनदृष्टप्रधानप्रायपाठेन प्राधान्यं तथैवाष्टौ हवींषीति लिङ्गदर्शनात् अष्टानामेव प्राधान्योपपत्तेः। न च **भट्टसोमेश्वरमतोक्तं** अवयुत्यानुवादत्वेन विनिगमनाविरहापादनं युक्तं।

**यत्तु भाष्यकारादिभिः पूर्वपक्षे वाजिननाशे आमिक्षानाश इव पुनर्दध्यानयनेन वाजिनोत्पत्तिः, सिद्धान्ते तु आज्येन समापनमिति प्रयोजनमुक्तम्, तत् षष्ठे हविर्नाशादिनिमित्ते आज्येन समापनस्य विधिबलेन वक्ष्यमाणत्वेन पूर्वपक्षेऽपि तुल्यत्वादुपेक्षितम् ॥ ९ ॥**

---

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति तैत्तिरीयशाखापठितवाक्येषु आनन्तर्येण तद्धितोपात्तद्रव्यदेवताकत्वनिर्वपतिचोदनाचोदितत्वसादृश्यवतामेव विधानप्रतीत्या वाजिनयागस्य वैलक्षण्यप्रतीतेः । अतः समप्राधान्यापादनमसंभव्येव । किं चानुनिष्पन्नप्रतिपत्तित्वं वाजिनयागस्येति सिद्धान्तकरणमप्ययुक्तं येन तद्वाराप्यामिक्षायागाङ्गत्वमुच्येत । तथा हि—जलासंस्पृष्टघनीभूतपयोरूपामिक्षाया एव यागसाधनत्वे नैव तत्स्वरूपानन्तर्भूतस्य पयस्संसृष्टजलस्य वाजिनस्यावशिष्टत्वाभावे किं केन कार्यमित्याकांक्षोदेति येन प्रतिपत्तिर्विधीयते ।

संस्कारो हि द्विविधः उपयुक्तसंस्कार उपयोक्ष्यमाणसंस्कारो वा, नहि वाजिनस्य केवलामिक्षासाध्ये उपयोगोऽस्ति। उपयोक्ष्यमाणत्वं तु असंभावितमेव। न च शकृल्लोहितन्यायेनानुनिष्पन्नत्वमात्रेण प्रतिपत्त्यपेक्षावत्वं वाच्यं; तत्र हृदयादिप्रकृतिकत्वेन लोहितशकृदस्थ्यादिरूपावयवविशिष्टपशुरूपावयविनः प्रत्यक्षेण विधिना बोधितयागसाधनत्वस्य निर्वाहाय हृदयादिभिर्यागे कृतेऽपि अवशिष्टावयवानां किं प्रयोजनमित्याकाङ्क्षाशामकतत्तत्प्रतिपत्तिविधिभिरपूर्वोपयोगस्य बोधनोपपत्तेः ; प्रकृते तु वाजिनस्य यागसाधनतायां केनापि रूपेणाप्रवेशात् दध्यानयनवाक्येन च जलासंसृष्टोत्पादकाम्लान्तरनिवृत्तिमात्रकरणेन यागसाधनताया अबोधनादिति वैषम्यम्। नाप्युत्तरार्धादिशब्दवत् वाजिनशब्दस्यामिक्षानुनिष्पन्नजलमात्रवाचित्वेन ससंबन्धिकत्वं, आतञ्चनजन्यपयोऽपादानकविभागाश्रयीभूतपयोवयवजलमात्रवाचित्वस्यैव जाघनीशब्दवदङ्गीकारात् । तथा च पशौ स्वानुनिष्पन्नसन्निहितजाघनीसत्वे असन्निहितग्रहणे प्रमाणाभावात् तथैव पत्नीसंयाजाः । नैतावता तत्प्रतिपत्त्यर्थत्वं पत्नीसंयाजानामप्राकृतकार्यकारितापत्तेः। तथैवामिक्षानुनिष्पन्नवाजिनसत्वे तेनैव वाजिनयागः वाजिनानुत्पत्तौ तु अप्रयोजकत्वेन पुनर्दध्यानयनोत्पत्त्यसंभवेऽपि लोकसिद्धेनैव वाजिनेन यागःकार्यो न तु लोपः सिद्धान्ते। पूर्वपक्षे तु पुनर्दध्यानयनोत्पत्तिरिति प्रयोजनस्य लाभादर्थकर्मत्वमेवेति भट्टसोमेश्वरमतमेव युक्तं भाति।

अत एव पूज्यपादैस्तदुक्तमर्थकर्मत्वमप्रदूष्यैव समप्राधान्यापादनमात्रं कृतम् । एवं स्थितेऽपि यत्पूज्यपादैः अनुनिष्पन्नप्रतिपत्तित्वेनामिक्षायागाङ्गत्वमुक्तं तेषामयमाशयः । यद्यपि

## (१०)—पदकर्माप्रयोजकं नयनस्य परार्थत्वात् ॥ २५ ॥

---

पयसस्साक्षात्साधनताबोधको विधिर्न दृश्यते तथापि दध्यानयनवाक्ये पयसस्संस्कार्यत्वान्यथानुपपत्त्या यागसाधनत्वङ्कल्प्यते । अन्यथा जलावयवसंसृष्टपयसः अग्रे उपयोगाभावात् संस्कार्यत्वानुपपत्तेः । तत्र चामिक्षायाः पुरोडाशादिवत् साक्षाद्यागसाधनत्वेऽपि व्रीहीणामिव प्रकृतित्वेन विधानं नानुपपन्नमिति जलावयवगतसाधनतानिर्वाहायास्त्येवावशिष्टत्वेन प्रतिपत्त्यपेक्षेति युक्तमेव प्रतिपत्तिकर्मत्वमिति ।

किं तर्हि पूर्वपक्षेऽर्थकर्मत्वपक्षेप्यङ्गत्वेऽधिकरणप्रयोजनम् । उच्यते । यत्रात्यन्ततापेन जलनाशः तत्र स्वरूपेण वाजिनानुत्पत्तौ पुनर्दध्यानयनेन तदुत्पत्तिः । सिद्धान्ते तु संस्कार्याभावात् लोप एव वाजिनयागस्येति पदकर्माधिकरणोपान्त्यग्रन्थे तन्त्ररत्नकृतैव लिखितमिति न कश्चिद्दोषः ।

वस्तुतस्तु वाजिनयागस्य प्रक्षेपांशे वाजिनप्रतिपत्त्यर्थत्वेपि त्यागांशेनादृष्टार्थत्वात् तत्र च द्रव्यस्य गुणत्वात् तदनुरोधेन न मुख्यस्य यागस्य लोपः । किंतु आज्येनानुष्ठानमिति प्रागेवोक्तम् । अत एव तत्रैव तन्त्ररत्ने अगत्या लोपो नैवेति पक्षान्तरमुक्तम् । एतदभिप्रायकमेव वाजिनलोपे पूर्वपक्षे पुनर्दध्यानयनोत्पत्तिः । सिद्धान्ते तु आज्येन समापनमिति अधिकरणप्रयोजनं भाष्यकारोक्तं सङ्गच्छते, हविरयोग्यत्वनिमित्ताज्यसमापनविधेरनुत्पन्ने हविषि अप्रवृत्तेः पूर्वपक्षे आज्येन समापनायोगात् । यत्तु पूज्यपादैरन्ते यत्तु भाष्यकारादिभिरित्यादिना वाजिनलोपे पूर्वपक्षेऽपि आज्येन समापनमापादितं तद्वाजिननाशाभिप्रायम् । भाष्ये नष्ट एव वाजिने तत्प्रयोजनाभिधानात् । यद्यपि भाष्ये वाजिननाशे आज्येन वाजिनयागस्य समापनं सिद्धान्तेनोक्तं; अपि तु पुनर्दध्यानयनोत्पत्तिर्नेत्येव तथापि तात्पर्यगत्या तन्मूले उक्तं द्रष्टव्यमित्यलं विस्तरेण ।

---

### ॥ पदकर्माप्रयोजकम् ॥

यद्यपि तैत्तिरीयशाखायां भाष्ये च षष्ठ्यन्तस्तच्छब्दः षट्पदानुक्रमणवाक्ये न दृश्यते तथापि पदशब्दस्य ससंबन्धिकत्वात् अवश्यं तच्छब्दाध्याहार आवश्यकस्तं विना नैराकाङ्क्षा-

**सोमक्रयार्थमेकहायनीं विधाय क्रयदेशे तन्नयने क्रियमाणे** तस्याः षट्पदान्य**नुनिष्कामति सप्तमं पदं स्फ्येन विलिखेत् हिरण्यमन्तर्धाय पदे जुहोति ततः सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति "यर्हि हविर्धाने प्राची प्रवर्तयेयुः तर्हि तेनाक्षमुपाञ्ज्यात्" इति श्रुतम्। तत्राक्षाभ्यञ्जनमपि क्रयवदेकहायनीनयनस्य प्रयोजकं; जन्यत्ववदङ्गित्वस्याप्युभयत्र समत्वात्। अक्षाभ्यञ्जने हि** तच्छब्देनैव **पदपांसवो निर्दिष्टा इति ते तदङ्गम्। पदस्य चैकहायनीनिरूपितत्वं तस्यास्सप्तमं पदमित्यनुषङ्गात् शाखान्तरवचनाच्चावगतमिति साऽपि तदङ्गम्। अतश्च नीयमानसंस्कारार्थस्य नयनस्याप्युभयार्थत्वादुभयप्रयोज्यत्वम्। न च प्रकरणादेवैकहायनीलाभात्तच्छब्दस्यानुवादकत्वं, प्रकरणप्राप्तेः पूर्वंप्रवृत्त्यङ्गीकारेण प्रयोजकत्वफलकाङ्क्षत्वविध्युपपत्तेः। न च तथाऽपि क्रयप्रयुक्तत्वविशिष्टैकहायन्या एव तच्छब्देन परामर्शात् पुरोडाशकपालन्यायापत्तिः, तथात्वे फलाभावेन तच्छब्दवैयर्थ्यापत्तेः तस्यैकहायनीस्वरूपमात्रपरत्वाङ्गीकारादिति प्राप्ते—**

---

भावादित्यभिप्रायेणाह—**तस्याः षट्पदानीत्यादि**। अत्रापस्तम्बबोधायनादिसूत्रादेव याज्ञिकानामनुष्ठानक्रमो दृश्यते, आदौ षट्पदानुक्रमणसमये एकैकपदे वस्वसि रुद्रासि अदितिरसि इत्यादिमन्त्रविनियोगानन्तरं बृहस्पतिस्त्वेति मन्त्रेण गोस्सप्तमपदस्थपांसुग्रहणं सप्तमपदग्रहणमध्वर्युकर्तृकम्। ततस्समन्त्रकहिरण्यनिधानपुरस्सरं होमः, ततः स्फ्येन लिखनं, ततः पदस्थपांसुग्रहणं, ततोऽध्वर्युणा गृहीतस्य सप्तमपदस्याध्वर्युकर्तृकं यजमानसंप्रदानकदानं, ततो यजमानकर्तृकं पत्नीसंप्रदानकं दानं, तस्यैव पुनस्तस्याः सकाशात् अध्वर्युणा पुनस्तद्गृहीत्वा पदस्य भागत्रयङ्कृत्वा भागद्वयं गार्हपत्त्याहवनीययोः उत्तरतो निक्षिप्यावशिष्टं भागं पुनः पत्नीनिकटे स्थापयेत्। यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपांज्यादिति। एवं स्थिते यदत्र **पूज्यपादानामन्यथाक्रमेण** वाक्यलिखनं तत् तेनाक्षमुपांज्यात् इत्येतावद्भागस्यैवाधिकरणविषयत्वात् प्राचीनवाक्यानां चान्यथाक्रमेण लिखनेपि बाधकाभावात **अनास्थयैवेति** ज्ञेयम्। अत्र होमवाक्ये पदशब्देन पदावच्छिन्नप्रदेश उच्यते। अध्वर्युकर्तृकग्रहणवाक्ये पदस्य तदवच्छिन्नदेशस्यापि ग्रहायोग्यत्वात् पदावच्छिन्नप्रदेशस्थितपांसवो गृह्यन्ते। होमस्सन्निपत्योपकारक आरादुपकारको वेति तु अग्रे निष्कृष्यते। ग्रहणं तु गृह्यमाणपदपांसुसंस्कारकमेवेति विवेकः। **तच्छब्देनैवेति। एतेन** यदत्र सिद्धान्ते **तन्त्ररत्नकृतोक्तं परप्रयुक्तत्वं द्वेधा भवति यस्योत्पत्तिः परप्रयुक्ताधीना यथा** वाजिनोत्पत्तिरामिक्षाप्रयुक्तदध्यानयनाधीना, तत्र तदलाभेऽनुत्पन्नेन तेन यागस्य कर्तुमशक्यत्वात् स्वयं च प्रयुक्तौ शक्त्यभावात् अगत्या लोपो नैव वा। यथा वोपादानं कपालस्य पुरोडाशप्रयुक्तं तत्र चरौ पुरोडाशोपात्तकपालाभावे न पुरोडाशकपालं संपाद्य तुषोपवापः, किंतु येन केनचित्। तत्र पुरोडाशकपालकरणकतुषोपवाप-

**विधिगौरवप्रयोजकशक्तिकल्पनागौरवाभ्यां तच्छब्दस्य पूर्वपरामर्शित्वस्वभावेनोपजीव्यप्रकरणप्राप्तानुवादकत्वावगतेश्चैकहायन्याः क्रयमात्राङ्गत्वावसायात्तदङ्गभूतनयनस्यापि तन्मात्रार्थत्वप्रतीतेरक्षाभ्यञ्जनं पदहोमादिकं वा क्रयप्रयुक्तैकहायनीतन्नयनलाभेन चरितार्थं नैकहायन्यास्तन्नयनस्य वा प्रयोजकम्। अतश्चैकहायन्यां क्रयार्थं नीयमानायां दैवाद्ग्रावणि सप्तमपदपाते अक्षाभ्यञ्जनार्थं पुनर्न तदानयनम्। यथाशक्तिप्रयोगादौ क्रयलोपेऽपि वा नैकहायनीप्रयुक्तिः। अक्षाभ्यञ्जनार्थं तु ये केचित्पांसवो ग्राह्या एव, गुणलोपे मुख्यलोपानुपपत्तेः।** होमस्त्वारादुपकारकत्वाद्ग्रावण्येव। **यथाशक्ति प्रयोगे त्वाहवनीये निरधिकरणक एव वेत्यन्यदेतत्॥ १०॥**

---

लोपः। प्रकृते तु नैकहायनीनयनं पांसूनामुत्पादकं नाप्युपादापकमिति परप्रयुक्तत्वाभावात् अक्षाभ्यंजनस्य प्रयोजकस्य सद्भावात् अगत्या ये केचन पांसवस्संपाद्या इति परप्रयुक्तत्वाभावकथनात् केवलपांसूनामेव साधनत्वमिति **तदपास्तम्।** ग्रहणादिसंस्कारसंस्कृतसप्तपदवृत्तिपांसूनामेव पूर्वप्रकृतानां तच्छब्देन परामर्शात् केवलपांसूनामेकहायनान्यत्वेपि पयोपादानकविभागाश्रयत्वेन विशिष्टशब्दत्वेन दध्यानयनात्प्रागपि पयसा स्वतः सिद्धस्यापि वाजिनरूपजलस्योत्पत्त्यङ्गीकारवत् इहापि सप्तमपदावच्छिन्नत्वेन उत्पत्त्युपपत्तेः। परप्रयुक्तत्वे विद्यमाने चरौ तुषोपवापालोपाय यत्किंचिदुपादानवदिहापि तत्सत्वेपि यत्किंचिद्ग्रहणोपपत्तेः परप्रयुक्तत्वाभावे अग्रहस्य निष्प्रयोजनत्वाच्च। अत एकहायनीसप्तमपदवृत्तिपांसूनामेवाङ्गत्वमित्येव युक्तम्। **होमस्त्वारादुपकारकत्वादिति। वस्तुतस्तु** अध्वर्युकर्तृकसप्तमपदग्रहणानन्तरं तद्देशविधीयमानस्य होमस्य यथैव स्थाण्वाहुतिं जुहोतीति विधीयमाना स्थाण्वाहुतिः स्थाणुसंस्कारद्वारा यूपार्था, उत पशुयागमात्राङ्गमारादुपकारिकेति संदेहे स्थाण्वाहुतिरिति सप्तमीसमासे स्थाणोर्गुणत्वप्रतीत्या संस्कार्यत्वानुपपत्तेः होमेन तस्य प्रतिपत्त्यजननेन प्रयाजशेषन्यायासंभवाच्चारादुपकारिकैव। न हि यूपवियुक्तस्थाणोः कश्चिदुपयोगो दृष्टो येन संस्कार्यत्वं कल्पितमपि निर्वहेत्। अतो यस्मिन् कस्मिंश्चित् स्थाणौ क्रियमाणाऽऽहुतिः पश्वङ्गमिति तद्विकारे खलेवालीविधानेऽपि कर्तव्यैव सेति **पूर्वपक्षं प्रापय्य** यद्यपि स्थाणोर्गुणत्वं **तथापि** प्रयोजनाकांक्षया वैमृधन्यायेनोपस्थितत्वात् तद्वाचकपदान्तरकल्पनया पूर्वोपयुक्तस्थाणुसंस्कारकत्वमेवोचितम्; इष्यते च गुरुधृताया अपि स्रजः पूजादिना संस्कारः शिष्यैः। अतः होमजन्यं स्थाणुनिष्ठमेवादृष्टं स्वाश्रयजन्यवृत्तित्वसंबन्धेन यूपसंस्कारकमिति यूपानुनिष्पन्नस्थाणावेवायं होमो न तु स्थाण्वन्तरप्रयोजकः। एवं सति प्रोक्षणादिवत् अदृष्टविधया सन्निपत्त्योपकारकत्वे संभवति नारादुपकारकत्वकल्पना युक्ता प्रकरणकल्प्यश्रुतिकल्पनायां गौरवात्। अतो यूपानुनिष्पन्नस्थाणोः खलेवाल्यादावभावात् उत्पाद्ययूपाभावाच्च न स्थाण्वाहुतिरिति

सिद्धांतितं दशमे । तथैव पदावच्छिन्नप्रदेशे क्रियमाणस्योपस्थितत्वात् तत्संकारार्थत्वमेव । ततश्च पांसूपयुक्तप्रदेशसंस्कारार्थं तत् स्ववृत्तिपदसंबन्धिपांसुनिष्ठादृष्टोत्पादकमिति प्राग्णि पदपाते पांसूनां संस्कार्याणामभावाद्धोमस्य लोप एव ।

यदा तु क्रयावान्तरप्रकरणे होमविधानात् पांसुसंस्कारकत्वे तद्बाधापत्तिरिति विभाव्यते, तदाऽस्तु स्वसंबन्धिपदावयवसंस्कारद्वारा सोमक्रयणीरूपावयविसंस्कारकत्वम् । युज्यते चावयविस्थाणुसंकारद्वारा यूपरूपावयवसंस्कारवत् पदसस्कारद्वाराऽवयविगोसंस्कारोपि । अत एव 'पृथिव्यास्त्वा मूर्धन्नाजिघर्मि' इति मन्त्रवर्णकल्पितसोमक्रयणीदेवतामादाय याज्ञिकानां सोमक्रयण्या इदं न ममेत्यनुष्ठानमपि मदुक्तार्थे साधकम् । अतश्चावान्तरप्रकरणेन क्रयाङ्गत्वात् प्राग्णि पदपातेऽपि होमोपपत्तेर्यथाशक्तिप्रयोगे क्रयलोपे सर्वथा होमो लुप्यत एवेति ज्ञेयम् । **एवं स्थिते** प्रकरणकल्प्यश्रुतिकल्पने गौरवं, अवांतरप्रकरणबाधं, वाक्योपस्थितिबाधं चाङ्गीकृत्यारादुपकारकतया सोमयागाङ्गत्वात् यथाशक्तिप्रयोगे क्रयलोपे होमोपपादनं **पूज्यपादानां** तत् किमभिप्रायकमिति नैवाहञ्जान इति दिक् । **निरधिकरणक एवेति** । वैधे अधिकरणे नेत्यर्थः । **इत्यन्यदेतदिति** । **अनास्थाबीजं त्विदमवधेयम्** । **यद्यप्याहवनीये** जुहोतीति वाक्येन विजातीयपदहोमातिरिक्तहोमव्यक्तिष्वाहवनीयविधानात् होमस्य पदरूपाधिकरणकत्वाभावेऽपि पदे जुहोतीत्यनेनैव विधानात् पदे अक्रियमाणत्वेपि एकविधिविधेयतावच्छेदकतया सिद्धवैजात्याक्रान्तत्वेन विजातीयपदहोमातिरिक्तत्वाभावात् नोद्देश्यकोटौ निवेश्य इति नाहवनीयप्राप्तिः कथमपि संभवति तथाप्याहवनीयविधौ पदहोमातिरिक्तहोमव्यक्तय उद्देश्याः तथापि यदि तत्र होमत्वं व्यापको धर्म उद्देश्यतावच्छेदकः तर्हि उद्देश्यतावच्छेदकाक्रान्तत्वेनोत्तरहोमेष्विव पदे क्रियमाणहोमेऽपि विकल्पेनाहवनीयः प्रसज्यत इत्यतः तद्धोमोत्पत्तिवाक्येषु विधेयतावच्छेदकतया होमत्वव्याप्या ये धर्मास्सिद्धास्तेऽवच्छेदकाः । तत्र पदहोमे पदस्य विहितत्वेन तद्धर्मस्य वैजात्यस्य नाहवनीयोद्देश्यतावच्छेदकत्वं; ततश्चोद्देश्यतावच्छेदकरूपेणोद्देश्यभाननियमात् पदहोमाद्यवृत्तिधर्मावच्छिन्नव्यक्तिष्वाहवनीयः कार्य इति फलितोऽर्थः । एवं च पदे अक्रियमाणस्य होमस्य पदहोमावृत्तिधर्मः स्वानुकूलकृतिविषयत्वं तद्व्यक्तित्वं वा तदवच्छिन्नव्यक्तित्वस्य विद्यमानत्वेनोद्देश्यकोटौ निवेशात् भवत्येवाहवनीयप्राप्तिः । न चैकेन वाक्येन पदापदहोमयोरेकवैजात्याक्रान्तयोर्विधानात् पदहोमत्वं तत्राप्यस्तीति वाच्यं; पदाधिकरणकहोमव्यक्त्यवृत्ति इति विवक्षणेनापदहोमस्य पदाधिकरणकहोमव्यक्तित्वाभावात् । अतो युक्त एवाहवनीये होमः ।

यदा तु पदाधिकरणहोमव्यक्त्यवृत्तिधर्मावच्छिन्नव्यक्तिरुद्देश्या तथापि तदवृत्तिधर्मो **न स्वानुकूलकृतिविषयत्वं तद्व्यक्तित्वं वा** तस्योद्देश्यप्राप्त्यालोचनवेलायां तत्तदुत्पत्तिवाक्य-

## (११)—अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्निमित्तत्वात्तदर्थो हि विधीयते ॥ २६ ॥

दर्शपूर्णमासयोः "पुरोडाशकपालेन तुषानुपवपति" इति श्रुतम्। तत्र कपालस्य "कपालेषु पुरोडाशं श्रपयति" इति श्रपणे विनियुक्तस्यापि तृतीयया तुषोपवापार्थत्वेनाप्यार्थिकविशेषणविधिना विनियोगादुभयप्रयुक्तत्वम्। न च पुरोडाशार्थकपालत्वेनैव तुषोपवापे विनियोगान्न तुषोपवापप्रयुक्तत्वं, प्रकृतिविकारभावाभावेन तादर्थ्यसमासायोगात्। षष्ठीसमासे च सम्बन्धमात्रावगतेस्तस्य च कपालत्वेनैव विनियोगेऽपि पुरोडाशार्थोपात्तस्यैव प्रसङ्गेन ग्रहणोपपत्तेरनुवादत्वात्। यदि तु प्रसङ्गलक्षणाभावादुपादेयस्थले

---

परामर्शितत्तद्विधिविधेयतावच्छेदकतया सिद्धधर्माणां तत्तद्वैजात्यानामेवोपस्थितत्वेनानुपस्थितत्वात्। अतस्तेषामेव व्याप्यधर्माणामाहवनीयोद्देश्यतावच्छेदकत्वात् एकवैजात्याक्रान्तत्वेनापदहोमस्य न पदहोमावृत्तिधर्मावच्छिन्नत्वमिति नोद्देश्यताकोटिनिवेश इति विभाव्यते तदा नाहवनीयप्राप्तिः किंतु यत्र क्वचिदपि होम इति भावः।

---

### ॥ अर्थाभिधानकर्म ॥

**आर्थिकविशेषणविधिनेति।** ननु विशेषणविधिकल्पना तत्र भवति यत्र धात्वर्थस्याप्राप्त्या करणत्वेनान्वयः यथा सोमेन यजेतेति तत्र सोमविशिष्टयागविशिष्टभावनाविधानात् प्रत्यक्षविधेर्विशिष्टे संक्रान्तेस्सोमयागयोस्संबन्धायावश्यिकी। यत्र तु दध्ना जुहोतीत्यत्र होमभावनायाः प्राप्तत्वेनाविधेयत्वाद्धात्वर्थस्य कर्मत्वेनान्वयमङ्गीकृत्य तदुद्देशेन तृतीयाश्रुत्या दध्नो विनियोगः क्रियते न तत्र सा, विशिष्टविधित्वाभावात्। तदिह प्रकृतेऽपि अवघातेन वितुषीकृततण्डुलानां पिष्टकरणसामर्थ्यादेव तुषोपवापभावनाया अर्थप्राप्तत्वेन तदुद्देशेन केवलं पुरोडाशकपालं तृतीयया विनियुज्यत इति प्रथमतो विशिष्टविधित्वाभावात् न विशेषणविधिकल्पना युक्ता। तत्कार्यस्य तत्सरूपश्रुतविधिनैव कृतत्वादित्यार्थिक विशेषणविधिकल्पना कथं युक्तेति चेन्न; अत्राप्यर्थप्राप्तस्यापि तुषोपवापस्य पुरोडाशप्रथनवदध्वर्युकर्तृकत्वसिद्ध्यर्थं पुनर्विधानेन तुषप्रतिपत्तिरूपसंस्कारार्थत्वेन विशिष्टोपवापविधित्वे बाधकाभावात्। इतरथा पुरोडाशकरणत्वान्यथानुपपत्त्यैवावघातपेषणादीनां प्राप्तत्वेन तत्तद्विधिवैयर्थ्यापत्तेरिति भावः। **प्रसङ्गलक्षणाभावादिति।** इत्थं हि प्रसङ्गलक्षणं द्वादशे करिष्यते। अन्यत्र उपकारलाभप्रयुक्ताङ्गाननुष्ठानम्। तच्च यत्रादृष्टो दृष्टो वा

**प्रकृतग्रहणस्य च** " तानि द्वैधम् " इत्यत्र **निराकृतत्वान्न पुरोडाशकपालनियम इत्याशङ्क्येत, ततोऽस्तु नाम पुरोडाशसम्बन्धविशिष्टस्यैव विधानं, तत्फलं च तद्भिन्नकपालव्यावृत्तिरेव न त्वप्रयोजकत्वमपि, सम्बन्धरूपाङ्गाभावेऽप्यग्निहोत्रहवणीन्यायेन प्रधानभूतकपालबाधोपपत्तेः चर्वादौ तन्नियमाभावरूपस्याप्रयोजकत्वफलस्यासम्भवादिति प्राप्ते—**

**पुरोडाशसम्बन्धस्य प्रमाणान्तरगम्यस्यालोचने तत्प्रयुक्तत्वस्याप्यवगतेर्न पुनस्तुषोपवापविधिरपि तत्प्रयुङ्क्ते। अतो लाघवाद**वघातकालीन**स्तुषोपवापः परप्रयुक्तकपालोपजीवितया न कपालोपादानासादनयोः प्रयोजकः।** निनयनकालीन**स्तु कपालधारणस्य प्रयोजको भवत्येव। उपादानस्य तु सोऽप्यप्रयोजकः।**

**प्रयोजनं चर्वादौ** न कपालनियमः। **अग्निहोत्रहवण्यां तु वक्ष्यते ॥ ११ ॥**

---

उपकार एकत्र संभवति; यथा पशुपुरोडाशे पश्वर्थानुष्ठितप्रयाजादिजन्योपकारलाभे सति पृथक् प्रयाजाननुष्ठानम्। यथा वा पश्वर्थोपात्तगोदोहनजन्यप्रणयनरूपदृष्टप्रयोजनलाभे न चमसोपादानम्। प्रकृते पुरोडाशार्थोपात्तकपालजन्याष्टाकपालपुरोडाशनिष्पत्तिरूपदृष्टप्रयोजनलाभेऽपि तुषोपवापरूपप्रयोजनाय कपालोपादानस्यावश्यकमेवानुष्ठानं दृष्टोपकारस्यैकत्वाभावात्। अथवा यथाऽऽग्नेयार्थानुष्ठितप्रयाजादिजन्योपकारलाभे नाग्नीषोमीयाङ्गानुष्ठाने प्रयाजादीनां प्रसंगः। अगृह्यमाणविशेषत्वेनाग्नेयार्थत्वेन प्रयाजानुष्ठानस्यानिश्चितत्वात्। एवं प्रकृतेप्युपात्तस्य कपालस्य तव मते पुरोडाशार्थत्वनिश्चयाभावेनागृह्यमाणविशेषत्वं कपालत्वेन श्रपणं प्रतीव तुषोपवापं प्रत्यपि विनियोगात्। अतो न प्रसङ्गलक्षणमत्रेति भावः। **तानि द्वैधमित्यत्रेति।** तदधिकरणे हि व्रीहीनवहन्तीत्यादौ व्रीह्यर्थोऽवघातः किं वाऽवघातार्था व्रीहय इति संदेहे अवघातार्थत्वं व्रीहीणां प्रापय्य व्रीह्यर्थत्वं सिद्धान्तितम्। पूर्वपक्षे यागार्थव्रीह्यपेक्षया अवघातार्था भिन्ना व्रीहयः। सिद्धान्ते तु त एवेति प्रयोजनप्रस्तावे निराकृतमिति भावः। **अवघातकालीनतुषोपवाप इति।** यद्यपि पुरोडाशसंबन्धविशिष्टत्वेन विधानपक्षे न दर्शपूर्णमासयोस्तुषोपवापार्थं पृथक्कपालोपादानासादनयोः प्रसक्तिः पूर्वपक्षे, येन तद्व्यतिरेकप्रदर्शनं सिद्धान्ते इदमुच्येत तथापि पूर्वपक्षे प्रागुक्तरीत्या चरौ प्रसक्त्यपेक्षया तद्व्यतिरेकप्रदर्शनपरतयोक्तमिति ध्येयम्। **निनयनकालीनस्त्विति।** सोऽयं तुषोपवापो वाजसनेयिनामाम्नातः। तस्य प्रणीतानिनयनकाले प्रधानयागोत्तरमनुष्ठानात्। यत्र कपाले पुरोडाशसंबन्धस्य भूतत्वात् पुरोडाशार्थं रक्षणस्यानपेक्षितत्वेन पुरोडाशेन न रक्षणं प्रयुज्यत इति परप्रयुक्तत्वालाभात् भवत्येव रक्षणप्रयोजकत्वमिति भावः। **न कपालनियम इति।** कपालेनैव कर्तव्य इति नियमो न, किं तु कदाचित्

कपालेन कदाचिदन्येनेत्येवमनियम इति नार्थः। पुरोडाशनिष्पत्तिरूपोपकाराभावेन तत्पृष्ठभावेन कपालानतिदेशात् पक्षेपि कपालाप्राप्तेः। किं तु प्रकृतिप्राप्तकपालनियमो नेत्यन्येनैव सर्वथा तुषोपवाप इत्यर्थः। ननु प्रकृतावपि सामर्थ्यात् हस्तस्यैव तुषोपवापे करणत्वेन प्राप्तेः पुरोडाशकपालस्य पक्षेऽपि प्राप्त्यभावेन नियमविधित्वाप्रसक्त्या जुह्वा जुहोतीतिवत् अपूर्वविधित्वमेव तुषोपवापविधेरिति न नियमस्य शास्त्रार्थत्वं, येन चरौ नास्तीत्युच्येतेति **चेन्न**; पूर्वपक्षे तुषोपवापरूपोपकारस्यापि प्रयोजकस्य सत्त्वेनातिदेशात् पुरोडाशकपालमेवायातीत्येवं नियमरूपप्रयोजनाभावकथनमात्रे तात्पर्येण पुरोडाशकपालविधेर्नियमविधित्वाभावेप्यक्षतेः। न च प्रकृतिदृष्टत्वमात्रेण चरौ कपालेनैव तुषोपवापो युक्तः; विना वचनं स्वतःकार्यासमर्थस्य प्रकृतिदृष्टत्वमात्रेण प्राप्त्यनुपपत्तेः। अतो हस्तेनैव चरौ तुषोपवाप इति **तन्त्ररत्नकृदुक्तमेव** साधु।

**वस्तुतस्तु** हस्तेनोपवपन्तीति बह्वृचब्राह्मणे हस्तस्यापि विधानात् प्रकृतावेव पुरोडाशकपालहस्तयोर्विकल्पेन विधानात् पुरोडाशतन्त्रेषु विकल्पः। चर्वादितन्त्रेषु तु प्रकृतिप्राप्तो हस्त एवेति वचनेनापि हस्तप्राप्तिः सूपपादैव। **याज्ञिकरुद्रदत्तोऽप्येवम्**।

**यस्त्वत्र** केषुचित्पुस्तकेषु अग्निहोत्रहवण्यां तु वक्ष्यत इति ग्रन्थो दृष्टस्तत्रैतद्विवेचनीयम्—किमयं ग्रन्थः पूर्वपक्षे उपन्यस्तः अग्निहोत्रहवणीन्यायवैलक्षण्योपपादनार्थं उतात्रत्याधिकरणसिद्धान्तवैलक्षण्योपपादनार्थः? नाद्यः। पूर्वपक्षे हि यथा अग्निहोत्रहवणीशब्दस्य अग्निहोत्रसंबन्धविशिष्टाकारविशेषविशिष्टस्रुग्वाचित्वात् पवमानेष्टिषु अग्निहोत्रसंबन्धरूपविशेषणाभावेपि प्रधानभूतस्रुग्बाधानुपपत्तेः अग्निहोत्रहवण्यैव निर्वापः कार्यः। एवं पुरोडाशकपालेपीत्येवं यदि अग्निहोत्रहवणीन्याय उपपद्यते **तत्रेदं बोध्यं** यत् सर्वत्र पूर्वपक्षिणा सिद्धान्ते त्वङ्गीकृतपक्षदृष्टान्तेन स्वपक्षसाधनं कर्तुं युक्तं, न तु स्वाङ्गीकृतपक्षदृष्टान्तेन स्वपक्षसाधनं, तथात्वे दृष्टान्ताभिमतपक्षस्यैवाप्रयोजकत्वे तत्साम्येन प्रस्तुतपक्षसाधनस्य सिद्धान्तादूषकत्वापत्तिरिति स्थितिः। तदिह एतादृशाग्निहोत्रहवणीन्यायेन सिद्धान्त्यभिमतेन साम्यमापाद्याप्रयोजकत्वफलाभावरूपस्वपक्षःसाधनीयः। न चासौ सिद्धान्तिना अग्निहोत्रहवण्यधिकरणेऽङ्गीकृतः। पवमानेष्टिषु दशमे द्वितीयपादे स्वयं येन केनचिन्निर्वापस्यैव साधितत्वेनाप्रयोजकत्वफलस्यैव सिद्धान्तिनाङ्गीकृतत्वात्। अतश्चैतादृशाग्निहोत्रहवणीन्यायेन सिद्धान्त्यनभिमतेनादौ पूर्वपक्षोपपादनमेव कर्तुमयोग्यं येन तद्वैलक्षण्याय सिद्धान्ते **अग्निहोत्रहवण्यां तु वक्ष्यते** इति वक्तव्यं स्यात्।

## (१२)—पशावनालम्भाल्लोहितशकृतोरकर्मत्वम् ॥ २७ ॥

**पशौ "शकृत्सम्प्रविध्यति लोहितं निरस्यति" इति श्रुतं** निरसनं **पश्वालम्भनस्य शकृल्लोहितस्यैव वा प्रयोजकम्। नहीयं** तस्य प्रतिपत्तिः। **हृदयादीनामेव हविष्ट्वेन**

---

**अथ** गुणभूताग्निहोत्रहवण्यभावे **यथा न** प्रधानभूतनिर्वापलोपः तथा गुणभूतपुरोडाशसंबन्धाभावेऽपि **न** कपालबाध इत्यंशे **अग्निहोत्रहवणीन्याय**साम्यं वक्तुं शक्यत एवेत्युच्येत तावतापि **न** त्वदुक्तपुरोडाशकपालसंबन्धात्तस्यायं विषयः। तदधिकरणे हि **गुणशब्देन** न शाब्दबोधे विशेषणतामापन्नं गृह्यते। किन्तु शास्त्रेण लोकतो वा यदुपकारकत्वं प्रसिद्धं, यस्मिन् तत् गृह्यते अग्निहोत्रहवण्याश्च प्रत्यक्षतस्तृतीयाश्रुत्या च निर्वापार्थत्वमिति तद्गुणत्वम्। पुरोडाशसंबन्धस्य तु कपालाङ्गत्वं न प्रत्यक्षेण, नवा श्रुत्या, प्रत्युत कपालस्यैव कपालेषु श्रपयतीति वाक्यात् अङ्गत्वेन गुणत्वात्। अतश्च पुरोडाशकपालपदाज्जायमानोऽपि पुरोडाशसंबन्धप्रकारको बोधो नाग्निहोत्रहवणीन्यायविषयङ्गुणत्वमापादयतीति तदधिकरणसाम्यमिति।

**नान्त्यः**। अग्निहोत्रहवण्यधिकरणे स्वयमेव पूर्वपक्षे सिद्धान्तानुपपत्तिः प्रदर्शिता। **पुरोडाशकपालन्याय**शरणतयैव सिद्धान्तोपपादनस्य कृतत्वेनेह तद्वैलक्षण्योपपादनस्य विरुद्धत्वादतः पूर्वपक्षे **अग्निहोत्रहवणीन्यायेन** इत्युक्तेरेवानुपपन्नत्वेन तत्परिहारार्थमग्निहोत्रहवण्यां तु वक्ष्यत इति ग्रन्थो वृथैवेति भाति। **तथापि** यत्पूज्यपादैः पूर्वपक्षे अग्निहोत्रहवणीन्यायेनेत्युक्तं तद्याज्ञिकाभिप्रायेण। याज्ञिका हि आधान एव संभाराहरणकाले अन्येषामिवाग्निहोत्रहवण्या अपि पूर्वमुपादानात्तस्यास्तदानीमग्निहोत्रसंबन्धाभावेपि विशेष्याबाधाय तत्स्वरूपयोग्यतामादायाग्निहोत्रहवण्याः सत्वात् पवमानेष्टिषु तयैव निर्वापङ्कुर्वन्ति। तेन न्यायेनेहापि चरावतिदेशप्राप्तस्य कपालस्यास्मिन् प्रयोगे पुरोडाशसंबन्धाभावेऽपि तद्योग्यतामात्रेण विशेष्याबाधे संभवति न तद्बाधो युक्त इत्येवं न्यायसाम्यं ज्ञेयम्। सिद्धान्ते च तथाविधन्यायस्यास्माभिर्मीमांसकैरनङ्गीकारात् तत्रापि न त्वदुक्तो न्याय आश्रीयते, किंतु विलक्षण एवेति कथनमात्रपरः कथंचित् **अग्निहोत्रहवण्यां तु वक्ष्यत** इत्यपि ग्रन्थो युक्त एव वाऽस्त्विति दिक्।

---

॥ **पशावनालंभात्** ॥

**निरसनमिति**। संप्रव्याधोपि निरसनफल इति मत्वा निरसनशब्देन व्यवहृतः। यदा तु पर्यायभेदप्रयोगो व्यर्थ इत्युच्यते तदा संप्रव्याधक्रियाया निष्पीड्य निष्कासनरूपाया भिन्नत्वात्

**तस्यानुपयुक्तत्वात्** अपूर्वसाधनत्वाभावाच्च। **अतश्चार्थकर्मैवेदं शकृल्लोहितस्य तावत्प्रयोजकम्।** पश्चालम्भोऽपि च **विशसनवाक्ये श्रुतः प्रयोजनाकाङ्क्षस्सन् हृदयादेरिव लोहितादेरपि पशुप्रकृतिकत्वमाक्षिपति। न हि हृदयादेस्तदुत्पत्तिवाक्याधीनं, तस्य तदभावे हविष्ट्वेनैव तद्विधायकत्वात्। अतस्तत्रत्यं पशुपदमपि देवतासम्बन्धसिद्ध्यर्थं वस्तुतोऽनुवाद एव।** अस्तु वा उत्पत्तिवाक्यावगतं **पशोर्यागसाधनत्वं विशसनवाक्यानुरोधा**द्धवीरूप**हृदयादिप्रकृतित्वरूपमेवेति विशसनवाक्यस्यापि तत्परत्वमेव। तथाऽपि निरसनस्यार्थकर्मत्वाज्ज्ञा**घनीवल्लौकिक**शकृल्लोहितप्रयोजकत्वे न किञ्चिद्बाधकमिति प्राप्ते—**

**द्वितीयया** निरसनस्य **प्रतिपत्तित्वावगमान्न लोहितादिप्रयोजकत्वं, अपितु उपयुक्तत्वाभावेऽपि** चानुनिष्पन्नत्वेन **प्रतिपत्तिसापेक्षत्वात् परम्परयाऽपूर्वसम्बन्धस्य सत्त्वेन आनर्थक्याभावात् प्रतिपत्तिकर्मत्वोपपत्तेः॥**

**प्रयोजनं** पशुलोहिताद्य**भावनाशयोस्तल्लोपः। प्रायश्चित्तं परं तल्लोपनिमित्तं भवत्येव। सोमेश्वरलिखित**रक्षोभागत्व**सत्त्वे तु त्यागांशस्याज्येन येनकेनचिद्वा द्रव्येन समापनं भवत्येवेति द्रष्टव्यम्॥ १२॥**

---

संप्रव्याधश्चेत्यपि पूरणीयम्। भाव्युपयोगोपि नेत्याह—**अपूर्वसाधनत्वाभावाच्चेति।** उक्तविकल्पे पश्चालंभस्य प्रयोजकमित्याद्यं पक्षमुपपादयति—**पश्चालम्भोऽपि चेति। तदुत्पत्तिवाक्याधीनमिति।** यो दीक्षित इत्युत्पत्तिवाक्याधीनं तत्पशुप्रकृतित्वं नास्तीत्यर्थः। तस्येत्यादितच्छब्दत्रयेण क्रमेणोत्पत्तिवाक्यं विशसनवाक्यं पशुरूपद्रव्यं चेति त्रयं गृह्यते। तत्रत्यं उत्पत्तिवाक्यस्थम्। द्वितीयं पक्षमाह—**अस्तुवेति। हवीरूपेति।** तच्चावदीयमानं भवति तत्संबन्धश्च हृदयस्याग्रेऽवद्यतीत्यादिवाक्यैर्हृदयादीनामेवेति भावः। **पशुलोहितेति।** सप्तमीसमासगर्भितषष्ठीतत्पुरुषः। तेन पशौ यल्लोहितं तस्य यावभावनाशौ तयोरित्यर्थः। **रक्षोभागत्वे त्विति।** तुशब्दः पूर्वमत एवास्वरसद्योतकः न तु **सोमेश्वरमते।** तस्य युक्तिसहत्वात्। रक्षसां भागोऽसीति मन्त्रो हि अत्र निरसने श्रूयमाणः सूक्तवाक इव द्रव्यदेवतासंबन्धेन यागकल्पकः। ततश्च लोहितेन यजेतेति यागविधानेऽपि प्रक्षेपांशेन लोहितप्रतिपत्तिः त्यागांशोऽदृष्टार्थः रक्षोभागत्वादेव च नाहवनीये होमः किं तु यत्र क्वापि भूमौ। अत एव तुषनिरसन एव रक्षोदेवत्यत्यागो याज्ञिकानम्। तत्र लोहितनाशे हविर्नाशसत्वात आज्येन समापनं, येन केन चिद्वेति। इदं हि नाशे सति नाज्येन समापनं येन केन चिद्वेति विकल्पाभिधानपरं हविर्नाशनिमित्तकाज्यस्यैव विधिना प्राप्तेः। किं तु लोहिताभावे आश्रयिष्वित्यधि-

(१३)—एकदेशद्रव्यंचोत्पत्तौ विद्यमानसंयोगात् ॥ २८ ॥ निर्देशात्त-
स्यान्यदर्थादिति चेत् ॥ २९ ॥ न शेषसन्निधानात् ॥ ३० ॥
कर्मकार्यात् ॥ ३१ ॥ लिङ्गदर्शनाच्च ॥ ३२ ॥

यत्र "उत्तरार्धात्स्विष्टकृते समवद्यति" इत्यादौ न द्वितीयानिर्देशः तत्र तर्हि प्रतिपत्तित्वे प्रमाणाभावादपादानत्वेन श्रुतस्योत्तरार्धस्य यागं प्रति गुणत्वात् उत्तरार्धस्य तावद्यागः प्रयोजको भवत्येव। तस्य च ससम्बन्धिकत्वेन स्वप्रतिसम्बन्धियत्किञ्चिदवयव्याक्षेपकत्वं सुलभमेव। न च प्रकृतपुरोडाशरूपावयविसत्त्वे न स्वतन्त्राक्षेपकत्वं, प्रकृतस्य स्वकार्ये सर्वस्य विनियुक्तत्वेनान्यत्र विनियोगायोगात्। न च तस्य प्रतिपत्तिसापेक्षत्वात्प्रक्षेपांशेनास्य प्रतिपत्तिकर्मत्वं शङ्क्यम्। प्रक्षेपांशस्याप्याग्नेयादिप्रक्षेपवत्स्वयागाङ्गत्वेनैव प्रयोजनानपेक्षत्वात् उत्तरार्धस्यांशभेदेनापि गुणत्वप्रधानत्वयोरङ्गीकारे वैरूप्यप्रसङ्गाच्च। प्रधानमात्रत्वस्वीकारेऽपि लक्षणायास्तावदनिवारणाच्च। अतस्सिद्धं स्विष्टकृद्यागोऽर्थकर्मैव प्रयाजादिवत्सन् उत्तरार्धतदवयविनोः प्रयोजक इति प्राप्ते—

यद्यपि तावदर्थकर्मैव स्यात् तथाऽपि ससम्बन्धिकत्वात्प्रतिसम्बन्ध्यपेक्षायां यावत्प्रकृतप्रतिसम्बन्धिलाभस्तावन्नान्याक्षेपकत्वं गौरवात्। अस्ति च प्रकृते प्रतिपत्त्यपेक्ष-

---

करणप्रदर्शिनमदुक्तरीत्या ध्रौवाज्यस्याप्यप्राप्तेः यूपावटास्तरणबर्हिर्न्यायेन असंस्कृतेन येन केन चित् लौकिकेनाज्येन त्यागांशसमापनमिति लोहिताद्यभावसापेक्षं द्रष्टव्यम्। एतत्समानन्यायादेव मया वाजिनोत्तरार्धलोपे नैव त्यागांशस्य सर्वथा लोप इति अभिहितं आश्रयिष्वित्यधिकरणे प्राक्। वस्तुतस्तु पशुसत्वे तल्लोहिताभावोऽसंभव्येवेति तत्फलं त्वाष्ट्रपात्नीवतपशुरूपं द्रष्टव्यम्।

---

॥ एकदेशद्रव्यं चोत्पत्तौ ॥

गौरवादिति। न चैवं विनियुक्तविनियोगे शिष्टाचारविरोधः आचारस्य श्रुत्या बाधात्। न चैवमपि एकस्यै देवतायै त्यक्तस्य परकीयत्वात कथमनीशेन यजमानेन पुनस्त्यक्तुं शक्यमिति चेत्। अत्र प्राञ्चः। यदि यागो दानवत् परस्वत्वपर्यन्तः स्यात् ततः त्यक्तस्य देवतास्वत्वात् पुनः स्वीकरणमशक्यं स्यात्। न त्वसौ परस्वत्वापादकः। तेन यागे

श्लेषः। अतस्तदुपजीवकत्वमेव। अत एव "शेषात्स्विष्टकृते" इत्यपि लिङ्गमुपपद्यते। एवं चोत्तरार्धस्य त्यागं प्रति गुणत्वेन विनियुक्तस्यापि प्रधानगतप्रतिपत्त्यपेक्षानुरोधेन वाक्यान्तरकल्पनया प्रक्षेपांशं प्रति प्राधान्येऽपि न क्षतिः। श्रुतयागविधिनाऽपि धारण-प्रयोजकत्वकल्पनागौरवभिया तदनुमितेश्च। अत एवानुमितप्रतिपत्तेरेव धारणप्रयोजक-त्वादिकल्पना "दोषो नानुमिते ह्यसौ" इति न्यायादनुमानस्य फलमुखत्वाच्च। अत एव "सर्वाणि हवींषि समवद्यति" इति लिङ्गमपि प्राधान्यादुपपन्नम्। अत एव स्विष्टकृत्प्रक्षेपोऽपि प्रधानाङ्गभूतस्तत्प्रयुक्त एव सन् स्विष्टकृद्यागस्याप्यङ्गं तत्प्रयुक्तश्च

---

कृते द्रव्यं न यजमानस्य न देवतायाः, किं तु प्रहीणं पुनस्तदर्थं स्वीकर्तुं शक्यमिति वचनबलात् स्वीक्रियत इति। **वस्तुतस्तु** यजमानदेवतयोः संबन्धाभावे राजकीयत्वापत्तेः देवस्वं न गृह्णीयादिति निषेधबलाच्चास्ति कश्चन देवतायाः संबन्धः विद्यमानेपि देवतासंबन्धे वचन-बलात् पुनर्देवतान्तरसंबन्धार्थं यजमानसंबन्धोप्युत्पद्यत इत्येव समाधेयम्। **प्रधानगतेति।** प्रधानयागद्रव्यगतेत्यर्थः। **दोषो नानुमित इति।**

"श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने।

लक्षणा वाक्यभेदादि"इति पादत्रयं पूर्वतनमस्य चित्रधिकरणवार्तिककारिकागतं ज्ञेयम्। अस्यार्थो **न्यायसुधायां** न्यूनस्याधिकार्थविषयत्वकल्पने लक्षणावाक्यभेदगौणत्वाध्याहारदोषाः न्यूनत्वे लक्षणावाक्यभेदौ आधिक्ये वानर्थक्यम्। अन्यथात्वकल्पने विपरिणामव्यवहितव्यवधारणकल्पना-दोषः। अनुमिते तु विध्याश्रितार्थाभिधानशक्तस्यैव कल्पनात् न कश्चिद्दोष इति। **लिङ्गमपीति।** अस्मिन् वाक्ये सर्वशब्दो द्वितीयान्तत्वं च लिङ्गं ज्ञेयम्। **प्रधानाङ्गभूत इति।** ननु उत्तरार्धस्वरूपे आनर्थक्ये प्राप्ते यावत्प्रकरणात् प्रधानयागापूर्वसंबन्धः ततः पूर्वमेव समानाभिधानश्रुत्या विजातीयस्विष्टकृद्यागाङ्गत्वमेवावगम्यते स्विष्टकृद्यागीयद्रव्यसंस्कारार्थत्वेऽपि दृष्टप्रयोजनोपपत्तेः न तदर्थमपि प्रधानाङ्गत्वं कल्पनीयं, दैवात् स्विष्टकृद्यागीयद्रव्यस्य प्रधानद्रव्यस्य चैक्यात् स्विष्टकृद्द्रव्यप्रयुक्तप्रक्षेपेण प्रधानद्रव्यस्यापि प्रतिपत्तिः प्रसङ्गेन भवत्येव। यथैव पशुफलप्रयुक्तगोदोहनेन चमससाध्यप्रणयने प्रसङ्गेन जनितेऽपि न तत्प्रणयनङ्गोदोहनप्रयोजकं परप्रयुक्तत्वात्, एवमिहापि स्विष्टकृद्यागाङ्गत्वेन आज्यप्रक्षेपार्थं तत्प्रयुक्तत्वे आवश्यके सति न प्रधानप्रयुक्तत्वमपि कल्पनीयं गौरवात्। परकीयद्रव्यमपि संस्कृतमनेनेत्येतावन्मात्रेणाश्रयिकर्मत्व-व्यवहारस्य प्रागेवोपपादितत्वात्।

**प्रतिपाद्यत्वाविशेषात्। अतस्स नावयविनो नोत्तरार्धस्य वा प्रयोजकः आज्यप्रक्षेपस्य तु प्रयोजको भवत्येवेति सिद्धम्॥ १३॥**

---

**एतेन** प्रधानद्रव्यगतप्रतिपत्त्यपेक्षानुरोधेन वाक्यान्तरकल्पनया स्विष्टकृत्प्रक्षेपस्य तत्संस्कारद्वारापि तदङ्गत्वमित्यप्यपास्तम्। प्रधानद्रव्यगतप्रतीत्यपेक्षायास्स्विष्टकृद्यागं प्रति गुणत्वेऽपि नान्तरीयकतया प्रतिपत्तेरपि जननात् निवृत्तौ बाधकाभावात्। न हि द्रव्यादीनां विनियोगाकाङ्क्षा, तेषामेवोपयुक्तानां कृतकार्याणां प्रयोजनाकाङ्क्षा प्रतिपत्त्यपेक्षा नामेत्येतादृशभेदं विना प्रतिपत्त्यपेक्षा नाम लौकिकी विधातृसंवेद्या काचनास्ति, यस्याश्शान्तिस्तेषां प्राधान्यं विना नैव स्यात्। अतो गुणत्वेऽपि प्रतिपत्त्युपपत्तेः दृष्टार्थत्वस्याप्युपपादितत्वात् न किञ्चिद्बाधकम्। इमामेव शैलीमनुसृत्य एकादशीनिर्णये **कालतत्वविवेचनकारैः**—

श्राद्धं कृत्वा तु यो विप्रः न भुङ्क्ते पितृसेवितम्।

इत्यादिवचने रागप्राप्तभोजनाश्रितः श्राद्धीयशेषभोजननियमः श्राद्धीयद्रव्यप्रतिपत्तिद्वारा प्रकरणात् श्राद्धाङ्गम्। ततश्च श्रद्धीयमन्नं यजमानेनावैगुण्याय भक्षणीयमिति मतमुक्त्वा, येषां तु प्रयोजनापेक्षशेषगुणकमर्थकर्मैव तदानुषङ्गिकी तु तत्प्रतिपत्तिरिति मतं, तेषां शेषस्य गुणत्वात् श्राद्धीयशेषाभोजनेपि न किंचित् श्राद्धस्य वैगुण्यम्। अत एव तीर्थश्राद्धाङ्गघृतश्राद्धेघृत-मात्रेणापि शेषभोजनसिद्धिः शिष्टाचार इति मतान्तरमुपन्यस्तम्। अतो न प्रक्षेपस्य पदान्तर-कल्पनया प्रधानद्रव्यप्रतिपत्तिद्वारा प्रधानाङ्गत्वमिति चेत्।

**तत्रोच्यते**। यत्र शेषात्स्विष्टकृत इत्यत्र वचनान्तरे उत्तरार्धरूपशेषवाचकपदेन द्वितीया न वा तृतीया श्रूयते तत्र तद्गतप्रतिपत्त्यपेक्षया स्विष्टकृद्यागगतद्रव्यापेक्षया च प्रवर्तमानेनानेन विधिना द्रव्ययागयोः परस्परार्थत्वकल्पनायामेकेन वाक्येनैकस्मिन् काले विरुद्धत्वेनाशक्यतया पञ्चम्या युगपत् तृतीयाद्वितीयार्थप्रतिपादनासंभवात् प्रथमवाक्यार्थे द्वितीयार्थलक्षणया यागस्य द्रव्यार्थत्वे स्वीक्रियमाणे अदृष्टार्थत्वापत्त्या द्रव्यगतप्रतिपत्त्याकाङ्क्षोपशमाभावात् दृष्टार्थतालाभाय यागगतद्रव्याकाङ्क्षामेवानुरुद्ध्य तृतीयार्थलक्षणया तस्य गुणत्वमेव वाक्यात् कल्प्यते। न ह्येतावता प्रतिपत्त्याकाङ्क्षाशान्तिः, स्विष्टकृद्यागे कृतेपि तदनुवृत्तेः। विनियोगेन विनियोगाकाङ्क्षाशान्तावपीह एकदा पुरोडाशान्तर्गतत्वेन विनियुक्तत्वात् तदाकाङ्क्षाया एवाभावेन तदुपशमनार्थत्वकल्पने प्रयोजनाभावात्।

अत एव स्वोपयोगाभावप्रयुक्तस्य दृष्टप्रयोजनाकाङ्क्षद्रव्यगता प्रतिपत्त्याकाङ्क्षा तदाकाङ्क्षया तत्प्रयोजनफलककर्मबोधको विधिः प्रतिपत्तिविधिः। कैमर्थ्याकाङ्क्षामात्रं हि विनियोगाकाङ्क्षेति प्राचुर्येण सामान्यतो भेदः स्पष्ट एव। एवं च द्रव्यगतप्रतिपत्त्यपेक्षाया गुणत्वेनोपशमाभावात् स्विष्टकृद्यागस्य तदुपशमने योग्यत्वात् तदन्तर्गतप्रक्षेपस्यैव योग्यतया द्रव्यवाचकद्वितीयान्तपद-कल्पनया तत्प्रतिपत्त्यर्थत्वम्। तत्र च द्रव्यस्वरूपे आनर्थक्ये प्राप्ते अपूर्वसाधनत्वलक्षणाया-मपूर्वसाधनत्वावगतिप्रमाणालोचने प्रकरणापेक्षया स्विष्टकृद्वाक्यस्य झटित्युपस्थितावपि तद्वाक्य एव प्रकृतापूर्वसाधनोत्तरार्धत्वेन एतदपूर्वसाधनत्वावगमात् येन रूपेणापूर्वसाधनत्वमवगतं तेनैव रूपेणेह लक्षणाद्वारभूतस्य प्रतिपाद्यद्रव्यस्य चैकत्वात् युक्तमेवोभयाङ्गत्वेनोभयप्रयुक्तत्वम्।

**यद्यपि** वाऽयं प्रक्षेपः समानाभिधानश्रुत्या स्विष्टकृद्यागाङ्गमेव भवेत् तथाप्युद्देश्यसामर्थ्यात् द्वितीयया च तन्मात्राङ्गत्वबाधो युक्त एव। श्राद्धीयशेषगुणकमर्थकर्मैव श्राद्धीयशेषभोजन-मिति मते तु यावच्छेषगतप्रतिपत्त्याकांक्षया पदान्तरकल्पनं तावत प्रत्यक्षया श्रुत्या तस्य गुणत्वावगमेन भोजनार्थत्वावगतेः तदर्थत्वेनापि प्रतिपत्त्याकांक्षायाः भोजनेन शांतेः आनुषङ्गिकत्वात् प्रतिपत्तेरानुषङ्गिकत्वोक्तिः।

**वस्तुतस्तु** न भुंक्ते पितृसेवितमिति निन्दार्थवादकल्प्ये पितृसेवितं भुंजीतेत्येवमेवा-कांक्षानुरोधेन कल्पनात् शेषप्रतिपत्त्यर्थत्वमेव युक्तं न त्वर्थकर्मत्वमिति **मत**पदोपादाने-नैव तैस्सूचितम्। अत एव यत्राभिघारणवाक्ये तृतीयाद्वितीययोः श्रवणं तत्र प्रयाजशेषगत-प्रतिपत्त्याकांक्षया विधीयमानमभिघारणं हविरर्थमपि। यदाकाङ्क्षया यद्विधीयते तत् तदर्थं सदेव तदाकांक्षाशामकं दृष्टमिति नियमानुरोधेन स्विष्टकृद्वत् वाक्यांतरकल्पनया प्रयाजशेषार्थ-मपीति अभिधास्यते **पूज्यपादैः**; तथापि प्रत्यक्षश्रुतिद्वयेन प्रयाजशेषस्यैव हविः संस्कारकाभि-घारार्थत्वप्रतीतेः पूर्वोक्तनियमस्यौत्सर्गिकत्वात् तन्नियमेन तदर्थं सदेवेत्यर्थकल्पने मानाभावात् अनुषंगिकतयापि तत्प्रतिपत्त्याकांक्षाशान्तेः अनुभूयमानत्वात् न तदर्थं वाक्यान्तरकल्पनया प्रतिपत्त्यर्थत्वकल्पनं युक्तमिति तदधिकरणे मयोपपादयिष्यते। एतच्च प्रयाजेषु प्रक्षेपप्राप्त्यर्थ-मङ्गतया यागशरीरान्तर्गतत्वमेव प्रक्षेपस्याङ्गीकृत्योक्तं **पूज्यपादैः**।

यदा तु सर्वप्रदानाधिकरण**वार्तिकन्यायसुधा**सूचितरीत्या चतुरवत्तं जुहोतीत्यनेनैव वाक्यान्तरेणान्ययागेष्विव इहापि प्रक्षेपप्राप्तिः, तदा चतुरवत्तद्रव्यस्य उभयापूर्वसाधनत्वाद्वाक्यान्तर-कल्पनां विनैव प्रक्षेपस्योभयद्रव्यसंस्कारकत्वात युक्तमेवोभयाङ्गत्वेनोभयप्रयुक्तत्वम्। अत एवोभयापूर्वसाधनत्वेनैव द्रव्यसंस्कार्यत्वात् अन्यतरयागाभावे प्रक्षेपस्य न स्वातन्त्र्येणानुष्ठानम्।

(१४)—अभिघारणे विप्रकर्षादनुयाजवत्पात्रभेदस्स्यात् ॥ ३३ ॥ न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात् ॥ ३४ ॥ हेतुत्वाच्च सहप्रयोगस्य ॥ ३५ ॥ अभावदर्शनाच्च ॥ ३६ ॥ सति सव्यवचनम् ॥ ३७ ॥ न तस्येति चेत् ॥ ३८ ॥ स्यात्तस्य मुख्यत्वात् ॥ ३९ ॥

दर्शपूर्णमासयोः "प्रयाजशेषेण हवींष्यभिघारयति" इति श्रुतम्। **तत्र प्रयाजशेषाभिघारणस्य तृतीयाद्वितीयाभ्यां उपयुक्तसंस्कारापेक्षया चोपयोक्ष्यमाणसंस्कारस्याभ्यर्हितत्वाद्धविस्संस्कारकत्वमेव, न तु प्रयाजशेषप्रतिपत्त्यर्थत्वं लक्षणाद्वयप्रसङ्गात्। न च हविस्संस्कारकत्वे** अदृष्टकल्पनापत्तेर**पेक्षितदृष्टरूपप्रतिपत्त्यर्थत्वलाभाय लक्षणाद्वयाङ्गीकरणमपि न दोषायेति मिश्रमतं युक्तं, निषादस्थपत्यधिकरणन्यायेनादृष्टकल्पनादेः फलमुखत्वात्।**

---

एवं स्थिते प्रयाजशेषाभिघारणाधिकरणे **भट्टसोमेश्वर**मतखण्डनेऽस्य प्रतिपत्तित्वसिद्ध्यर्थं **पञ्चम्यास्तल्लक्षणायां** द्वितीयार्थलक्षणावश्यकत्वेन **प्रकाशकारोक्तोपेक्षणीया** प्रयोजनाभावात्। एकदा गुणत्वप्रतिपादनाय पञ्चम्यास्तल्लक्षणायां पुनर्द्वितीयार्थलक्षकत्वासंभवाच्चेति दिक्।

---

॥ अभिघारणे ॥

हविषामसंसर्गो हि दृष्टं प्रयोजनमपेक्षितं; तच्चोपस्तरणाभिघारणाभ्यां वाक्यान्तरविहिताभ्यां जातमेवेत्यनपेक्षितमेवैतदभिघारणं विधेयं, ततश्चादृष्टकल्पनापत्तिरित्याह—**अदृष्टकल्पनापत्तेरिति। प्रतिपत्त्यर्थत्वलोभेनेति।** स्थापितस्य प्रयाजशेषस्य किं प्रयोजनमित्येवं प्रयाजशेषगतापेक्षाशामकेति शेषः। **यत्त्वत्र तन्त्ररत्नकृता** जुह्वा च रिक्तया प्रयोजनमस्ति ; यदाज्यभागद्रव्यं तया जुह्वा होष्यते तत्कथमसंसृष्टं प्रयाजशेषेण स्यादिति तस्मात् प्रतिपत्तिरपेक्षितेत्युक्तः **तन्न,** एतया अपेक्षया प्रयाजशेषार्थत्वमेवेति वक्तुमशक्तेः। न ह्यभिघारणस्य हविरर्थत्वेऽपि प्रयाजशेषस्य हविषामुपरि पाते जुह्वा रिक्तत्वं न भवति। **अथ** प्रयाजशेषेण मया जुह्वां स्थित्वा किं कर्तव्यमिति जुह्वा रिक्तीकरणार्थं प्रयाजशेषस्यैवाकांक्षेति चेत् तर्हि प्रयाजशेषकरणकाभिघारणस्य यत्प्रयुक्ताकांक्षाशामकत्वं तदर्थत्वमेव स्यादिति जुह्वर्थत्वापत्तिः। अतः प्रयाजशेषस्यैव

**किञ्च द्वितीयायास्सप्तम्यर्थलक्षकत्वे हविषामभिघारणं प्रत्युपादेयत्वापत्तेस्तद्गतबहुत्वस्य विवक्षापत्तौ त्रिष्वेव करणापत्तिः। तथा च ग्रहैकत्वाधिकरणे तदविवक्षाभिधानं वार्तिककारीयं नोपपद्येत।**

**यत्तु अभिघारणं प्रत्याधारत्वेनान्वितानामपि हविषामाधारतातियमं प्रत्युद्देश्यत्वात्तद्विशेषणाविवक्षेति;** तन्न, **श्रुताभिघारणं प्रत्युपादेयमात्रत्वेन विवक्षितत्वे आर्थिकाधारतानियमं प्रत्यपि त्रयाणामेवोद्देश्यतापत्तेः। किञ्च यदर्थो नियमाश्रयः तदर्थ एव नियम इति सर्वत्र क्लृप्तेराधारतानियमोऽप्यभिघारणनियमवत्तद्द्वारा प्रयाजेष्वेवोपयुज्येत. इतरथा पशुस्थजाघनीतुषोपवापादिवाक्येष्वपि करणतानियमस्य जाघनीप्रतिपत्त्यर्थत्वकपालसंस्कारकत्वापत्तेरेकत्वाविवक्षापत्तिः।**

---

स्वार्थे पूर्वोक्तैव प्रतिपत्त्यपेक्षा साध्वीति। **यत्त्विति। अयमत्र तन्त्ररत्नकारस्याभिप्रायः।** सत्यं प्रयाजशेषप्रतिपत्त्यर्थमभिघारणं, तच्च क्वचिदनियताधारे प्राप्तं यावत्तावद्धविरधिकरणत्वेन **नियम्यते वाक्यात्।** तत्फलमदृष्टं कल्प्यमानं न प्रयाजशेषनिष्ठं, किंतु हविर्निष्ठमेव नियमस्यायोगव्यावृत्तिरूपात्यन्ताभावस्वरूपत्वेनाधिकरणीभूतहविरात्मकत्वेन हविषां तदानीं झटित्युपस्थितेः। ततश्च हविरधिकरणकाभिघारणेन प्रयाजशेषं हविराधारतानियमेन च हवींषि संस्कुर्यादित्यर्थः। तत्रोद्देश्यत्वाद्धविषामविवक्षिता संख्येति सन्निहितसर्वहविष्षु न्यूनेषु ऽधिकेषु कर्तव्यमभिघारणम्। न चैवं तर्हि प्राजापत्यवपानां विप्रकृष्टानामपि प्रयाजशेषकरणकाभिघारणाधिकरणतानियमप्रयोजकत्वेन संस्कारस्यापेक्षणात्तदर्थं धारणीय एव पात्रान्तरे शेषः स्यादिति विपरीतमापतितमिति वाच्यं; तेषां नियमनाविषयत्वात्।

**येषां** हि अनियमेन प्राप्तिः प्राग्विधेस्स नियमविधिविषयः प्रयाजेषु कृतेषु तच्छेषस्याज्यभागद्रव्यासंसर्गार्थं यत्र क्वचन सन्निहिते प्रतिपादनं प्राप्तं नासन्निहिते। तेनासंनिहितानां प्राजापत्यवपानां प्राप्तिरेव नास्तीति नियमविध्यगोचरत्वात् न नियमादृष्टरूपसंस्कारभागित्वम्। अतो न धारणीयस्तेषामर्थे शेष इति। तदेतन्मतं दूषयति — **तन्नेति। इतरथा पशुस्थेति।** ततश्च यद्द्वादशे तन्त्ररत्ने नियमांशेन जाघन्याः संस्कार्यत्वेन पत्नीसंयाजानां प्रतिपत्तित्वं पूर्वपक्षितं तस्य पुनरुत्थानापत्तिरित्यर्थः। दर्शपूर्णमासयोर्जाघन्या हृदयाद्यनुनिष्पन्नत्वाभावात् प्रतिपत्त्यनपेक्षत्वेन संस्कार्यत्वासंभवमभिप्रेत्य **पशुस्थे**त्युक्तम्। दर्शपूर्णमासयोर्जाघनीनियमस्यादृष्टार्थत्वेन क्लृप्तेः न प्रयोजनान्तरापेक्षा। इह तु नियमस्याक्लृप्तफलस्य कल्प्यमाने फले हविस्संस्कार एव तत्त्वेन कल्पयितुं युक्त इति वैषम्यमभिप्रेत्य तुषोपवापोदाहरणान्तरोक्तिः।

**एतेन पदद्वयेऽपि** लक्षणामनङ्गीकृत्याधारतानियमोद्देश्यतामात्रेणैव हविस्सङ्ख्याऽविवक्षामुक्तवतो **भट्टसोमेश्वरस्यापि मतं प्रत्युक्तम्** ॥ यत्तु कैश्चित्तृतीयाया एव द्वितीयार्थे

---

**यदप्युक्तं** सन्निहितहविष्ष्वेव प्राप्तेर्न प्राजापत्यवपानां विप्रकृष्टानां नियमविषयत्वमिति । **तन्न**। तथात्वे एकस्मिन् हविष्यपि अभिघारणे कृते शास्त्रार्थसिद्धेः प्रकृतावपि प्रथमातिक्रमे करणाभावात् आद्यहविषः सर्वापेक्षयोपस्थितत्वेन आग्नेयकपालस्यैव तुषोपवाप इव तत्रैव तत्प्राप्तौ ततो विभागेन द्वितीयहविरभिघारणे प्रमाणाभावेन द्वितीयहविषामपि नियमविषयत्वानापत्तेः । **लक्षणामनङ्गीकृत्येति**। यद्यपि पदद्वये लक्षणाभावे हविषामुद्देश्यत्वस्य श्रुतत्वादेव तद्विशेषणबहुत्वाविवक्षायाः सूपपादत्वात् आधारतानियमोद्देश्यतामात्रेणैव हविःसंख्याऽविवक्षामुक्तवत इत्ययुक्तं, न वा तथा **भट्टसोमेश्वरेण** लिखितम् । **तथाहि** ग्रहैकत्वाधिकरणे उद्देश्यविशेषणाविवक्षोदाहरणावसरे "यस्य पुरोडाशौ क्षायतः" "यस्य सर्वाणि हवींषि" इत्युदाहरणप्रायपाठे प्रयाजशेषवाक्ये **वार्तिककृतो**दाहृतम् ।

ननु पुरोडाहविर्नाशयोः निमित्तत्वेनोद्देश्यत्वात् उदाहरणत्वसंभवेऽपि अभिघारणस्य प्रयाजशेषप्रतिपत्तितायाश्चतुर्थे वक्ष्यमाणत्वात् तस्योद्देश्यत्वेन हविषामनुद्देश्यत्वात् नोदाहरणत्वमित्यनुपपत्तिमाशंक्य प्रयाजशेषप्रतिपत्त्यर्थत्वेऽपि द्वितीयावगतहविस्संस्कारार्थत्वस्यापि संभवतोऽत्याज्यत्वात् । एकस्यापि प्रतिपत्त्यर्थकर्मत्वयोः स्विष्टकृद्वदविरोधात् । परप्रयुक्तद्रव्यसंस्कारार्थत्वाच्च । संस्कार्यत्वेऽपि हविषां चतुर्थे वक्ष्यमाणशेषधारणाप्रयोजकत्वाविरोधात् उद्देश्यत्वं संभवतीत्याशय इति समाहितं **न्यायसुधायाम्**। ततश्च प्रयाजशेषस्य प्रतिपाद्यत्वं हविषां चाधारतानियमोद्देश्यतामन्तरेणैव द्वितीयावगतसंस्कार्यहविर्विशेषणत्वेन बहुत्वाविवक्षासंभवश्च उक्तः । **तथापि** न तल्लिखितमेतद्यथाश्रुतमुपपद्यते । उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेरपरिहारात् । तत्परिहारार्थं च प्रयाजशेषस्य करणत्वाश्रयणेनार्थकर्मत्वोपपत्तावपि तस्य प्रतिपाद्यत्वानुपपत्तेश्च । अत एव **पार्थसारथिना** सर्वमेतदयुक्तं मत्वैव पूर्वोक्तरीत्या लक्षणाद्वयाङ्गीकारेण हविषामाधारत्वेपि आधारतानियमोद्देश्यत्वात् विशेषणबहुत्वाविवक्षां साधयता उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तिः द्वयोरुद्देश्ययोस्साकाङ्क्षत्वेन परिहृता ।

किंच हविषां संस्कार्यत्वे तेषामपि धारणादिप्रयोजकत्वापत्तौ चतुर्थे वक्ष्यमाणशेषधारणाप्रयोजकत्वाविरोधात इत्युत्तरसन्दर्भस्यासङ्गतत्वापत्तिः । अतः पूर्वोक्तसकलदोषपरिहारेण यथा हविस्संस्कार्यता सिद्ध्यति तथा यत्ने कर्तव्ये आधारतानियमोद्देश्यताकल्पनमेव युक्तं दृश्यते ।

सूचितं च तेनैव "सभवतोऽत्याज्यत्वात्" इत्यत्र **संभवत** इति पदेन तथाविधयत्नकरणम् । अत एव **प्रकाशकारा** एतन्न्यायसुधाग्रन्थं तत्रत्यं प्रयाजशेषपदे लक्षणातदभावयोरौदासीन्यमूलतया अनुसन्दधाना आधारतालक्षणायां श्रुतवाक्ये उद्देश्यद्वयाभावेन वाक्यभेदाप्रसक्तेः आर्थिकाधारता-नियमोद्देश्यत्वकल्पने च अप्रसक्तवाक्यभेदपरिहारस्य साकाङ्क्षत्वादिना करणे प्रयोजनाभावात् श्रुतोद्देश्यतात्यागेनाधारत्वे कल्पिते पुनस्तस्यैवोद्देश्यत्वस्वीकारे **द्रविडमण्डकन्यायापत्तेः** आधार-तालक्षणाया अयुक्तत्वमिति **पार्थसारथिमतं** प्रदूष्य तृतीयाया एवैकां लक्षणामङ्गीकृत्यार्थ-सिद्धाधारतानियमोद्देश्यतास्वीकारेणैव हविषामुद्देश्यत्वेपि साकाङ्क्षत्वादिना वाक्यभेदं च परिहरन्तः स्विष्टकृतो द्रव्यदेवतोभयसंस्कारत्वस्येवाभिघारणस्यापि अंशभेदेन प्रयाजशेषहविरुभयसंस्कारकत्वं प्रतिपादयन्ति । अस्मिंश्च तृतीयायाः प्राधान्यलक्षणाङ्गीकारे **पूज्यपाददर्शित**वक्ष्यमाणरीत्या वाक्यभेदापत्तेरपरिहार्यत्वमेवेत्यपरितुष्येव **भट्टसोमेश्वरेण तन्त्रसारे** हविः कर्मकाभिघारणं प्रति प्रयाजशेषस्य करणत्वोपपत्तेः तल्लक्षणायां प्रयोजनाभावात् वस्तुगत्या आधारभूतस्यापि हविषः पयसो दधिव्याप्यत्वेन प्राधान्यस्यैव कर्मीभूतप्रतिपाद्यशेषव्याप्यत्वेन प्राधान्योपपत्त्या द्वितीयाया अपि सार्थक्यादाधारतानियमोद्देश्यत्वेन हविषां शाब्दम् । आर्थिकं तु प्रतिपाद्यत्वेन प्रयाजशेषस्य प्राधान्यमुक्तम् । सर्वथापि च प्रयाजशेषप्रतिपत्त्या आनुषङ्गिकत्वमप्रयोजकत्वफलकं हविस्सं-स्कारे सर्वेषामेवावश्यकं प्रयाजशेषप्रतिपत्तिरूपाभिघारणाधारतया नान्तरीयकतया सिद्धाधारतानिय-मोद्देश्यत्वेनैव सिद्ध्यति नान्यथेति सिद्धम् । तथा चोक्तं **तन्त्रसारे** ।

उच्यते नार्थकर्मत्वमवजानीमहे वयम् ।
स्विष्टकृद्वत् द्वयार्थत्वं त्विहापि न विरुद्ध्यते ॥

क्रियाफलाश्रयगतक्रियानियमजं फलम् ।
आधारनियमाज्जन्यमाधारस्संभविष्यति ।

आधारत्वेपि हविषां प्राधान्यं न विरुद्ध्यते ।
तप्तस्य पयसो यद्वत् दध्यानयनकर्मणि ॥

प्रतिपाद्येन शेषेण कर्मणा व्याप्यमानताम् ॥
प्रतिपादयितुं तेन द्वितीयाम्नानमर्थवत् ॥

ततश्च प्रतिपत्तित्वेप्यर्थकर्मविवक्षया ॥
तृतीयाप्यविरुद्धेति न काचिद्भज्यते श्रुतिः ।

विभक्तिव्यत्ययोक्तिस्तु मन्दधीप्रतिपत्तये ।
प्रतिपत्त्यनुसारेण चार्थकर्मत्वमिष्यते ।

मुख्यत्वात् प्रतिपत्तित्वमतोऽत्र व्यपदिश्यते ;
यस्य चानियता प्राप्तिः नियमस्य स गोचरः ।

अभिघारणकाले च सतां वा पाक्षिकी भवेत् ।
तथाभिघारणविधावभिघार्यं समीपगम् ।

अतो न विप्रकृष्टानामाधारत्वं प्रतीयते ।
नियमाविषयत्वेन तेनैषां नाभिघार्यता ।

जुहूरेचनरूपं च शेषस्य प्रतिपादनम् ।
कुर्वतो हविरर्थत्वमभिघारणकर्मणः ।

आज्यभागादिहोमार्थं सा च प्रागेव रेचिता ॥
ततश्च द्वारशून्यत्वात् व्यर्थं स्यादभिघारणमिति ॥

**यद्यप्यभिघारणे** नांशभेदः **तथापि** स्विष्टकृति यागस्वरूपानन्तर्गतस्याप्यर्थात् प्राप्तस्य प्रक्षेपस्य द्रव्यसंस्कारकत्वस्येवेहाप्यार्थिकाधारतानियमस्य तदनंतर्गतस्यापि हविस्संस्कारकत्वं नायुक्त-मित्यभिप्रेत्यैव मिश्रितयोः स्विष्टकृद्वदित्युक्तिः न विरुद्ध्यते । अतोऽभिघारणनिरूपितकर्मत्वस्य हविष्षु तेनानभ्युपगमात् **पार्थसारथि**मत इव तेनाप्याधारतानियमोद्देश्यताश्रयणात् या बहुत्व-संख्याविवक्षा लक्षणाद्वयानङ्गीकारेणोक्ता सा एतेन पुरोडाशकपालातिप्रसङ्गापादनेन निरस्तेत्येव **पूज्यपादानां** तात्पर्यम् । मात्रशब्दव्यावर्त्यं च अभिघारणरूपधात्वर्थनिरूपितत्वमेव लक्षणाद्वया-नङ्गीकारे । दूष्यता च स्पष्टत्वादेव पृथङ्नदर्शिता । न हि लक्षणाद्वयाभावे प्रयाजशेषस्य प्रतिपाद्यत्वं धात्वर्थनिरूपितत्वेन प्रतिपाद्यमानं हविर्गतकर्मत्वं वोपपद्यते । इतरथा अधिकरणत्वनियमफला-श्रयत्वेनहविर्गत कर्मत्वस्यैव श्रुतकरणतानियमजन्यफलाश्रयत्वेन तस्यापि संस्कार्यत्वोपपत्तेः । विनिगमनाविरहे सति प्रयाजशेषगताकाङ्क्षामात्रकल्प्यतत्प्रयोजकत्वापेक्षया विभक्तिद्वयबलेन हविः-संस्कारस्यैव तदापत्तेः ।

**एतेन** द्वितीयार्थमात्रे लक्षणा तृतीयाया इति **प्रकाशकारो**क्तमपास्तम् । हविषाङ्कर्मत्वाङ्गी-कारे तल्लक्षणायां प्रयोजनाभावात् ; प्रत्युत साकाङ्क्षत्वेन वाक्यभेदपरिहारोपपादने किमभिघारणीय-

**लक्षणामङ्गीकृत्याभिघारणस्योभयार्थत्वं विजातीयानेकोद्देश्यकत्वाच्च न वाक्यभेद इत्युक्तम्, तदपि न, निषादस्थपत्यधिकरणविरोधस्य तादवस्थ्यात्, श्रुतोद्देश्यसत्त्वे लाक्षणिकस्य तस्या**न्याय्यत्वाच्च, न्याय्यत्वेऽपि **वा श्रुतहवीरूपोद्देश्यसंस्कारस्यैव धारणप्रयोजकत्वापत्तेश्च।**

**किञ्च वैजात्यं न तावन्निमित्तफलादिवत्, उभयोरपीप्सितत्वाख्योद्देश्यत्वस्य समानत्वात्। अथ वैजात्याभावेऽपि साकाङ्क्षत्वादेव नानेकोद्देश्यता, तथात्वे गोदोहनादेरपि पशुप्रणयनाद्युभयोद्देश्यतापत्तेः। अतोऽभिघारणस्य केवलहविस्संस्कारार्थत्वा**न्निनयनकालीन**पुरोडाशकपालन्यायेन शेषोत्पादनाप्रयोजकत्वेऽपि धारणप्रयोजकत्वो-**

---

मित्याकारकापेक्षायाः भवद्भिः प्रदर्शितत्वात्। तत्र चैकतरकर्मसमर्पणेन तदाकाङ्क्षापूरणेपि केनाभिघारणीयमिति साधनाकाङ्क्षायास्सर्वानुभवसिद्धाया उपशमकरणयोग्ये प्रयाजशेषकरणत्वे श्रूयमाणे व्यर्थमेव निष्प्रयोजनत्वकल्पनया द्वितीयार्थलक्षकत्वस्यानुचितत्वात्। **अत एव पार्थसारथिना** प्रयाजशेषस्य लक्षणया कर्मत्वोपपादने नियमेव जायमानायाः कुत्रेत्याकाङ्क्षायाः उपशमायाधिकरणत्वलक्षणाऽऽश्रितैव, न तु हविषां कर्मत्वमाश्रितम्।

**अत एव** सर्वमतेपि तत्तद्दूषणेभ्यो मुक्तेः पूर्वलिखित**न्यायसुधाग्रन्थ**तात्पर्यं वाक्यान्तरकल्पनामूलमेव सर्वदोषपरिहारेण दर्शयिष्यते **पूज्यपादैः**। तत्रापि दोषदर्शनेन वाक्यान्तरकल्पनां परित्यज्यानुषंगिकप्रतिपत्तित्वाङ्गीकारेण विनैव लक्षणादिना हविः संस्कारकाभिघारणार्थत्वमेव प्रयाजशेषस्य गुणत्वेन साधितं पूर्वाधिकरणे। अत्रापि मया उपपादयिष्यते। न चैतदधिकरणपूर्वपक्षस्यैव सिद्धान्तपक्षत्वव्यवस्थापने कालांतरभाविहविःसंस्काराय पात्रांतरे तच्छेषधारणापत्तिः। **तैत्तिरीयशाखापठिते** प्रयाजानिष्ट्वा हवींष्यभिघारयतीति वाक्ये त्त्वाप्रत्ययश्रुतेः अर्थप्राप्तानुवादकत्वे वैयर्थ्यापत्तेः पात्रांतरव्यावृत्तिफलकाव्यवहितानन्तर्यरूपक्रमविधायकत्वस्यैवाङ्गीकर्तुमुचितत्वेन तदनापत्तेः। प्रयाजशेषनाशे तु येनकेन चिदाज्येन हविरभिघारणं त्विष्टापत्त्यैव परिहरणीयमिति दिक्।

**प्रकाशकार**मतमनूद्य दूषयति—**यत्त्विति**। व्याख्यातपूर्वमेतत्। **अन्याय्यत्वादिति**। **यद्य**भिघारयतेः किमपि कर्म न स्यात् तदाकांक्षाशांतये तृतीयांतमपि लाक्षणिकं कर्माङ्गीक्रियेतापि, **न** त्वेतदस्ति श्रौतेन निराकाङ्क्षत्वादिति नान्यापादानापेक्षत्वमिति भावः। **नन्वस्तु** हविषामेव **कर्मत्वं** तथाप्यभिघारणेन प्रयाजशेषनिष्ठस्य प्रतिपत्तिसंस्कारस्यापि जननात् आनुषङ्गिक-

पपत्तिः। अतश्च दैक्षे हृदयाद्यभिघारणार्थं वाजपेये च प्राजापत्यवपाभिघारणार्थं च धारणीय एव पात्रान्तरे प्रयाजशेषः। प्रकृतौ हि प्रयाजोत्तरं वपायागमात्रं कृत्वा कालान्तरे हृदयादियागः। वाजपेये च प्राजापत्यान् क्रतुपशूंश्च सहोपक्रम्य दशप्रयाजोत्तरं पर्यग्निकरणान्ते कृते प्राजापत्यानां वैकल्पिको ब्रह्मसामकाले उत्कर्षः। अतश्च पर्यग्निकरणोत्तरभाव्युत्तमप्रयाजशेषेण क्रतुपशुवपाभिघारणवत्कालान्तरभाविप्राजापत्यवपाभिघारणार्थमपि धार्यश्शेष इति प्राप्ते—

सत्यं प्रयाजशेषाभिघारणं हविस्संस्कारार्थमेव वाक्येन विधीयते, तथाऽपि तु प्रयाजशेषस्य प्रतिपत्त्यपेक्षत्वात् तदनुरोधेन स्विष्टकृद्वदेव वाक्यान्तरकल्पनयाऽभिघारण-

---

फलाश्रयत्वं, तन्निर्वाहाय च लक्षणाश्रयणमित्याशंक्य दध्ना होमस्यापि जननात् आनुषंगिककर्मत्वेपि न तस्य दधिप्रयोजकत्वं किन्त्विन्द्रियफलस्यैव, श्रुतत्वात्। अत एव दध्नः पुरुषार्थत्वमेव। एवमिहापि स्यादिति दूषयति—**न्याय्यत्वेपीति। निनयनकालीनेति।** सोऽयं तुषोपवापो वाजसनेयिनां प्रधानयागोत्तरमस्तीति प्रागेवोक्तम्। **सत्यमिति।** एतच्च सिद्धान्तकरणं कुशकाशावलंबनेनैव।

तथाहि-यदि प्रयाजेषु जौहवार्धस्य होमः स्यात् तदोर्वरितस्य कथंचित् भवेदपि प्रतिपत्त्याकांक्षा। न चार्धहोमे किंचित् प्रमाणमस्ति, प्रयाजशेषाकांक्षया प्रतिपत्तिविधिकल्पनं तेन च प्रयाजशेषकल्पने चान्योन्याश्रयप्रसंगः। न च श्रुतविधौ प्रयाजशेषकरणत्वविधानबलादेव तच्छेषस्थापनं न तु प्रतिपत्तिविधिबलादिति नान्योन्याश्रय इति वाच्यम्। तथात्वे मिश्रमते यथाश्रुताभिघारणं प्रति हविषामुपादेयत्वे कल्प्यमानाधारतानियमं प्रत्यपि त्रयाणामेवोद्देश्यत्वापत्तिदूषणवत् भवन्मतेपि श्रुतविधिना हविरर्थत्वे द्वितीययाऽवगते सति कल्प्यमानस्थापनविधावपि हविरर्थं प्रयाजशेषं स्थापयेदित्येवंरूपे हविरर्थत्वस्यैवापत्तेः। मास्तु वा स्थापनविधौ हविरर्थत्वकल्पना, तथापि स्थापितस्य प्रयाजशेषस्य प्रतिपत्त्यपेक्षायाः श्रुतहविरर्थत्वविधिनैव शांतेः तत्र प्रतिपत्त्यन्तरविधिकल्पनामूलोच्छेदात न तत्कल्पनं प्रमाणवत्। अथाप्यत्र स्पष्टोप्यन्यः स्थापनविधिः पठितो भवेत् तथापि गृहीतानां पदपांसूनां अक्षाभ्यंजने तेनाक्षमुपांज्यादिति विनियोगवत् प्रयाजशेषाभिघारणविधिः विनियोगमेव तस्य कुर्यात्। नैतावता प्रतिपत्तिकल्पना। अस्तु वा प्रतिपत्तिविधिकल्पना तावतापि यथा केचिन्मते श्रुतहवीरूपोद्देश्यस्यैव धारणप्रयोजकत्वापत्तिदूषणवत् भवन्मतेपि कल्पितप्रयाजशेषलक्षणोद्देश्यापेक्षया श्रुततरस्यैव तत्प्रयोजकत्वापत्तिः।

**स्यैव तत्प्रतिपत्त्यर्थत्वमङ्गीक्रियते। न च प्रयाजेषु सर्वेहोमस्यैवापत्तेर्न प्रतिपत्त्यपेक्षा। आर्थिकप्रतिपत्त्यन्तरविध्यभावेऽपि प्रयाजशेषकरणकाभिघारणविधिनैव द्वितीयतुषोपवापवद्धारणाक्षेपापत्त्या सर्वेहोमानापत्तेः। न च स्विष्टकृदादिहांशभेदाभावादभिघारणस्य श्रौतेन हविरर्थत्वेनापेक्षामात्रप्रमाणकप्रतिपत्त्यर्थत्वबाधः, श्रौतविधेर्धारणाद्याक्षेपशक्तिकल्पनागौरवपरिहारार्थमेव फलमुखप्रतिपत्तिविधिकल्पनाऽनुमतेः। अत एव ज्ञानाद्याक्षेपशक्तिकल्पनागौरवपरिहारार्थमधिकारिसङ्कोचवत् सन्निहितहविस्सङ्कोचोऽपि न दोषाय। अत एव यत्र न प्रतिपत्तिः यथा द्वितीयतुषोपवापकपालादौ तत्र न तत्कल्पना।** जाघन्यां **तु वक्ष्यते। न चार्थिकप्रतिपत्तिविधेरपि धारणाक्षेपशक्तिकल्पनाऽऽवश्यकत्वे श्रौतविधेरेव तत्कल्पकत्वौचित्यमिति वाच्यम्, पूर्वाधिकरणवदेवानुमानिकतत्कल्पनस्यादोषत्वात् अनुमानस्य फलमुखत्वाच्च। अतश्च प्रतिपत्तिबलेनैवाक्षिप्तस्य धारणस्योपजीव-**

---

**एतेन** श्रौतविधेरेव धारणप्रयोजकत्वशक्तिकल्पनागौरवपरिहारार्थमेव प्रतिपत्तिविध्यनुमितिरित्यपास्तम्। श्रुतविध्यवगतकरणत्वकर्मत्वाबाधेनावगतहविरर्थत्वनिर्वाहाय स्वस्मिन् प्रयोजकत्वमात्रशक्तिकल्पनायाः स्वाबाधार्थं लक्षस्थलेऽङ्गीकृतायाः वाक्यान्तरकल्पनापेक्षया लघुभूताया औत्तरकालीनायाः भवदुक्तनिषादस्थपत्यधिकरणन्यायेनैव सध्रीचीनत्वात्। इतरथाऽतिप्रसंगापत्तेः। श्रौतविधेर्विध्यन्तरकल्पकत्वेन सार्थक्यापेक्षया प्रयोजकत्वमात्रशक्तिकल्पनया स्वसार्थक्यस्य लघुत्वाच्च। अतः कथमपि वाक्येन न प्रयाजशेषसंस्कारकमभिघारणमायातीति दुर्घटमेवात्र सिद्धान्तोपपादनमित्येतत् सिद्धान्तोपपादनारंभे **पूज्यपादैरेव सत्यं तथापीति** शब्दाभ्यां सूचितप्रायम्। ग्रहैकत्वाधिकरणप्रदर्शितहविस्संख्याऽविवक्षां वदतो वार्तिककारस्यापि अनुकूलतामावेदयति।

अत एव तार्तीयसप्तमपादान्त्याधिकरणसिद्धान्ते **लिङ्गदर्शनाच्चेति** गुणसूत्रे वेद्याद्यासादनस्याङ्गप्रधानहविरर्थत्ववत् प्रयाजशेषवाक्यविहिताभिघारणस्याङ्गप्रधानहविरर्थत्वं स्पष्टं **वार्तिककृतोपपादितं** संगच्छते। स्पष्टमेव वपामेकः परिशय इति तैत्तिरीयश्रुतौ तिष्ठति पशावेकादश प्रयाजान्यजति दशेष्ट्वा एकादशायाज्यमवशिनष्टीत्यापस्तंबसूत्रे च पशावन्तिमस्य प्रयाजशेषस्य वपासंस्कारार्थत्वं तदर्थं स्थापनं च प्रतीयते। न च हविः संस्कारार्थत्वे **अदृष्टार्थत्वापत्तिरिति तंत्ररत्नोक्तं** युक्तं; सव्या वा एतर्हि वपा इति सिद्धान्तदर्शितलिङ्गदर्शनात् **रूक्षताव्यावृत्तिरूपदृष्टप्रयोजनस्यैव** लाभादिति दिक्। **जाघन्यान्त्विति।** पत्नीसंयाजानामप्राकृतकार्यकारित्वरूपं बाधकं द्वादशे वक्ष्यत इति भावः। न च प्रत्यक्षश्रुतहविरर्थत्वबाधव-

नाद्विनिगमनाविरहेण सन्निहितसर्वेहविष्षु अभिघारणोपपत्तावपि न कालान्तरीयहविरर्थं धारणमिति। अत एव प्राजापत्यवपानां क्रतुपशुभिस्सह करणपक्षे "सह पशूनालभते वपानामभिघृतत्वाय" इति लिङ्गं ब्रह्मसामकालीनत्वपक्षे तदभावं दर्शयति। स्पष्टं च "सव्या वा एतर्हि वपा यर्ह्यनभिघृता" इति रूक्षत्वाख्यं सव्यत्वं तस्मिन् पक्षे दर्शयति। न चाभिघारणान्तरेण रूक्षत्वनिवृत्तिः, तस्य तापमात्रनिवर्तकत्वेन रूक्षताया अनिवर्तनात्॥ १४॥

---

## (१५)—समानयनं तु मुख्यं स्यात, लिङ्गदर्शनात॥ ४०॥ वचने हि हेत्वसामर्थ्यं॥ ४१॥

दर्शपूर्णमासयोः प्रयाजार्थं जुह्वां चतुर्गृहीतं विधाय "अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्" इति वचनेनौपभृतं विधाय पुनर्ध्रुवायां चतुर्गृहीतं विहितम्। तत्रैव च "अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतम्" इति श्रुतम्। तत्र किं प्रयाजास्समानयनस्य तत्संस्कृताज्यस्य च प्रयोजकास्तदर्थं चेदमुभयं उत ते अप्रयोजका अनूयाजा एव तु तयोः प्रयोजकास्तदर्थं चेदमुभयमिति चिन्तायां—"प्रयाजानूयाजेभ्यस्तत्" इति द्वन्द्वान्ते श्रुतस्य बहुवचनस्य प्रत्येकं सम्बन्धादुद्देश्यगतस्याप्यप्राप्तत्वेनानुवादायोगादौपभृतस्य न्यायत एव सर्वप्रयाजार्थत्वप्रतीतेः प्रयाजार्थस्यार्धस्य सर्वप्रयाजादौ समानीतत्वाद्बर्हिः प्रयाजकाले उपभृत्यनूयाजार्थस्यैव सत्त्वेन तस्यैवेदं समानयनं तत्संस्कारार्थमनूयाजप्रयुक्तं न तु प्रयाजप्रयुक्तम्। अत एव जौहवस्याप्यविशेषेण सर्वप्रयाजार्थत्वादौपभृतेन विकल्पः। "त्रिनितःप्राचीनान् प्रयाजान् यजति" इति त्ववयुत्यानुवाद इति प्राप्ते—

कालविशिष्टसमानयनस्यानूयाजीयाज्यसंस्कारकत्वेऽदृष्टार्थत्वापत्तेर्विशिष्टविधिगौरवात् 'त्रीन्' इत्यस्यावयुत्यानुवादत्वापत्तेश्च प्रयाजार्थस्येदं समानयनम्। तच्च "जुह्वा जुहोति" इति वचनादर्थप्राप्तमेवेति तदनुवादेन कालमात्रमनेन विधीयते। अतश्च "प्रयाजानूयाजेभ्यः" इत्यत्र प्रयाजाभ्यां अनूयाजेभ्यः इति विग्रहे न दोषः। अत एव जौहवमपि परिशेषादाद्यप्रयाजत्रयार्थमिति न विकल्पप्रसङ्गोऽपि। एवं चातिथ्यायामिडान्तत्वेन अनूयाजाभावेऽपि च "चतुर्गृहीतान्याज्यानि" इति बहुवचनं जौहवौप-

---

दतिदेशप्राप्तप्राकृतोपकारजनकत्वस्यापि बाधे बाधकाभावात् अतिदेशप्राप्तानामेव पत्नीसंयाजानां जाघनीप्रतिपत्त्यर्थत्वमेवास्त्विति वाच्यम्। प्रकृते प्रयाजशेषगतानन्यथासिद्ध-

भृतचतुर्गृहीतयोः प्रयाजेषु समुच्चयाद्ध्रौवचतुर्गृहीतमादाय सङ्गच्छते। इतरथा तयोर्विकल्पादनूयाजाभावे ध्रौवमादाय चतुर्गृहीतद्वित्वापत्तेर्बहुवचनानुपपत्तिः। अतश्च प्रयाजद्वयं समानयनस्य तत्संस्कृताज्यस्य च प्रयोजकमिति सिद्धम्। सूत्रादौ तु समानयनपदं तत्कालीनप्रयाजद्वयपरं आज्यसंस्कारकस्य समानयनस्याज्यप्रयोजकत्वसिद्धान्तानुपपत्तेः।

---

## (१६)—तत्रोत्पत्तिरविभक्ता स्यात् ॥ ४२ ॥ तत्र जौहवमनुयाजप्रतिषेधार्थम् ॥ ४३ ॥ औपभृतं तथेति चेत् ॥ ४४ ॥ स्याज्जुहूप्रतिषेधान्नित्यानुवादः ॥ ४५ ॥

एवं तावदौपभृतस्य प्रयाजार्थत्वमङ्गीकृत्य प्रयोज्यत्वं विचारितम्। तदेवाक्षिप्य समाधीयते। "चतुर्जुह्वां गृह्णाति, अष्टावुपभृति गृह्णाति, चतुर्ध्रुवायां गृह्णाति" इत्यसंयुक्तोत्पन्नान्याज्यानि लिङ्गप्रकरणाभ्यां यावत् सर्वप्राकरणिकद्रव्यापेक्षकार्यार्थत्वेन विनियुज्यन्ते तावत् "चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्, अष्टावुपभृति अनूयाजेभ्यस्तत्, सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्" इत्यादिवचनैस्तत्तत्कार्यार्थत्वेन विनियोगादौपभृतस्यानूयाजमात्रार्थत्वम्। यत्तु "अष्टावुपभृति गृह्णाति प्रयाजानूयाजेभ्यस्तत्" इति वचनं, तत्र प्रयाजत्वानूयाजत्वयोरुद्देश्यतावच्छेदकत्वे वाक्यभेदापत्तेरनूयाजानां प्रयाजोत्तरत्वानुवादमात्रमिति प्राप्ते—

उभयतोऽप्यनुवादत्वावश्यकत्वे समानयनादिविध्यदृष्टार्थत्वाद्यनुरोधेन शुद्धानूयाजवचनस्यैवानुवादत्वम्। न (वा) च वाक्यभेदः, ग्रहैकत्वाधिकरणव्युत्पादितकौस्तुभोक्तरीत्या "अध्वर्युयजमानौ वाचं यच्छतः" इतिवदवाक्यभेदात्। अतश्चौपभृतं प्रयाजानूयाजार्थमिति सिद्धम् ॥ १६ ॥

---

प्रतिपत्त्यपेक्षया तद्बाधेपि पशुगतचर्मास्थिसाधारणप्रतिपत्तिविधिनैव जाघनीप्रतिपत्तेरुपपत्तेरवश्यं प्रतिपत्त्यपेक्षाभावादिति भावः।

---

॥ इतोऽनन्तरमधिकरणद्वयम् ॥

तत्र सूत्रादौ त्विति। तस्यायमर्थः। समानयनं मुख्यं प्रयोजकं स्यात् चतुर्गृहीतान्याज्यानि भवन्तीति बहुत्वानुवादरूपलिङ्गदर्शनादित्यर्थके समानयनं तु मुख्यं स्याल्लिङ्ग-

## (१७)—तदष्टसङ्ख्यं श्रवणात् ॥ ४६ ॥ अनुग्रहाच्च जौहवस्य ॥ ३७ ॥ द्वयोस्तु हेतुसामर्थ्यं श्रवणं च समानयने ॥ ४८ ॥

"अष्टावुपभृति" इत्यनेनाष्टसङ्ख्याकं एकं ग्रहणं विधीयते, उत चतुस्सङ्ख्याक-ग्रहणद्वयमिति चिन्तायां—श्रुतत्वादष्टत्वसङ्ख्यैव विवक्षिता, न चतुस्सङ्ख्याद्वयं लक्षणा-पत्तेः। न चानारभ्याधीतेन "चतुर्गृहीतं जुहोति" इत्यनेनानिर्दिष्टद्रव्यकसर्वहोमानु-वादेन चतुर्गृहीतविधानात्प्रयाजादिष्वपि तत्प्राप्तेः प्रयाजानूयाजार्थचतुर्गृहीतद्वयोद्देशेन उपभृत्पात्रमात्रस्यात्र विधिप्रतीतेरष्टपदं चतुष्कद्वयलक्षणार्थमिति वाच्यं, अनारभ्यविधिना जुहोतिचोदनाचोदितप्रधानभूतहोमोद्देशेन चतुर्गृहीतविधानेऽपि प्रयाजादिषु यजतिचो-दनाचोदितेषु प्रक्षेपाख्यहोमस्य तदीयद्रव्यसंस्कारकत्वेन तमुद्दिश्य चतुर्गृहीतविधानानु-

---

दर्शनादिति सूत्रे यत् समानयनपदं तत् तत्कालीनप्रयाजद्वयपरमिति। इतरत् स्पष्टत्वान्न व्याख्यातम्।

---

### ॥ तदष्टसंख्यं श्रवणात् ॥

अत्र प्राचीनैः पक्षद्वयेन सिद्धान्तितं—यद्यप्यष्टसंख्या श्रुता तथापि न तदवच्छिन्नमत्र ग्रहणं विधीयते। किंतु अनारभ्याधीतेन चतुर्गृहीतं जुहोतीति वचनेन होमोद्देशेन चतुर्ग्रहण-संख्यावच्छिन्नं किमपि द्रव्यसामान्यं विधीयते। तच्च किमित्यपेक्षायां अष्टावुपभृति गृह्णाति इत्यनेन प्रयाजानूयाजीयहोम उपभृति गृहीतमाज्यमिति विशेषो विधीयते। न त्वस्य ग्रहणे अष्टसंख्याविधाने तात्पर्यम्। ग्रहणस्य चतुस्संख्ययैव परिच्छिन्नत्वात्। अत औपभृताज्यस्य प्रयाजानूयाजरूपप्रयोजनद्वयमेव समर्प्यते। ततश्च यदुपभृति गृह्णाति तत् प्रयाजानूयाजार्थमित्येतावत्यर्थे विहिते उपभृति अनारभ्याधीतविधिना चतुर्गृहीतमेव विहितमासीदित्यतोऽष्टपदं श्रुतमपि चतुष्कद्वयलक्षणार्थमित्येकः पक्षः। सोऽयं पक्षस्तैरेव दूषितः। अनारभ्याधीतचतुस्संख्यया न प्राकरणिकमष्टत्वं अन्यथा नेतुं शक्यं, तस्य सामान्यविषयत्वात्। अतो यत् प्रयाजानूयाजयोर्गृह्णाति तदुपभृतीत्यनेन उपभृत्पात्रमात्रं विधीयते प्रयाजानूयाजार्थं ग्रहणमर्थप्राप्तमेव। तस्य च होमसाधनत्वमनारभ्याधीतवाक्येन चतु-स्संख्यावच्छिन्नस्यैव श्रुतमिति नाकृत्वा चतुर्ग्रहणं होमं कर्तुं शक्यते इत्यष्टपदं चतुस्संख्याद्वय-लक्षकम् तत्प्रयोजनं च कालपात्रैक्यसिद्धिरिति द्वितीयः, तदुभयमनूद्य पूर्वपक्षे दूषयति— **न चेत्यादिना।**

**पपत्तेः।** अत एवोपांशुयाजादौ **"चतुर आज्यस्य गृह्णन् आह" इत्यादिविध्यन्तरादेव ध्रुवादितश्चतुर्गृहीतविधानम्।** अस्तु वैतादृशविषयेऽपि तत्प्राप्तिः, **तथाऽपि वाचनिकेन प्राकरणिकेन चाष्टत्वेन बाधात्तस्य प्रयाजाद्यतिरिक्तविषयत्वमेवावश्यकम्। न च होमाङ्गभूतचतुस्सङ्ख्यायाः प्रधानाश्रितत्वादङ्गाश्रितया ग्रहणाङ्गभूतयाऽष्टसङ्ख्यया बाधासम्भवः। उभयोरपि ग्रहणाङ्गत्वात्। अस्तु वा चतुस्सङ्ख्याया होमाङ्गत्वं, तथाऽपि होमस्याप्यत्राङ्गत्वादेव न तदङ्गचतुस्सङ्ख्याया बलवत्त्वम्।**

---

**अत्रेदं चिन्त्यं।** अनारभ्याधीतविधिना अनिर्दिष्टद्रव्यहोमेषु चतुर्गृहीतद्रव्यविधिरिति सिद्धान्त्यभिप्रायश्चेद्वर्णितः **तर्हि** कथमग्रे प्रयाजादिषु तत्प्राप्तिरुद्भाव्यते। चतुर्जुह्वां गृह्णाति प्रयाजेभ्यस्तदिति वाक्येन प्रयाजेषु जौहवस्य विहितत्वेनानिर्दिष्टद्रव्यकत्वाभावात्। न च जौहवस्य चतुर्गृहीतं वेति वाक्येन आद्यप्रयाजत्रयार्थत्वेन विनियोगेपि उत्तरप्रयाजद्वयेऽनारभ्याधीतविधिनैव तत्प्राप्तिर्वक्तव्येति वाच्यम्; जौहवप्राप्त्यभावेपि प्राकरणिकध्रौवाज्यप्राप्त्युपपत्तेः। **एतेनानूयाजानामविनिर्दिष्टद्रव्यकत्वमुपपन्नम्।**

**ननु** अनारभ्याधीतवाक्येन चतुर्गृहीतद्रव्यसामान्यविधाने सत्येवाष्टावुपभृतीति वाक्यस्याज्यरूपविशेषविधायकत्वं भवतीत्यस्त्येव प्रयाजादिषु तत्प्राप्तिरिति **चेत् सत्यं,** तन्त्ररत्नोदाहृताद्यपक्षेण कथं चिन्निर्वाहः। न त्वसौ **पूज्यपादैरुक्तः** उपभृत्पात्रमात्रविधिप्रतीतेरित्युक्त्याऽऽज्यरूपविशेषविधिपक्षस्यासंमतत्वात्। इतरथा मात्रशब्दोऽनुपपन्नः स्यात्। उभयविधौ वाक्यभेदापत्तेश्च। अतोऽनिर्दिष्टद्रव्यकत्वांशं विहाय होमेष्वनारभ्याधीतविधिना चतुर्गृहीतद्रव्यविधानात् प्रयाजादिष्वपि तत्प्राप्तिरित्येव संमुखतया वक्तव्यमिति। **अत एवेति।** होमोद्देशेन चतुर्गृहीतद्रव्यविधिरनारभ्याधीतविधिना। स चानिर्दिष्टद्रव्यकेषु जुहोतिचोदनाचोदितेषु यत्र होमप्राधान्यं तत्रैवेत्युक्ते कथमुपांशुयाजादौ यत्र न होमप्राधान्यं तत्र चतुर्गृहीतद्रव्यप्राप्तिरित्याशङ्कोत्तरत्वेन खल्वयं ग्रन्थः। तत्रेदं मृग्यं चतुर्गृहीतद्रव्यप्राप्त्यन्यथानुपपत्त्या हि चतुर आज्यस्येति विध्यन्तरादेव तत्प्राप्तिरुच्यते। एवकारेण प्रकारांतरेऽनुपपत्तिसंभावनापि व्यज्यते। तत्र ध्रौवाज्ये सति कथं तदनुपपत्तिः उपांशुयाजे स्यात्, येन तावद्दूरमनुधावनं पतेत्।

**अथ** ध्रौवाज्ये सत्यपि यागकाले ध्रुवापादानकचतुर्गृहीतं जुह्वां ग्राह्यं जुह्वा जुहोतीति वाक्येन तस्या एव होमसाधनत्वात्। अत्रोपांशुयाजस्य यागत्वे न होमप्रधानकचतुर्गृहीतस्यानारभ्याधीतविधिना प्राप्त्यभावात् युक्तमेव चतुर इति वाक्यपर्यन्तानुधावनम्। अत एव

किञ्च होमोद्देशेन चतुर्गृहीतविधाने प्रतिहोमव्यक्ति तद्भेदापत्तेर्यावत्प्रयाजानूयाज-व्यक्तिभेदेन चतुर्गृहीतभेदात् तावच्चतुर्गृहीतोद्देशेनैकपात्रविधावष्टत्वानुपपत्तिः। न हि

---

ध्रुवादित इति पञ्चम्यर्थे तसिरिति चेत्; सत्यं, तथापि यागप्रधानेषु चतुर्गृहीतद्रव्यप्राप्त्यनुपपत्ति-रित्याशङ्कोत्तराभिप्रायकः। अत एवेत्यस्यासंबद्धत्वं ध्रुवापादानकचतुर्गृहीतविधिकथनस्य वास्तवस्या-प्यत्र पूर्वापरासंबन्धत्वेनाकाण्डताण्डवरूपत्वात्। यदि ह्यत्रानारभ्याधीतविधिना होमीयद्रव्योद्देशेन चतुर्ग्रहणमात्रविधिस्ततश्च प्रयाजानूयाजीयग्रहणोद्देशेनाष्टावुपभृतीत्यनेन उपभृत्पात्रमात्रविधिप्रतीतेः अष्टपदं चतुष्कद्वयलक्षकमिति सिद्धान्त्याशङ्काभिप्रायः। तदुपरि यत्र होमप्राधान्यं तदीयद्रव्येष्वेव चतुर्ग्रहणं विधीयते अनारभ्याधीतविधिना। अतश्च न प्रयाजानूयाजीयद्रव्येषु चतुर्ग्रहणप्राप्तिर्येन तत्प्राप्त्या अष्टपदं लक्षकं स्यादिति पूर्वपक्षिणः समाधानाभिप्रायः। तदनन्तरं च कथमुपांशुयाजे ध्रौवाज्यस्य चतुर्गृहीतस्य यागकाले चतुर्ग्रहणप्राप्तिः तस्य होमीयद्रव्यत्वा-भावादित्याशङ्कोत्तराभिप्रायकश्चेदत एवेति ग्रन्थो भवेत्।

तदा कथंचिदकाण्डताण्डवता परिह्रियेतापि; न त्वेतदस्ति। न चेति सिद्धान्त्या-शङ्कापरे ग्रन्थे निर्दिष्टद्रव्यकसर्वहोमानुवादेन चतुर्गृहीतविधानादित्युक्त्या चतुर्ग्रहणविशिष्टद्रव्यस्यैव विधिप्रतीतेः। किं च चतुर्ग्रहणस्य होमीयद्रव्योद्देशेन विधाने एकप्रसरताभङ्गापत्तेः।

किं चैवमाशयं वर्णयन् प्रष्टव्यः। किमनारभ्याधीतविधिराज्यस्थाल्यपादानकजुह्वादि-स्रुगधिकरणकग्रहणे चतुर्गृहीतं विधत्ते, उत्तरयागवेलायामुपभृदाद्यपादानकजुह्वधिकरणकग्रहणे वा? नाद्यः। असंयुक्तोत्पत्तिवाक्येषु चतुः पदश्रवणेनैव चतुर्ग्रहणस्याज्यस्थाल्यपादानकस्य प्राप्तेरेतद्विधेस्तत्राप्रवृत्तत्वात्।

अथाष्टावुपभृतीत्यत्र चतुः पदाभावेन तदप्राप्त्या तत्रैवानारभ्यविधिप्रवृत्तेरुक्तत्वात् अष्टपदं चतुष्कद्वयलक्षकं भविष्यत्येवेति चेत् सत्यं, तदा ध्रुवापादानकं यदा ग्रहणं उपांशुया-जाद्यर्थे यागकाले जुह्वां कर्तव्यं तदाऽनेनानारभ्याधीतविधिना चतुर्ग्रहणं विधेयं, उत्तर-प्रयाजद्वयानूयाजार्थं यदाऽऽज्यस्थाल्यपादानकं ग्रहणं कर्तव्यं तदा उपभृति अनारभ्यविधिना चतुर्ग्रहणमिति वक्तव्यं, ततश्च वैरूप्यापत्तिः। तदपेक्षयाऽवैरूप्याय जुह्वामेव तत्स्रुगपादानकं ग्रहणं कर्तव्यं यागकाले यदा तदैव अनेन चतुर्ग्रहणं विधेयमिति द्वितीयपक्ष एवाङ्गीकार्यः। तत्राष्टसंख्याकग्रहणविधिरिति पूर्वपक्षेपि आज्यस्थाल्यपादानके अष्टवारं ग्रहणे कृतेपि इतरत्रैव यागकाले जुह्वां चतुर्ग्रहणविधिसंभवेन अष्टगृहीतस्य चतुर्गृहीतस्य विरोधाभावात्।

तवाज्यभागयोरिवावयवशो होमे किञ्चिन्नियामकमस्ति। अस्तु वा तत्, तथाऽपि यथैवावयवशो होमेऽपि चतुर्गृहीतद्वयस्य प्रयाजानूयाजसाधनत्वाविघातः, तथैवाष्टसङ्ख्याकग्रहणेऽनुष्ठितेऽपि तदन्तर्गतत्वेन चतुष्कद्वयस्यापि सत्त्वादुभयोरपि सङ्ख्ययोस्साधनत्वाविघातः।

किञ्चैवं तव प्रयाजद्वयानूयाजत्रयेऽपि मिलित्वैकं चतुर्गृहीतमवयवशः प्राप्येतेत्यष्टत्वानुवादानुपपत्तिः। अतस्तत्सङ्ख्याकग्रहणसंस्कृताज्यान्येवैतैर्वाक्यैस्तत्कार्योद्देशेन

---

अष्टपद्लक्षणायां प्रमाणाभावापत्तेः न चेति ग्रन्थकृतस्सिद्धान्त्याशङ्काया असंगतत्वापत्तेः। अस्तु भवेति ग्रन्थस्यापि भिन्नविषयत्वेन विरोधाप्राप्त्या बाधाप्रसक्तेः असामञ्जस्यं स्यात्। अतोऽयं ग्रन्थस्सर्वोपि आपातत एवेति ज्ञेयम्।

ननु सिद्धान्तेपि यथा यदाहवनीये जुहोतीत्यत्र होमत्वावच्छिन्ने आहवनीयविधिः नतु जुहोतिचोदनाचोदितत्वेन विवक्षा, एवमत्रापि चतुर्गृहीतविधिः होमत्वावच्छिन्ने स्यादेवेत्यभिप्रेत्य पक्षान्तरमाह—**अस्तु वेति। अज्यभागयोरिवेति।** यथा आज्यभागयोर्नावयवशो होमः मानाभावात् किंतु पृथगेव चतुर्गृहीतद्वयं तद्वदिहापि नावयवशो होमे नियामकमित्यर्थः। ननु यथा त्वया जौहवादिविनियोजकवाक्येषु प्रयाजानामुद्देश्यत्वेन साहित्याविवक्षया प्रतिप्रधानन्यायाच्च प्रत्येकं प्रयाजव्यक्तिषु चतुर्गृहीतभेदः प्राप्तः तथापि असंयुक्तोत्पत्तिवाक्यवैयर्थ्यानुपपत्त्या जुह्वां चतुर्वारमेव ग्रहणमिति परिसंख्याफलकत्वस्वीकारेण एकैकस्यैवावयवशः प्रयाजेषु संपादनं स्वीकरिष्यते तथा अष्टावुपभृतीत्यसंयुक्तोत्पत्तिवाक्यवैयर्थ्यानुपपत्त्या अष्टसंख्याकस्यैवावयवशः प्रयाजद्वये अनूयाजत्रये संपादनं वा तथा ममापि अनेकचतुर्गृहीतप्राप्तावुत्पत्तिवाक्यात् चतुर्गृहीतद्वयमेवावयवशः आयास्यत्येवेति अपरितुष्याह—**अस्तु वा तदिति। साधनत्वाविघात इति।** यद्यपि प्रयाजानूयाजार्थमष्टग्रहणं पूर्वपक्षे तदपि समं स्यादिति न्यायेन किंचिन्न्यूनार्धस्यैवाज्यस्य बर्हिः प्रयाजोपक्रमे आनयनानुष्ठानप्रयोजनस्य वक्ष्यमाणत्वेन तस्यैव बर्हिः प्रयाजद्वयसाधनत्वं अवशिष्टस्याधिकार्धस्य चानूयाजसाधनत्वं न तु चतुर्गृहीतस्य साधनत्वं येन साधनत्वाविघात उच्यते **तथापि** साधनत्वशब्देन तत्प्रयोजकीभूतग्रहणगतसंख्योपपत्तिर्लक्ष्यत इति नानुपपत्तिः। यथैव हि होमस्योद्देश्यत्वेपि प्रतिप्रयाजव्यक्ति चतुर्गृहीतं न भिद्यते सिद्धान्ते तथैव प्रतिप्रयाजद्वयानूयाजत्रयव्यक्त्यभिन्नं चतुर्गृहीतं न स्यादित्याह—**किं चेति। वस्तुतस्तु** यथोत्पत्तिवाक्येनाधिकानां चतुर्गृहीतानां व्यावृत्तिरित्युक्तं प्राक् तथैव न्यूनताया अपि व्यावृत्तिः कर्तुं शक्यत एवेत्येव युक्तं। तेन चतुर्गृहीतद्वयेनैवाष्टत्वमुपपादनीयं

विधीयन्ते। न चास्मिन् मतेऽपि प्रतिप्रधानं भेदप्रसङ्गः, विनियोगवाक्यानुसारेण तथा प्राप्तावपि पृथगुत्पत्तिवाक्यवैयर्थ्यापत्त्या तथोत्पन्नस्यैकैकस्यैवावयवशो विनियोगाङ्गीकारात्। अतोऽष्टत्वं विवक्षितमेवेति प्राप्ते—

"चतुर्गृहीतान्याज्यानि भवन्ति", "न ह्यत्रानूयाजान् यक्ष्यन् भवति" इत्यातिथ्यायामिडान्तायां श्रुतस्य चतुर्गृहीतबहुत्वे अनूयाजसामान्याभावरूपस्य हेतोरेव लक्षणातात्पर्यग्राहकतयाऽष्टत्वमविवक्षितम्। अयं हि न "तेन ह्यन्नं क्रियते" इतिवदर्थवादः, अपि तु लक्षणाद्यभावाद्धेतुविशिष्टचतुर्गृहीतबहुत्वविधिरेव चतुर्थचतुर्गृहीतनिवृत्तिफलकः। अतश्च तद्बलेन व्याप्तिकल्पनायां यत्र यत्रानूयाजसामान्याभावोऽन्यत्रापि, तत्र चतुर्थचतुर्गृहीतनिवृत्तिरूपसाध्यसिद्धिः। अतश्च व्यतिरेकमुखेन चतुर्थं चतुर्गृहीतमनूयाजार्थं इतरच्च प्रयाजार्थमिति सिद्धं भवति। तच्चाष्टत्वस्य चतुष्कद्वयलक्षणार्थत्वे उपपद्यत इति तत्सिद्धिः। इतरथाऽनूयाजाभावेऽप्यष्टगृहीतस्यानिवृत्तत्वेन जौहवध्रौवरूपचतुष्कद्वयस्यैव प्राप्तेर्बहुत्वानुवादानुपपत्तिः, कथञ्चित्प्राप्तावपि वा समस्तवाक्यवैयर्थ्यम्। न च वाचनिकबहुत्वविधेरेवायमर्थवादः, हेतुपरत्वे सम्भवति स्तुतिलक्षणायां प्रमाणाभावात्। वस्तुतस्तु—नाष्टपदेऽपि लक्षणा, हेतुबलेनैवार्धस्यानूयाजार्थत्वे अर्धस्य प्रयाजार्थत्वे चावगते आतिथ्यादावनूयाजाभावेनैवाष्टत्वस्य बाधोपपत्तेः। अस्तु वा सा।

---

सिद्धान्तिनापीति नैकचतुर्गृहीतस्यावयवशो होमप्रसक्तिरिति। लक्षणाद्यभावादिति। वर्तमानान्नकरणत्वस्य होमविधौ हेतुत्वासंभवात्तत्र भूतभविष्यदर्थकत्वाश्रयणेन लक्षणापत्तेस्तदनाश्रयणेपीह तदप्रसक्तेः हेतुविधित्वे न बाधकमित्यर्थः। निवृत्तिरूपसाध्यसिद्धिरिति। अत्र च न चतुर्थचतुर्गृहीतनिवृत्तिमात्रम् साध्यं, अनूयाजाभावरूपहेतोः चतुर्गृहीतत्रित्वं प्रत्येवोपादानात् किन्त्वातिथ्याप्रयोगस्त्रित्वावच्छिन्नचतुर्गृहीतसमानाधिकरणचतुर्थचतुर्गृहीतनिवृत्तिमान् यक्ष्यमाणानूयाजाङ्गकत्वाभावात् इत्यनुमानप्रयोगः। यत्र तादृशसाध्याभावस्तत्र तादृशहेत्वभावो यथा दर्शपूर्णमासादिष्विति व्यतिरेकमुखेन तादृशचतुर्थचतुर्गृहीतमनूयाजार्थमितरच्च प्रयाजार्थमिति सिद्ध्यतीति भावः। अस्तु वा सेति। अयं भावः। यद्यपि प्रकृतावष्टवारं ग्रहणे कृतेपि हेतुबलेनैवार्धमनूयाजार्थं अर्धं प्रयाजार्थं इत्यवगतिः सुलभा तथापि तावद्धेतुसाध्ययोर्व्यतिरेकव्याप्तिं गृहीत्वा अनूयाजाभावस्य हेतुत्वे गृहीते पश्चादिदं प्रकृतौ ज्ञातव्यम्। तत्र व्याप्तिग्रह एव दुस्साध्यः अष्टगृहीतत्वे बुद्धेपि चतुर्गृहीतत्वावच्छिन्ने त्रित्वावच्छिन्नत्वं तदवच्छिन्नसामानाधिकरण्यं चतुर्थचतुर्गृहीत इत्येवं साध्यस्वरूपबोधस्यैवासंभवात्। ततश्चान्योन्याश्रयापत्तिः। अतश्च-

**प्रयोजनं—पूर्वपक्षे प्रयाजद्रव्यार्थे अर्धन्यूनसमानयनं, अष्टगृहीतस्य "समं स्याद-श्रुतत्वात्" इति न्यायेन** पञ्चस्वपि **विभागात्। सिद्धान्ते त्वर्धं समानेयम्॥ १७॥**

**इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां**
**चतुर्थस्याध्यायस्य प्रथमः पादः.**

---

तुर्गृहीतद्रव्यस्य चतुर्गृहीतत्वेन तृतीयत्वेन चतुर्थत्वेन च बोधार्थमावश्यकी अष्टपदे चतुर्गृहीत-द्रव्यलक्षणा। ततश्च प्रचयशिष्टत्वात् त्रित्वचतुष्ट्वयोर्बोधस्सुलभ इति सर्वमुपपन्नं भवति।

अत्र भाष्यकारेण पूर्वपक्षे नियोगतोऽर्धं समानेतव्यमित्येकं प्रयोजनमुक्त्वा अनूयाजा-भावेपि अष्टगृहीतमेव पूर्वपक्षे सिद्धान्ते चतुर्गृहीतमेवेति द्वितीयं प्रयोजनमुक्तम्। तत्राद्यं प्रयोजनं **समं स्यादश्रुतत्वादिति** न्यायादर्धं प्रयाजार्थे अर्धमनूयाजार्थे इत्यवगतत्वात् अर्धमेव पूर्वपक्षेपि समानेतव्यं प्राप्नोतीति प्रदूष्य द्वितीयमेव युक्तं प्रयोजनमित्युक्तं **तन्त्ररत्ने**। तत्र द्वितीयमेव प्रयोजनमयुक्तमिति ध्वनयन्नाद्यमेव प्रयोजनं युक्तमित्याह—**पञ्चस्वपीति**। यद्यप्यनूयाजाः प्रयाजाश्चोद्देश्यास्तत्रैकः प्रयाजरूपोंशः अनूयाजरूपश्चैकः। एवमादाय साम्ये-ऽर्धमेवायाति तथापि व्यक्तीनाङ्गणनया साम्यविचारे त्रयोऽनूयाजाः द्वौ प्रयाजाविति समान-संख्यत्वाभावाद्यादृशं व्यक्तीनां साम्यं तत्राष्टगृहीतनिवेशे क्रियमाणे किंचिन्न्यूनार्धमेवायातीति विषमस्तन्त्ररत्नकृतो दूषणहेतुः। **एतेन** द्वितीयप्रयोजनमपास्तं ; प्रयाजानूयाजेभ्य इति द्वन्द्व-समासश्रवणात् साहित्यविवक्षाप्रतीतेः सहितप्रयाजानूयाजयोरेवाष्टगृहीतप्रतीत्या **समं स्यादिति** न्यायेन चार्धन्यूनस्यैव प्रयाजार्थत्वे प्रकृतावनधारिते अनूयाजाभावे तादृशस्यैव किंचिन्न्यूनार्ध-स्यानयनस्यैवातिध्यायां पूर्वपक्षे सत्वात्। **अस्तु** वा उद्देश्यविशेषणतया साहित्याविवक्षा **तथापि** चतुर्गृहीतद्रव्यस्य प्रत्येकमनिवेशवत् अष्टगृहीतस्यापि प्रत्येकमनिवेशापत्तेरयुक्तं पूर्वपक्षोक्तं प्रयोजनम्। अत आद्यमेव प्रयोजनं युक्तमिति भावः।

**इति श्रीपूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीखण्डदेवान्तेवासि-**
**कविमण्डनशम्भुभट्टविरचितायां भाट्टदीपिका-**
**प्रभावल्यां चतुर्थस्य प्रथमः पादः**
**। ओम्।**

---

# अथ चतुर्थाध्यायस्य द्वितीयः पादः

(१)—स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥ जात्यन्तराच्च शङ्कते ॥ २ ॥ तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥ शकलश्रुतेश्च ॥ ४ ॥ प्रतियूपं च दर्शनात् ॥ ५ ॥ आदाने करोतिशब्दः ॥ ६ ॥

**दैक्षे पशौ "यूपस्य स्वरुं करोति, स्वरुणा पशुमनक्ति" इति श्रुतम्। तत्र स्वरुशब्दवाच्यस्या**प्रसिद्धत्वादाद्य**वाक्येन स्वरुकर्मिका भावना विधीयते। तत्र च साधनीभूतद्रव्यापेक्षायां "तत्र यः प्रथमश्शकलः परापतेत् स स्वरुः" इति वचनेन शकलस्य** साधनत्वावगमात् **इतिकर्तव्यतापेक्षायां यूपपदेन** तद्धर्मलक्षणयाऽञ्जनप्रोक्षणादयो **विधीयन्ते।**

---

॥ **स्वरुस्त्वनेकनिष्पत्तिः** ॥

अप्रसिद्धत्वादिति। यद्यपि नाहवनीयादिवत् स्वरुशब्दवाच्यः अप्रसिद्धोऽस्ति। किंतु **रथन्तरादिशब्दाः** गीतिविशेषप्रसिद्धाः सन्तः केवलवैदिक एव व्यवहारे वर्तन्ते तद्वदिहापि स्वरुर्नाम काष्ठशकलः प्रसिद्ध एवेति **तन्त्ररत्नग्रन्थान्नाप्रसिद्धत्वं स्वरोः तथापि** अप्रसिद्धत्वादिति हेतुः असिद्धार्थकत्वपर्यवसायी ज्ञेयः। न च नञुपपदकप्रोपसृष्टसिद्धधातोरसिद्धार्थकत्वं न दृष्टमिति वाच्यम्। "शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः" इत्यादौ **श्रीभगवद्गीतादिषु** बहुशो दृष्टत्वादिति भावः। **साधनत्वावगमादिति**। पिकः कोकिल इति सामानाधिकरण्यादेकार्थत्वमात्रप्रतीतावपि न साध्यसाधनभावावगतिः तथापि सामानाधिकरण्यप्रवृत्तिनिमित्ते विचारणीये शकलसाधनकत्वमेव तदङ्गीकृत्य कार्यकारणयोरभेदोपचारेण मृद्घट इति सामानाधिकरण्यमात्रेणेव साधनत्वावगतिः सुलभेत्यर्थः। **तद्धर्मलक्षणेति। एतेन** यूपपदेन खदिरादिकाष्ठं लक्ष्यत इति **तन्त्ररत्नोक्तिरपास्ता**। स्वरोस्साधनीभूतद्रव्यापेक्षायाश्शकलवाक्येनैव निवृत्तेः यूपपदे साधनीभूतखादिरादिकाष्ठलक्षणानुधावनस्य वैयर्थ्यात्। अतो धर्ममात्रलक्षणैव युक्तेति। धर्मलक्षणापक्षेपि यत्तेनैव तक्षणजोषणादिधर्माः लक्ष्यन्त इत्युक्तं तदपि न, वाक्यवैयर्थ्यापत्तेः। तथाहि—यद्यपि स्वरुकर्मकभावनायाः कथमिति इतिकर्तव्यतापेक्षा **तथापि** यूपीयशकलेनाञ्जनसाधनसपर्वाकारे निष्पादनीये लोकत एव **दृष्टपदार्थानां**

अथवा **यथैव यूपावयवकत्वं सिद्धान्ते षष्ठ्यर्थस्तथैव मम्मते यूपधर्मकत्वं सम्बन्धषष्ठ्यर्थ इति न लक्षणाऽपि। एवमुत्पन्नस्य च द्वितीयवाक्येन विनियोगः।** अस्तु वा **द्वितीयवाक्याक्षिप्तस्वरुकर्मकभावनानुवादेन यूपधर्ममात्रविधिरिति न विशिष्टविधिरपि। न चैवं शकलशब्दस्य ससम्बन्धिकत्वादेवोत्तराधर्दिवत् यूपीयत्वोपपत्तेः, अप्रयोजकत्वोपपत्तिः स्वतन्त्रकाष्ठाप्रयोजकत्वेऽपि स्वरुनिष्ठाञ्जनप्रोक्षणादिधर्मप्रयोजकत्वोपपत्तेः। अत एव धर्मप्रयोजकत्वेन काष्ठान्तरप्रयोजकत्वशङ्कायां तन्निवर्तकत्वेन "यदन्यस्य वृक्षस्य स्वरुं कुर्यादन्येऽस्य लोकमन्वारोहेयुः" इति निन्दाऽपि सङ्गच्छते।** धर्मप्रयोजकत्वेऽपि **च यूपैकादशिन्यां "यथाऽऽनुपूर्व्यं स्वरुभिः पशून् समञ्जय" इति यूपभेदेन स्वरुभेददर्शनं नानुपपन्नम्। न चैवमपि षष्ठ्या यूपावयवकत्वसम्बन्धेनाप्युपपत्तेर्यूपधर्मकत्वरूपसम्बन्धपरत्व एव नियामकाभावः, शकलकरणकत्वादेव यूपीयत्वसिद्धेराद्यवाक्यवैयर्थ्यापत्तेरेव नियामकत्वादिति प्राप्ते—**

**न यूपधर्मकत्वसम्बन्धषष्ठ्यर्थः,** आनुशासनिक**यूपावयवकत्वसम्बन्धस्यैव तदर्थत्वोपपत्तेः। न च शकलश्रुत्यैव प्राप्तत्वात्तद्विधिवैयर्थ्यं, एतद्विध्यभावे यूपपदरहितानां परश्वादानवनगमनवृक्षच्छेदनस्थाण्वाहुत्यादीनां यूपार्थत्ववत् स्वर्वर्थत्वस्यापि सम्भवेन**

---

तक्षणजोषणादीनां प्राप्तेः यूपपदेन तल्लक्षणया विधानस्य वैयर्थ्यमेव। न हि घटोत्पादनेतिकर्तव्यतायाश्चक्रचीवरादिरूपाया लोकसिद्धाया विधिना विधानं कर्तव्यम्। न वा कश्चित् शिल्पिनिपुणोऽपि तक्षणेन विना शकलं आकारविशेषविशिष्टस्वरुरूपङ्कर्तुं शक्नोति, अतस्तक्षणेतिकर्तव्यताया एतद्विध्यभावेपि प्राप्तत्वात् यूपपदेनाप्राप्ताञ्जनप्रोक्षणादिरूपधर्मान् लक्षयित्वा त एव विधीयन्ते तेषां च स्वरुस्वरूपे उपयोगाभावेपि अपूर्वसाधनत्वलक्षणया स्वरुनिष्पादिताञ्जनजन्यदैक्षापूर्वे उपयोगकल्पनान्न विरोध इत्यभिप्रेत्याह—**अञ्जनप्रोक्षणादय इति।** वस्तुतस्तु धर्मलक्षणापि **तन्त्ररत्नकारीया** व्यर्थेत्याह—**अथवेति। यदपि** सिद्धान्ते तेनोक्तपूर्वपक्षे यूपधर्मकस्वरुकर्मकभावनाविधानात् विशिष्टविधिः, सिद्धान्ते यूपापादानकत्वविधानाल्लाघवमित्युक्तं तल्लाघवं पूर्वपक्षेप्युपपादयति—**अस्तु वेति।** या तु काष्ठांतरप्रयोजकत्वेन पूर्वपक्षे **प्रतियूपं च दर्शनादिति सूत्रेण** स्वरुबहुत्वदर्शनानुपपत्तिः सिद्धान्ते प्रदर्शिता सा न मदीयपूर्वपक्षे प्रसज्यते किंतु उपपद्यत एवेत्याह—**धर्मप्रयोजकत्वेपि चेति। आनुशासनिकेति।** यद्यपि षष्ठ्यर्थस्संबन्धसामान्यमिति तद्धर्मकत्वमपि संबन्धः आनुशासनिकस्तथापि त एव संबन्धाः षष्ठ्यर्थाः मुख्या ये स्वस्वामिभावावयवावयविभावादयः तेष्वेव प्रचुरप्रयोगाच्छक्तिः। इतरत्र तु निरूढलक्षणैव। अतश्चानुपपत्तिप्रतिसन्धानं विना झटिति यूपस्येत्युक्ते अवयवावयविभाव एव प्रतीयत इति स **एवानुशासनिकः**

**शकलश्रुतेर्वृक्षप्रतियोगिकतयैवोपपत्तेः। अत एव यथाशक्तिप्रयोगादौ यूपाभावेऽपि स्वर्वर्थमेव वनगमनादिसिद्धिः। पश्चारत्नित्वसिद्ध्यर्थं द्वितीययूपच्छेदनादि "यूपं छिनत्ति" इत्यादिवाक्येन विहितं यूपाभावे परं निवर्तताम्। न तु वनगमनाद्यपि। अतस्तन्निवृत्तिफलकयूपानुनिष्पन्नत्वसिद्ध्यर्थं यूपावयवकत्वविधिरर्थवानेव। अत एव यूपानुनिष्पन्न-**

---

षष्ठ्यर्थो ग्रहीतुमुचित इत्यर्थः। **वृक्षप्रतियोगिकतयेति**। अयमत्र स्पष्टार्थः, पूर्वपक्षे हि यूपस्य स्वरुमिति यूपावयवकत्वविध्यभावे शकल इत्युक्ते वृक्षस्य शकल इत्यर्थोपि स्यात्। ततश्च यथा खदिरस्य यूपं कर्तुं वनगमनादि कर्तव्यमावश्यकं तथा खदिरस्य शकलरूपस्वरुं कर्तुमपि वनगमनादि-भवत्येवेति यूपपदरहिता धर्मा यूपस्वरूभयप्रयोज्याः। यथाशक्तिप्रयोगे च एकयूपरूपप्रयोजकाभावेपि स्वरुरूपप्रयोजकस्य सत्वात् स्यादेव वनगमनादीति। अत एव यथा शक्तिप्रयोग इत्यारभ्य ग्रन्थः सिद्धान्तग्रन्थ इवाभाति। तं भ्रमं निराकर्तुं पूर्वपक्षग्रन्थत्वेन मया व्याख्यातः। **तन्निवृत्तीति**। यूपानुनिष्पन्नविधाने हि सति यद्यपि वनगमनादिवाक्ये यूपपदन्न श्रूयते तथापि वनगमनादीन् प्रति कस्यचित् प्रयोजकत्वे कल्प्यमाने अनन्तरभावित्वेन यूपस्यैव तत्कल्पनमुचितं न तु अनुनिष्पादिनः स्वरोरिति भावः।

**एतावत्त्विह चिन्त्यम्**। यदि यूपावयवकत्वविधिर्न स्यात् तदा शकले वृक्षप्रतियोगिकत्व-मापततु परंतु परश्वादानवनगमनादीनां कथं प्राप्तिः स्यात्। यूपपदघटितयूपाहुतितक्षणादिधर्माणा-मन्तराले वैष्णव्या ऋचा हुत्वा यूपमच्छैतीत्यादिना तैत्तिरीयशाखायां समन्त्रकाणां वनगमनादीना-माम्नानात् अवान्तरप्रकरणेन यूपार्थत्वस्यैव साधनात्। यत्तु प्रथमः शकलः परापतेत् तमाप्या-हरेदित्यंते प्रथमशकलनिर्देशकरणं न तु स्वरुस्वरूपं किंतु यूपावटस्तरणार्थेऽसौ शकलः तत्राप्यपिशब्दबलेनास्याप्यानुषङ्गिकत्वप्रतीतेः न प्रयोजकत्वम्। अतश्च स्वरुप्रकरणस्य बहुतर-दूरस्थत्वेनानुपस्थितेः यूपार्थत्वमेव युक्तम्।

**वस्तुतस्तु** यूपपदराहित्यमपि वनगमनादीनामसिद्धं वैष्णव्यर्चा हुत्वा यूपमच्छैति इति स्पष्टमेव यूपपदोपलम्भात्। अतस्तेषां स्वर्वर्थत्वापादनं नातीव संगतमिति। अत्र **भाष्य-कारादिभिर्यथाश्रुतसूत्रक्रमस्वारस्येन** पूर्वपक्षसिद्धान्तरचना कृता यूपस्य स्वरुमित्यत्र यूपपदेन साधनीभूतं काष्ठं जोषणादिधर्मांश्च लक्षयित्वा काष्ठीयज्जोषणादीतिकर्तव्यतया स्वरुङ्करोत्युत्पादयतीत्यर्थेन स्वरुरपि काष्ठधर्माणां प्रयोजकः। तेन येन केनचित् काष्ठेन स्वरुः कर्तव्य इति पूर्वपक्षः। तत्र **स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वादिति** पूर्वपक्षसूत्रं; **तस्यार्थः**। स्वरुः यूपेन सह नैकनिष्पत्तिः किंतु जोषणादिभिः पृथङ्निष्पत्तिः। अतः स्वो ह्यस्य

**प्रथमशकलनाशे येन केन चित्काष्ठेनाञ्जनं पशोः। तेन प्रोक्षणादेस्स्वर्वर्थत्वे प्रमाणाभावान्न स्वरुस्तेषां प्रयोजकः।** सूत्राणि च **सूत्रीभिरस्मिन्नेवार्थे** व्याख्येयानि। **न तु भाष्यकारोक्ते ॥ १ ॥**

---

(२)—शाखायां तत्प्रधानत्वात् ॥ ७ ॥

**दर्शपूर्णमासयोश्शाखामधिकृत्य "प्राचीमाहरति" इति श्रुतम्। तत्र प्राचीशब्दस्तावत् दिग्विशेषवाची "प्राचीमुदेति सविता" इति प्रयोगात्। देशवाची वा, न तु तद्देशस्थशाखावाची। अतश्चोपक्रमस्थप्रातिपदिके लक्षणापेक्षया वरं द्वितीयैव सप्तम्यर्थे**

---

कर्मशब्दशब्दः स्वरुङ्करोतीति। तेन ज्ञायते पृथङ्निष्पत्तिरिति यस्मात् यत्किंचित्काष्ठोपादानः स्वरुस्तस्मात् अन्यत्रापि जात्यन्तरस्य प्रसक्तत्वात् यदन्यस्य वृक्षस्य स्वरुं कुर्यादित्याशङ्कोपपद्यते। यूपानुनिष्पन्नत्वे तु सा नोदेत्येवेत्यर्थकमपरं **जात्यन्तराच्च शङ्कत** इति द्वितीयं सूत्रम्। **सिद्धान्तस्तु** यूपैकदेश एव स्वरुः। कुतः? **यूपस्य स्वरुङ्करोतीति** श्रूयते नायमर्थः स्वरुमुत्पादयेत् किंतु यं स्वरुत्वेनाददीत तं यूपस्येत्यवयवी निर्दिश्यते। तेन यूपानुनिष्पन्नः प्रतीयते अतोऽप्रयोजकः। **तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् शकलश्रुतेः प्रतियूपं च दर्शनात्, आदाने कर्मशब्द** इति चत्वारि सिद्धान्तसूत्राणि। तानि च भाष्यकारीयरचनायां स्पष्टार्थान्युपपद्यन्ते। भवन्मते तु पूर्वपक्षेपि यूपीयशकलग्रहणस्योपपादितत्वात् सिद्धान्तपरत्वानुपपत्तेः। नहि तदा तदेकदेशो वेत्यादि सूत्रैर्वाशब्देन पूर्वपक्षं निरस्य यूपैकदेशत्वाद्यपूर्वं सिद्धान्तिना साधयितुं शक्यते। अतः कथं स्वमते सूत्रोपपत्तिरित्यत आह—**सूत्राणि चेति। यद्यपि** यथाश्रुतसूत्रस्वारस्यमनुरुद्ध्य पूर्वसिद्धान्तपक्षौ भाष्यकारेण वर्णितौ **तथापि** तावुपेक्ष्य संभवदुक्तिकत्वान्मत्कृतावेव तावादरणीयौ। सूत्राणि तु स्वबुद्ध्यनुसारेणात्रापि कथंचिद्योजनीयानीति भावः।

अत्र शाखायामित्याद्यमधिकरणं स्पष्टार्थम्।

---

**॥ शाखायां तत्प्रधानत्वात् ॥**

**न त्विति।** इदं हि च्छेदनमाहरणं च वृक्षापादानकम् तत्र यद्यग्रमात्रवाची शाखा**शब्दो भवेत्** तदा तन्मात्रस्यैवानीतत्वात् अग्र मूलापादानकशाखापरिवासनविधिरनुपपन्नः स्यात्। **न ह्यनाहृते** मूले मूलापादानकशाखापरिवासनं संभवति। अतस्तत्र मूलसहिताग्रस्यैव वाचको वक्तव्य

व्याख्यातुं युक्ता। प्रतिशब्दाध्याहारो वा। कर्मापेक्षायां च प्रकृतत्वादेव शाखा तत्त्वेन सम्बध्यते। प्राग्देशस्य च पूर्वोत्तरावध्यपेक्षायां प्रत्यक्षोपस्थितत्वात्सामर्थ्याच्च वनविहार-देशौ तत्त्वेन सम्बध्येते। तेन वनात् विहारोपलक्षितप्राचीं प्रति शाखामाहरतीति वाक्यार्थः। न तु वृक्षस्य प्राचीं शाखामिति। तथात्वे छिनत्तीति स्यात् न त्वाह-रतीति प्राप्ते—

प्रधनभूतविभक्तौ लक्षणायाः प्रतिशब्दाध्याहारस्य वा कर्माध्याहारपूर्वोत्तरावध्य-ध्याहारसहकृतस्य कल्पनापेक्षया एकस्मिन् प्रातिपदिक एव प्रकृतशाखालक्षणया वाक्या-र्थोपपत्तेः, प्राक्त्वस्य च वृक्षावयवविशेषत्वरूपशाखात्वेनैवोपस्थितवृक्षावधिकतयाऽप्युप-पत्तेश्शाखावाद एवायम्। तेन वृक्षस्य प्राग्देशभवां प्राचीं शाखां छित्त्वाऽऽहरतीत्यर्थः। प्रयोजनानुरोधात्तु विहारदेशं प्रतीति लभ्यते। शाखायां प्राग्देशभवत्वमात्रविधान-फलकत्वाच्च लाघवम्। तव तु शाखाहरणोद्देशेनैव प्राग्देशभवविहारावधिकत्वविधाने गौरवम्। याज्ञिकास्तु दिग्वादमेव वदन्ति ॥ २ ॥

---

(३)—शाखायां तत्प्रधानत्वादुपवेषेण विभागात्स्याद्वैषम्यं तत् ॥ ८ ॥

श्रुत्यपायाच्च ॥ ९ ॥

तत्रैव "शाखामाच्छिनत्ति, शाखामाहरति, मूलतश्शाखां परिवास्योपवेषं करोति" इति श्रुतम्। तत्र शाखाशब्दस्तावत् आद्यवाक्ययोस्समूलस्यैव वाचको न त्वग्रमात्रस्य, अतस्तृतीयवाक्येऽपि तत्पर एव, तदर्थं च परिवासनमग्रमूलविभागार्थम्। अतस्तृतीय-वाक्ये मूलत इति पदं द्वितीयार्थे तृतीयार्थे वा तसिं व्याख्याय 'उपवेषं करोति' इत्यत्रा-न्वेति। न त्वपादानार्थकं सत् परिवासने। तथात्वे अग्रस्याप्युपवेषत्वप्रसङ्गेन मूलत इत्यस्योत्तरत्रान्वयावश्यकत्वात्। अतः परिवासनेनाग्रं मूलं च शाखापदाभिधेयं विभज्य

---

इत्यर्थः। ननु तर्हि शाखाशब्दस्य समूलाग्रवाचित्वेन समूलाग्रस्य मूलापादानकपरिवासनासंभवः मूलस्य मूलान्तराभावात्। अतोऽग्रमात्रमेव शाखाशब्दवाच्यं वक्तव्यमिति सिद्धान्त्याशङ्कानिरा-करणायाह—मूलत इति पदमिति। अन्वयावश्यकत्वादिति। सिद्धान्ते मूलस्यैवोपवेषत्वा-ङ्गीकारात् उपवेषङ्करोतीत्यनेन सहान्वय आवश्यक इत्यर्थः। न च तवापि शाखां परिवास्येत्युक्ते मूलत इति पदस्य परिवास्येत्यनेनासंबन्धात् शाखामाच्छिनत्तीतिवत् वृक्षापादानकमेव परिवासनं स्यात् न तु मूलाग्रयोः परस्परं परिवासनेन विभागः। ततश्च तत्सिद्ध्यर्थं परिवास्येत्यनेनापि

मूलमुपवेषसंज्ञमुपादत्ते इति तृतीयवाक्यार्थः। तस्य च विनियोगापेक्षायां अग्रस्य वत्सापाकरणादौ मूलस्य कपालोपधानादौ वचनाद्विनियोगः। अत एवोभयमपि छेदना-हरणपरिवासनादीनां प्रयोजकम्। अस्तु वा शाखाशब्दोऽग्रमात्रवाची तथाऽपि मूलत इति द्वितीयार्थे परिवासनस्य कर्मेति परिवासनमुभयप्रयुक्तम्। ल्यपा वा मूलापादान-कपरिवासनमुपवेषकरणार्थं विधीयते इति सोपि तत्प्रयोजक इति प्राप्ते—

मूलत इति तसिः पञ्चम्यर्थक एव। सार्वविभक्तयर्थकत्वानुशासनं तु लाक्षणिकम्। अन्यथा विशिष्य पञ्चम्यर्थकत्वानुशासनवैयर्थ्यप्रसङ्गात्। अतो मूलापादानकं परिवासनं द्वितीयाश्रुत्या शाखासंस्कारकमेव। न तु वाक्यादुपवेषकरणाङ्गं, न वा उभयसंस्कारकं द्वितीयाश्रुतेर्बलीयस्त्वात्। उद्देश्यानेकत्वप्रसङ्गाच्च। अतश्शाखाशब्दोऽपि मूलापादान-कपरिवासनसंस्कार्यतया श्रुताग्रमात्रवाची, छेदनादिवाक्येऽपि तद्वाच्येव। समूलछेदना-दिकं तु मूलापादानकपरिवासनसिद्ध्यर्थं न विरुध्यते। अत एव वत्सापाकरणादौ शाखापदेनैवाग्रविनियोगः। अतो मूलं परिवासनाङ्गमेव। एवं च व्यवहितकल्पनाऽपि न प्रसज्यते। अत एव परिवासनानुनिष्पन्नमूलस्यैवोपवेषरूपसंज्ञान्तरकरणम्। अग्रस्य शाखापदेनैव सर्वत्र विनियोगेन संज्ञान्तरवैयर्थ्यापत्तेः। अत एव न व्यवहितकल्पनाया आवश्यकत्वम्। अतस्संज्ञाकरणमात्रफलक उपवेषं करोतीत्ययमनुवादो ल्यबन्तापेक्षित-क्रियान्तरप्रदर्शनार्थः। अतो न मूलं छेदनादीनां प्रयोजकम्॥

---

मूलत इत्यन्वयावश्यकत्वमस्त्येवेति वाच्यम्। मूलत इत्यस्य परिवास्येत्यनेनान्वयाभावेपि शाखां परिवास्य मूलेन मूलं वा उपवेषङ्करोतीत्युक्तेरेव मूलाग्रयोर्विभागप्रतीतेरनुभवसिद्धत्वात्। तस्मा-न्मूलापादानकशाखापरिवासनं कृत्वा उपवेषङ्करोतीत्युक्ते प्राधान्यादग्रस्यैवोपवेषप्रतीत्या तन्निवृ-त्त्यर्थमावश्यकं मूलत इत्यस्यान्वयकरणमिति भावः। मूलत इति पदस्य व्यवहितान्वयोपि न स्वीकर्तव्य इति पक्षान्तरमाह—**अस्तु वेति**। **पञ्चम्यर्थक एवेति**। एवकारेण च यदत्र तन्त्ररत्नादि-ग्रन्थेषु मूलाधिकरणकं परिवासनमिति तसिरधिकरणत्वार्थको दृश्यते इत्युक्तं तन्निरस्तम्। **समूलच्छेदनादिकं त्विति**। शाखामाच्छिनत्तीत्यादाविति शेषः। अतो वृक्षापादानकच्छेदना-हरणपरिवासनानि सर्वाणि अग्रार्थमेव। तदनुनिष्पादि च मूलमिति भावः। यत्तूक्तमग्रस्योपवेषत्व-प्रसङ्गव्यावृत्त्यर्थं मूलत इत्यस्योपवेषं करोतीत्यनेन व्यवहितान्वयकल्पनमावश्यकमिति तत्परि-हरति—**अत एवेति**।

---

प्रयोजनं—पौर्णमास्यां शाखाऽभावे येन केन चिद् काष्ठेन कपालोपधानं न तूपवेषकरणम् ॥ ३ ॥

---

(४)—हरणे तु जुहोतिर्योगसामान्यात् द्रव्याणां चार्थविशेषत्वात् ॥ १० ॥ प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥ अर्थेऽपीति चेत् ॥ १२ ॥ न तस्यानधिकारादर्थस्य च कृतत्वात् ॥ १३ ॥

अत्रैव "सूक्तवाकेन प्रस्तरं प्रहरति" इति "सहशाखया प्रस्तरं प्रहरति" इति च श्रुतम्। तत्राद्यवाक्ये तावन्मान्त्रवर्णिकदेवतासम्बन्धाद्धोमविधिरित्युक्तम्। न तु द्वितीयवाक्यविहितप्रहरणानुवादेन प्रस्तरमुद्दिश्य सूक्तवाकविधिरिति तन्त्रसारोक्तं युक्तं, यागस्यापि विधौ वाक्यभेदापत्तेः, यागविधायकवाक्यान्तरकल्पने गौरवाच्च। अतश्च द्वितीयवाक्ये प्रहरतिना होममनूद्य शाखासाहित्यमात्रविधिः, सहशब्दस्य निपातत्वेन परस्परान्वयव्युत्पत्तेश्च न शाखा साहित्यं चेति विधेयानेकता। अतश्च यथैव होमे प्रस्तरो गुणभूतः एवं शाखाऽपि। तत्र त्वेतावान् विशेषः—प्रस्तरस्य द्वितीयया प्रक्षेपांशं प्रति प्रतिपाद्यत्वावगमान्न त्यागांशस्तस्याक्षेपक इत्युक्तम्। शाखायास्तु वत्सापाकरणादाविव गुणत्वस्यैवावगतेः प्रस्तरहोमः प्रयोजक एवेति पौर्णमास्यामपि तदर्थं शाखोत्पादनीयेति प्राप्ते—

---

॥ हरणे जुहोतिः ॥

यागस्यापीति। होमपदार्थमध्ये प्रक्षेपस्य सहवाक्येनैव विहितत्वात् होमशरीरान्तर्गतस्य देवतोद्देशविशिष्टद्रव्यत्यागाङ्गरूपस्येत्यर्थः। निपातत्वेनेति। यदि तु सहशब्दस्य निपातत्वेन स्वसमभिव्याहृतशाखान्वयेपि शाखायास्तृतीयान्तायाः अस्मन्मते भावनायामेवान्वयात् न शाखासाहित्यविधिरिति वक्तुं योग्यं, किंतु सहितशाखाविधिरिति विभाव्यते तर्हि सहशब्दस्य तात्पर्यग्राहकत्वेन तृतीयार्थसाहित्ये शाखाप्रातिपदिकार्थस्यान्वयव्युत्पत्तेः शाखासाहित्यं विधीयत इत्येवं वाक्यभेदः परिहरणीयः। द्वितीययेति। यद्यपि सहवाक्ये प्रस्तरमिति द्वितीयया तृतीयार्थो लक्षितः। तथा च प्रस्तरसाधनकहोमोद्देशेन शाखासाहित्यविधिरित्यभिप्रायः पूर्वपक्षिणस्तथापि प्रस्तरसाधनकहोमस्तावत् सूक्तवाकवाक्येनैव प्राप्तो वक्तव्यः तत्रापि प्रस्तरस्य करणत्वात् प्रक्षेपांशं प्रति प्राप्तप्राधान्यानुवादिका सती द्वितीया तृतीयार्थलक्षिका

आद्यवाक्ये सूक्तवाकान्वयानुरोधेन प्रहरतिना होमलक्षणायामपि द्वितीयवाक्ये प्रहरतिना तल्लक्षणायां प्रमाणाभावात्प्रहरणस्यैव शाखासाहित्यसम्बन्धमात्रं क्रियते। अतश्च यथैव प्रहरणं प्रति प्रस्तरस्य कृतार्थस्य संस्कार्यत्वं, तथा शाखायाः, कृतार्थत्वाविशेषात्। न च तृतीयया तस्याः करणत्वावगतिः, सहशब्दयोगेन तस्याः करणत्वानभिधायकत्वात्। न चैवं शाखां प्रहरतीत्येव वक्तव्यत्वापत्तेः प्रस्तरादिपदवैयर्थ्यं, प्रस्तरप्रहरणकालीनैतत्प्रहरणसिद्ध्यर्थत्वात्। अत एव प्रस्तरप्रहरणकालविशिष्टप्रहरणान्तरस्यैव शाखोद्देशेनात्र विवक्षितगत्या विधानं, न तु प्रस्तरप्रहरणव्यक्तेरेव शाखोद्देशेन

---

भवतीत्यर्थात द्वितीयाप्राधान्योक्तेः। प्रस्तरप्रहरणकालीनेति। नन्वेवं भवन्मते साहित्यं नाम तत्कालकत्वं शाखायाश्च तत्र प्रतियोगित्वेनान्वयस्सर्वानुभवसिद्धः। शाखाशब्देन स्वप्रहरणमभिधीयते। ततश्च शाखाप्रहरणप्रतियोगिककालानुयोगिकप्रस्तरकर्मकप्रहरणं कुर्यादित्यर्थात् कथं प्रस्तरप्रहरणप्रतियोगिककालानुयोगिकशाखाकर्मकं प्रहरणं कुर्यादिति विपरीतबोधमङ्गीकृत्य स्वेष्टमात्रं साध्यत इति चेत्।

अत्र प्राञ्चः। सत्यमेवं यथाश्रुतशब्दादेवं बोधः तथापि तदा शाखाप्रहरणकाले प्रस्तरप्रहरणं कर्म विधेयं कालस्यानुपादेयत्वात्। नहि शाखाप्रहरणकालः कश्चिन्निर्ज्ञातः येन प्रस्तरप्रहरणं परिच्छिन्नं भवेत्। अतो यथाश्रुतार्थं परित्यज्य द्वयोरपि विभक्त्योः लक्षणया प्रस्तरेण सह शाखां प्रहरतीत्यर्थः। प्रस्तरप्रहरणतत्कालयोश्च सूक्तवाकवाक्येन प्राप्तिरिति विज्ञातत्वम्। अतएव सूक्तवाकवाक्यविधिविधेयतावच्छेदकतया प्रस्तरप्रहरणे वैजात्यं शाखाप्रहरणविधिविधेयतावच्छेदकतया च शाखाप्रहरणे परं वैजात्यमिति मन्यन्ते।

तन्न। विभक्तिद्वयलक्षणापेक्षया एकस्यास्तृतीयाया एव वस्तुगत्या लाक्षणिक्या अनुयोगिसाहित्यमात्रलक्षणायां लाघवात्। तथा च शाखाप्रहरणं शाखाप्रातिपदिकार्थः। तस्या अभेदेनानुयोगिन्यन्वयात् शाखाप्रहरणानुयोगिकसाहित्यप्रतियोगिकप्रस्तरकर्मकं प्रहरणं कार्यमिति वाक्यार्थे प्रथमतो जाते प्राप्ताप्राप्तविवेकदशायां सूक्तवाकवाक्येन प्रस्तरप्रहरणस्य प्राप्तत्वात् प्रस्तरप्रहरणोद्देशेन शाखाप्रहरणानुयोगिसाहित्यमात्रविधानफलं सिद्ध्यति। तत्रापि शाखाप्रहरणस्यान्यतोऽप्राप्तेः विशेषणविधिना शाखां प्रहरतीत्येवं रूपेण विधानम्। तत्र शाखाप्रधानमिति ममापि प्रहरणांतरसिद्धिः विधिभेदात् विशेषणविधिकल्पनैव वाक्यांतरकल्पना षाष्ठीति सर्वमनवद्यम्। तदेतत् सर्वमभिसन्धायैव पूज्यपादैः विवक्षितगत्येत्युक्तम्। न तु

**विनियोगः, तथात्वे यथाशक्तिप्रयोगादौ** प्रस्तराभावेऽपि शाखाप्रहरणानापत्तेः। **अतश्च प्रतिपत्तित्वात्प्रहरणमपि न शाखायाः प्रयोजकम्। तेन पौर्णमास्यां न शाखोत्पादनम्।**

---

शाब्दमर्यादयेत्यर्थः। **प्रस्तराभावेऽपीति**। प्रहरणे शाखाया गुणत्वमिति पूर्वपक्षे प्रस्तराभावे न शाखा प्रहर्तव्या; प्राधान्यमिति सिद्धान्ते तु प्रस्तराभावेपि शाखाप्रहर्तव्येति भाष्योक्तप्रयोजनस्य **तन्त्ररत्नकृता** खण्डनं कृतं दर्शपूर्णमासयोस्सर्वदा प्रस्तरसद्भावात् असंभव्येतदिति ग्रन्थेन षष्ठाध्याये। तेन दर्शपूर्णमासयोः प्रस्तराभावोऽसिद्ध इति **तन्त्ररत्नो**क्तखण्डनाय यथाशक्तिप्रयोगादावित्युक्तम्। तथा च **तन्त्ररत्नो**क्तभाष्यकारप्रयोजनखण्डनं त्वयुक्तमेवेति भावः।

**वस्तुतस्तु** यथाशक्तिप्रयोगेपि मुख्यालाभे येन केनचिदपि प्रतिनिधिना प्रस्तरोपपत्तेः दर्शपूर्णमासयोस्तदभावो न सिद्ध्यतीति प्रहरणकाले दैवाज्जातप्रस्तरनाशाभिप्रायकमेव प्रस्तराभाव इत्येतत् ज्ञेयम्। **शाखाप्रहरणानापत्तेरिति**। प्रस्तरप्रहरणव्यक्तेश्शाखोद्देशेन विनियोगान्तरेपि तत्र प्रस्तरस्यैव प्रयोजकत्वक्लृप्तेः शाखायास्तदकल्पनात् प्रस्तराभावे तदनापत्तेरित्यर्थः। **अत्र केचिदाहुः**। सहशाखयेत्यत्र तावत 'सहयुक्तेऽप्रधान' इति सूत्राद्वस्तुगत्या अप्रधानीभूतार्थवाचकपदे तृतीया विधीयत इति शाखापदे तृतीया। अत्र तृतीयार्थः साहित्यं सहशब्दः तात्पर्यग्राहकः साहित्यार्थमात्रविवक्षया सहशब्दाभावेपि तृतीयाया वृद्धो यूनेत्यत्राङ्गीकारात। तत्र शाखाप्रातिपदिकं यथाश्रुतं शाखां प्रतिपादयति। तस्याश्चानुयोगित्वसंबन्धेन साहित्येऽन्वयः। **यद्यप्यन्यत्र** सहार्थतृतीयाप्रकृत्यर्थस्य प्रतियोगित्वेनैवान्वयो व्युत्पन्नः **तथाप्यत्र** पूर्वोक्तदिशा बाधाद्व्युत्पत्त्यन्तरं स्वीकार्यं पूर्वोक्तदिशा तृतीयैव वा स्वानुयोगिकसाहित्यं लक्षयति। तस्य च परमते प्रतियोगित्वसंसर्गेण प्रस्तरे भावनान्वयाग्रहमते स्वप्रतियोगिकप्रस्तरकर्मत्वसंबन्धेन भावनायामन्वयः। ततश्च शाखानुयोगिकसाहित्यप्रतियोगिप्रस्तरकर्मिका प्रहरणभावनेति बोधः; शाखासाहित्यं चात्र स्वसत्तासमकालीनसत्ताश्रयत्वमात्रं चेत तदा यथैव सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र भारवहनकाले पुत्राणां विद्यमानत्वमात्रं प्रतीयते; न तु वहनक्रियान्वितत्वं तथा प्रकृतेपि प्रहरणान्वयकाले शाखाया विद्यमानत्वमात्रं स्यात न तु प्रहरणान्वयः। अतोऽत्र कृतार्थत्वाच्छाखायाः प्रतिपत्त्यपेक्षारूपनियामकानुरोधेन क्रियाघटितमेव स्वास्तित्वं गृह्यते। यथा पुत्रेण सहागतः पितेत्यत्रागमनाश्रयपितुः पुत्रस्यैककालवृत्तित्वे शब्दतः प्रथमतोऽवगते तच्चैककालत्वं गमिधातुसमभिव्याहारात आगमननिरूपितमिति बोधः पार्ष्ठिकः स्वीक्रियते।

**यैर्वार्तिकादिभिः पार्ष्ठिकबोधो न स्वीक्रियते तेषां पुत्रपदे लक्षणया पुत्रागमनप्रतीतिः उभयथापि क्रियान्वयार्थं पुत्रोप्यागत इति वाक्यान्तरं न कल्पनीयङ्गौरवात्। इतरथा अरुणैकहाय-**

**यथा तु प्रस्तरप्रहरणव्यक्तावेव शाखाया न गुणत्वं तथा षष्ठे वक्ष्यते ॥ ४ ॥**

---

नीस्थले फलतः परिसंख्यास्थले च तत्कल्पनापत्तेः। एवमत्रापि प्रहरणक्रियाबोधो द्रष्टव्यः। विद्यमानेपि चोभयोः क्रियान्वये पुत्रेण सहेति वाक्ये आगोपालाङ्गनं पितृपुत्रयोः प्राधान्यमप्राधान्यं प्रतीयमानं शाब्दत्वार्थत्वकृतं न भवति तादृशबोधस्य कस्याप्यभावात्।

किं च तृतीयोत्पत्तेः पूर्वमेवार्थस्याप्राधान्यं विवक्षितं तादृशार्थवाचकाच्च तृतीया भवतीत्यनुशासनेन प्रतिपाद्यते। शाब्दत्वार्थत्वादिकं तु तृतीयान्तवाक्यश्रवणकाल इति कथं प्राचीनमप्राधान्यं नियमयेत् तृतीयाश्रवणात् प्रयोक्तुरभिप्रेतमप्राधान्यं व्यज्यतां नाम। न त्वेतावता तस्य शाब्दत्वार्थत्वरूपत्वसिद्धिः। किं तर्हि आन्तरालिकक्रियाजन्यसंबन्धाश्रयत्वेपि तदनन्तरभाविफलान्वयव्यतिरेकानुविधायित्वतदभावादिरूपमेव विवक्षितम्, भवति च पितैवागमनानन्तरभाविपूजादिफलान्वयव्यतिरेकानुविधायी, पित्रागमनपूजाद्यभावे पुत्रागमनस्य निष्प्रयोजनत्वात् पुत्रस्तु नेत्यप्रधानत्वेन विवक्षितः। एवं ऋत्विग्भिः सह यजमानः क्रतुङ्करोतीत्यत्रापि ऋत्विजामप्राधान्यं व्याख्येयम्। निरूपिकापि च क्रिया क्वचिदेकपदेनोपस्थापितापि भिन्नभिन्नवैजात्यावच्छिन्ना व्यक्तितोपि भिन्ना, यथा पुत्रनिष्ठसंयोगविशेषजनकतावच्छेदकतया सिद्धवैजात्या पित्रागमनक्रिया भिन्ना पितृनिष्ठसंयोगविशेषजनकतावच्छेदकतया सिद्धवैजात्या पुत्रागमनक्रिया भिन्ना। उभे अपि एकेन आगत इति पदेनोपस्थाप्येते। यद्वा एकजातीयसंयोगजननादेकमेव उभयक्रियायां गमनत्वरूपवैजात्यकल्पनं तत्तद्व्यक्तिषु भिन्नास्वपि तावद्व्यक्तिविश्रान्तवैजात्यकल्पने प्रमाणाभावात्। यत्र तु शाकमोदकनिष्ठयोर्विक्लित्तिफलयोः प्रत्यक्षेण वैजात्यमनुभूयते तत्राग्निसंयोगादिरूपपाकेपि वैजात्यं कल्प्यते यथा शाकेन सह मोदकं पचतीत्यत्र। एवमन्यत्राप्यूह्यम्।

तदिह प्रहरणक्रिया विजातीयाहवनीयोत्तरदेशसंयोगरूपफलजनिका एकवैजात्यावच्छिन्नैव न तु प्रहरणान्तरं गौरवात्। शाखायामप्यप्राधान्यमान्तरालिकोत्तरदेशसंयोगफलाश्रयत्वेपि पार्यन्तिकादृष्टरूपसंस्कारानाश्रयत्वमेव वेदे अभिप्रेतं प्रस्तरे च तदाश्रयत्वात् प्राधान्यमिति तस्यैवान्वयव्यतिरेकानुविधायित्वेन प्रयोजकत्वात् पौर्णमास्यामवश्यं शाखोत्पादनीया यथाशक्तिप्रयोगे वा प्रस्तराभावे नैव शाखाप्रहरणम्। न च शाखायाः कृतार्थत्वेन प्रतिपत्तिरूपत्वात् प्रहरणस्य कथं न स्वतः प्राधान्यम्। तत्त्वे च वत्सापाकरणोपयुक्तत्वावगत्या न पूर्वोक्ताभीष्टसिद्धिरिति वाच्यम्। शाखायाः कृतार्थत्वेन मम किं प्रयोजनमित्याकाङ्क्षायाः तवाहवनीयोत्तरदेशसंयोगः प्रयोजनमिति दानेन तन्निवृत्तेः पार्यन्तिकफलभागित्वकल्पनस्य तृतीयाविरोधेनानुपपत्त्या प्राधान्याभावात्।

(५)—उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विभागस्स्यात् ॥ १४ ॥ संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात् ॥ १५ ॥

---

अन्यथा राजपुरोहिताविितिवत् शाखाप्रस्तरौ प्रहरतीत्येवावक्ष्यत् । **एतेन** प्राधान्यसिद्ध्यर्थं **वाक्यान्तरकल्पनं षाष्ठं निरस्तम्**। नहि शाखाया मम प्रहरणं प्रति प्राधान्यं भूयादित्यपेक्षा येन तन्मूला वाक्यान्तरकल्पना भवेत् प्रतिपत्तिमात्रापेक्षत्वात्। अतः कथमत्रोपपत्तिरित्याहुः।

**तत्रेदं विविच्यताम्**। प्रत्यक्षदृष्टार्थे यत्र पुत्रेण सहागत इति लौकिकवाक्यप्रयोगः तत्रैवं रीतिर्भवदुक्ता सङ्गच्छतेपि। प्रकृते त्वलौकिकविधित्वात् सोऽर्थोऽग्राह्यः येन न वाक्यानर्थक्यम्। तदिह नात्र प्रहरणं विधातुं तावच्छक्यं प्राप्तत्वात्। नापि शाखाप्रहरणप्रतियोगिकः कालः प्रस्तरप्रहरणे विधेयः शाखाप्रहरणकालस्यानिर्ज्ञातत्वात्। अतः शाखाप्रहरणानुयोगिककालप्रतियोगिकत्वं प्रस्तरप्रहरणे विधेयमित्येव पक्षस्समाश्रयणीयः। ततश्च शाखाप्रहरणे विशेषणविध्यादिकल्पना सर्वं पूर्वोक्तमकामेनापि स्वीकरणीयम्। न च विशेषणविधिवेलायामेव प्रथमविधिश्रुततृतीयावगताप्राधान्यनिर्वाहाय प्रयोजकत्वशक्तिकल्पनालाघवानुरोधेन शाखायाः प्रयोजकत्वं कल्प्यमिति वाच्यम्। सहार्थकतृतीयायाः अप्राधान्यव्याप्त्यभावात्। तदुक्तं **तन्त्ररत्नकृता**— उभयप्राधान्येपि देवदत्तेन सह यज्ञदत्तः पूजनीय इति प्रयोगादुभयोः पूज्यत्वङ्गम्यते उभयोर्गौणत्वेपि यज्ञदत्तेन (सह) देवदत्तः शिबिकां वहतीति प्रयोग इति। अन्यत्रापि गुरुणा सह शिष्य आगत इत्येवं प्रयोगा द्रष्टव्याः तथा प्रकृतेपि न बाधकम्।

**यदि** त्वेषूहरणेषु 'सहयुक्तेऽप्रधान' इत्यनुशासनानुरोधेन ऋत्विग्भिस्सह यजमानः क्रतुङ्करोतीतिवत् वक्तृविवक्षावैचित्र्येणाप्राधान्यं कथंचित् कल्प्येतेति सर्वत्रैवाप्राधान्यव्याप्ता तृतीयेति विभाव्यते **तदा** प्रकृते प्रस्तरप्रहरणेन सह प्रहरणेन शाखायाः अदृष्टसंस्काराश्रयत्वेपि सूक्तवाकप्रकाश्याग्न्यादिदेवतासंबन्धित्वाभावविवक्षया अप्राधान्योपपत्तिः। नहि सह प्रहरणेन देवतासंबन्धः शाखाया भवति पयसा मैत्रावरुणं श्रीणातीत्यत्रेव पयसः शाखाया यागसाधनत्वाभावेन प्रस्तरमात्रस्यैव सूक्तवाकवाक्येन तत्साधनत्वात्। अतश्शाखाया अप्राधान्येपि न सिद्धान्तानुपपत्तिरित्यास्तां तावत्।

---

**तत्रैव " अपः प्रणयति " इत्यनेन विहितप्रणयनसंस्कृतानामपां " प्रणीताभिर्हवींषि संयौति " इति वचनेन संयवनार्थत्ववत् अन्ते " अन्तर्वेदि प्रणीता निनयति " इति निनयनार्थत्वेनापि विनियोगादुभयप्रयुक्तत्वम्। न च निनयनवाक्ये द्वितीयानिर्देशात्प्रतिपत्तित्वाशङ्का। कुशलेनाध्वर्युणा यावत्संयवनोपयोगिनीनामेवापां प्रणयनेन शेषाभावात्प्रतिपत्तित्वानुपपत्तेः। अतस्सक्तुन्यायेन निनयनस्यार्थकर्मत्वात्प्रयोजकत्वमिति प्राप्ते-**

**द्वितीयासंयोगादाकीर्णकराणां प्रतिपत्तिरेवेयम्। न च शेषाभावः तस्यावर्जनीयत्वात्। अनन्यथासिद्धप्रतिपत्तेरेव धारणप्रयोजकत्वाच्च। अतस्संयवनमेव प्रयोजकम्।** अत्र चाग्नेयादिहविषः **पाकत्वेनैव संयवनोद्देश्यता। तेन** चर्वादावपि **प्रणीता भवन्त्येव। अत एवाभ्युदितेष्टौ दधिपयसोरपि प्रणीताधर्माः**वक्ष्यन्ते। **वस्तुतस्तु—कपालं प्रति स्वोष्मजन्यपाकत्वेनेव पिण्डसंयवनत्वेनैवोद्देश्यता अतिप्रसक्तधर्मेण तदङ्गीकारे प्रमाणाभावात्। दधिदयसोः प्रणीताधर्मास्तु कृत्वा चिन्तया।** याज्ञिकास्तु **चर्वादावपि प्रणीताः कुर्वन्ति॥**

**प्रयोजनं संयवनोत्तरं प्रणीतानाशे निलयनार्थं तदनुत्पत्तिः॥ ५॥**

॥ उत्पत्त्यसंयोगात्॥

प्रयोजकत्वनिर्णयाय उद्देश्यस्वरूपं विविनक्ति — **अत्र चेति। चर्वादाविति।** प्रणीतास्थानापन्नतया विहितविशेषद्रव्यके तद्रहिते च चरुमात्र इत्यर्थः। अतएव प्रायणीये पयसि चरौ प्रणीताधर्माः पयसि भवन्तीति साधयिष्यते **नवमे**—प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात् संसर्गवच्च मधूदकवत् इति **चतुर्थपादाधिकरणे। वक्ष्यन्त इति।** पूर्वलिखिताधिकरणोत्तराधिकरणे अभ्युदितेष्टौ दधिपयसोः प्रदेयधर्मा इव नवम एव परार्थे त्वर्थसामान्यमिति द्वितीयपादाधिकरणे प्रणीताधर्मा वक्ष्यन्त इत्यर्थः। एवं स्वोक्तनिष्कृष्टपक्षावलंबनेन पुरोडाशतन्त्र एव प्रणीतास्तद्धर्माश्चेति बहुतरयाज्ञिकानुष्ठानेपि पूर्वोपपादितप्रकारेण **प्राचीनमीमांसकसिद्धान्तेन** केषांचिद्याज्ञिकानां चरुमात्रे प्रणीतातद्धर्मानुष्ठानं न युक्तमिति सूचयितुमाह—**याज्ञिकास्त्विति।** अतएव **रुद्रदत्तेन** अपःप्रणयति रक्षसामपहत्यै इति ब्राह्मणे रक्षश्शान्त्यादिद्वारा यज्ञरक्षार्थत्वेन श्रवणात् पाकयज्ञेष्वपि तद्विधानाच्चादृष्टार्था एव सत्यः प्रभुत्वात् संयवनायापि श्रूयन्ते तस्मादनिवृत्तिस्सर्वत्र। अतएव **भारद्वाजेन** सर्वसंस्थासु वा प्रणीता इत्युक्तमित्यन्येषां मतत्वेनोपन्यस्तम् तथापि संयवनार्थत्वेन श्रुत्या विनियोगे सत्यपापश्लोकश्रवणवत् फलश्रुतेरर्थवादत्वं दृष्टार्थत्वेसंभवत्यदृष्टार्थत्वकल्पनाऽयोगात् दृष्टार्था एव प्रणीता इति न्यायेन न युक्तमिदं याज्ञिकाचरणं तथापि भारद्वाजेनाहत्यवचनेन सर्वत्र प्रणीतानां विकल्पेन विधानात् तन्मूलकत्वेनैव कथंचिद्युक्तमित्यर्थः।

(६)—प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ २६ ॥ अर्थकर्म वा कर्तृसंयोगात्स्रग्वत् ॥ १७ ॥ कर्मयुक्ते च दर्शनात् ॥ १८ ॥

सोमे "दण्डेन दीक्षयति" इत्यनेन दण्डस्य दीक्षाऽभिव्यञ्जकत्वं विधाय "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" इति श्रुतम्। तत्र पूर्ववदेव द्वितीयासंयोगान्मैत्रा-रुणसम्बन्धिदानं दण्डप्रतिपत्तिः चतुर्थी षष्ठ्यर्थलक्षिका। "वेदविदे गां ददाति" इति-वद्वा प्राधान्याभावेऽपि सम्प्रदानत्वार्थिकैव। अत एव दीक्षितदण्डस्य दानमात्रेण प्रति-पत्तिसिद्धेर्नावश्यं स एव दण्डो "दण्डी प्रैषानन्वाह" इत्यनेन प्रैषानुवचने विनियुज्यते। तेन न प्रैषानुवचनं दण्डदानस्य प्रयोजकमिति निरूढपश्वादावपि न तदनुष्ठेयमिति प्राप्ते

"कर्मणा यमभिप्रैति स सम्प्रदानम्" इति स्मृत्या क्रियां प्रति व्याप्यमानं कर्म-कारकं प्रत्यपि संप्रदानस्य व्याप्यमानत्वावगतेर्विधिबलेन कस्यचिद्व्याप्यमानस्येप्सितत्वे कल्प्यमाने व्याप्यव्याप्यस्य सुतरां व्याप्यत्वन्यायेन मैत्रावरुण एव तदवगतेस्तस्यैवोद्देश्य-त्वम्। सम्भवति च मैत्रावरुणस्योपयोगादुद्देश्यत्वम्। वेदविदादौ तु बाधात् स्वर्गादे-रेवोद्देश्यता। दृष्टं चावलम्बनं दण्डस्य प्रयोजनमिति नादृष्टार्थत्वमपि। न चैवं "दण्डं" इति द्वितीयाऽनुपपत्तिः, सक्तुवत् करणत्वलक्षणार्थत्वात्। यत्तु—मूले अनीप्सितकर्मत्वेन तदुपपत्तिरित्युक्तं, तत् जुहोतेरपि "तृतीया च होश्छन्दसि" इत्यादिस्मृत्या सकर्मकत्वा-

---

॥ प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥

**विधायेति।** यद्यपि वाग्वै देवेभ्योपाक्रामदित्यादिना यद्दीक्षितदण्डं प्रयच्छतीत्यनंतरं क्रीतवाक्यं तैत्तिरीयशाखायामाम्नातम् भाष्यकारेणाप्यत्र तथैवोदाहृतमिति न दण्डेन दीक्षयतीति विध्यनन्तरमाम्नानं क्रीतवाक्यस्य संभवति तथापि पञ्चमाध्यायादौ तावल्लिख्यत एव दण्डेन दीक्षय-तीति वाक्यं मीमांसकैः तत् शाखान्तरीयत्वेन यद्दीक्षितदण्डं प्रयच्छतीत्येतदेवार्थतो लिखितं इत्येवमङ्गीकर्तव्यमेव तदत्र पूज्यपादैरर्थानुरोधेन दण्डेन दीक्षयतीत्येवं विधायेत्युक्तम्। **प्राधा-न्याभावेपीति।** दृष्टान्ते हि स्वर्गकामादिफलपदश्रवणात् फलस्यैवोद्देश्यत्वेन प्राधान्यम् न तु संप्रदानस्य तद्वदिहापीति भावः। **करणत्वलक्षणार्थत्वादिति।** न चैवं कर्मणा यमभि-प्रैतीति सूत्रे कर्मत्वेनान्वितं यत् तं प्रति व्याप्यमानस्य संप्रदानसंज्ञा विधीयते। यदि दण्डस्य करण-त्वेनान्वयः तर्हि कर्मत्वेनान्वितं प्रति व्याप्यमानत्वाभावात् मैत्रावरुणस्य संप्रदानसंज्ञैव न स्यादिति

वगतेस्सक्तुष्वपि तदापत्तेरनीप्सितकर्मत्वेऽपि चोद्देश्यानेकत्वनिमित्तकवाक्यभेदापरिहारस्य कौस्तुभ एवोक्तत्वादुपेक्षितम्। अस्तु वा दण्डस्यानीप्सितकर्मत्वेनैवान्वयः सम्प्रदानस्य तु सत्यपि प्राधान्ये सम्प्रदानत्वेनैवान्वयान्न द्विकर्मकत्वापत्तिरित्यपि बोध्यम्। अतश्च दण्डविशिष्टदानस्योपयोगापेक्षायां "दण्डी प्रैषानन्वाह" इत्यादिना प्रैषानुवचनार्थत्वेन विनियुज्यते। अतो निरूढपश्वादौ दीक्षासोमक्रयाभावेऽपि दण्डदानानुष्ठानं तस्य प्रैषानुवचनप्रयुक्तत्वान्नानुपपन्नम्॥

इदं त्विह वक्तव्यं—दानस्य दण्डं प्रत्यर्थकर्मत्वेऽपि दीक्षादण्डस्य कथं दानाङ्गत्वं, न हि स्वत्वत्यागे कृते यजमानेन स्वयं पुनर्व्यवहर्तुं शक्यम्। न चैतावतैव दण्डकार्यदीक्षाऽभिव्यञ्जकालम्बनपरिसमाप्तिः, येनोपादानलाघवानुरोधेन प्रकृत एव गृह्येत। न च दानविध्यनुरोधेन कार्यसङ्कोचः, तस्य लौकिकदण्डेनाप्युपपत्तेः। प्रतिपत्तित्वे तु कृष्णविषाणावदेव युक्तस्तत्सङ्कोच इति।

---

वाच्यं कर्मत्वेनान्वयपर्यन्तानुधावनस्यात्राविवक्षणात्। किं तर्हि वस्तुगत्या यत् कर्मकारकं तं प्रति व्याप्यमानत्वमात्रं विवक्षितं तस्य कर्मणः ददातियोगे करणत्वेनैवान्वय इति कर्मणा यमिति कर्मवाचकपदात् तृतीयां प्रयुञ्जानस्य भगवतः पाणिनेरपि एतदिष्टमिति। तदापत्तिरिति। अत्र तन्त्ररत्ने चलतिगच्छत्योः क्रियावाचकत्वेपि यथाऽन्यतरस्य सकर्मकत्वमकर्मत्वं वा एवं ददातिजुहोत्योरपीति जुहोतेरकर्मकत्वात् नानीप्सितकर्मत्वेन सक्तूनामन्वयापत्तिरित्युक्तं तद्दूषणाय सकर्मकत्वावगतेरित्युक्तम्। उक्तत्वादिति। ईप्सितानीप्सितभेदेनापि कर्मद्वयापत्तेरेककर्मकत्वभङ्गापत्त्या वाक्यभेदस्स्यादेवेति ग्रहैकत्वाधिकरणे धर्ममात्रे तु कर्म स्यादित्यधिकरणे भावार्थपादे चोक्तमित्यर्थः। अनीप्सितकर्मत्वेनान्वयमङ्गीकृत्यापि प्रकृते न वाक्यभेद इति पक्षान्तरमाह—अस्तु वेति। नन्वेवं सति ददातेर्नयतेरिव द्विकर्मकत्वापत्तिः मैत्रावरुणस्य प्राधान्यविवक्षणेन कर्मसंज्ञापातादित्याशङ्क्याह— संप्रदानस्य चेति। परया संप्रदानसंज्ञया बाधात् संप्रदानत्वेनान्वयविवक्षणात् नाकथितसूत्रविषयतेति भावः। स्वत्वत्यागे कृत इति। ननु रजकाय वस्त्रं ददातीत्यादिवत् अत्र दाधातुः गौण एवाङ्गीक्रियतामिति चेत् प्रचुरप्रयोगेण डुदाञ्दान इति जुहोत्यादेर्गौणप्रयोगदर्शनेपि दायेर्दान इति दायेधातोः यथाऽऽदेशस्थानिनः गौणप्रयोगादर्शनेन प्रकृते लक्षणाङ्गीकारे निषिद्धलक्षणात्वापत्तेरिति भावः। यद्वा गौणप्रयोगाङ्गीकारेपि मैत्रावरुणयजमानयोर्युगपत् कार्यद्वयोपस्थितावेकतरदृष्टकार्यबाधस्स्यादेवेति न निस्तारः तदपेक्षया वरं यजमानीयकार्यबाधेन मुख्यप्रयोजनाङ्गीकरणमेव युक्तमिति। अत्र ब्रूम इत्यधिकरणांतं प्रतीकम्। इदं

अत्र ब्रूमः—**श्रौतविधेरर्थकर्मपरत्वेऽप्यसदुक्तप्रयाजशेषाभिघारणन्यायेन आर्थिकदान-प्रतिपत्तिविध्यन्तरकल्पनया प्रकृतेऽपि कार्यसङ्कोचोपपत्तिः। न चात्र मध्ये प्रति-पत्त्यपेक्षाभावेन कल्पकाभावात्सन्नयायवैलक्षण्यं, दानविधेर्दण्डान्तरप्रयोजकत्वशक्तिकल्प-नाभिया कार्यसङ्कोचमङ्गीकृत्यापि मध्ये तदपेक्षोपपत्तेः। दृष्टश्च लोके अन्यानुरोधेना-प्यवश्यापेक्षितविषये स्वकार्यसङ्कोचेन अकाल एव तदपकर्षः। शक्यते चात्र स्वत्व-त्यागांशस्य मैत्रावरुणोपकारकत्वाभावात् तदंशे दण्डप्रतिपत्त्यर्थत्वं वक्तुम्। स्वस्वत्वा-त्यागेऽपि समर्पणमात्रेणापि प्रैषानुवचनोपपत्तेः। अतश्च प्रतिपत्त्यनुरोधेन दीक्षित-दण्डस्य तद्विषयत्वसिद्धिः। अत एव सत्रे सर्वेषां दण्डानां दानं, एवं च परप्रयुक्त-दण्डोपजीवित्वान्न श्रौतदानविधेः प्रैषानुवचनादेर्वा दीक्षितदण्डसत्त्वे दण्डान्तराक्षेपकत्वं, तन्नाशादौ तु दण्डान्तराक्षेपकत्वमक्षाभ्यञ्जनन्यायेन इष्टमेव। श्रौतदानविधावेकत्व-श्रवणादेकदण्डदानमेव मैत्रावरुणोपकारकमिति सत्रे प्रैषानुवचने एक एव दण्ड इत्यपि बोध्यम्। इदं च दीक्षितदण्डप्रापकवचनस्य पार्थसारथ्यादिमीमांसकैरलिखित-त्वात्तदभावमभिप्रेत्योक्तम्॥**

---

च मयाऽऽक्षेपमुखेन व्याख्येयमिति प्रतिपदं न व्याख्यायते। अत्र ब्रूम इत्यादि। **अत्रेदं विचार्यताम्**—अपेक्षाभावेपि दीक्षादण्डस्य प्रतिपत्तिविधिकल्पनायामन्योन्याश्रयापत्तिः—दीक्षादण्ड-स्यापेक्षानुरोधेन प्रतिपत्तिविधिकल्पना अकृतकार्यस्य च दण्डस्य प्रतिपत्त्यनुरोधेन कृतकार्यत्वकल्प-नाया अपेक्षेति। ननु न वयं प्रतिपत्त्यनुरोधेन दीक्षादण्डस्यापेक्षाङ्कल्पयामः। किन्तु श्रौतदान-विधेर्दण्डान्तरप्रयोजकत्वशक्तिकल्पनाभियेति ब्रूम इति चेन्मैवं औत्तरकालिकदण्डान्तरप्रयोजकत्व-कल्पनानुरोधेन दण्डेन दीक्षयतीति प्रत्यक्षविधिबोधितदीक्षाभिव्यञ्जकत्वस्य बाधे प्रमाणाभावात्। इतरथाऽतिप्रसङ्गापत्तेः। न चावश्यापेक्षितविषये कार्यसङ्कोचस्वीकारोप्युचित इति वाच्यं; आवश्यकत्वाभावात्। तथा हि—किं दानविधेर्दीक्षादण्डीयस्सङ्कोच आवश्यक उत प्रतिपत्ति-विधेः, नाद्यः, वेदविदे गान्ददातीतिवदनुपयुक्तलौकिकदण्डमात्रेणापि दानविधिवाक्यार्थोपपत्तेः।

नान्त्यः, तस्याश्रुतत्वात्। दानविधेर्दण्डान्तरप्रयोजकत्वकल्पनानुरोधेन स्वस्यैव दण्डेन दीक्षयतीत्यस्य स्वसङ्कोचावश्यकत्वमिति चेत्, दण्डेन दीक्षयतीति वाक्यार्थकाले दानविधेराकाङ्क्षा-भावेन सङ्कोचाङ्गीकारे प्रमाणाभावात्। दानविधेर्दूरस्थत्वेनानुपस्थितेश्च। दानविधिवाक्यार्थ-बोधोत्तरकालं दण्डेन दीक्षयतीत्यस्य सङ्कोचावश्यकत्वन्त्वन्योन्याश्रयादिदोषग्रस्तत्वान्न संभवतीत्यवो-चाम। किंच स्वत्वत्यागांशस्य मैत्रावरुणोपकारार्थत्वाभावे प्रयोजनान्तरकल्पनावश्यकतया यद्यपि विध्यतरकल्पनया दण्डार्थत्वमपि कल्पयितुं शक्यं तथापि श्रूयमाणवाक्ये दण्डमात्रस्यैवोपादानात्

वस्तुतस्तु—तैत्तिरीयशाखायां "यद्दीक्षितदण्डं प्रयच्छति" इति सार्थवादकवाक्यान्तरश्रवणात् 'क्रीते' इति दीक्षितपदरहितवाक्ये प्रतिपत्तिविध्यन्तराकल्पनेऽपि न क्षतिः, तैत्तिरीयवाक्येनैव मैत्रावरुणपदाश्रवणेन दानस्य प्रतिपत्तित्वसिद्धेः। क्रीतवाक्ये तु मैत्रावरुणपदश्रवणेन तत्प्राधान्यावगतेः तदुपकारार्थत्वमेव। अतश्च तैत्तिरीयवाक्ये यच्छतेस्सम्प्रदानापेक्षायां क्रीतवाक्ये स्वतन्त्रदण्डाक्षेपशक्तिकल्पनागौरवपरिहारार्थं च परस्परापेक्षिततया दीक्षितदण्डस्यैव मैत्रावरुणोपकारार्थत्वसिद्धिः। न च तैत्तिरीयवाक्येन क्रीतवाक्यविहितदण्ड एव दीक्षासम्बन्धविधानोपपत्तेः न प्रतिपत्तिविधायकत्वमिति वाच्यं, तथात्वे दण्डोद्देशेन दीक्षितत्वविधानेऽपि एकप्रसरताभङ्गापत्तेः॥ न चैवमप्येतद्वाक्यविहितप्रतिपत्त्यनुवादेन क्रीतवाक्ये राजक्रयोत्तरकालत्वस्यैव विधानोपपत्तेः दानस्य अर्थकर्मत्वे प्रमाणाभावः। प्राप्तदानानुवादेन कालमैत्रावरुणरूपोभयविधाने वाक्यभेदापत्तेः, अत उभयत्रापि दानविधिः, तत्र च दीक्षितपदयुक्तवाक्ये प्रतिपत्तिविधिरेव, सम्प्रदानाश्रवणात् दीक्षितपदश्रवणाच्च। क्रीतवाक्ये तु उक्तयुक्त्या अर्थकर्मत्वमेव। उभयत्र प्रयोजनं पूर्ववत्॥

---

कथं दीक्षितदण्डोद्देश्यकत्वसिद्धिः। भवन्मते स्विष्टकृन्न्यायेन स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनस्य दानपदार्थत्वात् परस्वत्वापादनांशेन मैत्रावरुणोपकारकत्वं स्वत्वत्यागांशेन च दण्डोपकारकत्वम्। ततश्च श्रौतविधेरयमर्थः परस्वत्वापादनेन मैत्रावरुणं संस्कुर्यात्, आर्थिकविधेस्तु स्वस्वत्वनिवृत्त्या दण्डं संस्कुर्यादिति। तत्र दण्डस्वरूपे आनर्थक्ये प्राप्ते अपूर्वसाधनत्वलक्षणायामुपयुक्तसंस्कारापेक्षयोपयोक्ष्यमाणसंस्कारस्य न्याय्यत्वेन प्रैषानुवचनोपयोक्ष्यमाणदण्डजन्यापूर्वमेव लक्षयितुमुचितम्, तत्र च दण्डविशेषाश्रवणेन दीक्षितदण्डग्रहणे प्रमाणाभावात् लौकिक एव दण्डः प्राप्नोतीति तस्यैव स्वत्वत्यागरूपसंस्कारापत्तिः। अथार्थिकविधिकल्पनायामपि नेष्टसिद्धिः प्रतिपत्तिविधिवलेनैव स्वत्वत्यागरूपसंस्कारसंस्कृतस्य दीक्षितदण्डस्यैव मैत्रावरुणोपकारार्थत्वं; तादृशस्यैव च प्रैषानुवचनोपयोगित्वमित्यादिकल्पना तु प्रतिपत्तिविधेरेव सन्दिग्धत्वेनान्योन्याश्रयग्रस्तेति।

किंच निरूढपशौ दीक्षितदण्डाभावेन प्रतिपत्तेश्च प्रतिपाद्योत्पादकत्वाभावात् स्वत्वत्यागानुष्ठानं न स्यात्। किंतु समर्पणमेव; ततश्च यजमानमैत्रावरुणयोर्व्यासज्यवृत्तिस्वत्वोत्पादापत्त्या दानोत्तरमपि पुनर्यजमानकर्तृकव्यवहारापत्तिः। एवं सत्यपि यदि कदापि श्रौतविधेः दण्डान्तरप्रयोजकत्वशक्तिःसिद्धान्ते कल्पनीया नापद्येत तदा तदनुरोधेनापि दीक्षादण्डसंकोचोऽङ्गीक्रियेतापि नत्वेतदस्ति दीक्षितदण्डनाशे दण्डान्तरापेक्षकत्वस्य भवद्भिरङ्गीकारात्। ततश्चार्धजरतीयापत्तिः।

वस्तुतस्तु क्रीतवाक्येऽपि प्रैषानुवचनोपयोगिदण्डसंस्कारकत्वमेव दानस्येति दण्डस्यापीप्सितकर्मत्वमेव। न त्वेतावता दण्डप्रतिपत्तित्वं उपयोक्ष्यमाणसंस्कारस्य न्याय्यत्वात्। मैत्रावरुणस्य तु सम्प्रदानत्वेनैवान्वय इति न कश्चिद्दोषः। सत्रे प्रैषादौ दण्डैकत्वं तु दण्डी प्रैषानन्वाह इत्यत्र प्रथमातिक्रमे कारणाभावादेकवचनान्तेन व्युत्पत्तिमङ्गीकृत्य समर्थनीयमिति दिक् ॥ ६ ॥

---

अपि च प्रयाजशेषेण हवींष्यभिघारयतीत्यत्रापि प्रचुरप्रयोगात् पूर्वाधरोपादानकाज्यनिष्ठोत्तरदेशसंयोगानुकूलक्रियाऽभिघारणपदार्थः। तत्राज्यप्रतियोगिकोत्तरदेशसंयोगस्य हविर्निष्ठत्वात् तदर्थत्वं पूर्वाधारविभागस्याज्यनिष्ठत्वात् प्रयाजशेषार्थत्वम्। ततश्च सति प्रयाजशेषे न प्रयाजशेषान्तराक्षेपकत्वं तन्नाशे आज्यान्तराक्षेपकत्वम्। क्वचिद्विकृतौ प्रयाजाभावकृतप्रयाजशेषाभावे निरूढपशौ दानमिव हविषामर्थेऽभिघारणं च स्यात्। एवं चार्थकर्मत्वापत्त्या कालान्तरभाविप्राजापत्यवपाभिघारणाय कथं न प्रयाजशेषधारणं आज्यान्तरं वा नापद्येतेति विभाव्यताम्।

**यदपि** यद्दीक्षितदण्डं प्रयच्छतीति तैत्तिरीयवाक्यस्य यच्छब्देन य एवं विद्वानितिवत् भासमानमपि विधिशक्तिप्रतिबन्धं कर्तृसमानाधिकरणत्वाभावादविगणय्य प्रतिपत्तिविधायकत्वमुपपादितं तदप्यापातरमणीयम्। **तथाहि**—अत्र हि न दीक्षितदण्डोद्देशेन दानविधिः; क्रीतवाक्ये सोमक्रयोत्तरकालमैत्रावरुणोभयविधाने वाक्यभेदप्रसङ्गेनावश्यं दानभावनाविधानस्यावश्यकत्वात तत्प्राप्तदानानुवादेन दीक्षितदण्डमात्रस्यैव विधानात। न च मैत्रावरुणवाक्येनैव दण्डस्य प्राप्तत्वात् दानीयदण्डोद्देशेन दीक्षितत्वविधौ विशिष्टोद्देशे वाक्यभेदापत्तेरेकप्रसरताभङ्गापत्तेश्च कथं दीक्षितदण्डविधानमिति वाच्यं; एतद्दोषपरिहारायैव प्रथमतो दानानुवादेन दीक्षितदण्डे विहिते प्राप्ताप्राप्तविवेकेन पाश्चात्यविशेषणविधिगवेषणायां **विप्रतिषेधे तद्वचनादिति** दशमद्वितीयपादीयखलेवाल्यधिकरणे दण्डी प्रैषानित्यत्र स्वयमुपपादितप्रकारेण दण्डविशिष्टेनर्थविधाने दण्डांश इवेहापि दीक्षितत्वांशे विधितात्पर्यकल्पनोपपत्तेः।

**इष्टं चैतत्**। लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यत्र वाक्यार्थोपपादनाय मीमांसकानाम्। वषट्कर्तुः प्रथमभक्ष इत्यत्र तूद्देश्यान्तराभावेन प्रथमवाक्यार्थस्यैवानुपपत्तेः। तदुपपादनाय च भक्षोद्देशेन प्राथम्यविधावेकप्रसरताभङ्गापत्तिः साध्वीति **वैषम्यम्**। अस्तु वाऽतिदेशप्राप्तेः पूर्वमेवोपदेशरूपेण लोहितविशिष्टोष्णीषविधानस्य विशेषणतात्पर्यकत्वेपीह दण्डविधायकक्रीतवाक्यस्यापि प्रत्यक्षत्वात तेनैव दण्डप्राप्तेर्न ततः पूर्वं दीक्षितदण्डविधानं संभवति। अत एव वषट्कर्तुद्देशेन न प्राथम्यविशिष्टभक्षविधानमिति दीक्षितवाक्ये दानविधानमेव **तथापि** तस्य दानविधायकत्वे तदनु-

वादेन क्रीतवाक्ये कालमैत्रावरुणोभयविधाने वाक्यभेदापत्तिरुक्ता; सा न घटते यथैव हि राजा राजसूयेन स्वाराज्यकामो यजेतेत्यादावुत्पन्नानामनुमत्यादीष्टीनां राजसूयपदवाच्यानां राजकर्तृकत्व-स्वाराज्यफलसंबन्धोभयविधाने वाक्यभेदमाशंक्य प्राप्तानामपि विनियोगविशिष्टप्रयोगविधानार्थं पुनर्विधानादवाक्यभेद इत्युक्तं **स्वयमेव** द्वितीयाध्यायादौ। एवमिहापि यद्दीक्षितदण्डं प्रयच्छतीत्यनेनोत्पन्नमपि दण्डदानं पुनर्विनियोगविशिष्टप्रयोगविधानार्थं विधीयत इति न वाक्यभेद इत्यपि वक्तुं शक्यत एव।

**यद्यपि** दण्डप्रतिपत्त्यर्थत्वेनैवोत्पन्नस्य दानस्य न विनियोगान्तरापेक्षा **तथापि** दानस्य स्वाभावत एव यत्किंचित्संप्रदानकप्रयोगापेक्षायामनेन राजक्रयोत्तरकालीनमैत्रावणसंप्रदानकप्रयोगस्य विधाने नैव किंचिद्बाधकम्। युक्तमप्येतत्। कृष्णविषाणां प्रयच्छतीत्युपक्रमे प्रयच्छति-धातुसमभिव्याहृतस्य द्वितीयान्तस्य करणार्थकत्वक्लृप्तेः मम मतेऽत्रापि तदत्यागात् भवन्मते प्रतिपत्तित्वे द्वितीयान्तत्वेनैवान्वयात् साहचर्यत्याग इति।

अपि च पूर्वमुत्पन्नस्य हि पश्चात् प्रतिपत्त्यपेक्षा भवतीति सर्वत्र प्रतिपत्तिस्थले दृष्टं; तदत्र **तैत्तिरीयशाखायां** यद्दीक्षितदण्डं प्रयच्छतीत्युपक्रम्य क्रीतवाक्यमाम्नातं ; तत्र भवन्मते प्रतिपत्ति-विधिवाक्यार्थकाले दीक्षितदण्डस्योपयुक्तत्वाज्ञानात् कथं संस्कार्यत्वं स्यात्? नहि तैत्तिरीयशाखायां दण्डेन दीक्षयतीत्याम्नातं येन उपयुक्तत्वं ते न भवेत्। अतो यद्दीक्षितवाक्येनोत्पन्नस्य दानस्य विनियोगप्रयोगापेक्षायामग्रे क्रीतवाक्येन तत्करणं युक्ततरमापद्यत इति दीक्षितदण्डविषयत्वे सिद्धेपि न दण्डप्रतिपत्त्यर्थत्वसिद्धिः।

अपि च यद्दीक्षितवाक्ये संप्रदानाश्रवणात् तदपेक्षायां क्रीतवाक्यैकवाक्यतेति ; तदपि न यजमानस्यैव संप्रदानत्वेनापेक्षाभावात्। यथैव हि कृष्णविषाणां प्रयच्छतीत्यत्र संप्रदानाश्रवणेपि दीक्षाप्रकरणात् अध्वर्युकर्तृकं यजमानसंप्रदानकमेव दानमायाति एवमिहापि अध्वर्युकर्तृकं दण्डकरणकं यजमानसंप्रदानकं दानमायास्यत्येवेति कुतस्संप्रदानापेक्षा। न च दीक्षितपदश्रवणात् तदन्यसंप्रदानापेक्षेति वाच्यं ; भावार्थकक्तप्रत्ययान्तेन दीक्षितपदेन दीक्षासाधनदण्डमात्रप्रतीत्या यजमानसंप्रदानत्वेप्युपपत्तेः वेदोक्तोपक्रमोपसंहारपर्यालोचनेनाप्ययमेवार्थो युक्त इति निश्चीयते।

तथा हि—ऋक्सामे वै देवेभ्य इत्यादिना कृष्णाजिनेन दीक्षयतीति विधाय गर्भो वा एष यद्दीक्षित इत्यनेन वाससो महिमानमाख्याय राजक्रयात् पूर्वं तत्त्यागनिन्दापुरस्सरं क्रीते सोमेपोर्णुत इत्यनेन वासस्त्यागं विधाय अग्रे अङ्गिरसःस्वर्गलोकमायन्नित्यादिना अर्थवादसरूप-

विधिगणेन मध्यतः सन्नहनशरमयीत्वादिगुणान्विधाय मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं-मिथुनत्वाय इति विधाय यज्ञो दक्षिणामभ्यध्यायत् इत्यादिना कृष्णविषाणां स्तुत्वा इन्द्रस्य योनिर-सीति कृष्णविषाणां प्रयच्छतीति समन्त्रकं दानं विधाय हस्तकण्डूयननिंदापुरस्सरं कृष्णाविषाणया कण्डूयतीति तस्या विनियोगे कृतेऽनियतप्रतिपत्तौ प्राप्तायां नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीति प्रतिपत्तिं नियम्य वाग्वै देवेभ्य इत्यादिना वनस्पतिषु वागवस्थानप्रकाराभिधानपुरस्सरं यद्दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे इत्यनेन दण्डदानं विधाय तस्यैवौदुंबरो भवतीत्यादिना औदुम्बरत्वमुखसंमितत्वादिगुणान्विधाय दानसंपादितेन दण्डेन कुत्र विनियोक्तव्यमित्यपेक्षायां क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति निनियुज्य वागवरोधाय दण्डदानं यजमानायाध्वर्युणा कृतमासीत् स चेद्दण्डो यजमानेन मैत्रावरुणाय दीयते तदा मैत्रावरुणेन पूर्वं ऋत्विग्भ्यः वाग्विभक्ता भवति तेषु ऋत्विक्षु वाच्यागतायां तामृत्विजो यजमाने स्थापयन्तीत्यर्थकेन मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजतीत्यादिना सर्वत्र वागवरोधप्राप्तिमुपपाद्य मध्ये समन्त्रकान् होमान् विधाय अन्ते अदीक्षिष्टायं ब्राह्मण इत्यादिना दीक्षाप्रकरणमुपसंहृतम् ॥

अत्र च यमनियमपरिग्रहरूपाया दीक्षायाः फलिसंस्कारत्वात् दीक्षितः स्वयं तं परिग्रह-मङ्गीकरोति तत्रान्यस्य प्रयोजकव्यापारस्य दीक्षयतीति णिचाभिधानात् तदाश्रये निर्णीतव्ये याजु-र्वैदिकत्वेनाध्वर्यवसमाख्ययाऽध्वर्युरेव संस्कार्यापादानेपि सामर्थ्यादेव दीक्षितसंस्कारकत्वं क्वचिद्य-जमानादिपदानां संमीलनादिधर्माणां प्रतिनियतव्यवस्थासिद्ध्यर्थं रथन्तरबृहत्पदयोरिवोच्चारणं न विरुद्ध्यते। क्वचिच्च दीक्षयतिपदवैलक्षण्येन यच्छतीत्याम्नातं; तत्र णिजभावात् न यजमानकर्तृकः कश्चन व्यापारः किन्तु अध्वर्युकर्तृक एव। अत एव कृष्णविषाणायां दानमात्रं दीक्षा, ततश्चाध्वर्युकर्तृकपदार्थानामेवोपक्रमात् तत्कर्तृकपदार्थानंतरं यजमानकर्तृकपदार्थविधानस्यापि कृष्णविषाणादौ कॢप्तत्वेनान्ते चाध्वर्युकर्तृकपदार्थानामेवोपसंहारात् यद्दीक्षितदण्डं प्रयच्छतीत्यत्रापि दीक्षिताय दण्डमिति दीक्षितस्य दण्डमिति वा समासेन, अथवा भावार्थकक्तप्रत्ययेन दीक्षा-साधकं दण्डमित्यर्थेन वाऽध्वर्युकर्तृकं दीक्षितसंप्रदानकमेव दानं विधातुं युक्तं कृष्णाविषाणा-समभिव्याहृतयच्छतौ तथा निर्णीतत्वाच्च। अत एवैतच्छाखायां दण्डदीक्षा न केनचित् प्रमाणेनाम्नाता। एव भगवता भाष्यकारेण शास्त्रदीपिकाप्रकाशकारैश्चैतदधिकरणारम्भे यद्दीक्षिताय दण्डं प्रयच्छतीत्यर्थकतैत्तिरीयकवाक्यं पठितम्। शाखान्तरीयत्वेपि वा चतुर्थाकरणन्यायेन तैत्तिरीयवाक्यार्थनियमोपपत्तेः। भवन्मते तु वाक्यद्वयस्यापि यजमानकर्तृकमैत्रावरुणसंप्रदानकदान-विधायकत्वे मध्येंगीक्रियमाणे अध्वर्युकर्तृकप्रायपाठो बाध्यः अध्वर्युकर्तृकस्यैव स्वीकारे दीक्षाप्रायपाठ-

बाधापत्त्या अकाण्डताण्डवतापत्तिः। अतस्सर्वथा पूर्ववाक्येन कृष्णविषाणाया इव दण्डदाने विहिते दानसंस्कृतदण्डस्य कृष्णविषाणायाः कण्डूयन इव मैत्रावरुणसंप्रदानकदाने विनियोगः क्रीतवाक्ये क्रियत इत्येव युक्त इति संप्रदानापेक्षाभावात् क्रीतवाक्यैकवाक्यता नोपपद्यते। किंच पूर्ववाक्यस्य मैत्रावरुणसंप्रदानकदानपरत्वे मुखसंमितत्वादिगुणानामपि प्रधानभूतमैत्रावरुणमुखविषयत्वापत्तिः।

किंचेयमपरानर्थापत्तिः। भवन्मते हि दीक्षाप्रयुक्तदण्डोपजीविनी स्वत्वनिवृत्तिः तदुपजीव्यदण्डाभावेन परस्वत्वापादनांशस्य स्वातन्त्र्येण स्विष्टकृद्यागस्येव द्रव्यांतराक्षेपकत्वमित्येवं दीक्षादण्डविषयत्वं सिद्धम्। तत्र च यथा परप्रयुक्तद्रव्योपजीवित्वेन एककपाले स्विष्टकृद्यागस्य लोपः सिद्धान्ते तद्वन्निरूढपशौ दीक्षाप्रयुक्तदण्डाभावात् दानलोपापत्तिरेव प्रसज्यते। यदि ह्यत्र अक्षाभ्यंजनतुषोपवापवत् अर्थकर्मतैव स्यात् तदा पदपांसुपुरोडाशाभावे कपालाभावे प्रधानलोपस्यान्याय्यत्वात् यत्किञ्चित् सदृशद्रव्यग्रहणं भवेन्न त्वेतदस्ति। अत एव प्राचीनैरर्थकर्मत्वमेव केवलमङ्गीकृतम्। अथैतद्दोषपरिजिहीर्षयैव पूज्यपादैः यदि दीक्षितवाक्यैकवाक्यतायामस्वरसोद्भावनपुरस्सरं वस्तुतस्तुपक्षाङ्गीरोऽन्तेऽङ्गीकृत इति; सत्यं, तथापि न तेनेष्टसिद्धिः।

तथा हि—प्रैषानुवचनोपयोक्ष्यमाणदण्डसंस्कारत्वे कथं दीक्षितदण्डसिद्धिः। नहि दण्डी प्रैषानिति वाक्ये दीक्षितदण्डनियामकं पदमस्ति। ततश्च यादृशो लौकिकदण्डः प्रैषानुवचने प्राप्तः तस्यैव दानाख्यसंस्कारापत्तेः दानवाक्य एव दीक्षितदण्डग्रहणे प्रमाणाभावेन तन्निर्वाहाय यद्दीक्षितदण्डवाक्यैकवाक्यतायां पूर्वोक्तदूषणगणापत्तिः।

यदप्यत्र दण्डस्योद्देश्यत्वेनाविवक्षितैकत्वात् सत्रे सर्वेषां दण्डानां दानमिति मनसि निहिते सिद्धान्ते कथं तर्हि प्रैषानुवचने दण्डैकत्वं दानसंस्कृतानां दण्डानां बहूनां सत्वादित्याशङ्क्य दण्डीत्येकवचनांतविग्रहबलात् तदुपपत्तिः, कृता, सापि पूर्वापरविरुद्धा। प्रैषानुवचनोपयोक्ष्यमाणदण्डसंस्कारकं दानमिति पूर्वमभिहिते अग्रे सत्रे सर्वदण्डदानस्य गर्भस्रावेणैव पराहतत्वात्। नहि सत्रीया दण्डाः सर्वे प्रैषानुवचनोपयोक्ष्यमाणाः। विपरीतं तावतां दण्डानां ग्रहणे श्रमप्राप्तया अवलंबनसाधनमनालंबनसाधनमेव स्यात। श्रमाभावे प्रकृतौ दानसंस्कृतस्य तस्य प्रैषानुवचनसाधनत्वात् सर्वेषां च दानसंस्कृतत्वात् प्राप्तेः दण्डीत्येकवचनोपात्तैकत्वस्य प्रकृतार्थिकत्वेनानतिदेशात्। सत्रे प्रैषानुवचने सर्वदण्डानां दुर्निवारमेव तस्य प्रैषानुवचनसाधनत्वात्सर्वेषां च दानसंस्कृतत्वाभावात्। अतः कथमेवं रीत्या दीक्षितदण्डविषयत्वसिद्धिः इत्यवहितेन मनसा सहृदयैरालोचनीयमिति दिक्।

**मम तु प्रतिभाति।** यद्दीक्षितवाक्येन दीक्षितसंप्रदानकमेव दानमध्वर्युकर्तृकं विधीयते तत्र च यथा दीक्षितेन गृहीतया कृष्णविषाणया किं कर्तव्यमित्यपेक्षायां स्वकर्तृककण्डूयनाङ्गत्वेन विनियोगो वाक्यात्, एवं गृहीतेन किं कर्तव्यमित्यपेक्षायां क्रीतवाक्येन मैत्रावरुणसंप्रदानके च दाने स्वकर्तृके विनियोगः क्रियते मैत्रावरुणस्य चास्त्येव दण्डी प्रैषानन्वाहेति प्रैषानुवचनार्थमपेक्षेति आलम्बनरूपदृष्टप्रयोजनमपि लभ्यत इति दीक्षितदण्डविषयत्वसिद्धिः। अत एव वेदभाष्ये श्रीविद्यारण्यगुरुभिः वाग्वै देवेभ्य इत्यादिक्रीते सोम इत्येतत्पर्यन्तो भागः यजमानाय दण्डप्रदानं विधत्ते इत्येवमवतारितः।

अथ वा अनया भाषया अत्र वाक्यार्थः-प्रैषानुवचने मैत्रावरुणस्य दण्डिनो विधानात् तेन दण्डसंपादनं यावत् लौकिकोपायाक्षेपेण कर्तव्यं तावत् क्रीतवाक्येन दानमुपायो नियम्यते। अत एवायं दीक्षितदण्डविनियोगांशेनापि नियम एवेति न विधिसाङ्कर्यमपि। न चैवं क्रीतवाक्याभावे दीक्षितदण्डस्य आदीक्षं स्थापनावश्यकत्वेन मैत्रावरुणाय दानाप्रसक्तेः कथं पक्षेपि दानोपायप्राप्तिरिति वाच्यं; दीक्षितसंप्रदानकदानमात्रेणैव कृष्णविषाणायामिव संस्कारस्य जातत्वेन आदीक्षं स्थापने प्रमाणाभावात्। यत्र क्वचित् यजमानेन स्वदंडे विनियोक्तव्ये **कांस्यभोजिन्यायेन** मैत्रावरुणापेक्षायां कदाचित् दानप्राप्तेः। नहि कृष्णाजिनादिवत् दीक्षापर्यन्तं स्थापनमावश्यकं दण्डादीनां दीक्षानिरूपितकरणत्वाभावात्। अत एव दीक्षयतिपदवैलक्षण्यमपि एतत्प्रयोजनायेति ज्ञेयम्। अतस्सिद्धं दीक्षितदण्डविषयत्वं; अर्थवादोऽत्र गमकोऽनुसन्धेयः।

तथा हि—यद्दीक्षितदण्डं प्रयच्छति वाचमेवावरुन्धे इत्यनेन दानं विधायानन्तरं क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रतिष्ठापयन्तीत्येवं सार्थवादकं क्रीतवाक्यमाम्नातम्। अत्र यदिति यामित्यर्थे विद्यमानं वाचमित्यनेन द्वितीयान्तेनान्वयि, तामृत्विज इति तच्छब्दस्य यच्छब्दसापेक्षत्वात्। एवं च वनस्पतिषु वागवस्थानात् तदुद्भवदण्डदानेन यजमानो यां वाचमवरुन्धे तामृत्विजोऽपि वाचं पुनर्यजमाने प्रतिष्ठापयन्ति। कथं, वाग्जनकदण्डश्चेन्मैत्रावरुणाय दत्तो यजमानेन तदा मैत्रावरुणे वागागता तत्रागतायां मैत्रावरुणेन पूर्वमृत्विग्भ्यः होतर्यज प्रशास्तर्यज अध्वर्युयजमानौ यजतमित्यादिप्रैषदानात् तद्द्वारा तद्दण्डजन्या वाक् ऋत्विक्ष्वायाति। तत्रागतायां तैः ऋत्विग्भिः यजमानीययागकरणात् तद्द्वारा पुनर्यजमानीया वाक्यजमान एव प्रतिष्ठिता भवतीति। अतः तद्दण्डजन्यवाग्वृत्तिप्रतिष्ठापनं नासति दण्डैक्ये सिद्ध्यतीति सिद्धम्।

न चैवं कृष्णविषाणावत् दीक्षितपदाभावेपि तत्संप्रदानकदानोपपत्तेः यद्दीक्षितवाक्ये दीक्षितपदवैयर्थ्यमिति चेत् सत्यं, दीक्षितपदाभावे दीक्षाप्रकरणात् दीक्षितसंप्रदानकत्वसिद्धिः तथापि दीक्षितस्य गौणत्वनिवृत्त्यर्थं तत्सार्थक्यमितरथा विनियोजकक्रीतवाक्यात् मैत्रावरुणप्राधान्यावगतेः अध्वर्युकर्तृकदीक्षितसंप्रदानकदानीयदण्डस्य मैत्रावरुणसंस्कारार्थत्वस्यैवापत्तेः। अतस्तन्निवृत्त्या दीक्षितनिष्ठादृष्टजनकत्वबोधनाय सार्थकं दीक्षितपदम्। न चैवमपि पूर्वोक्तरीत्या साहचर्येण क्रीतवाक्यविधेयं दानमपि अध्वर्युकर्तृकमेव स्यात् इति वाच्यं अध्वर्युकर्तृकदानेन यजमानस्वत्वस्य दण्डे उत्पन्नत्वेन तत्करणकदाने अध्वर्योः स्वत्वाभावेन तत्कर्तृकत्वाप्रसक्तेः। अतो यथा दत्तायां कृष्णविषाणायां यजमानस्वत्ववत् अध्वर्युकर्तृकपदार्थप्रायपाठे पठितमपि प्रासनं यजमानकर्तृकमेवमिहापीति न किंचिद्बाधकम्।

अतो दीक्षितदण्डकरणकं दानं मैत्रावरुणार्थत्वेन विधीयत इति केवलार्थकर्मत्वात् निरूढपशौ तुषोपवापन्यायेन दण्डान्तरसंपादनं सत्रे च प्रैषानुवचनरूपद्वारसंपादनाभावात् न सर्वेषां दण्डानां दानं दानसंस्कृतस्य दण्डस्य प्रकृतौ साधनत्वात् गृहपतिना स्वीयोदंडोदेयः। तेन मैत्रावरुणेन प्रैषानुवचनं कार्यं मैत्रावरुणस्य स्वदण्डसत्वाद्वा न कार्यं दानमित्यन्यदेतत्। सर्वथा दीक्षितदण्डविषयत्वसिद्धिः।

ये तु दीक्षितसंस्कारप्रायपाठात् विनियोजकमपि कण्डूयनं यजमानकर्तृकं तत्संस्कारकमेव भवति एवमिदमपि दानं दीक्षितसंस्कारकमेव तस्यैव संस्कार्यत्वेनोपस्थितेः पूर्वोक्तवाक्यप्रतिष्ठापनप्रतिपादकार्थवादादपि तथा प्रतीतेश्च। ततश्च एवं तात्पर्यग्राहकप्रमाणान्तरसत्वे वेदविद इतिवत् संप्रदानचतुर्थ्यप्राधान्येपि न विरुद्धा। प्रैषानुवचने च दीक्षितसंस्कारकदानोपायलघुत्वात् दानीय एव दण्डः। सत्रे तत्तद्दीक्षितसंस्काराय सर्वदंडानामपि दानं पूज्यपादोक्तमुपपन्नं भवति निरूढपशौ तु संस्कार्याभावात् दुरुपपादमेव दानमिति अधिकरणसिद्धान्तानुपपत्तिमाहुः।

**तन्मन्दम्।** अध्वर्युकर्तृकपदार्थेषु मेखलादानादिषु द्वितीयान्तयजमानपत्नीपदप्रयोगेषु तत्तत्संस्कारकत्वे अवगतेपि स्वकर्तृकेषु वपनकण्डूयनादिषु विना आत्मनेपदं स्वसंस्कारकत्वे प्रमाणाभावात्। अतो वपनादिष्वात्मनेपदश्रवणात् स्वसंस्कारकत्वं युक्तं, दानस्य परस्मैपदश्रवणात् प्रासनवत् परार्थत्वमेव सम्यगिति न काप्यनुपपत्तिरित्यलमतिपाण्डित्यविडंबनेनेति दिक्।

---

## (७)—उत्पत्तौ येन संयुक्तं तदर्थं तत् श्रुतिहेतुत्वात् तस्यार्थान्तरगमने शेषत्वात्प्रतिपत्तिस्स्यात् ॥ १९ ॥

**सोमे "कृष्णविषाणया कण्डूयत" इति कण्डूयनाङ्गत्वेन कृष्णविषाणां विधाय पुनराम्नातं "नीतासु दक्षिणासु** चात्वाले कृष्णविषाणां **प्रास्यति" इति। तत्र निनयनवत् प्रासनं प्रतिपत्तिरेव द्वितीयासंयोगात्। न च** दक्षिणादानोत्तरकालमपि **दीक्षितस्य कण्डूयनसम्भवात् कृतकरत्वाभावात् न प्रतिपत्त्यर्थता,** अनन्यथा**सिद्धप्रतिपत्तिविधिबलादेव दक्षिणादानप्राक्कालभाविकण्डूयनस्यैव** कार्यत्वावधारणात्। **न च प्रतिपत्तिमात्रे कार्यस्य जातत्वेन संस्कारवैयर्थ्यापत्तेः विनियोगभङ्गेन सक्तुवदर्थकर्मत्वमेव स्यादिति वाच्यं,** जातेऽपि **कार्ये उपयुक्तादि क्व निक्षेप्तव्यमित्यपेक्षाऽस्त्येवेति प्रतिपत्तिनियमविधेरुपयोगोपपत्तेः, तज्जन्यनियमादृष्टस्य चोत्पत्त्यपूर्वे** जातेऽपि तदव्यवहित**कार्योत्पत्त्युपयोगियागा-**

---

॥ उत्पत्तौ येन संयुक्तं तदर्थं तत् ॥

**चात्वाल**:—उत्तरवेदिसंपादनाय कृतो गर्तः। **अनन्यथेति**। अत्र च **यद्यपि** सर्वत्र स्वकार्यं निष्पाद्य व्यर्थं स्थितस्य पदार्थस्य का प्रतिपत्तिरिति भाव्यापेक्षायां काचन लौकिकी अलौकिकी वा प्रतिपत्तिर्विधीयत इति स्थितिः। तदिह दीक्षितसंस्कारसाधनीभूतं कण्डूयनं आदीक्षाविमोचनं कार्यं कृष्णविषाणाया न तज्जातमस्ति येन व्यर्थावस्थानप्राप्त्या अपेक्षा भवेत् प्रासनविध्यन्यथानुपपत्त्या कृतकार्यत्वकल्पनया अपेक्षाकल्पनं तु प्रासनविधेरद्यापि प्रतिपत्तित्वानिर्णयादेवासंभवीति अन्योन्याश्रयापत्तिपर्यवसायी। प्रासनविधेरनन्यथासिद्धत्वं तु दक्षिणादानोत्तरभाविकण्डूयनोपयोक्ष्यमाणकृष्णविषाणासंस्कारार्थत्वेनाप्युपपत्तेरयुक्ततरम्। संभवति च चात्वाले प्रक्षेपमात्रसंस्कारसंस्कृतया कृष्णविषाणया अग्रे कण्डूयनम्। नहि कृष्णविषाणाभङ्गपूर्वकः प्रक्षेपः प्रासनपदार्थः येनाग्रे उपयोगो न स्यात् अपितु प्रक्षेपमात्रं तथैव याज्ञिकाचारात्। एतेन द्वितीयासंयोगाच्च प्रतिपत्तित्वं निश्चितमिति **तन्त्ररत्नोक्तिर्निरस्ता**। अत एव इडाभक्षणाद्येव उपयुक्तप्रतिपत्तावुदाहरणं समीचीनं **तथापि** अन्यद्रव्यप्रक्षेप इव पुनर्ग्रहणे त्यागपदार्थलोपापत्तेः प्रयोगसमाप्तिपर्यन्तस्यैव कण्डूयनस्य कार्यत्वे मानाभावाच्च विधेयसामर्थ्याद्युक्तमेव तस्य प्रतिपत्तित्वमिति ज्ञेयम्। **तदव्यवहितेति**। तच्च क्वचित् समुदायापूर्वं क्वचित् तु परमापूर्वमित्युभयसंग्रहाय **कार्यमित्युक्तम्**। **जनन एवेति**।

अयं च एवकारः अयोगव्यावृत्त्यर्थः। तेन अयमेव प्रतिपत्तिमात्रे नियम इति न भ्रमितव्यं किं तु यथासंभव कल्पनीयम्। तथाहि यद्यपि प्रधानोत्तरभाविनां स्विष्टकृदिडाभक्षणा-

दिप्रतिपत्तीनां प्रधानापूर्वस्योत्पन्नत्वेन तत्रैव परमापूर्वजननानुकूलयोग्यताजनकत्वेन तत्स्थापकत्वेन वा उपयोगः संभवति, **तथापि** प्रधानपूर्वभाविनां दर्शपूर्णमासयोस्तण्डुलप्रक्षालनोदकस्य त्रिरुत्करे निनयनादिरूपाणां यथावा आज्यार्थे वसाहोमादिरूपाणां प्रयाजादिवत् उत्पत्त्यपूर्वजननानुकूलप्रधानगतयोग्यतासंपादकत्वेन उपयोगः प्रधानापूर्वस्य अनुत्पन्नत्वात्। यथा वा निरसनरूपायां प्रतिपत्तौ यापि च यागशरीरान्तर्गता त्यागीयद्रव्यस्य प्रक्षेपरूपा प्रतिपत्तिः तस्या अपि देवतोद्देशपूर्वकद्रव्यत्यागानन्तरमनुष्ठानात् द्रव्यत्याग एव स्वापूर्वजननानुकूलयोग्यतासंपादकत्वमित्याद्यन्यत्राप्यूह्यम्। प्रासने त्वयं विशेषः। तद्धि माध्यन्दिनसवनकालीनदक्षिणाकाले विहित पूर्वं च कानिचित् सोमयागाभ्यासजन्यापूर्वाणि उत्पन्नानि। कानिचित् तृतीयसवने करिष्यमाणाभ्यासजन्यानि भावीनीति तत्रेतराङ्गवज्जातापूर्वेषु अव्यवहितोत्पत्स्यमानपरमापूर्वजननानुकूलयोग्यतासंपादनम्। भविष्यत्सु तु तज्जनकाभ्यासगतयोग्यतासंपादनमिति।

यदि तु प्रासनप्रतिपत्तिनियमजन्यादृष्टमात्रगतमपि स्वजनकीभूतनियमविषयप्रासनकर्मीभूतकृष्णविषाणाजन्यकण्डूयननिष्पादितादृष्टाश्रयदीक्षितवृत्तिकत्वसंबन्धेन प्रधानोपकारजनकमिति विभाव्यते तदा तादृशसंबन्धस्य जातापूर्वेष्वेव सत्वात् तद्गतातिशयजनकत्वमेव द्वारीभूतकण्डूयनस्योत्तरत्वाभावात् मूलग्रन्थसामञ्जस्यमपि अस्मिन् पक्षे उपपद्यते। एवं चावघातनियमजन्यादृष्टस्य व्रीहिनिष्ठस्येव प्रकृतेपि कृष्णविषाणानिष्ठत्वस्य कल्पनेपि बाधकाभावः। न चैवं प्रतिपत्तिस्थले आत्मनिष्ठादृष्टकल्पनस्यापूर्वाधिकरणकौस्तुभोक्तस्य विरोध इति वाच्यं; तस्य यत् प्रतिपत्तेः प्रतिपाद्यनाशकत्वं तत्राश्रयनाशात् अदृष्टनाशापत्त्या तन्निष्ठत्वमप्रकल्प्य आत्मनिष्ठत्वकल्पनमित्यर्थे तात्पर्यात्। अत्र तु प्रासनेन कृष्णविषाणाया अनाशात् तन्निष्ठत्वकल्पने न बाधकम्। यावत् प्रधानसमाप्ति प्रतिपत्त्यनन्तरमपि तन्नाशभयेन संरक्षणं तु प्रधानापूर्वस्य निष्पन्नत्वेन कृष्णविषाणात्यागमात्रेणोत्पादितं तन्निष्ठमदृष्टं द्वारसत्वात् अविलंबेनैव जातापूर्वे अतिशयमादधातीति प्रयोजनाभावात् नापद्यत इति।

**वस्तुतस्तु** अन्ययोगव्यावृत्त्यर्थकैवकारं प्रयुञ्जानानां पूज्यपादानामयमाशयः— अदृष्टविधया उपकारकस्य आरादुपकारकस्य पूर्वाङ्गस्यापि न प्रधानगतयोग्यतासंपादकत्वं उत्तराङ्गारादुपकारकेषु उत्पत्त्यपूर्वस्य जातत्वेन तज्जननानुकूलयोग्यतायाः प्रधाननिष्ठायाः कल्पने वैयर्थ्यात्। अगत्या उत्पत्त्यपूर्वनिष्ठपरमापूर्वजननानुकूलयोग्यतायाः कल्पनावश्यकत्वात् सर्वत्रैवारादुपकारकत्वावच्छेदेनैव तत्कल्पनस्योचितत्वात्। अतः प्रयाजादावपि तथैव कल्पनात् प्रासनादिप्रतिपत्तिनियमादृष्टानामपि **तत्रैवोपयोगो जात इति** पदमुपलक्षणं भविष्यदपूर्वस्यापि

**पूर्वनिष्ठयोग्यताजनन एवोपयोगः । न त्वेतदकरणस्य तत्कार्यनाशकत्वकल्पनं प्रयाजादाव-प्यकरणस्याग्नेयादिकार्यानुत्पादकत्वकल्पनापत्तेः, अकरणत्वादेः कारणतावच्छेदकत्वकल्पने, गौरवाच्चेत्यादि कौस्तुभे अपूर्वाधिकरणे क्षुण्णम् ।** अत एवाहिताग्नेः **परिधानीये कर्मणि पात्रासादनादिरूपप्रतिपत्तेरप्यै**हिक**कर्मातिरिक्तकर्माङ्गत्वस्यैव** फलबलेन **कल्पनादैहिकफलो त्पत्तावपि न क्षतिरि**त्यपि **तत्रैव क्षुण्णम् ॥ ७ ॥**

---

एतत्स्वाभिप्रायज्ञापनार्थमेव कौस्तुभे क्षुण्णमित्युक्तम् । अत्र प्रतिपत्तिलोपे निर्वृत्तमपि प्रयोजनं विपद्यत इति **शास्त्रदीपिकातन्त्ररत्नादि**ग्रन्थात् अकरणस्य अर्थमाह—**न त्विति** । तथा चाननुष्ठानस्या-पूर्वनाशकत्वे मानाभावात् पूर्वोक्तरीत्या प्रतिपत्तिविध्यन्यथानुपपत्तेः क्षीणत्वान्न तत्कल्पनं युक्त-मित्यर्थः । यत्तु एतत्समर्थनाय **प्रकाशकृता** भुज्यननुष्ठानरूपलङ्घने ज्वरनाशकत्वस्य वैद्यकसंहिता-दिषूक्तत्वात् तद्दृष्टान्तेनेहापि तत्कल्पनमित्युक्तं तत् तत्र ज्वरोत्पादकान्नरसवृद्ध्यादिभिः लङ्घनस्य स्वतो विरोधेन तन्नाशकत्वसंभवेपीह प्रमाणं विना तत्कल्पने मानाभावादुपेक्ष्यम् । अपूर्वग्रन्थाद-करणस्य नाशकत्वमित्यर्थभ्रमो माभूदित्येतदर्थम् । **पार्थसारथेस्तु** प्रतिपत्तिरूपसंस्कारलोपे जातमपि प्रयोजनं विपद्यत इति उक्तिः फलजननानुकूलयोग्यतानाशाभिप्रायेण कथंचित् नेयेति न कोपि विरोधः । एवं सति प्रतिपत्तिलोपेऽविधिना त्यागे सति अशुचिस्पर्शादिना उत्पन्नापूर्वनाशाभिप्रायं पार्थसारथेस्तद्वच इति **तन्त्रसारो**क्तमप्युपेक्ष्यम् । अशुचिस्पर्शादेः तद्गतवैगुण्यजनकत्वेपि जातापूर्वनाशकत्वे माना-भावात् कर्मनाशाजलस्पर्शस्येव एतद्बोधकवचनानुपलम्भाच्च । यस्मात् प्रतिपत्त्यकरणं प्रधानापूर्वनाश-कमिति नास्ति तस्मादैहिकफलजनककर्मापूर्वस्य अधुना पात्रासादनादिप्रतिपत्त्यकरणेपि नाशाभावादै-हिकफलोत्पत्तौ न बाधकमित्याह—**अत एवेति** । अत एव ऐहिकफलोत्पत्तावपि न क्षतिरिति ग्रन्थयोजना, न च तत्राप्यासादनादिप्रतिपत्तिरूपोत्तराङ्गाभावात् साङ्गकर्मणोऽसिद्ध्या कथं फलोत्पत्तिरित्याशङ्क्याह—**ऐहिकेति** । **फलबलेनेति** । **अयं भावः** यदा ऐहिककर्मण्यपीयं प्रतिपत्तिरङ्गमङ्गीक्रियते तदा ऐहिकपवमानेष्ट्यङ्गमपि वक्तव्या । ततश्च तत्राप्युत्तराङ्गप्रतिपत्तेरभावात् ऐहिकाग्न्यादिफलोत्पत्तेरभावेन उत्तरक्रत्वधिकार एव न सिद्ध्येत् । अतोऽवश्यं तदप्युपेयमिति । **इत्यपीति** । अपिरनुक्तसमुच्चयार्थे । तेनास्याः प्रतिपत्तेरप्यव्यभिचरितसंबन्धोपस्थापिततत्क्रतु-जन्यामुष्मिकफलोत्पत्त्यनुकूलपरमापूर्वनिष्ठयोग्यतासंपादने उपयोगो बोध्यत इत्यपि तत्रैवोक्तमिति लभ्यते । एवं च **तज्जन्यनियमादृष्टस्य** चेत्यादिपूर्वग्रन्थे उत्पत्त्यपूर्वपदस्यापूर्वमात्रे तात्पर्यमभिप्रेतं पूज्यपादानामिति सिद्धम् ।

---

(८)—सौमिके च कृतार्थत्वात् ॥ २० ॥ अर्थकर्म वाऽभिधानसंयोगात् ॥ २१ ॥ प्रतिपत्तिर्वा तन्नयायत्वाद्देशार्थाऽवभृथश्रुतिः ॥

सोम एव "वारुणेनैककपालेन अवभृथं यन्ति" इत्यनेन अवभृथसंज्ञकं कर्म विधाय "यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्ति" इति श्रुतम्। तत्र तृतीयया सोमलिप्तस्य करणत्वावगमात् तस्य च यानेऽन्वयासम्भवेऽप्यवभृथं प्रत्युपपत्तेः न द्वितीयार्थलक्षणया प्रतिपत्तिकर्मत्वम्। न च प्रतिपत्त्यपेक्षत्वात् दृष्टार्थत्वलाभाय तल्लक्षणायामपि न दोषः, निषादस्थपत्यधिकरणन्यायेन लक्षणानुपपत्तेः। अतोऽवभृथ एव सोमलिप्तस्य करणत्वम्। न चोत्पत्तिशिष्टैककपालावरोधादनिवेशः। अवभृथसंज्ञककर्मान्तर एव गुणप्रमाणके निवेशोपपत्तेः। यत्तु कैश्चिद्भावनाभेदमात्राङ्गीकारेण तस्मिन्नेवावभृथे समुच्चयेन निवेशः पूर्वपक्षितः। तत् वाजिनेऽपि तथाऽऽपत्तेरुपेक्षितम्। अतोऽवभृथद्वयस्यापि दीक्षो-

---

॥ सौमिकेच परार्थत्वात् ॥

**सोमलिप्तमिति।** अत्र न सोमलिप्तपदेन सोमलेपरसाश्रयमुच्यते। तथात्वे वरुणगृहीतं वा एतत् यज्ञस्य यदृजीषं यद्ग्रावाणः यदौदुंबरी यदभिषवणफलके तस्माद्यत्किंचित्सोमलिप्तमित्यर्थवादादौ औदुम्बर्याः प्रतीयमानसोमलिप्ततानापत्तेः। न हि औदुम्बरीसोमरसलिप्ता उद्गातृस्पर्शमात्रोपयुक्तत्वात्। ऋजीषं नाम निष्पीडनेन निष्कासितरसादवशिष्टः सोमलताभागः। अतः स्तोत्रापूर्वद्वारासोमसाधनाया अपि औदुम्बर्याः सोमलिप्तपदस्य सोमापूर्वसाधनीभूतार्थविशेषवाचित्वेन प्रतिपत्तिविषयत्वमिव दीक्षितनिष्ठापूर्वद्वारा सोमापूर्वसाधनानां कृष्णाजिनादीनामपि तद्विषयत्वं बोध्यम्। **अवभृथं प्रतीति।** **अयमर्थः।** यद्यपि यन्तिपदसमभिव्याहृतमवभृथपदं योग्यत्वात् देशमेव वदेत् तथापि यजिपदसामानाधिकरण्यं विनापि रूढ्या वेदे कर्मपरत्वात् विशेषतश्च वारुणवाक्ये द्रव्यदेवतासंबन्धबलेन यन्तिपदस्य यज्यर्थकत्वे निश्चिते तत्समभिव्याहृतावभृथपदस्य कर्मपरत्वस्य सुतरां निश्चितत्वात् अत्राप्यवभृथपदेन रूढ्या कर्मोपस्थितौ असञ्जातविरोधित्वेन अन्त्ये यन्तिपद एव तल्लक्षणया अवभृथसंज्ञकयागं प्रतीति अर्थोपपत्तिरिति। **प्रतिपत्तिकर्मत्वमिति।** एतच्च प्राचां मतेन पूर्वपक्षकरणम्। **वस्तुतः** स्वमते सोमलिप्तकरणकयागविधानेपि स्विष्टकृन्न्यायेन प्रयाजशेषन्यायेनोपोद्बलितेन पूर्वपक्षकरणं वाक्यांतरकल्पनया सोमलिप्तस्य प्रतिपत्तिसाकाङ्क्षस्य प्रक्षेपांशेन भवत्येव प्रतिपत्तिः तन्नियमादृष्टं त्यागांशेन जायमानमदृष्टं च स्वजनकीभूतसंसृज्यमानसोमरसनिष्पादितयागजन्यवृत्तित्वसंबन्धेन सोमयागापूर्वे अतिशयमादधतः। अत एवायं सोमयागांगमेव। न तु दीक्षाविमोकार्थत्वं; तदर्थत्वं तु वारुणैककपालद्रव्यस्येति प्रकाशकारोक्तमनूद्य निरस्यति

**न्मोचनरूपैकार्थत्वेन** विकल्पापत्तेर्द्रव्याणामपि **विकल्पः**। अदृष्टार्थत्वे तु **तन्त्रेणानुष्ठानात् समुच्चय इति प्राप्ते—**

**कर्मान्तरत्वे अवभृथशब्दस्य नामातिदेशकत्वे गौणत्वापत्तेर्वाचकत्वे अनेकशक्तिकल्पनाप्रसङ्गाद्देवताऽभावेन च अरूपत्वापत्तेः वारुणेनेत्यनुषङ्गस्य देशलक्षणयाऽप्युपपत्तावन्याय्यत्वात् यानरूपधात्वर्थ एव सोमलिप्तप्रतिपत्तित्वेन विधीयते। एवं च न धात्वर्थाविवक्षा परपदार्थसम्बन्धविधानं कर्मान्तरत्वादिकल्पना चाश्रिता भवति। न च तेनेत्यनेन करणत्वत्यागेन, कर्मत्वलक्षणा, आनुशासनिकसहयोगतृतीयाङ्गीकारेण साहित्यमात्रोक्तौ कर्मत्वेनैव तदाश्रयणात् लक्षणाया अप्रसक्तेः। अवभृथपदं परं देशलक्षणार्थमिति न कश्चिद्दोषः॥ ८॥**

---

**यत्त्विति**। **विकल्पापत्तेरिति**। तत्संप्राप्तेरित्यर्थः। अत एवाद्यावभृथकरणपक्षे आद्यं द्रव्यं द्वितीयकरणपक्षे तु सोमलिप्तमित्येवं विकल्प इत्याह—**द्रव्याणामिति**। पूर्वदीक्षाविमोकरूपदृष्टकार्यार्थत्वं मीमांसकप्रवादसिद्धमङ्गीकृत्य विकल्पोऽभिहितः; इदानीं वस्तुतः तदर्थत्वंनास्तीत्यस्वरसं ध्वनयन् सोमयागजन्यादृष्टार्थत्वमाह—**अदृष्टार्थत्वे त्विति**। **अस्वरसबीजन्त्विदमवधेयम्**। नावभृथस्य सोमप्रकरणबाधेन दीक्षाविमोकार्थत्वं प्रमाणाभावात् दैवाद्धि सोमयागाभ्यासानामपूर्वजनकानां जातत्वात् यथा तन्मात्रसाधनानां सोमलिप्तानां व्यर्थमवस्थितानामस्ति प्रतिपत्त्यपेक्षा तथैव दीक्षा सोमस्येति वचनेन सोममात्रसाधनदीक्षापूर्वस्य सोमयागजन्यापूर्वोत्पत्त्या नाशात् तद्व्यंजकानां व्यर्थमवस्थितानामपि अस्त्येव तदपेक्षेति तच्छामकज्योतिष्टोमाङ्गभूतावभृथयागीयदेशसंबन्धः प्रतिपत्तिरिति समर्पिते एकदेशानुष्ठानं जातं न त्वेतावता तस्य तदर्थत्वं सिद्ध्यतीति। **ननु** सोमलिप्तवाक्यविहिते यागे अवभृथपदस्य शक्तिः, अथ वा वारुणवाक्यविहिते यागे इति नियामकाभावात् उभयत्रापि शक्तिकल्पनमावश्यकं मासाग्निहोत्रवद्वा गौणत्वाङ्गीकारे न दोष इत्यत आह—**देवताभावेन चेति**। सत्यां हि देवतायां तद्बलात् यागत्वे निश्चिते गौणत्वाश्रयणं युक्तं तत्सामानाधिकरण्याच्छक्तिकल्पनं वा। नचैतदस्ति। योहि निश्चितयागस्वरूपो वारुणावभृथः तत्र तूत्पन्नशिष्टत्वादशक्यो निवेशः अनुषङ्गेण देवतासंबन्धं प्रकल्प्यापि अवभृथपदस्य गौणत्वाङ्गीकारे आवश्यके तदपेक्षया देशलक्षणैव वरमिति भावः। **कर्मत्वेनैव तदाश्रयणादिति**। **अत्रेदमवधेयम्**। सह शाखया प्रस्तरं प्रहरतीत्यत्र शाखाप्रहरणप्रतियोगिककालानुयोगि प्रस्तरप्रहरणमिति यथाश्रुतप्रतीतावपि शाखाप्रहरणकालस्य पूर्वमनिर्दिष्टत्वेन प्रस्तरप्रहरणे विधातुमशक्यतया विपरीतं प्रस्तरप्रहरणकाल एव तत्प्रहरणे विधीयेत ततश्च प्रस्तरेण सह शाखां प्रहर-

(९)—कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥ २३ ॥ नियमार्था वा श्रुतिः ॥ २४ ॥ तथा द्रव्येषु गुणश्रुतिरुत्पत्ति-संयोगात् ॥ २५ ॥ संस्कारे च तत्प्रधानत्वात् ॥ २६ ॥

**तत्र तत्र कर्तारोऽध्वर्य्वादयः कालाः पौर्णमास्यादयः देशाः समादयः द्रव्याणि व्रीह्यादीनि गुणाः शुक्लादयः संस्काराः अवघातादयः तत्तद्वाक्ये श्रुताः कर्मचोदनयैव आक्षेपेण प्राप्तत्वान्न विधीयन्ते, अतो न ते कर्मविधिभिर्नियमेन प्रयुज्यन्ते इत्याशङ्काभासे प्राप्ते यावदाक्षेपेणानियताः प्राप्यन्ते तावद्वचनेन नियमफलकविधिकरणान्नियमेनैव प्रयोज-कत्वम्। नियमविधिप्रकारश्च सर्वोऽप्यनागतावेक्षणन्यायेन अत्र, कौस्तुभे च मन्त्राधि-करण एव प्रदर्शितः ॥ ९ ॥**

---

तीत्यर्थः। अत्र च कर्मणोर्द्वयोः एकस्यां सजातीयक्रियायां योग इति साहित्यं कर्मत्वेनैवाश्रीयते इत्यङ्गीकृतं प्राक्। एवमत्रापि सोमलिप्तदेशकर्मकयानकालानुयोगिकावभृथदेशयानमिति यथा-श्रुतप्रतीतावपि अवभृथकरणस्य प्रसक्ततया तद्देशीययानकालस्य विज्ञातत्वात् सोमलिप्तदेशयान-कालस्य चानिर्ज्ञातत्वेन विपरीतमवभृथदेशयानकाल एव सोमलिप्तदेशयाने विधीयते। ततश्चा-वभृथेन सह सोमलिप्तदेशं यन्तीत्यर्थापत्तिः भवन्मते कर्मत्वेनैव साहित्यस्य निर्वहणीयत्वेन यानक्रि-यायोग्यावभृथदेशस्यैव सोमलिप्तदेशत्वावश्यकत्वात्। यस्यां च नयनक्रियायां सोमलिप्तमात्रस्य कर्मत्वं योग्यं न सा यन्तिपदेनोपस्थाप्यते। न हि तदा अवभृथदेशस्य तस्यां कर्मत्वं संभवति। अतः कथं कर्मत्वेनान्वयाश्रयणं युक्तमिति।

**मम तु प्रतिभाति।** साहित्यं हि सजातीयक्रियायामुभयोरेकरूपेण। तच्च क्वचित् कर्मत्वेन यथा सह शाखयेत्यत्र; क्वचित्तु पुत्रेण सह पिता गच्छेद्ग्रामं इत्यत्र गमनानुकूलकृत्याश्रयत्व-रूपकर्तृत्वेन नतु कर्मत्वेन। एवमिहापि यन्तिपदसमभिव्याहारात् ये ऋत्विजः अवभृथदेशं यन्ति ते सोमलिप्तेन सहेति यानाश्रयत्वरूपकर्तृत्वेनात्र साहित्यं; अत एव सह शाखयेतिवत् ऋत्विक्कर्तृ-कावभृथदेशयानकालस्य निर्ज्ञातत्वेन विपरीतं स कालः सोमलिप्तकर्तृकयागे विधीयत इति फलति। सोमलिप्तस्याचेतनस्य स्वतो यानं यद्यपि न संभवति तथापि रथेन सहागतश्चैत्र इतिवत् चेतननिष्ठ-व्यापारावेशेन तत्संभवो ज्ञेयः। अत एव **पार्थसारथिना** अवभृथदेशङ्गच्छन्तः सोमलिप्तान्यादाय गच्छेयुरिति विवृतम्। अतः कर्तृत्वेन साहित्यविवक्षणेपि बाधकाभावान्नानुपपत्तिः। सोमलिप्तानां

(१०)—यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् ॥ २७ ॥
तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकस्स्यात् ॥ २८ ॥

**प्रसङ्गात्** यागादिपदार्था विध्यनुष्ठाप्याः के इति विचार्यन्ते। यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागो विधीयते स यागपदार्थः प्रयाजादिषु प्रक्षेपसिद्ध्यर्थमाद्यं विशेषणं तत्र यागाक्षेपेणैव प्रक्षेपसिद्धेः। शक्यतावच्छेदकं चोक्तविधत्यागत्वसमव्यापकं जातिरूपमखण्डोपाधिरूपं वा सामान्यमित्युक्तमेव। प्रक्षेपप्रधानक उक्तविधस्त्यागो होमपदार्थः। सम्प्रदानस्वत्वापादनपूर्वको द्रव्यत्यागो दानपदार्थः। उभयत्रापि शक्यतावच्छेदकं तत्तद्धर्मसमव्यापकं पूर्ववदेव सामान्यम्। एतत्सूत्रव्याख्यानान्तराणि गतार्थत्वान्न लिखितानि ॥ १० ॥

---

प्रतिपत्त्यपेक्षासत्वेन यानदृष्टार्थलाभाय चार्थिकप्रतिपत्तिविधिकल्पनायां प्राधान्यमपि न विरुद्धं अवभृपावभृथदेशसंयोगानुकूलयानस्य प्रक्षेपरूपत्वात् एषां प्रक्षेपरूपप्रतिपत्तिरित्यभिप्रेत्य **शास्त्रदीपिकायां** तद्देशे प्रक्षेप्तव्यानीत्यर्थः इत्युक्तम्। पूज्यपादानां कर्मत्वेनैव तदाश्रयणादित्युक्तिरपि आदानादिव्यापारनिरूपितकर्मत्वसूचनद्वारा कर्तृत्वपार्यन्तिकयेवेति सर्वमनाकुलम्।

---

**यजतिचोदना।** अवभृथदेशप्रसङ्गात समादिदेशविचारे प्रसक्ते तत्समकक्षतया कर्त्रादीन्यपि विचारितानि। अतः परं यस्यैतेङ्गं यागस्य तस्य किं लक्षणमिति सङ्गत्या अधिकरणसङ्गतिः देवतोद्देशेन स्वद्रव्यत्यागो यागः, स एव प्रक्षेपाधिको होमः, स्वीयस्य परकीयत्वापादनं दानं, इति त्रयाणां यागदानहोमानां लक्षणान्येतेः सूत्रैः क्रियन्त इति **भाष्यकारः, वार्तिककारस्तु** यागादिविध्यनुष्ठापितप्रकारकथनमात्रमेतैः सूत्रैः क्रियते यो देवतामुद्दिश्य द्रव्यं त्यजति तेन यागचोदनार्थः संपादितो भवति प्रक्षेपन्त्वधिकं कुर्वतो होमविध्यर्थ इत्याह। आदिसूत्रव्याख्यानेतु **वार्तिककारेणैव**मुक्तं दर्शाद्यनुवादेन समादयो नियम्यत इति पूर्वाधिकरणे उक्ते ननु कथं दर्शादेः यागत्वे उत्पत्तिवाक्येषु यजिशब्दाश्रवणादित्याशङ्कोत्तरत्वेन इदं सूत्रं यत्र द्रव्यदेवताक्रियं तत्र यजतिचोदना अश्रुतापि ज्ञेया तदविनाभावात्तस्येति, एतस्यार्थः यजत्यभिहिते कर्मणि पुनर्जुहोतिश्रवणं चतुरवत्तं जुहोतीति तत्कथमुपपादनीयं यागहोमयोर्भेदादत आह—**आसेचनाधिकः स्यात्** प्रक्षेपमात्रं तत्राप्राप्तं चतुरवत्तसंस्कारार्थं विधीयते यागांशस्तु प्राप्तत्वादनुवाद इति सामञ्जस्यं सूत्राक्षराणामुपपद्यत इति तत्र मध्यमव्याख्यामनुसरति—**यागादीति। गतार्थत्वादिति।**

(११)—विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशस्स्यात् ॥ २९ ॥ अपि वोत्पत्तिसंयोगादर्थसम्बन्धोऽविशिष्टानां प्रयोगैकत्वहेतुस्स्यात् ॥

**सोमे—**"**यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य**" **इति श्रुतम्। तत्र देवदत्तस्य गौर्यज्ञदत्ताय दीयतामितिवद्यदातिथ्यायां बर्हिस्तत्तत आच्छिद्य उपसदाद्यर्थे विधीयते, तेनातिथ्यया बर्हिष** उपादानमात्रं **प्रयुज्यते, अन्यधर्माः आस्तरणादि कार्यं चेतराभ्यामिति प्रथमः पक्षः ॥**

**उपादानमात्रस्य आतिथ्याप्रयुक्तत्वे** अप्राकृत**कार्यकारित्वापत्तेरतिदेशप्राप्तधर्मादिलोपे प्रमाणाभावाच्च** आच्छिद्य **विधानानुपपत्तेरातिथ्याया**मुपयुक्तायाः **बर्हिर्व्यक्तेरेव उभयोद्देशेन निरिष्टिकोपदेशः। ततश्च बर्हिर्धर्माणां आतिथ्यार्थं कृतानां तदपूर्वोत्पत्तौ नाशात्तस्यामेव**

---

आद्यव्याख्यानं तावत् न्यायशास्त्रे तत्प्रतिपादने संभवति **मीमांसायां** तत्करणमुचितं नेति गतार्थत्वं ; एतेनान्तिममपि निरस्तम् । लोकव्यवहारादेव द्रव्यदेवताऽविनाभावस्य बुद्धत्वेन तेन यागकल्पनस्यापि सुलभत्वेनैव गतार्थत्वात् द्वितीयाध्यायादौ शतश उपपादितत्वाच्च । **एतेन तन्त्ररत्नीया** एतद्व्याख्यानयुक्तत्वोक्तिरपि **परास्तेति** भावः ।

---

**॥ विधेः कर्मापवर्गित्वात् ॥**

**उपादानमात्रमिति**। ततश्चातिथ्यायां बर्हिरित्यस्य क्रियासाकाङ्क्षत्वात् उपात्तमित्यस्याध्याहारो युक्त इति भावः । अत्र **तन्त्ररत्नकारादिभिः** अस्मिन् पूर्वपक्षे आतिथ्यया सह बर्हिषः संबन्धाभावात् अप्रसिद्धमेवातिथ्याबर्हिः स्यात् । गोस्तु देवदत्तसंबन्धे पूर्वमवगते तदुत्तरकालं युक्तः विष्णुमित्रसंबन्धित्वेनोपदेशः । इहतु स्वस्वामिभावादिसंबन्धस्यानवगमात् यदातिथ्याबर्हिः तदुपसदामिति न घटते न त्वसत्यपि स्वस्वामिसंबन्धे यदातिथ्यार्थमुपात्तं तदुपसदामिति घटत एव विधिरिति चेन्न, तथासत्यातिथ्यायां विधानस्यानर्थत्वापत्तेः इति दूषणं दत्वा निरष्टिकोपदेशस्तर्ह्यस्तु इत्याशङ्क्य चोदकप्राप्तानां लवनादिधर्माणां उपसदादौ बाधप्रसङ्गात् सोप्ययुक्त इत्युक्तम् । तत्राद्यपक्षे यथाश्रुतानर्थत्वापादनमसङ्गतं अदृष्टार्थमुपादानस्य आतिथ्यायां विधानेन सार्थक्यात् अतोऽनर्थकशब्दः प्राकृतकार्यातिरिक्तकार्यरूपार्थपर इति ध्वनयन् लवनादिधर्मबाधप्रसङ्गस्य च द्वितीयपक्षे आपादितस्य प्रथमपक्षेप्यापादनं युक्तमित्यभिप्रेत्याह—**अप्राकृतेति**। उपादानस्येत्यर्थः । **उपयुक्ताया इति**। तेनास्मिन् पक्षे उपयुक्तमित्यध्याहार इति भावः। **तेनैवेति**।

व्यक्तौ उपसदाद्यर्थं पुनःपुनरुपादानवर्जं करणम्। यद्यपि च कॢप्तोपकारप्राकृताघार-पुनश्श्रवणबलादुपसदामपूर्वत्वं वक्ष्यते। तथाऽपि प्रकृतौ बर्हिषोऽङ्गप्रधानसाधारण-त्वात्तत्रैवाघारार्थमेव तत्करणं, बर्हिर्व्यक्तेरपि च तेनैव सम्बन्धेनोपसदुद्देशेन विधानं, इत-रथा अप्राकृतकार्यकारित्वापत्तेः। बर्हिःप्रतिपत्तेस्तु दाहाख्यायाः प्रकृतावुत्पत्त्यपूर्वनिष्ठयोग्यता-सम्पादकतयेह तस्य नाशात् अग्नीषोमीयान्ते करणेऽपि नातिथ्योपसदर्थत्वम्। सिद्धा-न्तेऽप्येवम्। खण्डेष्टित्वाद्वा तयोस्तल्लोपः। तेन निरिष्टकोपदेश इति द्वितीयः॥

विना वचनमन्यत्रोपयुक्तस्य अन्यत्रोपदेशे शिष्टाचारविरोधात् अतिदेशप्राप्तलव-नादिबाधे प्रमाणाभावाच्च आतिथ्याप्रकरणपठिततदङ्गाश्ववालादिबर्हिर्धर्माणामुभयोरति-देशो वाचनिक इति तृतीयः॥ अस्मिन् पक्षे न त्रिष्वपि व्यक्त्यैक्यम्॥

सिद्धान्तस्तु—बर्हिःपदे धर्मलक्षणायां प्रमाणाभावात् त्रिष्वपि व्यक्त्यैक्यविधानम्। ततश्चातिथ्योपक्रमे लूयमानं बर्हिस्त्रितयसाधारणमिति तत्र क्रियमाणा धर्मा अपि प्रतिपत्तिवर्जं सर्वसाधारणाः। न चाश्ववालादिधर्माणां प्रकरणेन तन्मात्रार्थत्वापत्तेः प्रसङ्गेनोपकारकत्वेऽपि इतरार्थत्वे प्रमाणाभावः, आश्ववालादिवाक्यानामेतद्वाक्याव्यवधा-नेन त्रितयापूर्वसाधनीभूतैतद्व्यक्तेरेवोद्देश्यत्वात्। अत्र च लक्षणया एतत्त्रित्वमेवोद्देश्यता-वच्छेदकमतो न वाक्यभेदः। बर्हिःपदेन तद्व्यक्त्यैक्यं लक्षणया विधीयते। न चैवं लक्षणाद्वयावश्यकत्वे धर्मातिदेशपक्षात्को विशेषः? जहत्स्वार्थलक्षणातो विशेषात्,

---

स्वोपकारजन्यापूर्वजनकाङ्गप्रयोज्यत्वसंबन्धेनेत्यर्थः। उपसत्स्वाघारपुनःश्रवणेन निवृत्तस्य बर्हिषः पुनस्तदर्थं विधाने अदृष्टार्थत्वं स्यात् इत्याह—**इतरथेति**। **बर्हिः प्रतिपत्तेस्त्विति**। **अत्र** चातिथ्योपसदपूर्वस्य उत्पन्नत्वेन तन्नाशकज्योतिष्टोमापूर्वस्याद्याप्यनुत्पन्नत्वात् प्रकृताविव उपपद्यत एव तदर्थत्वमिति आतिथ्यापूर्वनाशेनातिथ्यार्थत्वं नास्तीति न भ्रमितव्यं किंतु उपसदग्नी-षोमीययोरग्रे वाचनिकविनियोगस्य करणात्, तस्य चातिथ्यायां दाहरूपप्रतिपत्तिकरणे नाशापत्त्या बाधापत्तेः तस्याग्नीषोमीयान्त एव करणमित्यभिप्रायः। **इह तस्य नाशादिति**। इहातिथ्यायां प्रतिपत्तिकरणे तस्य बर्हिषो नाशापत्तेरित्यर्थः। यद्वा पत्नीसंयाजान्तोऽग्नीषोमीयः सन्तिष्ठते इति विहितपत्नीसंयाजान्तत्वानुरोधेन अग्नीषोमीये पत्नीसंयाजोत्तरभाविप्रतिपत्तिलोपसत्वेपि आतिथ्योप-सदोरपि तल्लोपेपि न क्षतिरित्याह—**खण्डेष्टित्वाद्वेति**। उपसदामपूर्वत्वादातिथ्यायाश्च इडान्तत्वात् खण्डेष्टित्वं, अग्नीषोमीयस्यापि पत्नीसंयाजान्तत्वेन खण्डयागत्वात् बर्हिः प्रतिपत्तिलोपे क्षत्यभावात् **तयोरिति** पदमग्नीषोमीयस्याप्युपलक्षणम्। पूर्वमग्नीषोमीयान्ते करणेपीति यत्करणमुक्तं तदभ्युपेत्यवादेन न परमार्थत इति तत्त्यापिनैव सूचितं द्रष्टव्यम्। एवमेव बर्हिः प्रतिपत्तेः परं

आश्ववालादिधर्माणा**मुपसदाद्यर्थत्वस्य वाक्यीयत्वेन प्राकरणिकातिथ्यार्थत्वबाधापत्तेश्च। अतस्तदुद्देशेनापि विधाने** त्रिष्वपि **पदेषु** त्रित्वरूपोद्देश्यतावच्छेदकलक्षणाया आवश्यकत्वाच्च। यथा च व्यासज्यवृत्तिधर्मस्योद्देश्यतावच्छेदकत्वेऽपि **एकैकविकारेऽतिदेशः तथा कौस्तुभे** ग्रहैकत्वाधिकरणे निरूपितम्॥ ११॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
चतुर्थाध्यायस्य द्वितीयः पादः.

---

अग्नीषोमीयार्थत्वमेव। इतरयोः खण्डेष्टित्वेन तत्र प्रतिपत्त्यनतिदेशादिति पूज्यपादानामुक्तिः यज्ञोत्पत्त्युपदेशे अनुष्ठितकर्मप्रयोगभेदात् प्रतितन्त्रं क्रियते इति द्वादशिकप्रथमपादाधिकरणगतापि कथंचिद्व्याख्येया। संभवतां धर्माणामुपसदादौ पुनः करणेपि लूनस्य पुनर्लवने प्रयोजनाभावात् उपादानमिव तदपि कथंचित् लुप्येत। न च तत्र प्रमाणमस्तीत्याह—**लवनादिवाध इति। आश्ववालादिवर्हिर्धर्माणामिति।** तथा च बर्हिः पदेन जहल्लक्षणया आश्ववालादयो धर्माः उच्यन्त इति ये अश्ववालपदाभिधेयकाशादिरूपधर्मास्ते उपसदामित्यर्थः। **त्रिष्वपीति।** आतिथ्योपसदग्नीषोमीयेष्वित्यर्थः। **यत्त्वस्मिन्** पक्षे लक्षणैव दोष इत्याशङ्क्य निरिष्टिकोपदेशपक्षेपि तस्यावश्यकत्वं, न हि आतिथ्यायां समाप्तायां तत्संबन्धोऽनुवर्तते। तेन भूतपूर्वातिथ्यासंबन्धिता लक्षणया आश्रयितव्येति **तन्त्ररत्नोक्तं** तत् **पूज्यपादै**रुपेक्षितं; यदातिथ्यायां बर्हिरित्यस्य निराकाङ्क्षत्वाभावेन कस्यचिदध्याहारस्यावश्यकत्वे अपेक्षितत्वाद्भूतार्थक्तप्रत्ययांतोपयुक्तपदाध्याहारेण शक्त्यैवातिथ्योपयोगस्य भूतत्वप्रतीतेः तदप्रसक्तत्वात्। **त्रितयापूर्वेति।** प्राकरणिकातिथ्यापूर्वापेक्षया वाक्यावगतेति पूर्वं शेषः। ननु यत्तच्छब्दश्रवणेन व्यक्त्यैक्यस्य शक्त्यैव सिद्धत्वात् यच्छब्दघटितवाक्यसमाप्तेश्च तच्छब्दश्रवणपर्यवसायित्वेन यदातिथ्यायां बर्हिस्तदुपसदाङ्कुर्यात्, यदातिथ्यायां तदग्नीषोमीयस्य कुर्यादिति भिन्नवाक्यत्वस्याङ्गीकारे बाधकाभावात् कुतो लक्षणाद्वयाङ्गीकरणमिति चेत्, सत्यं, तथापि आतिथ्यार्थत्वस्य बाधेन उपसदर्थत्वस्यैव प्राप्तिः स्यात् तन्निर्वाहाय त्रितयमेकं बर्हिरित्यर्थस्य लक्षणयैव निर्वाह इत्यभिप्रेत्य लक्षणामाह—**अत्र चेति। कौस्तुभ इति।** प्रथमतो बर्हिर्व्यक्त्यैक्यविधौ उद्देश्यानेकत्वकृतवाक्यभेदपरिहाराय आतिथ्यादिपदैस्त्रिभिः सहितत्रयलक्षणायामपि तत्स्वरूपे आनर्थक्यपरिहारार्थं अपूर्वसाधनत्वलक्षणायां त्रयाणामेकापूर्वसाधनत्वाभावात् तत्तदपूर्वसाधनत्वेन भिन्नतयैव त्रयाणामुद्देश्यत्वेन प्रयोजकत्वात्

# अथ चतुर्थाध्यायस्य तृतीयः पादः.

(१)—द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादस्स्यात् ॥ १ ॥ उत्पत्तेश्चातत्प्रधानत्वात् ॥ फलं तु तत्प्रधानायाम् ॥ ३ ॥

अनारभ्य "यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति" इति श्रुतं द्रव्यं, सोमे "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इति श्रुतस्संस्कारः, "वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानूयाजा इज्यन्ते वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै" इति श्रुतं कर्म च नापापश्लोकश्रवणादिरूपफलार्थं, कामशब्दाद्यभावेन वर्तमानापदेशस्य फलपरत्वानुपपत्त्या अर्थवादत्वस्यौदुम्बराधिकरणे साधितत्वात्। न च स्तुतिपरस्याप्यस्य लक्षणया फलपरत्वं, एकस्यार्थद्वयपरत्वे वाक्यभेदात्। न च रात्रिसत्रवदुपस्थितत्वेन कामपदयुक्तपदान्तरकल्पनया फलपरत्वं, तद्वदिह वाक्यादिप्रमाणेन जुह्वाद्यर्थत्वस्यावगततया फलाकाङ्क्षाविरहात्। न च कर्मोदाहरणे प्रकरणगम्यक्रत्वर्थत्वापेक्षया स्ववाक्योपस्थितफलपदकल्पनायामेव वैमृधवल्लाघवमिति वाच्यं, विजातीयफलकल्पनातः क्लृप्तक्रतूपकारस्यैव फलत्वौचित्यात्। इष्यत एव हि प्रवलप्रमाणोपस्थितसाकाङ्क्षावश्यकवैकृताङ्गत्यागेनैव दुर्बलनिराकाङ्क्षप्राकृताङ्गग्रहणं विकृतौ क्लृप्तत्वमात्रेण। अतो नैते फलप्रयुक्ता उभयप्रयुक्ता वा।

---

प्रत्येकविकारे अध्वर्युयजमानोभयोद्देश्यकवाग्यमस्य एकतरलोप इव अत्रापि न बर्हिर्व्यक्त्यैक्यस्य लोप इति भवत्येव काशमयं बर्हिरिति भावः।

इति श्रीशंभुभट्टकृतभाट्टदीपिकाप्रभावल्यां
चतुर्थस्य द्वितीयः पादः

---

॥ द्रव्यसंस्कारकर्मसु परार्थत्वात् ॥

**न स पापमिति।** पापश्लोकोऽकीर्तिः। **भ्रातृव्यस्येति।** भ्रातृव्यो वैरी तस्य चक्षुर्वृङ्क्ते पिधत्त इत्यर्थः। **भ्रातृव्यस्येति।** भ्रातृव्यस्य वैरिणोऽभिभवार्थमित्यर्थः। स्पष्टार्थमन्यत्।

---

अपि तु क्रतुप्रयुक्ता एवेति फलकामनायामसत्यामप्यनुष्ठेयाः। औदुम्बराधिकरणसिद्धस्याप्यस्यार्थस्य प्रयुक्तत्वरूपप्रयोजनसूचनार्थं पुनरुक्तिः ॥ १ ॥

---

(२)—नैमित्तिके विकारत्वात्क्रतुप्रधानमन्यत्स्यात् ॥ ४ ॥

काम्यं गोदोहनादि कामाभावे नित्यप्रयोगे उपस्थितत्वेऽपि न ग्राह्यम् । तथा "बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य" इति ब्राह्मणाद्यधिकारकत्वे निमित्ते द्वादशाहसम्बन्धिब्रह्मसामस्तोत्रोद्देशेन विहितं बार्हद्गिरादि नैमित्तिकं च निमित्ताभावे अनुलोमाधिकारके प्रयोगे न ग्राह्यं, निमित्ताभावेऽप्यनुष्ठाने निमित्तसम्बन्धस्य वैयर्थ्यापत्तेः । न च कामाभावे तत्साधनानुष्ठाने फलानुत्पत्तावपि क्रतुसाद्गुण्योपपत्तेर्न कश्चिद्विरोध इति वाच्यं, तस्य क्रत्वर्थत्वे प्रमाणाभावेन तदनुष्ठाननैयत्ये प्रमाणाभावात् । क्रत्वपेक्षायाश्च अर्थाक्षिप्तयत्किञ्चित्साधनग्रहणेऽपि निवृत्त्युपपत्तेः । अत एव प्रबलप्रमाणेनाङ्गत्वेऽवगतेऽपि प्राकृताङ्गानां विकृत्यङ्गत्ववदस्यापि नित्यप्रयोगार्थत्वमि-

---

॥ नैमित्तिके विकारत्वात् ॥

अत्र भाष्यकारेण ज्योतिष्टोमे बार्हद्गिरादीन्याम्नातानीत्युक्तं; तन्त्ररत्नकृता ज्योतिष्टोमे नौधसस्य ब्रह्मसाम्नः आम्नानादयुक्तमिति प्रदूष्य द्वादशाहे बार्हद्गिरादीन्याम्नातानीत्युक्तं तदभिप्रेत्याह— द्वादशाहेति । इन्द्रो मदाय वावृधे इत्यस्यामृचि बार्हद्गिरम् । अस्यामेव पार्थुरश्म्यम्; स्वादोरित्था-विषावत इत्यस्यां रायोवाजीयं तवेदिन्द्रामृतीत्यस्याममभीवर्तमिति ज्ञेयम्, अत्र राजोवाजीयमित्यपपाठः, वस्तुतस्त्वपशूद्राधिकरणे षष्ठे बार्हद्गिरं ब्रह्मसाम गवामयने अभीवर्तं ज्योतिष्टोमे पार्थुरश्म्यमश्वमेधे इत्येवंपाठस्य तन्त्ररत्नकारेण प्रदर्शनात द्वादशाहानाम्नानोक्तिरपि अनवधानकृतैव, तैत्तिरीयशाखायां गवामयन एव अभीवर्तस्य स्पष्टमाम्नानात् । ज्योतिष्टोमे आम्नानं तु शाखान्तराभिप्रायेण द्रष्टव्यम् । एवं सत्यपि यदि द्वादशाहगवामयनयोः आम्नानं विरुद्धं शाखान्तराभिप्रायेण परिहरणीयं, तर्हि प्रकृते भाष्यकारोक्तावपि स एव परिहारो ज्ञेयः सुधीभिः । अभीवर्तमनारभ्य समाम्नातमित्यपशूद्राधिकरणस्थे न काम्यत्वादिति गुणसूत्रे भाष्यं तूभयथापि ब्राह्मणादिविशेषमनारभ्य न तु कमपि यज्ञमनारभ्येत्येव व्याख्येयमिति ब्राह्मणादिकर्तृकत्वनिमित्ताभावे यो द्वादशाहप्रयोगो नित्यः तत्रापि बार्हद्गिरादिकं भवत्विति पूर्वपक्षे कर्तव्ये ननु तादृशप्रयोग एवासंभवी शूद्राणामसंभवादितीमां शङ्कां निराकुर्वन् तादृशप्रयोगं दर्शयति—अनुलोमेति । स चोत्तमवर्णान्नीचयोन्यामुत्पन्नः तस्य च न ब्राह्मणत्वादिजात्याक्रान्तत्वं कर्मण्यधिकारस्तु वचनांतरेभ्यः । तथा चैकैकनिमित्ताभावे

त्यपास्तम्। यदा तु कामनिमित्तसम्बन्धरहितं वारणाभीवर्तायाम्नातमेव, तदा कः प्रसङ्गः काम्यनैमित्तिकग्रहणस्य। यत्र तु तन्नाम्नातं तत्रार्थाक्षिप्तस्य यस्य कस्यचिद्ग्रहणम्। सिद्धोऽप्ययमर्थः प्रयोज्यत्वरूपप्रयोजनकथनार्थमुच्यत इति न विरोधः ॥ २ ॥

---

## (३)—एकस्य तूभयत्वे संयोगपृथक्त्वम् ॥ ५ ॥ शेष इति चेत् ॥ ६ ॥ नार्थपृथक्त्वात् ॥

यत्र तु विध्यन्तरं "दध्ना जुहोति" इत्यादि श्रुतं, तत्र काम्यस्यापि द्रव्यान्तरेण विकल्पः। द्रव्यान्तरविध्यभावे तु तस्यैव ग्रहणम्। न च "दध्ना जुहोति" इत्यादिर्दध्यादेरुत्पत्तिविधिः, उक्थ्यव्यूढादिवदस्यालौकिकत्वाभावात्। नापि काम्यदध्यादेराश्रयविधिः तस्य प्रकरणलभ्यत्वेन वैयर्थ्यात्। अतो नित्यप्रयोगे अङ्गताबोधार्थमेव स विधिरिति तस्योभयप्रयुक्तत्वम् ॥ ३ ॥

---

इतरकर्तृकप्रयोगे तत्तद्विशेषसाम्नामेव प्राप्तेः बार्हद्गिरादीनामन्यत्र निवेशासंभवेपि निमित्तत्रयरहिते अनुलोमप्रयोगे बार्हद्गिरादीनि विकल्पेन पूर्वपक्षे प्राप्तानि न कर्तव्यानि। अपि तु अभीवर्तमेव। अत एवैततकर्तृकप्रयोग एव अभीवर्तो ब्रह्मसामेति द्वादशाहगतवचनविहिताभीवर्तस्य निवेश इति भावः। यद्यपि ब्राह्मणात् क्षत्रियायामुत्पन्नः क्षत्रिय एव। क्षत्रियाद्वैश्यायामुत्पन्नो वैश्य एव वैश्याच्छूद्रायामुत्पन्नः शूद्र एवेति स्मृतिवचनैः मूर्धावसिक्तादीनाङ्क्षत्रियादिधर्मलाभप्रदर्शकैः तत्तदुत्पादकजात्यभावावगमेपि क्षत्रियादिकर्तृककर्माधिकारबोधनात् तत्कर्तृके प्रयोगे च पार्थुरश्म्यस्य राजन्यपुरस्कारेण विहितस्यैव प्राप्तेः पूर्वपक्षे विकल्पेन बार्हद्गिरप्राप्तिः सिद्धान्ते चाभीवर्तस्य न संभवति तथापि स्मृतिप्राप्ताधिकारलब्धपार्थुरश्म्यादेर्विलम्बोपस्थितिकत्वेन तदपेक्षया शीघ्रोपस्थितिकानन्यगतिकाभीवर्तमेव ग्रहीतुं युक्तमिति न बाधकम्। अर्थाक्षिप्तयत्किञ्चिदिति। चमसेनापः प्रणयतीत्यादिनित्यचमसादिविध्यभावं कृत्वाचिन्तनाद्यत्किञ्चिदित्युक्तम्। कृत्वाचिन्तामुद्धाटयति—यदात्विति। चमसस्य सामान्यविहितवारणादिप्रकृतिकत्वात् वारणेत्युक्तम्।

---

॥ एकस्य तूभयत्वे ॥

द्रव्यान्तरेणेति। पय आदिरूपेणेत्यर्थः। तस्यैवेति। यथा खादिरत्वादेरिति शेषः। उक्थ्येति। पशुकाम उक्थ्यं गृह्णीयात यः कामयेत बहु स्यां प्रजायेयेति

(४)—द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मस्स्यात् ॥ ८ ॥ पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥

सोमे "पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य इति श्रुतम्। ज्योतिष्टोमापूर्वसाधनीभूतब्राह्मणादिरूपाधिकारिसंस्कारार्थत्वेन विहितं पयोव्रतादि तत्प्रयुक्तमित्यविवादमेव। अत्र च न बार्हद्गिरादिवत् ब्राह्मणस्य निमित्तत्वं, दृष्टविधया तस्योद्देश्यत्वे सम्भवति निमित्तत्वकल्पने प्रमाणाभावात्। अत एव रागप्राप्तभक्षणद्वारैव पयोनियमात् यस्य रोगादिना अनशनप्रसक्तिः तस्य न पयःप्रयोजकतेति ध्येयम् ॥ ४ ॥

---

(५)—चोदनायां फलाश्रुतेः कर्ममात्रं विधीयेत न ह्यशब्दं प्रतीयते ॥ १० ॥ अपि वाऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्यते अर्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसम्बन्धः तस्माच्छ्रुत्येकदेशः ॥ ११ ॥ वाक्यार्थश्च गुणार्थवत् ॥ १२ ॥ तत्सर्वार्थमनादेशात ॥ १३ ॥ एकं वा चोदनैकत्वात ॥ १४ ॥ स स्वर्गस्सर्वान्प्रत्यविशिष्टत्वात्॥ १५ ॥ प्रत्ययाच्च ॥ १६ ॥

---

स व्यूढेन यजेत इति वचनद्वयेन फलार्थं विधीयमानोक्थ्यव्यूढयोः स्वरूपस्याज्ञातत्वात् तद्बोधकानि वचनान्तराणि युक्तानि नैवमिह लोकतो दधिस्वरूपस्य ज्ञातत्वादित्यर्थः।

---

॥ द्रव्याणां तु ॥

ननु जञ्जभ्यमानपुरुषसंयुक्तस्याप्यनुवचनस्य फलकल्पनाभयात् पुरुषसंस्कारद्वारा क्रत्वर्थत्वं तृतीये साधितमेव तेनैव न्यायेनात्रापि क्रतुयुक्ततदधिकारिसंस्कारकत्वं सिद्धमेवेति पुनः किमत्र चिन्त्यत इति चेत् सत्यं तथापि तत्र वर्तमानापदेशेन प्राणापानावेवात्मन् धत्ते इत्यर्थवादेन फलाभावात् फलं कल्प्यं; इह तु व्रतस्य पुरुषं प्रीणयतो दृष्टमेव फलं यद्ब्राह्मणार्थं व्रतं तत्पय इति यथासिद्धव्रतानुवादेन विधीयमानस्य नियमस्यापि तद्द्वारा तादर्थ्यं युक्तमेवेति विशेषाशङ्कां कुर्वाणं

"**विश्वजिता यजेत**" **इत्ये**काहकाण्डपठितविश्व**जिदादावश्रुतफलके भावनाया भाव्या-पेक्षायां समानपदश्रुत्युपनीतोपि यागो न भाव्यः, ततोऽप्यन्तरङ्गविधिश्रुत्यवगतप्रवर्तक-त्वबलेन पुरुषार्थस्यैव भाव्यत्वावगतेः, तृतीयान्तनामधेयसामानाधिकरण्येन यागस्य करणत्वावगतेश्च। अतोऽश्रुतेऽपि फले तद्वाचककामपदान्तफलपदाध्याहारेण पुरुषार्थ-फलकत्वमेव। तच्च पदमध्याहृतमपि** वेदाकाङ्क्षया **अध्याहृतत्वाद्वैदिकमेव।** वेदतुल्यं

---

प्रत्युत्तरत्वेनेदं सूत्रमिति। एवं च जञ्जभ्यमानाधिकरणे तीर्थे स्नातीत्युदाहृतमपि स्वयमेव पुरुषार्थत्वेन प्रतीतेरुपेक्षितमिति यत् **पूज्यपादैरुक्तं** तदेतदधिकरणसिद्धं कृत्वा ज्ञेयम्। निराकरणप्रकारश्च नियमस्यापि यावदक्लृप्तं फलं कल्प्यं पुरुषे तावत् क्लृप्तक्रतूपकारस्यैव तत्कल्पनं युक्तमिति भावः।

---

## ॥ चोदनायां फलाश्रुतेः ॥

अत्र **भाष्यकारेण** यः सत्रायागुरते स विश्वजिता यजेतेति विहितो विश्वजिदुदाहरणत्वेनोक्तः तत्र तस्य सत्रफलार्थतया विधानस्य षष्ठे वक्ष्यमाणत्वेन निष्फलत्वशङ्कानुदयात् फलवत्वसाधन-वैयर्थ्यं स्यादित्यस्वरसेनाह--**एकाहकाण्डपठितेति। प्रवर्तकत्वबलेनेति।** कर्तव्यतावचनो हि विधिः फलसाधने पुरुषं प्रवर्तयति। तच्च पुरुषार्थमेव सत् फलतां प्रतिपद्यते विधिना समीहितसाधन-त्वस्यैवाक्षेपात्। प्रवर्तनात्मा हि विधिः अपुरुषार्थफलव्यापारे पुरुषं प्रवर्तयितुमपारयन् सामान्यतः पुरुषार्थरूपं किमप्याक्षिप्य भाव्यविशेषसमर्पणमात्रमन्यतोऽपेक्षमाणः समानपदोपात्तमपि धात्वर्थं अपुरुषार्थत्वादुल्लंघ्य पदांतरप्रार्थनया अवश्यं पुरुषार्थफलविशेषसमर्पणेनैव निराकाङ्क्षो भवति अतस्तदभावेपि तद्वाचकपदान्तरकल्पनया अवश्यं तत् समर्पणीयमिति भावः। ननु अस्मदाकाङ्क्षया आनीयमानं लौकिकं पुरुषबुद्धिप्रभवं कदाचिदप्रमाणमपि स्यात् इत्याशङ्कां निराकुर्वन्नाह— **वेदाकाङ्क्षयेति।** अन्यत्र वेदे पठितस्यैवाध्याहरणं क्रियते अतो वैदिकमित्यर्थः। **न चैवं** तर्हि अनुषङ्गो भवेत् कथमध्याहार इति वाच्यं; मध्ये व्यवधानेन तदभावात्। **कथं** तर्हि अन्यत्र समाम्नातमधीयत इति चेत्; **अत्र तन्त्ररत्नकारः**—न हि अध्याहारो नाम अपूर्वस्य पदस्योत्पत्तिः किन्त्वन्यत्र लोके वेदे वा समाम्नातस्याहरणं; लब्धात्मकस्य हि श्रुतसाकाङ्क्षपदैकवाक्यतामात्रमध्या-हारेण क्रियते। इयांस्तु विशेषः **अध्याहारो** नाम यत्र क्वचिदवस्थितस्य पदस्य तत्रैव कृतार्थस्यापि अविपरिवर्तमानस्यापि केवलाकांक्षावशादेव ध्यानादिना विपरिवृत्तिमापाद्य श्रुतपदैकवाक्यत्व-कल्पना। **अनुषंगस्तु** असंबन्धिपदाव्यवहितस्य विपरिवर्तमानस्यापि केवलाकांक्षावशादेवाम्नानमेव सर्वार्थमिति परिकल्प्य सर्वैः सन्निहितैरेकवाक्यत्वकरणम् अन्यत्राम्नानं तूभयत्रापि तुल्यमिति

**वा। तच्च फलमेकमेव कल्प्यते न सर्वाणि, एककल्पनयैव निराकाङ्क्षत्वात्। तदप्येकं स्वर्ग एव न तु पुत्रपश्वादिः "यन्न दुःखेन सम्भिन्नम्" इत्यादिवाक्यात् स्वर्गशब्दस्य सुखविशेषमात्रवाचित्वेन विजातीयस्वर्गत्वस्यैव जन्यतावच्छेदकत्वे लाघवात्, पुत्रादीनांतु सुखसाधनतया पुरुषार्थत्वस्य विलम्बोपस्थितिकत्वाच्च। स्वर्गस्य बहुभिः प्रार्थ्यमानतया शास्त्रस्य महाविषयत्वलाभाच्च। लाघवाविशेषेऽपि च न सुखत्वस्य ऐहिकामुष्मिकसाधारणस्य विलम्बोपस्थितिकत्वाच्च जन्यतावच्छेदकत्वं, स्वरसतो दुःखासम्भिन्नसुखस्यैवेच्छाविषयत्वाद्दुःखसम्भिन्नसुखस्य फलत्वानुपपत्तेः, व्याप्यधर्मेण जन्यत्वसम्भवे व्यापकधर्मेण अन्यथासिद्धत्वाच्च व्यभिचारेण सुखत्वस्य स्वर्गत्ववदेव कार्यतावच्छेदकत्वानुपपत्तेश्च। अतो विश्वजित्त्वावच्छिन्नकारणतानिरूपितजन्यतावच्छेदकत्वं विजातीयसुखत्वस्यैव युक्तम्। मोक्षोऽपि च यदि दुःखध्वंसरूपः, तदा पापक्षयादिवदेव न विश्वजिज्जन्यः जन्यतावच्छेदकगौरवात्। यदि त्वानन्दावाप्तिरूपः तदा तस्य ज्ञानैकजन्यत्वान्न** विश्वजिज्जन्यत्वम्।

---

पुरुषाधीनोपस्थितौ नैयत्याभावे कदाचित् लौकिकमप्यानीतं चेत् तस्य वैदिकत्वाभावेपि तत्तुल्यत्वमस्तीति पक्षान्तरमाह—**वेदतुल्यं वेति**। उभयथापि यज्यादिसमभिव्याहृतभावनायाः सकर्मिकायाः फलाकाङ्क्षाशामककामपदान्तफलपदसमभिव्याहार एवेति सर्वत्र दृष्टेः तथैव व्युत्पत्त्यंगीकारात् स्वर्गायेति चतुर्थ्यन्ताध्याहारं विहाय कामपदान्तेत्युक्तम्। अस्तुवा तर्कपादे श्रुतार्थापत्तिप्रमाणनिरूपणे **पार्थसारथिना** स्वर्गार्थमित्यध्याहारपक्षस्यापि लिखनात् तथाभूतपदाध्यादारपक्षोपि स्वतो वेदे पठितत्वाभावेपि वेदतात्पर्यकल्पितस्यापि वेदापेक्षया कल्पितत्वादस्त्येव तत्तुल्यत्वमित्यादि ध्वनितं **भाट्टरहस्ये। न विश्वजिज्जन्यत्वमिमि।** एतच्च वेदान्तिमतेन मोक्षस्य कर्मजन्यत्वाभावादुक्तम्। अधुना मीमांसकमतरीत्यापि न मोक्षस्य तज्जन्यत्वसंभव इत्याह—**यदापीति**। इत्थं हि मीमांसकानां **कर्मसमुच्चितज्ञानसाध्यत्वं मोक्षे** अभिमतम्।

तथाहि— **व्याकरणाधिकरणे।**

> सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते।
> पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधारणात्॥

इत्यादिना **वार्तिके** त्रिविधमात्मज्ञानं क्रत्वर्थपुरुषार्थफलभेदेन निरूपितम्। विवृतं चैतन्**न्यायसुधायां** अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवतीति मात्राशब्देन भूतेन्द्रियधर्माधर्माभिधानात् शरीरादिव्यतिरिक्तसंसारिकर्तृभोक्तृनित्यात्मप्रतिपादनपूर्वकस्य आत्मा वा

अरे द्रष्टव्य' इत्यात्मज्ञानविधेः कैमर्थ्याकांक्षायां फलाश्रुतेः दृष्टसंभवे चादृष्टकल्पनानुपपत्तेः योग्यतया कर्मप्रवृत्तिसिद्ध्यर्थत्वावसायात् । अनारभ्याधीतस्यापि च "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रुत्या उपनिषच्छब्दवाच्यस्यात्मज्ञानस्य क्रत्वर्थत्वं युक्तम् । अत एवोक्तं **संबन्धवार्तिके** ।

आत्मा ज्ञातव्य इत्येतन्मोक्षार्थं न च चोदितम् ।
कर्मप्रवृत्तिहेतुत्वमात्मज्ञानस्य लक्ष्यते ।

विज्ञाते चास्य पारार्थ्ये यापि नाम फलश्रुतिः ।
साऽर्थवादीभवेदेव न स्वर्गादिः फलांतरम् ॥

इति तेनैतद्विधिसन्निधावाम्नातापुनरावृत्तिश्रुतेरर्थवादत्वमिति । अत्र चैतच्छब्दप्रयोगेण संसारिरूपात्मज्ञानस्यैव मोक्षार्थत्वनिरासेन पारलौकिकफलककर्मप्रवृत्तिनिवृत्तिहेतुता उक्ता । न चात्मनो लोकवेदसाधारण्येन क्रत्वव्यभिचाराभावात् कथं क्रत्वर्थत्वावसाय इति वाच्यं ; लौकिककर्मप्रवृत्तेः शरीरादिव्यतिरिक्तात्मज्ञानं विनापि सिद्धेः साकांक्षान्वयसंभवे च निराकांक्षान्वयायोगात् एतद्व्यावृत्तिसिद्धौ परिशेषादेव परलोकफलककर्मविध्यन्यथानुपपत्त्या कृत्स्नसामान्यसंबन्धस्य लौकिकविनियोगोपपत्तेः । अतो युक्तं संसारिकर्तृभोक्तृनित्यात्मज्ञानस्य क्रत्वर्थत्वम् ।

यद्वा क्रत्वर्थत्वमुपकारकत्वमात्रं विवक्षितम् । अन्यथा निषिद्धकर्मांगत्वस्याप्यापत्त्या तादृशात्मज्ञानरहितपुंकर्तृकब्रह्महननादेः प्रत्यवायानुत्पत्तिप्रसंगापत्तेः । अतः प्रवृत्तिनिवृत्त्युपकारकत्वमभिप्रेत्यैव तेन विना परलोकफलेषु कर्मसु प्रवृत्तिनिवृत्त्यसंभवादिति हेतूपादानं **वार्तिके** ॥

**यत्तु** "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामस्सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्य" इत्यादिश्रुत्या पापजरामृत्युशोकक्षुत्पिपासाराहित्यकाम्यमानफलप्राप्तिप्रयत्नानपेक्षसंकल्पमात्राधीनसिद्धिरूपगुणविशिष्टात्मज्ञानपूर्वकं यद्वेदान्तवाक्यार्थावधारणात्मकजिज्ञासासहितस्य तदवधारितात्मरूपार्थानुचिन्तनात्मकान्वेषणात्मकमपहतपाप्मत्वादिगुणविशिष्टात्मज्ञानं विहितं तथा "बोद्धव्यो मन्तव्य" इति श्रुत्या न्यायविमर्शनाख्यमननसहितस्य तन्निर्धारितात्मरूपसाक्षात्काराख्यबोधात्मकस्य सगुणात्मज्ञानस्य विधानं, तदुभयविध्योः पुरुषे

कर्मणि वा दृष्टफलासंभवेऽदृष्टापेक्षायां श्रुत्याद्यसंभवेन क्रत्वर्थत्वासंभवे च "सर्वांश्च लोकानाप्नोति सर्वांश्च कामानाप्नोति" "तरति शोकमात्मवित्" "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन मातृलोकेन भ्रातृलोकेन स्वसृलोकेन सखिलोकेन गन्धमाल्यलोकेन अन्नपानलोकेन स्त्रीलोकेन गीतवादित्रलोकेन संपन्नो महीयते" इत्यादिकामवादलोकवादरूपवाक्यशेषसमर्पिताभ्युदयफलार्थत्वात् पुरुषार्थत्वमेव ।

यच्च जनकादिसंपत्तिवचनं तत् "यङ्कामयेत सोस्य संकल्पादेव समुत्तिष्ठति" इत्युपसंहारात् योगजन्याष्टगुणैश्वर्यसिद्ध्यभिप्रायं न स्वर्गकामादिश्रुतिवत् नियतफलपरम् । तथा च योगबलात् परमाणुवत् अतिसूक्ष्मत्वं, पर्वतवत् अतिमहत्वं, सूक्ष्मरश्म्यवलंबनादिरूपं लाघवं, करेण चन्द्रस्पर्शरूपप्राप्तिः, अप्स्विव भूमावुन्मज्जननिमज्जनमित्यादीच्छानभिघातः प्राकाम्यं, भूतभौतिकाज्ञापयितृत्वरूपमीशित्वं, भूतभौतिकानां तदाज्ञताचरणरूपं वशित्वं, अनाज्ञप्तानामेव तदिच्छानुरोधवृत्तित्वं कामावसायिता इत्येवमष्टौ गुणा भवन्ति—

अणिमा महिमा लघिमा प्राप्तिः प्राकाम्यमित्यपि ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ॥

इति स्मृतेः । ततश्चैतादृशफलार्थत्वेन तयोः पुरुषार्थत्वम् ।

यत्तु "आत्मानमुपासीत" इति श्रुत्यां केवलनिर्गुणात्मविषयावबोधपर्यन्तस्य स्पष्टस्य अपरोक्षरूपात्मतत्वज्ञानस्य तृतीयस्य विधानं, तस्य "स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न स पुनरावर्तते" इत्यपुनरावृत्त्यात्मकपरात्मप्राप्त्यवस्थारूपं फलं वाक्यशेषोपनीतं मोक्षाख्यम् । अत्र च स्थानविशेषात्मकलोकप्राप्तेः जन्यत्वेनाक्षयत्वानुपपत्तिपरिहाराय परमात्मैव ब्रह्मशब्दवाच्यः परमानन्दोपभोगहेतुत्वात् कर्मधारयसमासाश्रयणेन लोको विवक्षितः तत्प्राप्तेः शरीरसंबन्धोपाधिककर्तृत्वभोक्तृत्वात्मकसंसाररूपावस्थापरित्यागेन अकर्तृभोक्त्रात्मकासंसारिरूपनिजावस्थात्मकत्वेनाजन्यत्वात् युक्तमक्षयत्वमिति सूचयितुं परमात्मप्राप्त्यवस्थारूपत्वमुक्तं वार्तिके । अनौपाधिकरूपाभिप्रायः परमशब्दः पूर्वकृताशेषबन्धहेतुकर्मक्षयाच्च असंसारिरूपप्राप्तौ कर्तृत्वाभावेन कर्मान्तरानुत्पत्तेः पुनर्बन्धासंभवेनापुनरावृत्तेः प्राप्ताया अनुवादात् फलतदक्षयरूपार्थद्वयाभिधाननिमित्तो न वाक्यभेदः इति सूचयितुमपुनरावृत्तेः ब्रह्मप्राप्तितो भेदनिरासाय अपुनरावृत्यात्मकत्वमुक्तं वार्तिके ।

न चासां श्रुतीनां पर्णमयीन्यायेनार्थवादत्वं संभवति पारार्थ्ये निर्ज्ञाते फलश्रुतेरर्थवादत्वं प्रकरणाच्च "यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्यंजनस्य पारार्थ्यं निर्ज्ञातं "यस्य खादिरः स्रुवो भवति च्छन्दसामेव रसेनावद्यती"ति च क्रत्वव्यभिचारिस्रुवादिद्वारा खादिरत्वादेः। न चात्मज्ञानं प्रकरणगतं, नवाऽऽत्मनो द्वारभूतस्य ऐकान्तिकः स्वाभाविकः क्रतुसंबन्धोऽस्ति। शरीर-संबन्धोपाधिकत्वात् कर्तृत्वस्य अशरीररूपात्मज्ञाने तदभावात्। अतः पारार्थ्याज्ञानान्नार्थवादत्वं; न चासंसारिरूपात्मज्ञानस्य मोक्षसाधनत्वे तस्मिन् सति कर्मसंप्रवृत्त्ययोगात् **बृहद्दीपिकायां**—

> ननु निःश्रेयसं ज्ञानात् बन्धहेतोर्न कर्मणः।
> नैकस्मादपि तत् किंतु ज्ञानकर्मसमुच्चयात्॥

इत्युक्तं तद्विरोधः स्यादिति चेन्न। सत्यपि ज्ञाने नित्यनैमित्तिकानुष्ठानं विना पूर्वकृत-दुरितक्षयायोगात् अकरणनिमित्तानागतप्रत्यवायपरिहारायोगाच्च तत्फलोपभोगार्थं बन्धप्रसक्तेः मोक्षायोगात् कर्मनाशार्थत्वेन ज्ञानविध्यनुपलब्धेः।

"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इत्यादिस्मृतेश्चौपचारिकत्वेनोपपत्तेः। यद्यप्यज्ञानजन्यत्वं कर्मणामवगम्यते।

> रागादिवत्तथाप्येषां न ज्ञानेन निराक्रिया।
> कर्मक्षयो हि विज्ञानादित्येतच्चाप्रमाणवत्।
> फलस्याल्पस्य वा दानं राजपुत्रापराधवत्॥

इति **संबन्धवार्तिके** ज्ञानस्य कर्मनाशकत्वनिषेधात् ज्ञानस्य मोक्षसाधनतया विधानेन कर्मणो मोक्ष-संबन्धनिवारणानुपपत्तेः। न ह्यसंसार्यात्मज्ञानपरिपाकात् प्राक् कर्तृत्वभोक्तृत्वाभिमानानिवृत्तौ कर्म-वृत्त्यनुपपत्तिरस्ति परिपक्वज्ञानेनैवात्मनः कर्मसंबन्धवारणात्। अन्यथा विधानावस्थायां कर्तृत्वाभि-माननिवृत्तौ ज्ञाने विनियोज्यत्वानुपपत्तेः। अतो ज्ञानं कुरु इति नियुक्तः सन् यदा मोक्षसाधनतया ज्ञाने प्रवृत्त्या ज्ञानमुत्पद्यते, तदैव कर्तृत्वाभिमानानिवृत्तेः मोक्षप्रतिबन्धकीभूतबन्धकारण-कर्मक्षयाय नित्यादिकर्म शक्नोत्येव कर्तुमिति न दोषः।

नन्वेवमपि,

> मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः।
> नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया॥

इति **संबन्धवार्तिकोक्त**न्यायेन काम्यनिषिद्धवर्जनात् तत्फलोपभोगार्थशरीरानुत्पत्तेः नित्यनैमित्तिकानुष्ठानाच्च तदकरणनिमित्तप्रत्यवायफलोपभोगार्थशरीरानुत्पत्तेः ज्ञानवाक्यानां चौपचारिकतया व्याख्यानोपपत्तेः कर्मणा ज्ञानं बाध्यतां तुल्यबलत्वाद्विकल्पो वा अस्तु । विरोधपरिहाराय वा अङ्गाङ्गिभावः कल्प्यताम् , न तु निरपेक्षविहितयोस्समुच्चयो युक्तः इति **चेन्न** ; अवान्तरकार्यैक्ये सति बाधो विकल्पो वा स्यात् । इहतु कर्मणां पूर्वकृतकर्मणां पूर्वकृतपापनाशावश्यविहिताकरणनिमित्तपापपरिहारप्रयोजनत्वात् निर्गुणात्मज्ञानस्य च तत्वप्रकाशप्रयोजनत्वात् नावान्तरकार्यैक्यमस्ति। न च बन्धहेतुकर्मक्षयमात्रात् मोक्षसिद्धेः तत्वज्ञानानर्थक्य शङ्क्यं ; सत्यपि पूर्वकृतकर्मक्षये कर्तृत्वभोक्तृत्वाभिमानानिवृत्तौ निर्व्यापारत्वानुपपत्तेः । अवश्यं कस्यचित् बन्धहेतोः कर्मणः प्रसङ्गात् । तदर्थं कर्तृत्वभोक्तृत्वाभिमाननिवृत्तेरपेक्षितायास्तत्वप्रकाशं विनाऽनुपपत्तेः । एतदेवाभिप्रेत्य **बृहद्दीपिकाया**मुक्तम् ।

> नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
> ज्ञानं च विमलीकुर्वन् अभ्यासेन च पाचयेत् ।
> वैराग्यात् पक्वविज्ञानात् कैवल्यं भजते नरः ॥

इति । अतोऽवान्तरकार्यं न तावत बाधविकल्पौ जीवनादिनिमित्तवतश्च कर्मस्वधिकारात् । मुमुक्षोश्च ज्ञानेऽधिकारात् अधिकारिभेदलक्षणात् भिन्नमार्गत्वात् नाङ्गाङ्गिभावस्संभवतीति पारिशेष्यात् समुच्चयसिद्धिरिति ।

तदेवं **न्यायसुधाकृता** त्रयाणामपि ज्ञानानामात्मा वा अरे द्रष्टव्य इत्यादिविधिविधेयत्वांङ्गीकारेण मोक्षार्थज्ञानपरिपाकात् प्रागुत्पन्नात्मतत्वज्ञानस्यासंभावनाविपरीतभावनानिवृत्त्यर्थं श्रवणाद्यभ्यासकाले कर्मकरणमावश्यकं ; तेन विना कर्मनाशाऽसंभवात् । ज्ञानस्य तु कर्मनाशकत्वे प्रमाणाभावात् इत्येवं **वार्तिकसंमतो ज्ञानकर्मसमुच्चय** उपपादितः । न चास्मिन् पक्षे परिपक्वज्ञानस्यैव मोक्षसाधनत्वात् तस्मिन् कर्मसाहित्यासंभवात् कथं समुच्चय इति वाच्यं ; अपरिपक्वज्ञानस्यैव परिपक्वतोत्पादेपि तस्य ज्ञानत्वानपायात् तस्यैव मोक्षसाधनत्वाविरोधेन तदुपपत्तेः । नहि परिपक्वं ज्ञानं ज्ञानांतरमिति यैरिष्यते । तस्यैव दार्ढ्याय श्रवणाद्यभ्यासविधानात् ।

**यद्यपि** परिपक्वज्ञानोत्तरमपि कर्मकरणं दृश्यते, यथा नित्यसिद्धात्मज्ञानवतोऽपि स्वस्य कर्म, "न मे पार्थास्ति कर्तव्यं" इत्यादिना भगवता प्रतिपादितम् । तथा अन्यस्यापि विदुषा "विद्वान्युक्तः समाचरन्" इत्यादिना । एवं च परिपक्वज्ञानेनापि शक्यते समुच्चयो वक्तुं **तथापि** मोक्षप्रतिबन्धकीभूतदुरितक्षयार्थं कर्मानुष्ठातुः कर्ताऽहं अस्य फलं भोक्ताऽहमित्येवं

देहादिव्यतिरिक्तसंसार्यात्मज्ञानरूपाङ्गवैकल्ये सति अधिकारिविशेषणरूपविद्वत्ताया: अभावेन तादृशात् कर्मण: प्रत्यवायक्षयफलानुत्पत्ते: वैयर्थ्यात् । अत एव भगवदादीनां लोकसंग्रहार्थमेव तदाचरणं न त्वन्येषां दुरितक्षयायोपयुक्तमिति न दोष: । न चापरिपक्वज्ञानसमकालनित्यकर्माद्यनुष्ठानवत् बन्धकस्य काम्यस्यापि अनुष्ठानप्रसङ्ग:, ऐहिकामुष्मिकफलभोगविरक्तस्यैव ज्ञाने अधिकारात् । तत्काले तत्तत्फलकामनाभावे तज्जनककर्मानुष्ठानानुपपत्ते: । अत एव तेषामपि

> यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।
> एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
> कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥

इत्यादिवचनै: कामनां विहायानुष्ठाने न कश्चन दोष: । एवं च नित्यनैमित्तिकैरेवेति वार्तिके नित्यनैमित्तिकपदं तादृशकर्मणामप्युपलक्षणमित्येवकार: तत्र कामनापरित्यागपर एव द्रष्टव्य: । न च विविदिषावाक्येन कर्मणां ज्ञानार्थत्वेन विनियोगे सति ज्ञानव्यापारेणैव कर्मणां मोक्षजनकत्वं कल्प्यतामिति शङ्क्यम् । ज्ञानोत्तरमनुष्ठेयानां तेषां पूर्वोत्पन्नज्ञानव्यापारत्वाऽयोगात् । उत्पत्त्यपूर्वस्थानीयचित्तशुद्ध्या परमापूर्वस्थानीयज्ञानोत्पत्तावपि यागादे: स्वर्गं प्रतीव कर्मणां मोक्षं प्रत्यपि साधनत्वविधानाच्च । न च कर्मणां चित्तशुद्धावेवोपयोगात् तयोत्पन्नज्ञानादेवास्तु मोक्ष इति वाच्यं ; चेतसो रजस्तमोगुणसंसर्गराहित्येन सत्वाविर्भावे सति आत्मप्रवणतोत्पत्तावपि अस्मन् मते आत्मधर्माधर्मयोरुच्छेदासंभवेन तदर्थं कर्मानुष्ठानस्यावश्यकत्वात् । ज्ञानस्य च न तन्नाशकत्वमिति प्रागेव वार्तिकमुपन्यस्य दर्शितम् । यद्यपि तद्वार्तिकं साङ्ख्याभिमतज्ञानस्य कर्मनाशकत्वनिषेधपरं तथापि ज्ञानसत्वे कर्मणामननुष्ठानसंभवेऽपि कृतानाङ्कर्मणां शक्तिरूपतावस्थानरूपेणावस्थितानां न तेन नाश: संभवति । न हि ज्ञानमपि वस्तुस्वभावान्यथाकरणक्षमम् । अयं च वस्तूनां नाश: यत् शक्त्यात्मना अवस्थानम् । न हि अन्यादृशोपि नाश: संभवति क्वचित् "स कथं ज्ञाने वा निराक्रियेत" इति न्यायरत्नाकरोपपादितानाशकत्वहेतोरेतादृशात्मक्षानेपि तुल्यत्वमस्त्येव ।

येषां मते ज्ञाननाशेन कर्मनाश: तेषामपि प्रारब्धनाशानङ्गीकारात् तद्दृष्टान्तेनेतरकर्मनाशाभावानुमानोपपत्तेश्च । दृश्यतेपि च लोके रज्जुज्ञानेन सर्पनाशेपि तत्कृतभयकम्पादिकृत: शिर:स्फोटादि: । अत: फलोपभोगवारणाय अवश्यापेक्षितधर्माधर्मोच्छेदार्थं कर्मानुष्ठानमावश्यकमेव । सन्न्यासविधिस्तु "काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदु:" इत्यभिप्रायेण । **अथ वा**

वैराग्यात् द्रव्यार्जनाशक्तस्य द्रव्याद्यभावे कर्मानुष्ठानाशक्ताधिकारिकतया वा नेयः । अत एव **भगवता** —

नियतस्य तु सन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागः तामसः परिकीर्तितः ॥

इत्यादिना अशक्तौ सत्यां नित्यादिकर्मणां सन्न्यासे तामसत्वेन निन्दा दर्शिता । तृतीयाध्याये च कर्मानुष्ठानमेव निरूपितम् । द्वितीयाध्यायान्ते च ।

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां श्रुणु ।
बुद्धया युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥

इत्यनेन केवलसाङ्ख्यबुद्ध्या कर्मप्रहाणाभावमभिप्रेत्य योगबुद्धेरेव तद्बन्धप्रहाणमुक्तम् । एतद्विरुद्धवचनानि चौपचारिकतया व्याख्येयानि । न हि परेषामपि स्वमतविरोधे औपचारिकतया व्याख्यानं नास्ति

कर्मणैव हि ससिद्धिमास्थिता जनकादयः ।
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥

इत्यादिना मोक्षाख्यशाश्वतपदप्रतिपादनस्यौपचारिकतयैव व्याख्यानात् । एवं च "क्षीयन्ते चास्य कर्माणी"त्यादिश्रुतीनां "ज्ञानाग्निस्सर्वकर्माणी"यादिस्मृतीनां च स्तावकत्वमथवा कर्मसहितज्ञानपरतया वा औपचारिकत्वमेव । अतः शक्तौ सत्यां ज्ञानसमकालानीत्यादिकर्मानुष्ठानमावश्यकमेव । अशक्तानां तु सन्न्यासेनैव दुरितक्षयोत्पत्तिसंभवात् न तदावश्यकम् । अपि तु तेषां सन्न्यास एव युक्तः । तथा च वचनं—

'ये च सन्तानजा दोषाः ये च स्युः कर्मसंभवाः ।
सन्यासस्तान् दहेत सर्वान् तुषाग्निरिव काञ्चनम् ।

मृत्तोयैः शोध्यते शोध्यं नदी वेगेन शुद्ध्यति ।
रजसा स्त्री मनो दान्त्या सन्यासेन द्विजोत्तम इति ॥

व्याख्यातं वेदं स्मृतिद्वयं **पराशरमाधवीये** धर्मलोपेऽप्यनुतापवतः तत्प्रायश्चित्तत्वेन सन्न्यासः संभवतीति ग्रन्थेन। अतस्तेषां सन्न्याससमुचितज्ञानादथवा स्वाश्रमोचिततत्तत्कर्म-समुच्चितज्ञानादेव वा मोक्षो नानुपपन्नः। एतत्परमेव " न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः " इत्यादिवचनं एकपदोपादानात्।

एवं च विविदिषावाक्येन ज्ञानप्रतिबन्धकीभूतरजस्तमःकलुषितान्तःकरणशुद्धिद्वारा ज्ञाना-र्थत्वं तथैव **संयोगपृथक्त्व**न्यायेन मोक्षप्रतिबन्धकीभूतधर्माधर्मोच्छेदद्वारा मोक्षार्थत्वमप्युपपद्यत एवेति सिद्धो ज्ञानकर्मसमुच्चयः। न च नित्यनैमित्तिककर्मणां दुरितक्षयार्थत्वश्रवणेन तदर्थ-मनुष्ठानसंभवेपि काम्यानां तत्तत्कामनापरित्यागेन मोक्षार्थमनुष्ठाने किंद्वारा मोक्षोत्पत्तिरिति शंक्यम्।

वेदोदितानि कर्माणि कुर्यादीश्वरतुष्टये।
यथाश्रमं त्यक्तकामः प्राप्नोति परमं पदम्॥

काम्यं विषयभोगार्थमिहामुत्र प्रयुज्यते।
मोक्षाय सुकृतं विद्धि ब्रह्मार्पणधिया कृतम्॥

बुद्धियुक्तो जहातीह उभे सुकृते।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्।
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः।

जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम्।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्॥

इत्यादिवचनैरीश्वरप्रसादार्थत्वस्य पुण्यपापक्षयार्थत्वस्य चावगमनद्वारा मोक्षार्थमनुष्ठानोपपत्तेः। **एतेन** नित्यादिभिरधर्मनाशेपि सुकृतनाशे कारणाभावो **निरस्तः**। अत एव ज्ञानार्थत्वेन श्रौतेन नैषामेतत्फलार्थत्वबाधः। सत्त्वशुद्ध्यात्मधर्मपुण्यपापक्षयद्वारभेदेन एकार्थत्वाभावात्। **न** चास्मिन्मते " ज्ञानादेव तु कैवल्यं " इति श्रुतिविरोधः। अस्मन्मते ज्ञानस्यापि मोक्षसाधन-त्वांगीकारेणाविरोधात्। यदि रथंतरसामेत्यादौ स्वप्रतिस्पर्धिनो बृहत एव **रथन्तरपदेन** व्यावृत्तिवत् ज्ञानप्रतिस्पर्ध्यज्ञानस्यैव व्यावृत्त्या एवकारस्याप्युपपत्तेश्च। **नापि** तमेव विदित्वेति

श्रुतिविरोधः तत्र तच्छब्दसमभिव्याहृतैवकारेणात्मभिन्नपदार्थज्ञानस्यैव मोक्षसाधनतानिषेध-करणेन कर्मणां तत्साधनत्वे विरोधाभावात् । अत एव नान्यः पन्थाविद्यतेऽयनाय इत्येवकार-सिद्धनिषेधानुवादकमेव । अन्यथा वाक्यभेदापत्तेः । **नापि** न कर्मणेति श्रुतिविरोध; तस्याः सामान्यविषयत्वेन भगवदर्पणशून्यकर्मविषयतयोपपत्तेः तदभावात् । न च कर्मणां पुण्यपापक्षय-फलकत्वमेवास्तु न मोक्षफलकत्वमिति वाच्यं; तथात्वे ज्ञानस्यापि दृष्टद्वारा अज्ञाननिवृत्ति-फलकत्वेनैवोपपत्तौ मोक्षफलत्वानुपपत्तेः । व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावस्य उभयत्र तुल्यत्वाच्च । न च निषिद्धानामपि भगवदर्पणबुद्ध्या अनुष्ठानापत्तिः ।

> " देवतानां गुरूणां च मातापित्रोस्तथैव च ।
> पुण्यं देयं प्रयत्नेन नापुण्यं चोदितं क्वचित् ॥

इति माधवोदाहृताङ्गिरोवचसा निषेधेनापुण्यकर्मणोऽर्पणानुपपत्तेः । न च कर्मजन्यत्वे मोक्षस्यानि-त्यत्वप्रसंगः नाशकसामान्याभावेन ध्वंसवत् नित्यत्वोपपत्तेः । मोक्षविरोधिपुनर्बन्धोत्पत्त्या हि मोक्षो नश्येत् । न हि तदुत्पादे किञ्चिज्जनकमस्ति । अतः काम्यानां फलकामन-परित्यागे तथा नित्यानामपि भगवत्प्रीत्यर्थमनुष्ठितानां भगवत्प्रसादद्वारा पुण्यपापक्षयद्वारा वा मोक्षार्थत्वे न कोपि विरोधः ।

अथ कथं परमात्म प्राप्त्यवस्थारूपस्य मोक्षस्य आनन्दोपभोगहेतुत्वं? न तावत्तत्र उत्पत्ति-मत्सुखं प्रकाशते । सुखोपभोगरूपश्च यदि मोक्षः प्रकल्प्यते—

> स्वर्ग एव भवेदेष पर्यायेण क्षयी च सः ।
> न हि कारणवत्किञ्चित् अक्षयत्वेन गम्यते ॥

इत्यादिना **संबन्धवार्तिके** निराकरणात् । तज्जनकत्कर्मोच्छेदे तत्सुखस्योत्पत्त्यसंभवाच्च । उत्पत्तावनित्यत्वप्रप्रसङ्गेनापुनरावृत्तिश्रुतिविरोधाच्चेति **चेन्न**; स्वाभाविकस्यैव स्वप्रकाशस्यानन्द-स्य संसारदशायां दुः खसंवलितस्य सतोपि वायुविक्षिप्तदीपस्येवासत्वेपि मुक्तौ तदभावे निर्वातदेशे दीपस्येव सत्त्वोपपत्तेः । अत एव **न्यायसुधाया**मनौपाधिकस्यात्मनः परमात्मप्राप्त्यवस्थारूप-मोक्षप्राप्त्यभिधानात् । तत्रानन्दोपभोगहेतुत्वमुक्तं नानुभवरूपताभिप्रायेण व्याख्येयमिति **सांप्रदायिकाः**। तदुक्तं—

> निजं यत्त्वात्मचैतन्यं आनन्दश्चेष्यते च यः ।
> यच्च नित्यविभुत्वादि तेनात्मा नैव मुच्यते ॥

इति अभावात्मकमोक्षप्रतिपादनपरं वार्तिकं तु परमताभिप्रायेण नेयम्।

तदेवमानन्दात्मकमोक्षभावः **न्यायसुधाकारस्य** मते उपपादितः।

**मिश्रास्तु** आत्मवादे आनन्दमोक्षवादिमते स्वस्वप्रकाशस्याप्यानन्दस्य संसारावस्थायां दुःखेनाभिभवात् अप्रकाशेपि मुक्तावभिभवाभावे तत्र बाह्येन्द्रियनिवृत्तावपि मनसोंगीकारेण आनन्दानुभवं ज्ञानं चोपपाद्य तत्रामनस्कत्वश्रुतिविरोधादपरितुष्य अभावात्मकमोक्षमंगीकृत्य आनन्दवचनमुपन्यासमात्रमित्याहुः।

तथाहि—न तावदानन्दात्मना मुक्ताववस्थानं आनन्दात्मना आत्मनोऽनुभवायोगेनाननुभूयमानानन्दात्मना सत्वे मानाभावात् स्वप्रकाशत्वे च सुषुप्तावपि आनन्दानुभवापत्तेः। तत्र मनसोऽभावेन तदननुभव इति तु मुक्तावपि तुल्यम्। किं च संसारावस्थायामपि स्वप्रकाशत्वेनानन्दप्रकाशापत्तेः। न च तत्राप्यानन्दस्वभावः पुरुषः प्रकाशत एव, आत्मनि प्रमोत्पत्तेः, अन्यथा सुखहीने अविज्ञातसुखे च प्रेमोत्पत्त्यनुपपत्तेः इति वाच्यं; तथात्वे सर्वदैव सुखरूपत्वेनानुभवापत्तेः। इष्टापत्तौ अनुभवविरोधप्रसंगात्। न च संसारावस्थायां स्वप्रकाशोप्यानन्दः अभिभवान्न प्रकाशत इति युक्तं। स्वप्रकाशे प्रकाशनिवारणरूपाभिभवायोगात्। नहि प्रकाशमानस्याप्रकाशनं संभवति। यदि तु नैव प्रकाशते संसारावस्थायां तदाऽसतः प्रकाशस्य मुक्त्यवस्थायामुत्पद्यमानस्य प्रकाशस्य कारणं वक्तव्यं, विज्ञानमेव हि प्रकाशाख्यस्य फलस्य कारणं वक्तव्यं; तच्चेन्द्रियाधीनं, न च मुक्तस्येन्द्रियाणि सन्तीति नानन्दोपभोगः। अतो नानन्दस्वरूपो ज्ञानस्वरूपो वा आत्मा। अपितु आनन्दज्ञानधर्मक एव। परमप्रेमास्पदत्वमपि असुख एवात्मन्यात्मत्वेनैव श्रुतौ प्रतिपादनान्न विरुद्ध्यते। नहि द्रष्टुः दृष्टेर्विपरिलोपो विद्यत इत्यादिश्रुतयस्तु ज्ञानशक्त्यविलोपाभिप्रायेण व्याख्येयाः। नहि दृष्ट्यादिशब्दवाच्यानां चाक्षुषादिज्ञानानां तत्तदिन्द्रियविषयाभावे सुषुप्तौ मुक्तौ वाऽविपरिलोपः संभवति। अतो ज्ञानशक्त्यविलोपाभिप्राया एव ताः श्रुतयः। मनसैव संसारावस्थायामिव आत्मनो ज्ञानसुखे मुक्तौ स्यातां तदभावात्तु नात्मनो ज्ञानसुखे संभावयितुं शक्ये।

अत एव "न प्रियाप्रिये स्पृशत" इति श्रुत्याऽप्रियस्पर्शस्येव प्रियस्पर्शस्यापि निषेध उपपद्यते। एवं न्यायानुकूलतया प्रियाप्रियवचनस्य सुखसामान्यनिषेधपरत्वे संभवति न वैषयिकसुखनिषेधपरत्वेन संकोचो युक्त इति आनन्दादिश्रुतय एव पुरुषार्थत्वसामान्यात् दुःखाभावे सुखत्वोपचारेण। तथा विज्ञानश्रुतयोऽपि शक्तावेव ज्ञानत्वोपचारेण प्ररोचनार्थ-

तया नेयाः । अतो नानन्दोपभोगरूपो मोक्षः । किं तु भोगायतनभोगसाधनभोग्यसंबन्धः आत्मनो बन्धः तन्नाशो मोक्षः। अत एवाभावात्मकत्वे मोक्षस्य नित्यत्वमुपपद्यते । नानन्दात्मकत्वे इत्यभिप्रेत्यैव संबन्धवार्तिकग्रन्थः—"न ह्यभावात्मकं मुक्त्वा मोक्षनित्यत्वकारणम्" इति । न ह्यभावात्मकमोक्षे ज्ञानं साधनं येन जन्यत्वं स्यादित्यभिप्रेत्याह—"नहि क्रियायाः कस्याश्चित् अभावः फलमिष्यत" इति ।

कुतस्तर्हि मोक्ष इत्यपेक्षायामाह—"तस्मात् कर्मक्षयादेव हेत्वभावेन मुच्यत" इति । यैरात्मनो भोगायतनादिसंबन्धरूपो बन्धः प्रसज्यते तेषां कर्मणां नाशात्तदपाये सति अर्थादेव सिद्ध्यति मोक्षः । न तूत्पद्यते । अतः फलमभावो नेष्यत इत्यर्थः । तन्नाशश्च यो हि देहाद्विविक्तं अमरमजरमदुःखमात्मानं जानाति तस्य देहसंप्रयोगविरक्तस्य देहपूर्वकृतानां कर्मणामुपभोगेन क्षयात् तन्निमित्ते शरीरे पतिते अनागतानां कर्मणामननुष्ठानादेवासत्वात् देहान्तरानुत्पत्तिर्भवति तदुक्तम्—

तत्तज्ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये ।
उत्तरप्रचयासत्त्वात् देहो नोत्पद्यते पुनः ॥

कर्मजन्योपभोगार्थं शरीरं नः प्रवर्तते ।
तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते ॥

तर्हि किमिदानीं मोक्षार्थिभिर्विवेकविज्ञानमात्रेण स्थातव्यं नेत्याह —

मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः ।
नित्यनैमित्तिके कुर्यात् प्रत्यवायजिहासया ।
प्रार्थ्यमानं फलं ज्ञातं न चानिच्छोर्भविष्यति ॥ इति

तथा च काम्यनिषिद्धे हि स्वफलोपभोगाय शरीरमारभेते तेन शरीरारंभं परिजिहीर्षता ते न कर्तव्ये पूर्वकृताधर्मक्षयाय च नित्यनैमित्तिके कर्मणी कर्तव्ये । तथैव पूर्वोक्तात्मोपासनाख्यज्ञानमपि पूर्वकृताधर्मक्षयाय काम्यकर्मनिवृत्तये चानुष्ठेयम् । न तु मोक्षसाधनतया । तस्य न कर्मक्षयादेवाभावरूपस्यार्थादेव सिद्धेः । अतो जन्यत्वेन नानित्यत्वप्रसङ्गः, न वा नित्याद्यनुष्ठानकाले तस्यानुष्ठानप्रसंगः । फलेच्छाया अभावात् । इदमेवोपासनाख्यं ज्ञानं शान्त्यादीतिकर्तव्यताविशिष्टमात्मानमुपासीतेत्यादिवाक्यविहितं दुरितक्षयद्वारा निःश्रेयसफलत्वेनोक्तं **व्याकरणाधिकरणे** । एतदभिप्रायमेव ज्ञानाग्निस्सर्वकर्माणीति भगवद्वचनं, स्पष्टं चैतन्**न्यायरत्नाकरे** ।

यत्तु द्वितीयं पूर्वोक्तमात्मज्ञानं प्राणायामाद्यङ्गोपेतं तत्तु अभ्युदयफलार्थमविवादमेव। अतो निस्संबन्धो निरानन्दो मोक्ष इति युक्तम्। न च सुखमात्रस्य लोपादपुरुषार्थत्वापत्तिः। सांसारिकसुखलोपस्यापि विवेकिनामिच्छाविषयत्वेन पुरुषार्थत्वोपपत्तेः। अत एव दुःखलोपात् पुरुषार्थत्वमपि नानुपपन्नम्। तदुक्तं **शास्त्रदीपिकायां**—

सुखदुःखोपभोगो हि संसार इति शब्द्यते।
तयोरनुपभोगात्तु मोक्षं मोक्षविदो विदुः॥

श्रुतिरप्येवमेवाह भेदं संसारमोक्षयोः।
न ह वै सशरीरस्य प्रियाप्रियविहीनता।

अशरीरं वाव सन्तं स्पृशतो न प्रियाप्रिये।
आनन्दात्मकमात्मानं ये वदन्ति स्वयंप्रभम्।

तन्मतेपि च संसारान्मुक्तेरेतावती भिदा।
आत्मा ह्यानन्दरूपोऽसौ संसारेपि प्रकाशते।

न ह्यप्रकाशनं युक्तं स्वप्रकाशस्य वस्तुनः।
यद्यसौ न प्रकाशेत किं तर्ह्यन्यत् प्रकाशते।

आत्मस्वरूपमिति चेन्ननु चानन्द एव तत्।
तच्चेत् प्रकाशते नूनमानन्दोऽपि प्रकाशते।

तेन शब्दादिविषयजन्ययोः सुखदुःखयोः।
निवृत्तिरेव संसारादपवर्ग इतीर्यते।

ततश्च सुखलोपेन मुक्तेरपुरुषार्थता।
यद्यस्माकं भवेत्तर्हि तुल्यैष भवतामपि।

सुखहानिरतस्तस्य भूयोदुःखविवर्जनात्।
मोक्षस्य पुरुषार्थत्वमावयोरुभयोस्समम्।

सुखदुःखविहीनोऽतो मुक्तः स्वस्थोवतिष्ठते इति।

ततश्च येऽस्यागमापायिनो धर्माः बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराः तानपहाय **यदस्य नैजं**

रूपं ज्ञानशक्तिसत्ताद्दश्यत्वादि तस्मिन्नवस्थानमर्थतः सिद्धम् । स एव मोक्षः न तु सानन्द इत्यस्मिन्नपि मते मोक्षप्रतिबन्धकीभूतप्रपञ्चसंबन्धजनकीभूतधर्माधर्मक्षयद्वारा ज्ञानकर्मणोः सिद्ध एव समुच्चयः । तथा च श्रुतिः—

अन्धं तमः प्रविशन्ति योऽविद्यामुपासते ।
ततो भूय इव ते तमो य विद्यायां रताः ॥ इति ।

अत्र तत इति ल्यब्लोपे पञ्चमी । तथा च ये अविद्यां अग्निहोत्रादिकाम्यकर्मलक्षणामुपासते तेऽन्धं तमोऽज्ञानरूपं विशन्ति । त एव तानि कर्माणि विहाय केवलं विद्यायां रताः ते भूय इव बहुतमःप्रविशन्ति कर्मणामपि त्यागादित्यर्थात् तच्छब्दोपात्तैककर्तृत्वप्रतीतेश्च निष्ठाद्वयस्यैकनिष्ठात्वोक्तेः उभयनिष्ठा एव तमस्तरन्तीति प्रतीयते ।

**एतेन** "लोकेऽस्मिन् द्विविधा निष्ठा" इत्यनेन भगवता भिन्नाधिकारिकतया अवस्थाभेदेनोक्तमिति **अपास्तम्** । निःश्रेयसफलार्थं साधनतया निष्ठाद्वयप्रतिपादनस्य एकाधिकारिकत्वेपि साहित्येनाप्युपपत्तेः । यत्तु प्रथममुपपादितं देहादिव्यतिरिक्तसंसार्यात्मज्ञाने तस्य क्रतुविधिभिरर्थाक्षिप्तस्य सामर्थ्यमात्रात् क्रत्वर्थस्यापि "आत्मा वा अरे द्रष्टव्य" इति विधिविधेयत्वं **न्यायसुधायामुक्तम् । तदपि न क्षमन्ते मिश्राः** । यथाहि ज्योतिष्टोमादिवाक्याध्ययनं दृष्टमेवानुष्ठानौपयिकं ज्ञानं जनयतीति तदर्थतयैवाध्ययनविधिना विधीयते, तथा अविनाशी वा अरेऽयमात्मेत्यादिवाक्यानामपि अध्ययनविधिरेव कर्मानुष्ठानोपयोग्यात्मज्ञानार्थतां विधत्ते । तद्यदि प्रमाणान्तरेणात्मनश्शरीरादिविवेको नैकान्ततस्सिद्ध्यति ; ततो दृढविवेकप्रतिपादकोपनिषद्वाक्यानां स्पष्टमेव फलम् । यथोक्तमात्मवादान्ते वार्तिके ।

इत्याह नास्तिक्यनिराकरिष्णुः आत्मास्तितां भाष्यकृदत्र युक्त्या ।
दृढत्वमेतद्विषयः प्रबोधः प्रयाति वेदान्तनिषेवणेन ॥

अथ तु अन्यतोऽपि सिद्ध्यति ततो यथैवान्यतोऽपि क्रतुज्ञानसंभवे अध्ययनोपात्तवेदवाक्यावगतकर्मरूपाणामेव पुंसां कर्मस्वधिकारः तथैवाध्ययनोपात्तोपनिषद्वाक्यावगतात्मतत्त्वानामेवाधिकार इत्यध्ययनविधिबलादेव कल्प्यते । **यत्तु** आत्मसद्भावप्रतिपादनोपक्रमे विधिसरूपं वाक्यं आत्मा वा अरे द्रष्टव्य इति तत् वक्ष्यमाणार्थस्यातिगहनत्वान्महोपयोगित्वाच्च कथं हि नामालस्यं हित्वा श्रद्धाविशेषेण वक्ष्यमाणमर्थं प्रतिपद्येत इत्येतावन्मात्रार्थम् । तस्मादेतज्ज्ञानं दृष्टोपयोगित्वात् क्रत्वर्थमिति । **पूज्यपादैस्तु** अर्थाक्षिप्तस्यान्यस्य ज्ञानस्य विध्यभावे विहितत्वघटिताङ्गत्वानुपपत्तिपरिहाराय यदेव विद्यया करोतीति वाक्येनैवाङ्गताबोधनं **न्यायसुधाकार-**

यदाऽपि "कर्मणैव हि संसिद्धिमास्थिता जनकादयः" इति वचनात्कर्ममात्रजन्यत्वं, ज्ञानकर्मसमुच्चयो वा प्रामाणिकः तदाऽपि "त्यक्त्वा कर्मफलासङ्गम्" इत्याद्युपक्रमोपसंहारपर्यालोचनया कर्मशब्दस्य सर्वकर्मपरत्वावसायादश्रुतफलकविश्वजिदादिमात्रपरत्वे प्रमाणाभावः। न चैवमपि कर्मान्तरसाधारण्येन अस्यापि तत्फलकत्वोपपत्तेः विश्वजिद्वाक्यस्य चोत्पत्तिपरत्वेनापि चरितार्थत्वात्फलकल्पनानुपपत्तिरिति वाच्यं, उक्तवाक्येन कल्पनालाघवानुरोधेन क्लृप्तप्रयोगविधीनामेव कर्मणां मोक्षफलत्वावगतेः अक्लृप्तप्रयोगकस्य विश्वजिदादेर्ग्रहणे वैरूप्यप्रसङ्गेन विश्वजिद्वाक्येऽपि प्रयोगविधिसिद्ध्यर्थं कर्मफलकल्पनाया आवश्यकत्वात्। एतेन "विविदिषन्ति यज्ञेन" इत्यादिवाक्यात् "कर्मणा पितृलोकः" इत्यादिवाक्याद्वा विविदिषामात्रार्थत्वं पितृलोकमात्रार्थत्वं वा विश्वजिदादेरपास्तम्। अत एव प्रयोगान्तरकल्पनाभियैव न प्रयाजादीनामपि विविदिषार्थत्वम्। एतेन "धर्मेण पापमपनुदति" इत्यादिवाक्येन पापक्षयफलकत्वं विश्वजितोऽपास्तम्। तस्य नित्यस्थले निमित्तप्रयुक्तनैमित्तिकानुषङ्गिकत्वेन विश्वजिति प्रयोजकत्वकल्पने वैरूप्यापत्तेः ॥ ५ ॥

---

मताश्रयणेनोक्तं कौस्तुभे। तेन कथंचिदप्यस्य ज्ञानस्यास्तु क्रत्वर्थत्वम्। यत्तु निःश्रेयसफलकमात्मज्ञानं तस्य कर्मणां समुच्चये न कोऽपि मीमांसकानां विवाद इति दिक्।

तमिमं मतद्वयोपपादनवेलायामेवाशङ्काव्याजेन सूचितं कर्ममात्रजन्यत्वपक्षं तन्निरासव्याजेन सूचितं ज्ञानकर्मसमुच्चयपक्षं चाभिप्रेत्योक्तं **पूज्यपादैः—कर्ममात्रजन्यत्वं ज्ञानकर्मसमुच्चयो वा प्रामाणिक इति**। प्रामाणिकपदेन व्यञ्जनया सूचितस्य दूषणसहत्वस्योपपादनं **शारीरकमीमांसाभाष्यकारैः भगवत्पूज्यपादैरेव** कृतं तत्रैव द्रष्टव्यम्। विस्तरभयान्नायमर्थोऽत्र प्रपञ्च्यते। **त्यक्त्वेति**। अत्र च यद्यपि कर्मणैव हीत्यस्य भगवद्गीताश्लोकस्य नायमुपक्रमः। किन्त्विदं प्रकरणं 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु',, इत्यादिना द्वितीयाध्याये उपक्रान्तम् "कर्मण्येवाधिकारस्ते" इत्यादिना च मध्ये परामृष्टम्। तृतीयाध्याये पुनः "तदर्थं कर्म कौन्तेय मुक्तसंगः समाचर" इति परामृश्य "कर्मणैव हि"इत्युक्त्वा चतुर्थे "त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः" इत्यादिनोपसंहृतत्वात् तथापीत्यादि उपक्रम्य कृतो य उपसंहार इत्युपसंहारोपक्रमतया कथंचिद्व्याख्येयम्। **अश्रुतफलकेति**। वस्तुतः क्लृप्तप्रयोगविधिकानामेव ग्रहणमित्युक्तिमात्रं न साधकं अश्रुतफलकर्ममात्रस्यैवापेक्षावशेन कर्मणा पितृलोक इत्यत्र ग्रहणोपपत्तेरितरेषां ग्रहणे प्रमाणाभावात् अन्यतराकाङ्क्षया हीतरसकलकर्मविनियोगस्स्यात्। अफलकर्मग्रहणं तूभयाकाङ्क्षयेति युक्ततरत्वम्। अतोऽत्र यद्यपि वाचस्पत्यादौ अयं विधिरित्यङ्गीकृतं तथापि सर्वैषणात्यागार्थं प्रमाणा-

## (६)—क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ फलमात्रेयो निर्देशाद-श्रुतौ ह्यनुमानं स्यात् ॥ अङ्गेषु स्तुतिः परार्थत्वात् ॥ १९ ॥

"ज्योतिर्गौरायुः" इत्यादिवाक्योत्पादितानि सौत्यानि कर्माणि विधाय "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इति श्रुतम्। तत्र रात्रिसत्रादौ पूर्ववत् स्वर्गकल्पने स्वर्गोपस्थितिः तद्वाचकपदोपस्थितिः कामपदान्ततत्कल्पना चेति गौरवापत्तेः लाघवात् श्रुतप्रतिष्ठादेरेव भाव्यत्वकल्पनम्। तत्र त्वियं व्यवस्था—यत्र श्रुतानामेव पदानां लक्षणया फलपरत्वसम्भवः यथा उदाहृतवाक्ये तिप्रत्ययस्य लडर्थकत्वं कल्पयित्वा भविष्यत्कालवृत्तित्वेन साध्यत्वावगतौ प्रतिष्ठादिस्वाभाव्यादीप्सितत्वसिद्ध्या भाव्यत्वं, धातोरेव वा सन्नन्तत्वं परिकल्प्य इच्छाविषयत्वावगतौ स्वर्गादिवदेव साध्यत्वावगतिः। तत्र प्राथमिकफलापेक्षायां श्रुतवाक्यस्यैव लक्षणया फलपरत्वे प्रमिते पश्चात् स्तुत्यपेक्षायामप्राप्तिवलन्तरसिद्धतत्तत्फलानामेव कर्मणामनुवादमात्रं न तु विधित्वं गौरवादिति स्वकृतश्रुतितात्पर्यचन्द्रिकानुरोधात् विधित्वमेव निर्मूलमिति पूज्यपादाभिप्रायः।

॥ क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥

यथा द्वादशाहादिष्वहःशब्दः सुत्यापरः तथा रात्रिशब्दोपीत्याह—**सौत्यानीति**। **इत्यादीति**। आदिपदेन ब्रह्मवर्चस्विनोऽन्नादा भवन्तीत्यपरफलसंग्रहः। **तत्र त्विति**। **ईप्सितत्वसिद्ध्या भाव्यत्वमिति**। एतच्च भट्टसोमेश्वरमतेनोक्तम्। अधुना पार्थसारथ्युक्तप्रकारमेवार्धाङ्गीकारेणाह—**धातोरेव वेति**। तेन हि शास्त्रदीपिकायां प्रतिष्ठाफलस्य क्लृप्तत्वात् सन्नन्ततया धातोः विपरिणामं कृत्वा उपयन्तीत्यत्रापि लट् विध्यर्थे विपरिणम्यते। यच्छब्दस्य च व्यवहितान्वयः। तदयमर्थः—ये प्रतितिष्ठासन्ति ते एता रात्रीरुपेयुरिति। यद्यपि वा अध्याहारस्यात् तथापि स्वर्गपदाध्याहारापेक्षया अर्थवादसङ्गतये उपस्थितिलाघवाच्च प्रतिष्ठापदमेवाध्याहर्तव्यमित्युक्तं; तन्मते चैतस्य विनियोगविधित्वाङ्गीकारे बहूनां पदानां लक्षणापत्त्या व्यवहितकल्पनाप्रसंगाच्चातिगौरवापत्तेः वाक्यैकवाक्यतापाताच्च; तदपेक्षया एकस्यैव धातोः सन्नन्तत्वकल्पनया तस्य च्छान्दसत्वेन लोपमङ्गीकृत्य समस्तवाक्यस्य तदर्थे एकस्मिन् लक्षणाङ्गीकारे लाघवेन प्रथमतो वाक्यार्थमुपपाद्य पदैकवाक्यत्वमेवाश्रयणीयं युक्तम्। ततश्च ज्योतिर्गौरायुरित्येवोत्पत्तिवाक्यमर्थवादैकवाक्यतापन्नं सत् उत्पत्तिवाक्यमधिकारवाक्यं भवतीत्यभिप्रेत्याह—**लक्षणयेति**। **पदान्तरस्यैवेति**। वस्तुतस्तु यदष्टा-

लब्धविधेरेव स्तावकत्वम्। यत्र तु श्रुतेष्वर्थवादपदेषु न स्तावकत्वकल्पनं विना फलपरत्वमात्रेणोपपत्तिः "यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति" इत्यादौ, तत्र तेषां स्तावकत्वमेव। फलापेक्षायां तु उपस्थितपदसमानजातीयपदान्तरस्यैव कामपदयुक्तस्य कल्पनेति सर्वथा न स्वर्गप्रयुक्तत्वम् ॥ ६ ॥

---

(७)—काम्ये कर्मणि नित्यस्स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ २० ॥ वीते च कारणे नियमात् ॥ २१ ॥ कामो वा तत्संयोगेन चोद्यते ॥ २२ ॥ अङ्गे गुणत्वात् ॥ २३ ॥ वीते च नियमस्तदर्थम् ॥ २४ ॥

यत्र श्रुतब्रह्मवर्चसादिफलकेष्वपि शास्त्रस्य महाविषयत्वलाभार्थं स्वर्गफलकल्पना, ब्रह्मवर्चसादिकं तु आयुरादिवदानुषङ्गिकं तत्र किं वाच्यं रात्रिसत्रे इति शङ्कां मन्दविषन्यायेन शिष्यहितार्थं परिहर्तुं सूत्रम्॥ फलाकांक्षायाः श्रुतफलेनैव शान्तेरुद्देश्यानेकत्वनिमित्तवाक्यभेदप्रसङ्गाच्च न स्वर्गकल्पना। महाविषयत्वाभावस्तु विशेषश्रवणे न दोषः। आयुरादौ प्रमाणद्वयसत्त्वादानुषङ्गिकत्वेऽपि प्रकृते तदनुपपत्तेश्च ॥ ७ ॥

---

कपालो भवति........जगत्यैवास्मिन् पशून् दधातीत्यन्तानामर्थवादानां प्राशस्त्यबोधनद्वारा विध्येकवाक्यत्वेन प्रशस्तेयमिष्टिरिति बोधिते पश्चात् फलविशेषाकांक्षायां रात्रिसत्रवदेव फलपंचकप्रतिपादनं यस्मिन् जात इत्युक्तभागेन लक्षणया सुकरमेवेति तथैवात्रापि तत्तत्फलवाचकपदान्तरकल्पनावश्यकत्वेन न कार्येत्यपि सुवचम्। कामपदयुक्तस्येति। पुत्रब्रह्मवर्चसकाम इत्यादिफलकल्पनेति भावः ॥

---

॥ काम्ये कर्मणि ॥

प्रमाणद्वयसत्वादिति। इतिकरणतृतीयाश्रुतिरूपप्रमाणद्वयवत्त्वात् विनियुक्तानां मन्त्राणां क्रियातत्संबन्धिप्रकाशनावश्यंभावे मन्त्रप्रकाश्यार्थस्यायुरादेः अवश्यं क्रियासंबन्धित्वं कल्पनीयं ; तच्च फलान्तरे मुख्ये विद्यमाने सति आनुषङ्गिकरूपमेव कल्पनीयमित्यर्थः।

---

(८)—सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २५ ॥ फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २६ ॥

**" एकैकस्मै कामायान्ये** यज्ञक्रतव **आह्रियन्ते सर्वेभ्यो ज्योतिष्टोमः, एकैकस्मै कामायान्ये यज्ञक्रतव आह्रियन्ते सर्वेभ्यो दर्शपूर्णमासौ " इति श्रुताभ्यां वचनाभ्यां संयोगपृथक्त्वन्यायेन सर्वफलार्थत्वं, न तु तत्तत्प्रकरणस्थगुणकामानामपि दर्शादिप्रयोज्यत्वात्तदभिप्रायेणानुवादत्वं, वैयर्थ्यात्, औपचारिकत्वाङ्गीकारे तादर्थ्यस्य प्रमाणाभावाच्च। अतोऽप्राप्तार्थत्वादेव विधिभावनावाचि**पदाध्याहारेण **सर्वफलार्थत्वेन विनियोगः। न चैव स्वर्गार्थत्वबोधकविधिवैयर्थ्यं,** गोबलीवर्द**न्यायेन भिन्नविषयकत्वकल्पनयाऽभ्युदयशिरस्कत्वोपपत्तेः।**

**अत्र चाविशेषात्सर्वाणि फलानि ज्ञेयानि। न तु यान्यर्थवादगतान्यन्यशब्दस्य सदृशवाचित्वात् ज्योतिष्टोमदर्शपूर्णमाससदृशसोमयागान्तरेष्ट्यन्तरजन्यफलानि, तन्मात्र-**

---

**॥ सार्वकाम्यम् ॥**

अत्र भाष्यकारेण दर्शपूर्णमासवाक्यं " एकस्मै वा अन्या इष्टयः कामायाह्रियन्ते " इति लिखितं तथापि **विधिरसायन**लिखितं वाक्यं स्वयमुदाहरति—**अन्ये यज्ञक्रतव इति। गुणकामानामिति।** ते च यदि कामयेत वर्षुकः पर्जन्यः स्यात् नीचैस्सदो मिनुयादित्यादयो ज्योतिष्टोमे। अहार्यपुरीषां पशुकामस्य वेदिं कुर्यादित्यादयो दर्शपूर्णमासयोः। **यत्त्वत्र तन्त्ररत्ने** विध्यभावात् न साधनत्वावगतिरित्याशंक्य उत्पत्तिप्रयोगवचनात् विधिर्भविष्यति सोमेन यजेत सर्वेभ्यः कामेभ्य इत्येकं परिहारं कृत्वा एकस्मै वा कामायान्ये यज्ञक्रतवः ज्योतिष्टोमस्तु महाभागः सर्वेभ्यः कामेभ्यः। तस्मात् सर्वार्थं ज्योतिष्टोमं कुर्यादित्यर्थवादाद्विधिरित्यपरं च कृत्वा अध्याहाराद्वा ज्योतिष्टोमः सर्वेभ्यः कर्तव्य इत्येवंरूपात् विधिरिति तृतीयः परिहारः कृतः। तत्रोत्पत्तिविधेर्दूरस्थत्वेन एकवाक्यत्वानुपपत्तेः सर्वफलोद्देशेन पूर्वविहितत्वरूपाङ्गत्वाभावे प्रयोगविध्येकवाक्यताया अप्यसंभवादयुक्तं परिहारद्वयम्। अर्थवादाद्विधित्वनिर्णयस्तु अन्योन्याश्रयग्रस्तत्वादसंभवी। अतएव निवीतपादे उपव्ययत इत्यस्य प्रयोगवचनार्थवादाभ्यां विधित्वं वार्तिकोक्तं न्यायसुधाकृता प्रदूष्य अप्राप्तार्थकत्वेनैव पञ्चमलकारानुसरणं कृतं अतस्तेन न्यायेनेहाध्याहारपक्ष एव श्रेयानित्यभिप्रेत्याह—**पदाध्याहारेणेति। गोबलीवर्दन्यायेनेति।** यथैव गोमिथुनेच्छोः प्रयोक्तुः गामानय बलीवर्दं चानयेति वाक्ये गामानयेति पूर्ववाक्येनैव साधारण्येन बलीवर्दस्याप्यानयनबोधोपपत्तौ पुनर्बलीवर्दमानयेत्युक्तिः पूर्ववाक्ये

**परस्तत्र तत्र यथायोगं सर्वशब्दः, अर्थवादस्य स्तुत्यर्थत्वेनैवोपपत्तौ** हारियोजन**गतसर्वशब्द-न्यायेन सङ्कोचकत्वानुपपत्तेः। अत एव सर्वशब्दस्य सर्वनामत्वाद्वैदिकफलमात्रपरत्वमपि नाशङ्क्यं, वैदिकानामपि पूर्वमनुपस्थितत्वात्।** कथञ्चिदुपस्थितेर्**लौकिकेष्वप्यविशेषाच्च। यानि तु शशविषाणप्राप्त्यादीनि प्रमाणेन केनाप्यप्रसिद्धानि तेषां न सर्वशब्देन ग्रहणम्॥ यत्त्वतीन्द्रियार्थापरोक्षज्ञातृत्वलक्षणसार्वज्ञ्यादेरपि न सर्वशब्देन ग्रहणं तस्य लोकवेदयोः क्वचिदप्युपायान्तरजन्यत्वादर्शनादित्युक्तं तन्त्रसारतन्त्ररत्नादौ,** तत् "प्रवृत्त्यालोकन्यासा-**त्सूक्ष्मव्यवहितविप्रकृष्टज्ञानं, भुवनज्ञानं सूर्ये संयमात्" इत्यादिपातञ्जले "चक्षुस्त्वष्टरि संयोज्य त्वष्टारमपि चक्षुषि। मां तत्र मनसा ध्यायन् विश्वं पश्यति चक्षुषा" इत्यादि-पुराणेषु च सिद्धिमात्रे योगधारणाविशेषस्य साधनत्वेनोक्तत्वादुपेक्षितम्, निरतिशय-सार्वज्ञ्यस्याजन्यत्वेऽपि भुवनज्ञानादेस्सम्भवेन अप्रमाणोपपत्तेः। नचैवं मन्वादीनामपि सर्वज्ञ-त्वोपपत्तेस्स्मृतीनां वेदमूलकत्वानापत्तिः, अष्टकास्वर्गसाधनत्वस्य प्रमाणान्तरेणासिद्धौ योगेनापि द्रष्टुमशक्यत्वात्॥ ८॥**

---

बलीवर्दातिरिक्तस्त्रीव्यक्तिमात्रे तात्पर्यं गमयति, एवमिहापि इति भावः। **हार्योजनेति**। भक्षपेटिकायां तृतीये पञ्चमपादे "यथाचमसमन्यांश्चमसांश्चमसिनो भक्षयन्ति अथैतस्य हार्योजनस्य सर्व एव लिप्सन्ते" इत्युदाहृत्य सर्वनाम्नां उपस्थितपरामर्शित्वस्वाभाव्येन उपस्थितानां चमसिनामेव सर्वशब्देन ग्रहणमित्याशङ्क्य चमसिशब्दस्यान्यचमसेषु एकैकस्यैव चमसिनो भक्षणं न्याय्यं, अत्र तु चमसिना-मन्येषां च सर्वेषामेव तद्युक्तमित्येवं स्तुत्यालम्बनत्वेनैवोपपत्तेः न पुनः सर्वशब्दसङ्कोचकत्वं युक्तं; अतः प्रकरणसहकृतेन सर्वशब्देन सर्वर्त्विग्ग्रहणमिति साधितं तद्वदिहापि न सर्वपदसङ्कोचो युक्त इति भावः। काम्यमानत्वमात्रेणोपस्थितिस्तु समेत्याह—**कथञ्चिदिति**। यदि निरतिशयसार्वज्ञ्यस्या-जन्यत्वात् तस्य सर्वशब्देनाग्रहणे भुवनादिरूपातीन्द्रियार्थापरोक्षज्ञातृत्वरूपसार्वज्ञ्यमपि उपाया-न्तराजन्यमिति तन्त्रसाराभिप्रायः तमभिप्रायं दूषयति—**तत्प्रवृत्त्येति**। सूत्रार्थस्तु योगिनः काञ्चनधारणबलात् ज्योतिष्मतीनामिका मनसः प्रवृत्तिर्जायते तस्या य आलोकः तं योगी यदा सूक्ष्मे व्यवहिते विप्रकृष्टे वाऽर्थे विन्यसति तदा तमर्थं जानातीत्यर्थः। तादृशस्यैव मनसो यदा सूर्यद्वारे संयमनं तदा भुवनज्ञानमित्यपरार्थः। भुवनानि च पातञ्जलभाष्ये निरूपितानि।

(९)—तत्र सर्वेऽविशेषात् ॥ २७ ॥ योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात् ॥ २८ ॥

**एकस्मिन् प्रयोगे किं सर्वाणि फलान्युत्पद्यन्ते उतैकमिति चिन्तायां सर्वत्वस्यैवोद्देश्यतावच्छेदकत्वेन कार्यतावच्छेदकत्वात् कारणेन च तदवच्छिन्नोत्पत्तिनियमात् सर्वाण्युत्पद्यन्ते।**

**अस्तु वा तच्छन्दादाविव पुत्रत्वादिनैवोद्देश्यता सर्वत्वं च तद्विशेषणत्वादविवक्षितं, तथाऽप्येकस्मिन्नपि प्रयोगे कारणसत्त्वात् सकलकार्योत्पत्तौ बाधकाभावः। न ह्येकं कारणं कार्यद्वयं नोत्पादयति, एकस्मादपि घटादेः रूपरसक्रियाद्यनेकोत्पत्तिदर्शनात्। एककार्यतावच्छेदकावच्छिन्नोत्पत्तौ तदवच्छिन्नान्तरस्यानुत्पत्तिदर्शनात् पुत्राद्यन्तरं नोत्पद्यतां कार्यतावच्छेदकान्तरावच्छिन्नस्य तु पश्वादेर्युगपत्क्रमेण वोत्पत्तौ** न किञ्चिद्बाधकम्। **न च सर्वेषां युगपत्सर्वस्य कामनाभावादनुत्पत्तिः, कामनायाः कर्माङ्गत्वे फलं प्रति जनकत्वे वा प्रमाणाभावेन तदभावेऽप्युत्पत्तौ बाधकाभावात्। प्रवृत्तिं प्रति परं फलेच्छायाः**

---

**॥ तत्र सर्वेऽविशेषात् ॥**

यद्यपि सर्वानानयेत्यादौ पूर्वोपस्थितघटादीनां सर्वशब्देनैवाभिधानात् प्रकृत्यर्थत्वेन च चमसाधिकरणन्यायेन नाविवक्षा तथापि सर्वेभ्यः कामेभ्य इति पाठस्य **विधिरसायनादौ** लिखनेन कामशब्देन च कामनाविषयपुत्रादीनामभिधानात् पुत्रत्वाद्येवोद्देश्यतावच्छेदकं तदवच्छिन्नविशेषणं सर्वत्वमविवक्षितमित्यभिप्रायेणेदम्। **न किञ्चिद्बाधकमिति।** नन्वस्तु नाम घटस्थानीयस्यात्मनः समवायिकारणात् फलानेकोत्पत्तिः निमित्तकारणात्कर्मणोऽनेकफलोत्पत्तिं न मन्यामहे नह्येकं कारणं निरपेक्षं कार्यद्वयं युगपत् जनयत् दृष्टं क्वचित्। अत एव काम्यात् ज्योतिष्टोमात् स्वर्गफलस्य पापक्षयस्य च युगपदुत्पत्तावपि न क्षतिः सापेक्षत्वादिति **तन्त्ररत्नोक्तं** युक्तमिति चेन्न; तादृशनियमे प्रमाणाभावात् प्रसङ्गस्थले निरपेक्षफलद्वयस्य जननेन व्यभिचाराच्चेति भावः। यत्तु **तन्त्ररत्ने** समीहितसाधनत्वं हि विधिना अवगतं तत्कुतोऽसमीहितस्योत्पत्तिः; यथैव पशुफलङ्कर्म नापशुफलं जनयति तथा समीहितमुपजनयितुमर्हति। अतो नाकाम्यमानानेकोत्पत्तिरित्युक्तं; तद्दूषयति—**अत एवेति।** ननु काम्यकर्मणाममुकफलकामोऽमुकङ्कर्म करिष्य इत्येवं तत्तत्स्वतन्त्रसंकल्पस्यापि अङ्गत्वेन विधानात् तत्तत्सङ्कल्पजन्यापूर्वस्यापि तत्तत्फलोत्पत्तौ कारणत्वम्। यत्र पुत्राद्युद्दिश्य कर्मकरणं तत्र तत्संकल्पजन्यापूर्वसत्वात् तत्फलोत्पत्तावपि नाकामितपश्वादिप्रसङ्गः। तत्कामनाविषयस्य

कारणत्वादन्यतमफलेच्छामात्रेणैव प्रवृत्तौ जातायां कारणसत्त्वेन सर्वकार्योत्पत्तौ न किञ्चिद्बाधकम्। अत एव विध्यवगतसमीहितसाधनत्वमप्यन्यतरफल एव समीहितत्वबोधनेनोपपन्नम्। न च सर्वफलोत्पत्तौ तेषां भोक्तव्यत्वेन मोक्षानुपपत्तिरिति तन्त्रसारोक्तं युक्तं, ज्ञानेन तदपूर्वाणां नाशात्। यदा तु स्वर्गवाक्यवैयर्थ्यापत्तेः तस्यैव मुख्यफलत्वं अन्येषां तु "एकैकस्मै कामाय" इत्यर्थवादात् अन्ये क्रतव एकैकस्मै अयं तु नैकैकस्मा एव किन्तु सर्वेभ्योऽपीत्यर्थावगतेरानुषङ्गिकत्वमिति तन्त्रसारोक्तमाश्रीयते तदा तेषां कामनाभावेऽप्यायुरादिवदुत्पत्तौ न किञ्चिद्बाधकम्॥

वस्तुतस्तु—स्वर्गवाक्यस्याभ्युदयशिरस्कत्वेनाप्युपपत्तेरर्थवादस्य च साध्यसमुच्चायकत्ववत् मुख्यत्वसमुच्चायकत्वस्याप्युपपत्तेरिदं मतमुपेक्षितमिति पूर्वोक्तयुक्त्यैव सर्वोपपत्तिः।

अस्तु वा अकाम्यमानस्यानुत्पत्तिः तथाऽपि यत्र द्वित्राणामेव फलानां कामना तत्र तावतामुत्पत्तिः केन निवार्या। न चायमेव सिद्धान्त इति तन्त्रसारोक्तं युक्तम्; भाष्यादिष्वकथनेनापसिद्धान्तात्। अत एव यद्यप्यनुपस्थितत्वान्न पुत्रत्वादिकमुद्देश्यतावच्छेदकं, सर्वशब्दस्य विशेष्यसाकाङ्क्षत्वान्न सर्वत्वमपि, अपि तु पूर्ववाक्ये कामशब्दोपादानात्तस्यैव सर्वनाम्ना सर्वशब्देन परामर्शात् कामनाविषयत्वमेवोद्देश्यतावच्छेदकं कार्यतावच्छेदकं चेत्याश्रीयते, तथाऽपि यत्र समूहालम्बनात्मिकाऽनेकविषयिणी कामना तत्र तावतामुत्पत्तिरनिवार्यैवेति प्राप्ते—

उक्तयुक्त्या प्रवृत्तिप्रयोजककामनाविषयत्वमेवोद्देश्यतावच्छेदकम्। अनुष्ठानोत्तरभाविकामनाविषयत्वावच्छिन्नोत्पत्तिवारणाय प्रवृत्तिप्रयोजकतया क्लृप्ताया एव कामनाया उद्देश्यतावच्छेदककोटिनिवेशार्थं प्रवृत्तिप्रयोजकेति कामनाविशेषणम्। ततश्चानुष्ठानोपक्रमे या कामना तद्विषयत्वावच्छिन्नस्यैकस्यैवोत्पत्तिर्नान्यस्य। न च समूहालम्बनस्थले विषयताया व्यासज्यवृत्तित्वादनेकोत्पत्तिप्रसङ्गः, समूहालम्बनज्ञान इव समूहालम्बनेच्छायामपि

---

संकल्पस्य पूर्वमभावेन तदपूर्वाभावादित्यत आह—**अस्तु वेति**। यत्तु तन्त्रसारे अविरुद्धानां काम्यमानफलानां बहूनां युगपदुत्पत्तिर्भवत्येवेति सिद्धान्ते कृते कामायौगपद्यरूपः सिद्धान्तो विरुद्धकामविषयः न त्वविरुद्धविषय इत्युक्तं तत् विरुद्धकामानां यौगपद्यपूर्वपक्षस्यैवासंभवात् तदयौगपद्यसिद्धान्ते प्रयोजनाभावादयुक्तमित्यभिप्रेत्याह—**न चायमिति**। **भाष्यादाविति**। यद्यप्येतत् भाष्ये स्पष्टं नोपलभ्यते तथापि तन्त्ररत्ने स्पष्टं दूषितमिति भावः। **क्लृप्ताया इति**।

**प्रत्येकमेव विषयत्वस्यावश्यकत्वात्। इतरथा तादृशकारणात् समूहालम्बनात्मकयोरेव स्मृतियत्नयोरुत्पत्त्यापत्तेः। अत एव** कार्यतावच्छेदकावच्छिन्नस्यैकस्यैवोत्पत्तिनियमा-देकमृदादिभ्यो **घटान्तरानुत्पत्तिवत्फलान्तरस्याप्यनुत्पत्तिरित्येकप्रयोगे एकमेव फलम्। निमित्तस्थले च तस्यैव प्रवृत्तिप्रयोजकत्वात्** पापक्षयकामनायास्तु **तत्त्वाभावेन पापक्षयस्यो-क्तविधकार्यतावच्छेदकावच्छिन्नत्वाभावाद्युगपन्नित्यकाम्यप्रयोगे पापक्षयेण सह स्वर्गादि-फलोत्पत्तावपि न क्षतिः। अत एव यत्र स्वातन्त्र्येण विविदिषापरमेश्वरप्रीत्याद्यर्थत्वेन तत्तद्विधिबलेन यज्ञाद्यनुष्ठानं तत्र कारणत्वेन स्वर्गाद्युत्पत्तौ प्रसक्तायां 'त्यक्त्वा कर्म-फलासङ्गं' इत्यादिस्मृत्या फलान्तरद्वेषस्यापि तत्राङ्गत्वेन विधानादितरफलाभावविशिष्ट-विविदिषादेरेव वा 'अकामस्सर्वकामो वा' इत्यादिना फलत्वाभिधानान्न** तदुत्पत्तिः। **सार्व-**

---

तेन तत्प्रवेशे प्रमाणाभावो निरस्तः। **एकस्यैवोत्पत्तिनियमादिति**। ननु तत्र प्रमाणाभाव इत्याशङ्कां निवारयन् लोकदृष्टं नियामकमाह—**एकमृदादीति**। **न तूत्पत्तिरिति**। **ननु** विविदिषाद्युत्पत्तौ फलान्तरद्वेषस्याङ्गत्वेन विधानात्तदभावे विविदिषाद्युत्पत्तिर्माभूत्; येन तु फलान्तरद्वेषवता विविदिषार्थं कर्म कृतं तदा तस्यापि कारणत्वात् फलान्तरोत्पत्तिः कथं वारिता। न हि फलांतरद्वेषविशिष्टो ज्योतिष्टोमः स्वर्गं प्रति कारणमेव न भवतीति केनचित् प्रमाणेन सिद्धं। न च स्वर्गद्वेषे सति स्वर्गकामनाया अनुदयात् कामितस्य च विधिबोधितसमीहितसाधनत्वानुरोधेनानुत्पत्तेरुक्तत्वात् न तदापत्तिरिति वाच्यं; सर्वेषां फलानामेकेनेच्छाविषयत्वेनानुगमं कृत्वा तत्साधनत्वमात्रबोधनेपि यदा यागप्रवृत्तिवेलायां यस्य पुरुषस्य यदिष्टं तत्साधनत्वमात्रबोधने विधिव्यापाराभावात्। नहि यजेतेति विधिः मम स्वर्गानपेक्षिणः अपेक्षितपुत्रसाधनत्वमेव बोधयतीति तदा स्वर्गसाधनत्वं न बोधयतीति वक्तुं शक्यम् अतःसमीहितसाधनत्वबोधनेपि असमीहितोत्पत्तौ कारणसत्वान्न बाधकम्। **एतेन** इतरफला-भावविशिष्टविविदिषोद्देश्यत्वोक्तावपि स्वर्गाद्युत्पत्तौ सामग्र्यविघातात् तदुत्पत्तिरनिवार्यैव। **किं च** द्वेषस्याङ्गत्वेन विधानात् विविदिषार्थकर्मकरणे प्रयाजादिवत् नित्यं प्रयोगमध्ये द्वेषस्यानुष्ठेय-तापत्तिः।तथा च यस्य पुरुषस्य फलान्तरविस्मरणेनैव न रागो न वा द्वेषः तस्य चित्तशुद्ध्यर्थ-कर्मानुष्ठाने चित्तशुद्धिः फलं न स्यात् अङ्गवैगुण्यात्। अतो न तस्याङ्गत्वमपीति चेत्।

अत्रायं **पूज्यपादानामभिसन्धिः** त्यक्त्वा कर्मफलासङ्गमित्यादिवाक्यात् इतरफलासक्ति-राहित्यं हि तावत् अधिकारिविशेषणत्वेनाङ्गम्। अधिकारिविशेषणस्य राजत्वादेरिव कर्मजन्या-पूर्वनिष्ठयोग्यताजनकत्वमिति। प्रकृते च इतरफलेच्छा चित्तशुद्ध्युत्पत्तौ प्रतिबन्धिका तदभावः कारणमिति कल्प्यते। ततश्च चित्तशुद्धित्वाद्युत्पत्तित्वावच्छिन्नं प्रति तत्तज्ज्योतिष्टोमादिव्यक्तित्वेन

काम्यवाक्येन पश्वाद्यन्यतरः स्वर्गकामवाक्येन स्वर्ग इति तु इष्टमेव। इदमपि स्वर्गवाक्यस्य प्रयोजनमित्यपि बोध्यम् ॥

प्रयोजनं तत्तत्कामोल्लेखः ॥

एवं वा—स्वर्गस्तावदामुष्मिक एव,

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम्" ॥

इति वाक्यशेषादवगतस्य निरतिशयप्रीतिरूपस्य तस्येह जन्मन्यसम्भवात्, मन्त्रार्थवादादौ देशविशेषभोग्यत्वप्रसिद्धेश्च। पशुपुत्रादीनां त्वैहिकामुष्मिकत्वं, न तु केवलामुष्मिकत्वम्। तत्रापि भोगप्रतिबन्धकदुरितसत्त्वे आमुष्मिकत्वम्। तदभावे त्वैहिकत्वमेव। न च कर्म-

---

कारणत्ववत् तदवच्छिन्नं प्रति विशेषणतासंबन्धेन इतरफलेच्छाभावस्यापि कारणत्वात् फलान्तरोद्देशेन यज्ञाद्यनुष्ठाने उद्दिष्टाया अनुद्दिष्टाया वा चित्तशुद्धेः कारणाभावादेव नोत्पत्तिः। यत्र तु केवलचित्तशुद्ध्यर्थमेव तदनुष्ठानं तत्र फलान्तरोत्पत्तिवारणं क्लिष्टम्। सर्वत्र हि अपूर्वनाशे स्वजनकीभूतकर्मविषयकप्रवृत्त्युपधायकफलेच्छाविषयीभूतमन्तिमसुद्देश्यं नाशकमिति कल्प्तम्। अत एव कुशादिनिष्ठसंमार्गजन्यापूर्वस्य नाम्रेयापूर्वमात्रेण नाशः, न वा स्वर्गभोगयोग्यशरीरोत्पत्तिमात्रेण तन्नाशः। तत्त्वज्ञानप्रतिबन्धकीभूतमलनिवृत्त्यात्मकचित्तशुद्धेरीश्वरप्रीतेश्च पापक्षयवत् कर्माव्यवहितमेवोत्पत्तेः तावतैवापूर्वनाशात् कारणाभावादेव नामुष्मिकफलोत्पत्त्यापत्तिः। नहि चित्तशुद्धिः पदार्थान्तरं कालान्तरभावि प्रमाणाभावात्। यदा तु चित्तशुद्धिं फलान्तरं चोद्दिश्य कर्मकरणं तत्र प्रतिबन्धकसत्वे चित्तशुद्ध्यनुत्पत्तावपि फलान्तरमुत्पद्यत एव। तेनैव चान्तिमेन तदपूर्वनाशः। चित्तशुद्ध्युत्पत्तिकाले ऐहिकफलानां नियमेनोत्पत्तिस्तु प्रतिबन्धकदुरितान्तरसत्वात् नैवेति न काचनानुपपत्तिरित्याद्यूह्यं सुधीभिरित्यलं विस्तरेण। इष्टमेवेति। पूर्वं हि एककार्यतावच्छेदकावच्छिन्नमेकमेव जायत इति नियम उक्त इति न तदवच्छिन्नफलद्वयापत्तिः। यत्र तु स्वर्गकामवाक्यनित्यवाक्यसार्वकाम्यवाक्यैः स्वर्गत्वं पापक्षयत्वं प्रवृत्तिप्रयोजककामनाविषयत्वं च भिन्नं भिन्नं कार्यतावच्छेदकं बोधितं तत्र पुत्रार्थकृतादपि यागात रूपरसगन्धादिवत् भिन्नकार्यतावच्छेदकावच्छिन्नत्वात् भवत्येव फलत्रयमपि। प्रसंगस्थलेऽपि तत्तदुपकारत्वं भिन्नं भिन्नमेव कार्यतावच्छेदकमिति भावः।

वस्तुतस्तु एकमृदो घटान्तरोत्पत्त्यनुपलब्धेः सामग्र्यन्तरं प्रतिबन्धकं वा कल्पयित्वा उपपत्तिरस्तु; कर्मणि च प्रत्यक्षाभावादेकस्मात् एककार्यतावच्छेदकावच्छिन्नमेकमेव जायत इति

णां शरीरान्तरारम्भद्वारैव फलसाधनतेत्यत्र किञ्चिन्नियामकमस्ति, येन केवलामुष्मिकत्वं भवेत्। न चैषां केवलैहिकत्वं, इह जन्मनि पुत्रपशुराज्यादिसत्त्वे तदयोग्यत्वेऽपि वा जन्मान्तरे तन्मे स्यादिति कामनाया दुरपह्नवत्वात्। अतो मुमूर्षूणामपि पश्वाद्यर्थं चित्राद्यनुष्ठेयमेव। यत्र तु वृष्ट्यादावैहिक एव कामना तत्र केवलैहिकत्वम्॥

---

नियमे प्रमाणाभावः। अस्तु वा तत् तथापि पुत्रार्थं कृतात् कर्मणो भिन्नकार्यतावच्छेदकावच्छिन्नं (अथवा यत्फलविषयकामनासंकल्पजन्यमपूर्वं तत्तत्फलजननानुकूलमपरमकामितं वा) स्वर्गाद्यंगीक्रियते कामितपापक्षयार्थं कृतात् नित्यप्रयोगादपि स्वर्गादि स्यात्। तथा च नित्यकाम्ययोरविशेषः स्यात्। अतोऽत्रैवं समाधेयं। तत्तत्कामपदोपात्तफलेषु यागादिषु तत्तत्फलकामनासंकल्पस्याङ्गत्वेन विधानात्तत्तत्संकल्पजन्यापूर्वस्य यावत्फलोत्पत्ति स्थायित्वकल्पनया कामपदोपात्तफलोत्पत्तिं प्रति तत्तत्संकल्पजन्यापूर्वस्य कारणत्वं षोडशिग्रहयागाभ्यासापूर्वस्य फलभूमापर्यन्तं स्थायित्ववत्।

अथ वा यत्फलविषयकामनासंकल्पजन्यमपूर्वं तत्तत्फलजननानुकूलपरमापूर्वनिष्ठयोग्यताजनकमित्येतावतापि—

मासपक्षतिथीनां च निमित्तानां च सर्वशः।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्॥

इति स्मृत्यवगतफलजनकत्वोक्तेः न फलोत्पत्तिं प्रति प्राधान्यापत्तिदोषग्रस्तं साक्षात्कारणत्वमितराङ्गविलक्षणं कल्प्यमुभयथापि, अत एव कामपदोपात्तानामपि पश्वादीनामकामितानां पूर्वसंकल्पाभावात् पुत्रार्थं कृतात्प्रयोगादनुत्पत्तिः पापक्षयादिकं तु न कामपदोपात्तफलमिति तत्रसंकल्पजन्यापूर्वे विद्यमानेऽपि पापक्षयादेः प्रयोगान्ते व्यवधानेनैवोत्पत्त्या कालांतरभावित्वानुरोधेन तदपूर्वे स्थायित्वानपेक्षणात् ज्योतिष्टोमस्य कारणस्य सत्वात् तत्रोत्पद्यत एव, यत्र तु द्वित्राणां कामना तत्र तावतां संकल्पात्तावन्त्यपि भवन्त्येवेति तन्त्रसारोक्तमेवायुक्तम्। एवं च केवलं पुत्रार्थकृतात् ज्योतिष्टोमात् नाकामितस्वर्गाद्युत्पत्तिः केवलनित्यप्रयोगात्तु अव्यवधानेनैव पापक्षयोत्पत्तेः अपूर्वस्य नाशादेव न कालान्तरभाविस्वर्गोत्पत्तिप्रसक्तिः। पापक्षयोत्पत्तिसमये तदुत्पत्तिः तत्तद्भोगयोग्यशरीराभावादेव निराकरणीया। अस्मिंश्च पक्षे पुत्रत्वपशुत्वादीनामेवोद्देश्यतावछेदकत्वोक्तावपि न क्षतिः विस्तरेणोपपादितश्चायं परिहारः पूज्यपादैः फलैकत्ववादे। यथा चैवं सति स्वर्गादिकामनानामपि अधिकारिविशेषणत्वमङ्गीकृत्य राजत्वादिवदङ्गत्वात् तज्जन्यापूर्वस्यैव कारणत्वमस्त्वित्याक्षेपः षष्ठे परिहरिष्यते इत्यलं

अस्तु वा वृष्ट्यादेरपि तादृशकामनासत्त्वे उभयरूपत्वम्। केवलैहिकत्वं तु पुत्रगत-पूतत्वादौ आहवनीयादौ च द्रष्टव्यम्॥ ९॥

---

(१०)—समवाये चोदनासंयोगस्यार्थवत्त्वात्॥ २९॥ कालश्रुतौ काल इति चेत्॥ ३०॥ नासमवायात्प्रयोजनेन स्यात्॥ ३१॥

"अग्निं चित्वा सौत्रामण्या यजेत" "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इत्य-ग्निवाजपेयप्रकरणे श्रुतम्। तत्र प्रकरणान्तरन्यायेन प्रसिद्धसौत्रामणीबृहस्पतिसवापेक्षया कर्मान्तरमेव तत्तद्धर्मकं अग्निवाजपेयपूर्वकालकत्वविशिष्टं विधीयते। तस्य च फलापेक्षायां प्रकरणादिना अग्निवाजपेयाङ्गत्वमविवादमेवेति तत्तत्प्रयुक्तत्वं तत्तत्कर्मान्तरस्य। समाप्तेऽपि बृहस्पतिसवाद्यतिरिक्ताङ्गविशिष्टवाजपेयादिप्रयोगे तदुत्तराङ्गमिदं फलानुकूलयोग्यतायाः

---

विस्तरेण। अस्तु वा वृष्ट्यादेरपीति। यत्तु यदि वर्षेत् तावत्येव होतव्यं यदि न वर्षेत् श्वोभूते हविर्निर्वपेदिति लिङ्गं तदिह जन्मनि वृष्टिकामनया कारीर्यनुष्ठाने फलप्राप्त्यप्राप्तिभेदे-नानुष्ठानप्रकारविशेषमात्रप्रापकं न तु तस्या ऐहिकफलत्वनियामकमिति भावः॥

---

॥ समवाये चोदना संयोगस्यार्थवत्त्वात्॥

प्रसिद्धेति। सौत्रामणी तु आश्विनं धूम्रमालभते सारस्वतं मेषमैन्द्रमृषभमिति वाक्य-विहिता, प्रसिद्धबृहस्पतिसवोऽपि यःपुरोधाकामः स्यात् स बृहस्पतिसवेन यजेत इति वाक्यविहितः स्पष्टः। तदपेक्षया प्रकरणान्तरन्यायेनापूर्वतया विधानात् कर्मान्तररूपमिदं द्वयमित्यर्थः। एवकारेण चात्र भावनाभेदमात्रं न कर्मभेद इति नक्षत्रवादावल्यादावुक्तं निरसनीयत्वेन सूचितमपि विस्तरभयान्नोपपाद्यते। यत्त्वत्र तन्त्ररत्ने अफलं श्रूयमाणं कर्म सफलवाजपेयसमभिव्याहृतं वाक्याद्वाजपेयाङ्गं, एवं च वाजपेयेनेति श्रुत्यनुग्रहोपि भवतीत्युक्तं, तन्न; वाजपेयपदस्य कालप्रति-योगित्वेनान्वितस्य उद्देश्यपरत्वाभावात् उपस्थितत्वात् तद्वाचकपदान्तरकल्पनापेक्षया प्रकरणादप्यु-पस्थितिसंभवाच्च अग्निमैवमृधाधिकरणानुत्थानापत्तेश्च इत्यभिप्रेत्याह—प्रकरणादिनेति। नचैतत् तन्त्ररत्नलिखनात् तत्प्रकरणे नास्त्येवैतद्वाक्यद्वयं इति युक्तं अग्निप्रकरणे श्रूयमाणोऽग्नेर्धर्मः गम्यते यागः। वाजपेयप्रकरणे च वाजपेयस्येति भाष्यकारलिखनेन एतत्प्रकरणपाठाध्यवसायात् प्रकरणान्त-रन्यायोपपादनासंगत्यापत्तेश्च मास्तु कर्मान्तरं अपूर्वान्तरकल्पनापत्तेः बृहस्पतिसवपदे धर्मलक्षणा-

त्मोपूर्वेनिष्ठाया जननार्थं न विरुद्ध्यते। अत्र च पूर्वपक्षो निर्बीजो गतार्थश्चेति नातीव त्रादरः। तत्तदधिकरणादेः प्रयोजनमात्रं तु शिष्यहितार्थं कथ्यत इति द्रष्टव्यम्। एवमन्यत्रापि यत्र पूर्वपक्षानुक्तिस्तत्रदमेव प्रयोजनं द्रष्टव्यम्॥ १०॥

११)—उभयार्थमिति चेत् ॥ ३२॥ न शब्दैकत्वात् ॥ ३३॥
प्रकरणादिति चेत् ॥ ३४॥ नोत्पत्तिसंयोगात् ॥ ३५॥

दर्शपूर्णमासयोः "संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपति" इति श्रुतो वैमृधोऽपि प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गम्। न च वाक्येन पौर्णमासीमात्राङ्गत्वावगमः, वाक्यस्थपौर्णमासीशब्दस्य ल्यप्प्रत्ययोपात्तकालप्रतियोगिसंस्थापदवाच्यसमाप्तिविशेषणत्वेनाङ्गिपरत्वाभावात्। तत्त्वे वा संस्थाप्येतिपदस्य साकाङ्क्षत्वापत्तेः। न च फलापेक्षायामन्यार्थमप्युपात्तस्योपस्थितत्वाद्रात्रिसत्रप्रतिष्ठावत्तद्वाचकपदान्तरकल्पनया पौर्णमासीमात्रार्थत्वमिति वाच्यं, प्रयाजादिवत् प्रकरणेनोभयार्थत्वक्लृप्तौ भ्रातृव्याभिभूतिवदेव पदान्तरकल्पनानुपपत्तेः। अतस्स्वतन्त्रकालविधानात्पौर्णमास्युत्तरकालमेव तद्दिने क्रियमाणोऽयमुभयाङ्गमुभयप्रयुक्त इति प्राप्ते—

प्रयाजेष्वकृतभ्रातृव्याभिभूतेः कल्पने गौरवाद्युक्तं विलम्बोपस्थितिकस्यापि कृतक्रतूपकारस्यैव फलत्वम्। प्रकृते तु पौर्णमास्युपकारस्यापि कृतत्वाद्युक्तं स्ववाक्योपस्थिततत्पदकल्पनया वाक्येनैव तन्मात्राङ्गत्वम्। अतश्चात्र पौर्णमासीप्रयोगसमाप्त्युत्तरकालविशिष्टं कर्मैव पौर्णमास्युद्देशेन विधीयते। न चैवं तस्यापि विकृतित्वादतिदेशेन "य इष्ट्वा"

---

पत्तेश्च इति पूर्वपक्षो वर्णितस्तत्रैव सोप्ययुक्त इत्याह—अत्रचेति। गतार्थ इति। प्रकरणान्तराधिकरणन्यायेनेति शेषः। समाप्तेपीत्यनेन सूचितः प्राचाममभिमतः प्रयोगः तन्निरासः अपूर्वाधिकरणे कौस्तुभे द्रष्टव्यः। प्रयोजनमात्रन्त्विति। प्रकरणान्तरसिद्धस्य भेदस्यात्राभावे पुरोधार्थबृहस्पतिसवो वाजपेयोत्तरमेव कार्यः न पूर्वं सिद्धान्ते तु कर्मान्तरस्यैव तदुत्तरत्वं तस्य तु अनियम इति प्रयोजनमित्यर्थः॥

---

॥ उभयार्थमिति चेत्॥

विकृतित्वादिति। इन्द्रदेवताकत्वसादृश्येन ऐन्द्रपयोयागविकृतित्वमथ वा तदपेक्षया अस्य एकादशकपालद्रव्यकत्वेन द्रव्यसादृश्यस्य बलवत्त्वात् इन्द्रदेवताकत्वादपि ऐन्द्राग्न—

इत्यादिवचनेन वा अमावास्याकालत्वापत्तेः, अनुशब्देन पौर्णमास्यानन्तर्यस्यापि विधेयत्वेन तद्बाधात्। नचैवमनुनिर्वाप्यदेविकाहविर्वत् प्रधानमात्रोत्तरत्वस्यैवापत्तेः प्रयोगबहिर्भावानापत्तिः। "संस्थाप्य" इत्यस्य वैयर्थ्यापत्तेः। "यच्छक्नुयात्तद्दद्यात्" इति दक्षिणाभेदाम्नानाच्च प्रयोगभेदस्य सङ्कर्षे वक्ष्यमाणत्वात्॥

उपयोगस्तु परमापूर्वजननानुकूलायां फलानुकूलायामेव वा समुदायापूर्वनिष्ठायां योग्यतायां द्रष्टव्यः॥

प्रयोजनं पूर्वपक्षे अमावास्यायां तन्त्रमध्ये वैमृधः कार्य इति तन्त्रसारः। तत्र स्वतन्त्रकालक्रमयोराम्नानात्। अतोऽमावास्याविकारेष्वतिदेशः प्रयोजनम्। यदा तु पार्वणहोमवदस्यापि विकृतावतिदेशो नेष्यते तदा सङ्कर्षे उभयोरुल्लेखः। सिद्धान्ते पौर्णमासस्यैवेति द्रष्टव्यम्॥ ११॥

---

विकृतित्वं सर्वथा अतिदेशेन व्यवस्थया य इष्ट्वेति वचनेन अव्यवस्थयापि वा अमावास्याकालप्राप्तिरित्यर्थः। **अनुनिर्वाप्येति**। द्वादशे हि तृतीयपादे अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् इत्यधिकरणे चयनानुबन्ध्ययोः "पशुपुरोडाशमनु देवसुवां हवींषि निर्वपति" "देविकाहवींषि निर्वपति" इति श्रुतानां अनुनिर्वाप्यानां हविषां पुरोडाशप्रयोगानन्तरमनुष्ठानमाशंक्य केवलपशुपुरोडाशप्रधानानन्तरं देविकाहविर्यागानुष्ठानं, पशुपुरोडाशयागानुष्ठानोत्तरं देविकाहविरङ्गानुष्ठानमित्येवंक्रमेण समानतन्त्रत्वं प्रसाध्य पशुपुरोडाशस्य तन्त्रित्वमनुनिर्वाप्याणां प्रसङ्गित्वमिति साधितं तद्वदिहापि कुतो न स्यादित्यभिप्रायः। **संकर्षे इति**। चतुरध्यायात्मकसंकर्षकाण्डमीमांसायामित्यर्थः। **आम्नानादिति**। यदि वाक्यान्तरेण वैमृधोत्पत्तिः स्यात् तदा तेनोत्पन्ने वैमृधे विधीयमानः पौर्णमासीसंस्थोत्तरकालः पुरावाचः प्रवदितोर्निर्वपेदिति न्यायेन पौर्णमासीविषय एवापद्यते इत्यमावास्यायामपि अनुष्ठानमापतेत् न त्वेतदस्ति कालक्रमविशिष्टस्यैवोत्पत्तेः। तत्रैव कर्तव्यतया प्राप्तेरित्यर्थः। **यदा त्विति**। **यद्यप्यत्र** पार्वणहोमयोः समुदायद्वयसंस्कारकत्वस्य नवमे साधयिष्यमाणत्वात् समुदायद्वयाभावेन च विकृतावनतिदेशः। इह तु पूर्वपक्षे वैमृधस्य प्रयाजादिवत् प्रत्येकं यागाङ्गत्वस्य उक्तत्वात् प्रत्येकाङ्गत्वादेव चामावास्याविकारेषु अतिदेशप्रयोजनस्योक्तेः तदुत्तरमनतिदेशाशङ्कैव नोदेतीति विषमः पार्वणहोमवदिति दृष्टान्तः तथापि यथैव समुदायरूपोद्देश्यलक्षणप्रयोजकाभावात्तयोरनतिदेशः एवमिहापि पौर्णमासीसमुदायोत्तरत्वरूपानुष्ठापककालाभावात् अनतिदेश इत्येवं केनचिदंशेन साम्यमभिप्रेत्य अनतिदेशाशङ्काशयः पूज्यपादानामिति ज्ञेयम्। अनयैव रीत्या काम्यानुवचनान्तराणामनङ्गभूतपूर्वपदार्थानन्तर्यानुरोधेन क्रतुबहिः प्रयोगो निरस्तः

ज्यपादैः कौस्तुभे। यद्यपि नाङ्गेषु पृथक्सङ्कल्पोऽस्ति प्रयाजादिष्वदर्शनात् तथापि इतराङ्गवत् तिदेशप्राप्तत्वात्तदनुष्ठानम्। अथ वा प्रधानसंकल्पेनैव तत्सिद्धेर्न तत् इत्येवं दीक्षणीयादिषु ाज्ञिकविसंवादेपि संकल्पितप्रधानप्रयोगसमाप्त्युत्तरं कर्तव्याङ्गेषु तदनुष्ठाने सर्वसम्मतं बृहस्पति- ावत् तदङ्गत्वेन कर्तव्यतासंकल्पोऽस्त्येवेति न बाधकमित्यर्थः।

अत्र च पौर्णमास्यङ्गत्वेपि न पार्वणहोमवत् तद्देवताकत्वेन तत्संस्कारकत्वं शङ्क्यं; तत्र हे मन्त्रवर्णप्राप्तपौर्णमास्यमावास्यादेवताप्राप्तेरुत्पत्तिवाक्ये पार्वणपदस्य नामधेयत्वेन देवतोच्चारणां- शेन तत्संस्कारकत्वेपि प्रकृते मन्त्रवर्णप्राप्तेन्द्रदेवताकत्वेन तदसंभवात्। नापीन्द्रदेवताकत्वात् ग्नाग्न्ययागोपयोक्ष्यमाणेन्द्रदेवतासारकत्वं शङ्क्यं; पूर्णमाससमुदायस्य अमावास्यासमुदाया- पेक्षया इन्द्राभावेन वैगुण्यशङ्कासमाधानपरेण "तेन पौर्णमासस्सेन्द्रो भवति" इत्यादिवाक्यशेषेण तदङ्गत्वमात्रप्रतीतेः। अतः आरादुपकारक एवाङ्गं पौर्णमास्या वैमृधयाग इति सिद्धम्।

**अत्र केचनाहुः** तेन वैमृधः पूर्णमासे अनुविर्वाप्यो भवतीति तैत्तिरीयशाखास्थे उत्पत्ति- वाक्ये पौर्णमासीकालविधानात् विद्वद्वाक्यग्रहणोपपत्त्या फलसम्बन्धात् ऐन्द्रं दध्यमावास्यायां तेना- मावास्या सेन्द्रा भवतीत्यनन्तरवाक्यविहितदधियागस्येव प्राधान्यमेव युक्तम्। तस्य च पाठक्रमात् आग्नेयादियागत्रयाव्यवधानेनानुष्ठानप्राप्तौ संस्थाप्येति शाखान्तरवचसा पौर्णमासीप्रयोगसमाप्त्यन- न्तरकालो नियम्यते। अर्थाच्च संस्थाप्रतियोगित्वेनान्वितस्य पौर्णमासीपदस्य वैमृधातिरिक्ताग्नेयादि- यागत्रयरूपपौर्णमासीपरत्वं; तथाचाग्नेयाद्यवान्तरप्रयोगान् समप्य वैमृधः कार्यः। एतत्सहितेनाग्नेयादि- त्रयेण समुदायापूर्वनिष्पत्तिः अनुशब्देनाव्यवहितानन्तर्यप्रतीत्या न द्वितीयपौर्णमास्यां करणप्रसक्तिः। **यद्यपि** एतदन्यथानुपपत्त्यैव पौर्णमासीकालोपि प्राप्यते **तथापि** उपांशुयाजवत् फलसंबन्धसिद्ध्य- र्थमुत्पत्तिवाक्ये कालसम्बन्धविधानं सार्थकं ; रूपं तु अङ्गत्वादिवत् सम्प्रतिपन्नमस्त्येवेति तेषां संस्थाप्य पौर्णमासीमिति वाक्यानुपपत्तिः स्पष्टमेव दूषणं पौर्णमासीपदार्थस्य वैमृधातिरिक्तत्व- कल्पनैव पौर्णमासीसमुदायात् बहिष्कारं वैमृधस्यावेदयतीति दिक्।

**वस्तुतस्त्वस्मिन्नधिकरणे** न वैमृधयाग उदाहरणं तेन पौर्णमासस्सेन्द्रो भवतीति तैत्तिरीय- शाखापठितार्थवादेन स्पष्टमेव पौर्णमास्यङ्गत्वनिश्चयेन पूर्वपक्षानुत्थानात्। अतो दर्शपूर्णमास- प्रकरणे तस्यामेव शाखायां द्वितीयप्रपाठके देवावै यज्ञेऽकुर्वत तदसुरा इत्युपक्रम्य यो भ्रातृव्यवान् स्यात् पौर्णमासं संस्थाप्य एतामिष्टिमनुनिर्वपेदिति वाक्यविहितेष्टिः विषयः। एतच्छब्देन च आग्ना- वैष्णवमेकादशकपालं सरस्वत्यै चरुं सरस्वते चरुमिति पूर्वनिर्दिष्टो गृह्यते। यथैव हि यो वै संवत्सर-

## (१२)—अनुत्पत्तौ तु कालस्स्यात्प्रयोजनेन सम्बन्धात् ॥ ३६ ॥

**सोमे "प्रहृत्य परिधीन् हारियोजनं जुहोति" "आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति" इति श्रुतम्। तत्र प्रहरणं तावत् द्वितीयया परिधिसंस्कारकं, परिधयश्च यद्यपि न सोमयागाङ्गं तथाऽपि तदङ्गसवनीयाद्यङ्गत्वेन प्राप्ता एवेति तेषां फलवत्त्वम्।** अतश्च **हारियोजनस्यापि यद्यपि नेदमुत्पत्तिवाक्यं, तथाऽपि तदुत्पत्तिवाक्ये फलाश्रवणात् तस्य परिधिप्रहरणाङ्गत्वम्। यद्यपि चायं सोमयागाभ्यास एव, तथाऽपि एतदभ्यासस्य परिधिप्रहरणाङ्गत्वे अभ्यासान्तराणां स्वर्गाद्यर्थत्वेऽपि** उद्गात्रपच्छेदनिमित्त**पुनः प्रयोगस्येव न विरुध्यते। एवं द्वितीयवाक्ये अनूयाजाः यद्यपि न सोमयागे प्रकृताः तथाऽपि तदङ्गसवनीयाद्यङ्गत्वेन सन्त्येव फलवन्तः।** आग्निमारुतशस्त्रस्य **तु यावत् प्रकरणात्क्रत्वङ्गत्वं**

---

मुख्यमभृत्वा अग्निं चिनोति यथा सामिगर्भो विपद्यते तादृगेव तदार्तिमार्च्छेत् वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत इति विहितेष्टेः कर्तृसमानाधिकरणयच्छब्दबलात् नैमित्तिक्या अपि क्रतुसंवलिततत्वात् क्रत्वङ्गत्वमित्यनुपदं वक्ष्यते। तथेयमपि नैमित्तिकी सती क्रत्वङ्गं प्रकरणात्। अत एव आग्नावैष्णव यागः सरस्वतीयागश्चारंभणीयायागद्वयापेक्षया कर्मान्तरं निमित्तरूपानुपादेयगुणसहकृतानुपस्थितेस्सत्वात्। अतश्चास्याः प्रकरणादुभयाङ्गत्वप्राप्तौ वाक्यात् पौर्णमासीमात्राङ्गत्वं नह्यत्र वैमृधे सेन्द्रत्ववत् अत्र विभज्य विनियोजकमस्ति, यो हि पौर्णमासीमेव यजेत भ्रातृव्यवान् नामावास्यामित्यर्थवादः स नाङ्गत्वव्यवस्थापकः द्वितीयायाः सप्तम्यर्थकत्वेन कालवाचकत्वात् अनुशब्दविहितानन्तर्यापेक्षितस्तुतिपरतया अविरुद्धत्वेन उभयाङ्गत्वे बाधकाभावात्।

वस्तुतस्तु अस्य वाक्यस्य भेदेनैव उत्पन्नभ्रातृव्यत्वादिनिमित्तवतः अमावास्यापरिसंख्याफलकपौर्णमासीमात्रानुष्ठानविधायकत्वस्यैव **आपस्तंबसूत्रादौ** दर्शितत्वात् नैतद्वाक्यशेषबलात् पौर्णमासीमात्राङ्गत्वसिद्धिः। अतो युक्तमेतदुदाहरणमित्यलं भूयसा विस्तरेण।

---

**॥ अनुत्पत्तौ तु कालः स्यात् ॥**

**अतश्चेति।** यतः परिधीनां फलवत्वेन तद्द्वारा तत्प्रहरणस्यापि फलवत्वं अत इत्यर्थः। **उद्गात्रपच्छेदेति।** उद्गात्रपच्छेदे प्रारब्धस्य ज्योतिष्टोमस्य अदक्षिणप्रयोगसमाप्त्या प्रायश्चित्तार्थस्यापि पुनः प्रयोगः स्वर्गार्थः तथेहापि अभ्यस्यमानस्य सोमयागस्य उभयार्थत्वेपि न क्षतिः। **आग्निमारुतशस्त्रस्य त्विति।** आग्निमारुतं शंसतीत्यनेनोत्पन्नस्येति शेषः। **अङ्गभूतेति।**

कल्प्यते तावत् वाक्येनैवानूयाजाङ्गत्वम्। न चात्र वैमृधवत्पदान्तरकल्पनाऽपि, अङ्गभूतकालविशेषणत्वेनैवाङ्गत्वोपपत्तेः। न च वैमृधवदस्यानुत्पत्तिवाक्यत्वादुत्पत्तिवाक्ये च फलापेक्षायां प्रकरणात्क्रत्वङ्गत्वकल्पनेति सूक्तोक्तं युक्तं, उत्पत्तिवाक्ये तदपेक्षायामपि इष्टसामान्यस्य भाव्यत्वमङ्गीकृत्य वाक्यान्तरेण विनियोगोपपत्तौ दुर्बलप्रमाणेन अङ्गत्वकल्पनानुपपत्तेरिति प्राप्ते—

हारियोजनस्य तावज्ज्योतिष्टोमत्वेनैव स्वर्गादिरूपस्य फलस्य क्लृप्तत्वान्न वैमृधन्यायेन पदान्तरकल्पनया प्रहरणाङ्गत्वे प्रमाणमस्ति। आग्निमारुतस्य तु यद्यपि न विशिष्य वाक्येन क्रत्वङ्गत्वं, तथाऽपि "द्वादशाह्नोऽग्निष्टोमः" इत्याद्यनन्यथासिद्धलिङ्गोपष्टब्धप्रकरणवशेनैव क्रत्वङ्गत्वसम्भवे वाक्येनाङ्गत्वकल्पनायोगः॥

वस्तुतस्तु प्राप्तानूयाजोद्देशेन ऊर्ध्वत्वस्य आग्निमारुतस्य च विधौ वाक्यभेदापत्तेः परस्परान्वयित्ववादिनां प्राचामपि विशेषणविधिकल्पनागौरवापत्तेर्नानेन वाक्येन आग्निमारुतस्यानूयाजाङ्गत्वेन विधानम्। अत एव "आग्निमारुतादूर्ध्वं" इत्यत्र पदद्वयेन लक्षणया तत्प्रतियोगिकोर्ध्वकाल एवानूयाजोद्देशेन विधीयते। "दर्शपूर्णमासाभ्यामिष्ट्वा" इत्यादौ तु तृतीयान्तस्य इष्ट्वेत्यत्रैवान्वयान्न लक्षणेति ध्येयम्॥

वस्तुतस्तु न प्रकृतेऽपि लक्षणा, "तां चतुर्भिः" इतिवद्विशिष्टभावनाबोधेऽपि ऊर्ध्वत्वमात्रविधिफलकतया विधेयानेकत्वाभावात्॥

---

यद्यप्यत्र पदान्तरकल्पनं विना आग्निमारुतस्य अनूयाजाङ्गत्वं कालविशेषणत्वेनोच्यते तर्हि परिधिप्रहरणस्यापि कालद्वारा हार्योजनाङ्गत्वमित्येव पूर्वपक्ष्यतां; कथंचित् फलवत्वस्य ममापि सूपपादत्वात् अथवा परिधिप्रहरणवदेवाग्निमारुतस्याङ्गित्वमेव पूर्वपक्षितुं युक्तम्। पूर्वाधिकरणयोः कालप्रतियोगित्वेनान्वितानां अङ्गित्वस्यैव प्रक्रमात्। अतएव प्राचीनैराग्निमारुतानूयाजयोः संबन्धमात्रमित्येवोक्तं, न तु किंचिन्निष्ठाङ्गित्वाङ्गत्वरूपो विशेषः तथापि प्राप्तिकाल एव प्रापकप्रमाणातिदेशेनानूयाजप्रहरणयोः निर्ज्ञातफलत्वात् अन्याङ्गतानुपपत्त्या पूर्वपक्षासंभवात् हार्योजनस्य वाक्यान्तरेण स्वर्गार्थत्वस्येव अनेनाविशेषात् प्रहरणाङ्गत्वस्य आग्निमारुतस्याप्युत्पन्नस्य प्रकरणगमितान्याङ्गताबाधेन प्रबलेनानेन वाक्येनानूयाजाङ्गत्वस्य च पूर्वपक्षे सूपपादत्वात् वैषम्येण तत्करणमिति पूज्यपादानामभिप्रायः। इष्ट्वेत्यत्रैवेति। अस्मन्मते कृदादिभिरपि लक्षणया कृत्यभिधानात तस्याश्च लिङ्गानन्वयिपदोपस्थाप्यत्वात् आख्यातार्थ इव कारकाणामन्वयस्य व्युत्पन्नत्वात्। अतएव परिधिप्रहरणवाक्ये न लक्षणेति भावः। तां चतुर्भिरित्तिवदिति। अर्थप्राप्ते अग्र्यादाने

**प्रयोजनं पूर्वपक्षे सवनीयविकारे सोमयागाङ्गे हारियोजनाग्निमारुतयोः करणम्। सिद्धान्ते नेति ॥ १२ ॥**

---

(१३)—उत्पत्तिकालविशये कालस्स्याद्वाक्यस्य तत्प्रधानत्वात् ॥ ३७ ॥

सोमप्रकरण **एव "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति श्रुतम्। तत्र यद्यपि फलार्थतया सोमयागस्य फलसत्वात् प्रकृतप्रत्यभिज्ञाबलेन न कर्मान्तरत्वाशङ्का, तथाऽपि प्रकरणान्तरन्यायेन दर्शपूर्णमासधर्मकस्यैव कर्मान्तरस्य फलवत्सोमयागोद्देशेन विधेय-** पूर्वकालविशेषणतया **विधानम्। न चात्र वाक्यभेदः परस्परान्वयस्य व्युत्पन्नत्वा-दिति प्राप्ते—**

---

यावन्मन्त्रलिङ्गाच्छ्रुतिकल्पनया मन्त्राणामङ्गत्वेन प्राप्तिः ततः पूर्वमेवानेन वाक्येन समुच्चयफलक-विशिष्टविधिः स्वीकृतः प्रथमे मन्त्राधिकरणे। एवमिहापि सवनीये अतिदेशप्राप्तेः पूर्वमेवोर्ध्व-त्वमात्रफलको विशिष्टविधिरिति न वाक्यभेदप्रसक्तिरित्यर्थः।

---

॥ उत्पत्तिकालविशये ॥

**यत्त्वत्र कैश्चिदुक्तं** एष वै देवरथो यद्दर्शपूर्णमासौ इत्यनन्तरं दर्शपूर्णमासप्रकरणे दर्श-पूर्णमासाविष्ट्वा सोमेन यजेतेति वाक्यस्याम्नानात् अनुपादेयगुणयोगात् प्रसिद्धसोमयागात् स्वतन्त्र-मेवेदं सोमयागाख्यं कर्मान्तरं बृहस्पतिसववत् प्रकरणाद्दर्शपूर्णमासाङ्गमेवेति व्यर्थोयं कालार्थ-संबन्धविचार इत्युक्तं तन्निराकर्तुमाह-**सोमप्रकरण एवेति। अयंभावः।** एष वै देवरथ इत्यादीनां तु वैशब्दोपबन्धात् स्फुटमेवार्थवादत्वं तन्मध्यपतितत्वात् यो दर्शपूर्णमासाविष्ट्वा सोमेन यजत इति विध्याभासोपि कर्तृसमानाधिकरणयच्छब्दसत्वाच्च नैव विधिः। अत एव भाष्यकारेण अत्रैत-द्वाक्यमुदाहृत्य कालार्थः संबन्ध इत्यधिकरणार्थमुपसंहृत्य तद्दर्शयतीत्युपक्रम्य एष वै देवरथ इति तैत्तिरीयानुपूर्वी मध्ये परामृश्य अयमर्थवादोऽर्थवान् भवतीत्यर्थवादत्वेन एष वै इति भाग उपन्यस्तः। अतः तैत्तिरीयार्थवादसंदशपतिताद्दर्शपूर्णमासाविष्ट्वा इति वाक्यात् स्वतन्त्रमन्यदेवैतद्वाक्यं सोम-प्रकरणेऽस्ति इत्येवकारेण सूचितम्। यद्यप्यत्र भाष्यकारेण दर्शपूर्णमासादिष्टवेति द्वितीयाद्विवचनान्तं पठितं तथापि **शास्त्रदीपिकायां** तृतीयाद्विवचनान्तं पठितमित्यभिप्रायेण मूलकृता पठितमिति न विरोधः। अत्र सोमयागस्य कर्मान्तरत्वमंगीकृत्य तस्य दर्शपूर्णमासाङ्गतया विधानमिति **प्राचीनैः** सूचितं पूर्वपक्षमयुक्तं दर्शयन् पूर्वपक्षमाह-**तत्रेति। पूर्वकालेति। यद्यत्र उत्तरकालत्वमर्थः**

"**सर्वेभ्यो दर्शपूर्णमासौ**" **इत्यादावाख्यातासमानाधिकरणत्वेन व्यवहितपरामर्शकत्वस्य कौस्तुभादौ स्थापितत्वात्** कर्मान्तरत्वानुपपत्तेः **स्वफलप्रयुक्तदर्शपूर्णमासपूर्वकालकत्वस्यैव सोमयागोद्देशेन विधानमिति कालार्थ एवायं संयोगः ॥**

**प्रयोजनं पूर्वपक्षे सोमारम्भात्पूर्वस्मिन्** पर्वणि **दर्शपूर्णमासधर्मकं कर्मान्तरं सद्यस्काले कृत्वा द्व्यहकाले दर्शो वा पूर्णमासो वा** कार्यः। **सिद्धान्ते नेति ॥ १३ ॥**

---

स्यात् तदा अनुपादेयगुणयोगो विद्यमानो न व्यधिकरणं दर्शपूर्णमासधर्मकं कर्मान्तरमापादयिष्यतीति पूर्वपक्षसिद्धिर्न स्यात् अतः दर्शपूर्णमासानुयोगिकः पूर्वकालः प्रतियोगित्वसंबन्धेन सोमयागोद्देशेन विधीयत इति शाब्दोऽर्थः। अर्थाच्च सोमयागप्रतियोगिकपूर्वकालान्वयः दर्शपूर्णमास इति समानाधिकरणदर्शपूर्णमासपदयोः कालसंबन्धात् सिद्धं कर्मान्तरत्वमिति भावः। यद्यत्र विधायकमाख्यातं भवेत् तदा तेन विहितस्य विधानायोगेन विजातीययागविधानात् नामापि तत्परतन्त्रं भवेत् न त्वेतदस्ति। अतोऽत्र नामैव स्वतन्त्रं सत् व्यवहितदर्शपूर्णमासस्मारकमिति न कर्मान्तरमित्यभिप्रेत्याह— **कर्मान्तरत्वानुपपत्तेरिति। पूर्वस्मिन् पर्वणीति।** अत्र यद्यपि सोमयागप्रतियोगिकपूर्वकाले विधीयमानमपि कर्मान्तरं सोमयागाङ्गं सोमयागप्रयोगबहिर्भूतमित्यत्र न प्रमाणं वाजपेयेनेति तृतीयाश्रुत्या साङ्गवाजपेयप्रयोगोत्तरं बृहस्पतिसवप्रयोगविधानात् स्वकालबाधे प्रमाणाभावेन पर्वण्यनुष्ठानवदिह पर्वप्रतीक्षणे प्रमाणाभावात्। न चेहापि सोमेनेति तृतीयाश्रवणात् साङ्गसोमयागप्रतियोगिकपूर्वकालविशिष्टकर्मविधाने अर्थात् प्रयोगबहिर्भाव इति युक्तम्। सोमपदस्य रूढत्वेन द्रव्यपरस्य नामत्वाभावस्य स्पष्टतरं तन्त्ररत्ने उक्तेः। सोमद्रव्यकप्रधानयागमात्रपरत्वात् सोमपदस्य कर्मपरत्वेपि वा सोमप्रकरण एवेति अधिकरणोपक्रमे स्वयं वाक्यपाठोक्तेः। अस्यानुत्पत्तिवाक्यत्वेन यागस्य करणत्वेनाप्यन्वयाभावाच्च। अतो नामातिदेशप्राप्तद्व्यहकालत्वस्य य इष्ट्वेति वाक्यविहितसद्यस्कालत्वेन बाधेऽपि एकप्रयोगविध्यवगतस्याङ्गप्रधानयोः अव्यवधानानुष्ठानरूपसाहित्यस्य निर्वाहाय प्रधानभूतसोमयागपर्वानुग्रहाय च दीक्षणीयादीष्टिष्विव सोमसङ्कल्पारंभानन्तरमेवानुष्ठानं पूर्वकाले युक्तं न तु व्यवधानेन पूर्वस्मिन् पर्वणि, तथाप्युत्पत्त्यनन्तरमेकप्रयोगविधिसंग्रहेण अव्यवहितानन्तर्यक्रमापेक्षायां लक्षणया क्त्वाप्रत्ययस्य तत्परत्वसत्वेपि उत्पत्तिवेलायां तदनपेक्षणे लक्षणायां प्रमाणाभावात् तत्पदार्थगतबद्धक्रमाविरोधेन पूर्वकालत्वमात्रग्रहणे पर्वानुरोधो युक्त एव। **यदा** तु यत्र पाठस्तत्रैव तत न तु पूर्वपर्वणि इत्युच्येत तदा क्त्वाप्रत्ययश्रुतिवैयर्थ्यापत्त्या पूर्वकालपरत्वस्याङ्गीकारेण श्रौतेन कालेन पाठक्रमस्य बाधात् तत्र तदनुष्ठानं कथंचित् समर्थनीयमिति। **कार्य इति।** एतच्चारब्धदर्शपूर्णमासकस्य

(१४)—फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥ ३८ ॥ अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥ ३९ ॥

वैश्वानरेष्टिस्तावत् पूतत्वाद्यार्थवादिकफलार्था, सत्यपि निमित्तसंयोगेनाकरणे प्रत्यवाये भावनाभाव्यत्वेन पापक्षयापेक्षया पूतत्वादेरेव लघुभूतस्यान्वयात्। सा च पुत्रगतपूतत्वादिफलप्रयुक्ता, उत कर्तृगतपूतत्वादिफलप्रयुक्तेति चिन्तायां—

विधिना कर्तृसमीहितस्यैवाक्षेपात् आधानगतात्मनेपदेन चाग्निप्रयोज्यफलस्यात्मगामित्वावगतेरिष्टिकर्तुरेव फलम्। न च "यस्मिन् जाते" इत्यादिना धर्मिग्राहकप्रमाणेन पूतत्वादेः पुत्रगतत्वावसायः, तस्यापि "स तेजस्वी" इति सर्वनाम्ना निर्वपतिकर्तुरेव समानाधिकरणविभक्तिनिर्दिष्टस्य परामर्शेनाविरोधित्वादिति प्राप्ते—

यच्छब्दसमभिव्याहारे सति तच्छब्दस्य तदर्थपरामर्शित्वनियमेन पुत्रगतपूतत्वादेरेव फलत्वावसायात्, तस्यापि कर्तृसमीहितत्वेन विध्यात्मनेपदयोरविरोधात् पुत्रगतपूतत्वादिप्रयुक्तैव सा। अकरणे प्रत्यवायस्तु कर्तृनिष्ठ एव।

प्रयोजनं पुत्रमरणेऽपि जातेष्टिः, पितरि फलिसंस्कारश्च पूर्वपक्षे। सिद्धान्ते नेति। उल्लेखो वा ॥

एवं वा—इयमिष्टिः पुत्रजननान्तरमेव कार्या, सप्तम्या जननस्य निमित्तत्वावगमेन निमित्तानन्तरं नैमित्तिकस्योचितत्वात्। न चात्र सप्तम्या जननोत्तरकालविधिरिति तन्त्रसारोक्तं युक्तं, "पुत्रे" इति सामानाधिकरण्यानुपपत्तेः। अतो 'भिन्ने' इतिवत् निमित्त-

---

वास्तवानुष्ठानमात्रकथनं, न तु पूर्वपक्षिणस्तदावश्यकं तदानीं तदनुष्ठानेपि तैत्तिरीयशाखास्थपूर्वोक्तार्थवादसरूपविधिबोधितदर्शपूर्णमासोत्तरत्वस्य सोमे सकृत् पूर्वं कृतदर्शपूर्णमासकस्यापि संभवेन सोमारंभोपपत्तेः अनियतत्वेन पूर्वपर्वणः प्राप्त्यभिप्रायेण वाशब्दप्रयोगः कृतः।

---

॥ एवं वा ॥

जात इति क्तप्रत्ययस्य भूतकालीनभावार्थकत्वमङ्गीकृत्य सप्तम्या जननभूतकालस्यैवाधिकरणत्वोक्तेः जननभूतकाले तद्विधिप्रतीत्या जननोत्तरकालविधिरिति तन्त्रसारोक्तपूर्वपक्षमाशङ्क्य निराकरोति— न चात्रेति। भिन्न इतिवदिति। यद्यत्रोत्तरकालत्वमर्थः तर्हि भिन्न इत्यत्रापि

परैव सप्तमी । सापेक्षत्वाच्च हविरार्तिन्यायेनोभयविवक्षा । यद्यपि पुत्रमात्रं निमित्तं स्यात्, तथाऽपि निमित्तानन्तर्यलाभेन नैमित्तिकस्य आशौचकालबाधेनाप्यनन्तरमेव करणम् । न च स्तन्यपानाभावे पुत्रमरणेन शेषिविरोधापत्तिः, जातकर्माङ्गभूतस्य घृतमधुप्राशनपूर्वकवैधप्राथमिकदक्षिणस्तन्यप्राशनस्योत्तरकालत्वेऽपि रागतो यत्किञ्चित्प्राशनस्य सम्भवेन मरणानापत्तेः । न च जननानन्तर्यस्य जातकर्मण्यप्यावश्यकत्वाद्विनिगमनाविरहः, प्रत्यक्षश्रुतिविहितत्वस्यैव नियामकत्वादिति प्राप्ते—

जातकर्मणो नाळच्छेदपूर्वभावविधानात् अच्छिन्ननाळस्य प्राशननिषेधादिष्टेर्जननानन्तरमेव करणे मरणापत्तेश्शेषिविरोधापत्त्या उत्कर्षः । न च निमित्तश्रुत्यनुरोधेन स्मार्तनिषेधस्यानाहिताग्निपरत्वं, भूतनिमित्तस्थले निमित्तस्य नैमित्तिकानुष्ठापनमात्रे विधेस्तात्पर्येणानन्तरानुष्ठानस्यासति बाधके उत्सर्गसिद्धत्वेन निमित्तश्रुत्यविरोधान्निषेधसङ्कोचानुपपत्तेः ॥

वस्तुतस्तु—निमित्तत्वमनन्तरमवश्यानुष्ठापकत्वरूपमेव । अन्यथा भेदनहोमादेरपि पदार्थगतक्लृप्तक्रमबाधानुरोधेन अन्ते करणापत्तेः । जातकर्मनामकरणादौ मलमासादाव-

---

भेदनोत्तरकालस्यैव विधानापत्तेः तस्य च बद्धक्रमकक्लृप्तपदार्थाबाधेनाप्युपपत्तेः अव्यवहितमेवानुष्ठानं होमस्य नापद्येत । अतोऽवश्यं सामानाधिकरण्याबाधाय नैमित्तिकत्वबोधनद्वारा निमित्ताव्यवहितानन्तर्यलाभाय च निमित्तसप्तम्येव तत्र युक्ता तद्वदिहापीति भावः । ननु भिन्ने जुहोतीत्यत्रैव गोषु दुह्यमानासु गत इत्यादाविव सप्तम्याः कालपरत्वमेवास्तु सामानाधिकरण्यं चोपपद्यत इति चेन्न—तत्र सायंकालीनत्वेन निर्ज्ञातकालत्वस्योपलक्षणक्रियायां संभवेन तत्कर्मवाचकात् सप्तमीप्राप्तावपीह भेदनकालस्य पूर्वमनवगतस्य भेदनक्रिययैवोपलक्षणीयत्वेन निर्ज्ञातकालक्रियाभावात् तत्संबन्धिकर्मवाचकपदात् सप्तमीप्राप्तिसंभवात् भेदनोपलक्षितत्वस्यापि कालेनैव विधिना बोधने गौरवाच्च । अतो निश्चितकालक्रियाकर्मकर्तृवाचकपदात् उत्पद्यमाना सप्तमी निमित्तत्वपरैवेति ध्येयम् । **आशौचकालबाधेनापीति** । आशौचोत्तरकालबाधेनापीत्यर्थः । अथ वा आशौचनिषिद्धकालबाधेनापीत्यर्थः । **मरणापत्तेरिति** । यदुक्तं रागप्राप्तयत्किंचित्प्राशनं भविष्यतीति प्रथमत एव रागप्राप्ते प्राशने घृतमधुप्राशनपूर्वकदक्षिणस्तन्यद्रव्यनियमात् तदप्रसक्तेः अत्र तन्त्ररत्ने कथं तर्हि भेदनहोमो नित्यपदार्थक्रमबाधेनानन्तरमेव स्यात् तस्याशब्दत्वात् उत्तरकालाभिधानेऽविरोधेन अन्ते करणापत्तिः इत्याशंक्य निमित्तानन्तर्यं नैमित्तिकत्वात् नित्यपदार्थक्रमं बाधित्वा निविशते अतो न दोष इति समाहितम् । तस्याभिप्रायं प्रकटयति **वस्तुतस्त्विति** । **अन्यथेति** । नह्यत्र नैमित्तिकस्य गोदोहनवद्विरोधोऽस्ति येन नित्यबाधः

नुष्ठानानुपपत्तेश्च । अतो निमित्तश्रुतिविरोधेऽपि जातकर्मणोऽपि निमित्तानन्तर्यश्रवणाद्-वश्यमन्यतरस्य तद्बाधे निषेधस्यापि सङ्कोचापत्त्या जातेष्टावेव तद्बाधः । वरं हि स्मार्तानामप्यनेकेषां बाधे श्रौतस्याप्येकस्य बाधः, प्रमेयबलाबलस्य बलवत्त्वात् । अतो यत्रैवैतादृशं बलवद्बाधकं विशिष्य कालविधिर्वा तत्रैवागत्याऽऽनन्तर्याघटितमेव निमित्तत्वं लक्षणया आश्रीयते । अतश्च तत्कालातिदेशेन प्राप्तानां सामान्यविहितानां वा शौचकालादीनां बाधे प्रमाणाभावादाशौचापगमे मलमासादिरहिते शुद्धे पर्वणि जातेष्टिः कार्या ॥

---

## (१५)—प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥ ४० ॥ अप्रवृत्ते तु चोदनात् तत्सामान्यात्स्वकाले स्यात् ॥ ४१ ॥

बृहस्पतिसवो वाजपेयोत्तरं शरद्येव कार्यः । यद्यपि हि क्त्वाप्रत्ययेन नानन्तर्यमभिधीयते, पूर्वकालमात्रे स्मरणात्, तथाऽपि औपदेशिकशरत्कालस्य साङ्गप्रधाने विहितत्वेनाद्भिः प्रयाजादिष्वग्नेरिवातिदेशिकस्य वसन्तादिकालस्य बाधोपपत्तिः । एवं सौत्रामण्यपि चयनाङ्गत्वात्तदुत्तरकालमेव कार्या । न तु पर्वणि यागप्रयोगोत्तरकालीने, तदानीं चयननियमादृष्टस्य नष्टत्वेन सौत्रामण्या अनुपयोगात् । न हि सा क्रत्वङ्गं, धातुसम्बन्धाधिकारविहितेन क्त्वाप्रत्ययेन चयनमात्राङ्गत्वप्रतीतेरिति प्राप्ते—

शरत्कालस्य वाजपेयप्रयोगविशेषणत्वेन विधेयत्वात् "वाजपेयेनेष्ट्वा" इति तृतीयया बृहस्पतिसवस्य तत्प्रयोगबहिर्भावावगतेस्तत्र शरद्विध्यभावात्कालापेक्षायां नामातिदेशप्राप्तवसन्तादिबाधे प्रमाणाभावः ।

---

स्यात् एककार्यकत्वाभावात् निमित्तोत्तरकालानुष्ठानकृतो विरोधो हि नित्यानुष्ठानस्य तस्य च नित्यानुष्ठानाबाधेन सर्वान्ते करणेनापि उपपत्तेः अविरोधः संभवत्येव । अतो नात्र नैमित्तिकत्वमात्रेण बाधः । किंतु निमित्तशरीरान्तर्गतानन्तर्यबाधापत्तेरिति भावः ।

---

॥ प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम् ॥

अद्भिरिति । अप्स्ववभृथेन चरन्तीति विहिताब्देशेन आहवनीयादेरित्यर्थः । तदानीमिति । चयनस्य स्थण्डिलनिष्पादकतया दृष्टार्थत्वेन नियमादृष्टमात्रजनकत्वेपि अपूर्वान्तराजनकत्वात् तस्य च क्रतुकरणे सति तदुत्पत्त्यपूर्वेणैव नष्टत्वात् क्रतुप्रयोगसमाप्त्यनन्तरं करणे चयनजादृष्टेऽनुपयोगेन चयनाङ्गत्वानुपपत्तेरित्यर्थः । नामातिदेशेति । बृहस्पतिसवेति गौणेन

एवं सौत्रामण्यामपि न पर्वबाधः, "अग्निं चित्वा" इत्यनेन हि चयनेन क्रत्वपूर्वसाधनीभूताग्निं संस्कृत्येत्यर्थावगतेः क्र्यंशचयनभावनोत्तरकालत्वसिद्धिः। न चानुपयोगः, चयनप्रयोज्यक्रत्वपूर्वोपयोगेऽपि चयनाङ्गत्वोपपत्तेः। न त्वेतावता क्रत्वङ्गत्वमिति तन्त्रसारोक्तं मन्तव्यं प्रमाणाभावात्। "क्रत्वङ्गत्वं वा चित्यङ्गत्वे नोपपद्येते" इति सङ्कर्षणसूत्रं तु क्रत्वपूर्वोपयोगाभिप्रायं व्याख्येयम्। अत एतेऽपि कालप्रयोजकाः॥ १५॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
चतुर्थाध्यायस्य तृतीयः पादः

---

नाम्ना पुरोधार्थबृहस्पतिसवातिदेशेन प्राप्तस्य वसन्तस्य बाधे प्रमाणाभावादित्यर्थः। चयनाश्रितानां श्येनाकारतादिगुणानां फलवत्त्वेपि चयनस्य स्वतो निष्फलत्वेनानुपयोगमाशङ्कते— **नचानुपयोग इति**। न च क्रतोरनुपस्थितिः, आनर्थक्यपरिहाराय चिञ्धातुना क्रत्वन्तलक्षणाया आवश्यकत्वात्। **संकर्षसूत्रं त्विति**। इदं हि प्रथमाध्यायसंकर्षकाण्डस्थं सप्तमाधिकरणसूत्रं; तत्र हि अग्निमिति द्वितीयाश्रुत्या संस्कार्यत्वावगमात् पवमानेष्टिवत् अग्निसंस्कारिकैव सौत्रामणीत्याद्यं पूर्वपक्षमव्यवधानात् क्त्वाप्रत्ययश्रुतेश्च चीयमानाङ्गत्वस्यायुक्तत्वात् निराकृत्य चयनाङ्गत्वमेवेति द्वितीयपूर्वपक्षोत्तरत्वेन व्याख्यातम्। प्रयोजनं संकल्पे तत्तत्कालोल्लेखः।

इति श्रीपूर्वोत्तरमीमांसापारावारपारीणधुरीणश्रीखण्डदेवान्तेवासि-
कविमण्डनशंभुभट्टविरचितायां भाट्टदीपिका-
प्रभावल्यां चतुर्थस्य तृतीयः पादः

---

# अथ चतुर्थाध्यायस्य चतुर्थः पादः.

(१)—प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥ अपि वाऽङ्ग-मनिज्यास्स्युस्ततो विशिष्टत्वात् ॥ २ ॥

राजसूयप्रकरणे इष्टिपशुसोमयागाः अयागाश्च होमविदेवनादयस्सर्वे फलाकाङ्क्षा अपि श्रुता न स्वाराज्येन फलेन सम्बध्यन्ते, भावार्थाधिकरणन्यायेन यजेरेव फलभावना-करणत्वादयागानां तदङ्गत्वोपपत्तेः। राजसूयपदस्य यजिसामानाधिकरण्येन तन्मात्रनाम-त्वाच्च। न च राजा सोमः सूयते अभिषूयते अस्मिन्निति व्युत्पत्त्या राजसूयशब्दस्य सोमयागमात्रवाचित्वात् तेषामेव फलसम्बन्धोऽस्त्विति वाच्यं, राज्ञा क्षत्रियेण सूयते निष्पाद्यते इति व्युत्पत्त्या सर्वेष्वप्युपपन्नत्वेन यजिसङ्कोचे प्रमाणाभावात्। अत एव राजा क्षत्रियः सुनोति स्नाति यत्रेति व्युत्पत्त्या अभिषेचनीयस्यैव तन्माहेन्द्रस्तोत्रकालाभिषेकव-त्त्वसम्बन्धेन राजसूयपदप्रसिद्धेस्तस्यैव फलसम्बन्ध इत्यप्यपास्तं, उक्तव्युत्पत्त्या सर्वपरत्व-सम्भवे यजिसङ्कोचे प्रमाणाभावात्। अतस्सर्वे यागा एव फलप्रयुक्ता इति विदेवनादीनां तद्विकृतावतिदेशः।

---

(२)—मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥ सर्वासां वा समत्वाच्चोदनात-स्स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥

विदेवनादीनामत्राङ्गत्वे सिद्धे सन्निधानादवान्तरप्रकरणाद्वा अभिषेचनीयमात्राङ्गत्व-स्य तृतीय एव निराकृतत्वात् सर्वराजसूयाङ्गत्वस्यैव महाप्रकरणादवगतेः सर्वप्रयुक्तत्वम्। तार्तीयाधिकरणप्रयोजनकथनार्थं चेदमधिकरणम् ॥ २ ॥

---

॥ प्रकरणशब्दसामान्यात् ॥

तृतीय एवेति। श्रुतिलिङ्गादीनां प्राबल्यदौर्बल्यविचाराधिकरणे स्थानप्रकरणविरोध-विषयप्रदर्शने तृतीये निराकृतत्वादित्यर्थः।

---

(३)—प्रकरणाविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥ अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥

राजसूय एव "सौम्यश्चरुर्वभ्रुर्दक्षिणा" इति विधाय "पुरस्तादुपसदां सौम्येन प्रचरन्ति" इति श्रुतम्। तत्रापि सत्यप्युपसदां राजसूयान्तर्गतदशपेयाख्यसोमयागाङ्गतया फलवत्त्वे षष्ठ्याः पुरस्ताच्छब्दस्य वैयर्थ्यप्रसङ्गेन "षष्ठ्यतसर्थप्रत्ययेन" इति सूत्रानुसाराद्दिग्योगनिमित्तायास्तादर्थ्यपरत्वाभावात् सौम्यस्य तदर्थत्वानुपपत्तेः, दीक्षणीयावत् पदान्तरकल्पनया तदर्थत्वस्य चानुत्पत्तिवाक्यतयाऽनुपपत्तेः, उत्पत्तिवाक्ये च फलापेक्षायां सामान्यविधिनाऽपि क्लृप्तेन स्वाराज्यफलार्थत्वस्यैवावगमात्कालार्थ एव संयोगः ॥

वस्तुतस्तु उत्पत्तिवाक्यत्वेऽपि प्रवर्ग्यन्यायेन उपसच्छिष्टफलवत्त्वज्ञानस्य स्वाराज्यवाक्याधीनत्वात्तदर्थत्वमेव युक्तम्। अतस्सौम्यः फलभागेव एव पाठक्रमात्पूर्वपठितकर्मा-

---

॥ प्रकरणविभागे च ॥

वस्तुतस्त्वित्यादि। नन्वनेन न्यायेन दीक्षणीयास्वरस्यापि दीक्षणीयायाः फलवत्वाभावेन तदर्थं ज्योतिष्टोमोपस्थितेरावश्यकत्वात् तद्वाचकपदान्तरकल्पनया तदर्थत्वापत्तिः। एवमग्निं चित्वेति वाक्यविहितसौत्रामण्या अपि क्रत्वङ्गत्वापत्तिः। ततश्च तंत्रसारोक्तखण्डनं पूर्वोक्तमसंगतमापद्यत इति चेत् सत्यं तथापि दीक्षणीयायाः फलवत्वज्ञानार्थं ज्योतिष्टोमोपस्थितिस्तावत् प्राकरणिक्येव। तच्च प्रकरणं यावत् ज्योतिष्टोमवाचकं पदान्तरं कल्पयित्वा अङ्गताबोधकं ततः पूर्वमेव प्रत्यक्षवाक्येन दीक्षणीयाङ्गत्वस्यैव बोधनात् न स्वरस्य प्रयोजनाकांक्षा, अन्यथा दीक्षणीयापदवैयर्थ्यापत्तेः प्रवर्ग्यसौम्ययोस्तु उद्देश्यसमर्पकपदस्य क्लृप्तत्वाभावात् श्रूयमाणोपसत्पदस्य कालार्थसंबन्धबोधेप्युपपत्तेः प्रकरणबाधे प्रमाणाभावेन ज्योतिष्टोमराजसूययागाङ्गत्वमेव कल्पनीयम्। एवं सौत्रामण्या अपि यावत् क्रत्वङ्गत्वं कल्पनीयं तावत् अभिक्रमणस्य प्रयाजाङ्गत्ववत् चयनावान्तरप्रकरणपाठात चयनाङ्गत्वं न तु कालप्रतियोगित्वेनान्वितचयनवाचकपदान्तरकल्पनया तदङ्गत्वमभिप्रेतं पूज्यपादानामिति न बाधकम्। उभयत्रापि फलवत्वं स्वोत्पत्त्यपूर्वजनकत्वेनैव, न चैवंविधं उपसत्प्रकरणं विकृतावस्ति येन तदङ्गत्वं स्यात्। यदि तु सौम्यस्थले उपसदः प्रकृत्येति भाष्यकारलिखनात् अग्रे विधीयमानाः सर्वे उपसदङ्गं उपसदोपि राजसूये विशिष्य उत्पत्तिवाक्येन विहिता इत्यस्ति तासामपि प्रकरणमिति विभाव्यते तदा पुरस्तादुपसदामित्युत्पत्तिवाक्यविहितसौम्यस्यापि तदङ्गत्वं प्रकरणाद्भविष्यतीति न सौत्रामणीवैषम्यं तथापि उपसदपूर्वस्य प्रकृतौ सौम्येन

नन्तरकर्तव्यत्वेन प्राप्तोऽतिदेशप्राप्तोपसत्पूर्वं विधीयते। ततश्च न तद्विकृतौ कर्तव्यः। पूर्ववच्चास्यापि तद्विकृतौ कर्तव्यता प्राप्ता अपोद्यत इति सङ्गतिः। तेन सङ्गत्यभावादिदमधिकरणं विदेवनाधिकरणात्पूर्वं द्रष्टव्यमिति तन्त्रसारोक्तिरपास्ता। आचार्योक्तत्वादिति हेतूक्तिस्तु अनुपलब्धिबाधितैव ॥ ३ ॥

---

## (४)—फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥

"वैश्वदेवीं साङ्ग्रहणीं निर्वपेद्ग्रामकामः" इति प्रकृत्य "आमनमस्यामनस्य देवाः इति तिस्र आहुतीर्जुहोति" इति श्रुतम्। तत्रामनहोमानां साङ्ग्रहण्यङ्गत्वं, तस्याः विकृति-

---

त्विनाप्युत्पत्तेः तदर्थत्वेऽप्यानर्थक्यापरिहारात् तदर्थं स्वाराज्यरूपफलसंबन्धपर्यन्तोपस्थितेरावश्यकत्वे लाघवात्तदर्थत्वमेव युक्तं, अथवा पुरस्ताद्वाक्यस्योत्पत्तिवाक्यत्वमेव नास्तीति पूर्वोक्तयुक्त्यैव उपसदङ्गत्ववारणं युक्तमिति ध्येयम्। ततश्चेत्यादि। अत्र च न राजसूययागोपसद्विकृतिः काचन तदन्तर्गतसोमयागविकृतिर्वा प्रसिद्धत्वेन संभाव्यते येनैतत्क्लिष्टं प्रयोजनं वक्तुं शक्यते। अत एव विदेवनाधिकरणप्रयोजनोक्तिरपि शिथिलैव। अतोऽङ्गशेषप्रायश्चित्ताप्रायश्चित्तसंकल्पोल्लेखानुल्लेखाद्यपि प्रयोजनं वक्तुं शक्यं तावतापि तन्त्रसारमतखण्डनोपपत्तेः। वस्तुतस्तु तन्त्रसारोक्तमेवात्र सम्यक्। अङ्गकालसंबन्धस्यैतदधिकरणविषयस्य विशेषतस्तत्पेटिकायां पूर्वमेव संबन्धसत्वात् पूर्वोत्तरयोर्विदेवनसांग्रहण्यधिकरणयोरङ्गप्रधानमात्रविषयत्वेनास्य विचारस्य मध्ये असङ्गतेश्च। अत एव अपि वा कालमात्रं स्यात् अदर्शनाद्विशेषस्य इति सिद्धान्तसूत्रं व्याचक्षाणेन भाष्यकारेण अपिवेति पक्षव्यावृत्तिः कालमात्रं स्यात् नाङ्गप्रयोजनसंबन्धः। कुतः? अदर्शनात् विशेषस्य नान्यैः कालाभिधानैः अस्य कश्चिद्विशेषो लक्ष्यते आग्निमारुतादूर्ध्वमनूयाजैश्चरन्तीत्येवमादिभिरिति व्याख्यातं तेन सूत्रभाष्यकाराभ्यां स्पष्टमेव पूर्वसङ्गतत्वं दर्शितमिति। आचार्योक्तत्वादिति हेतूक्तिस्तु अनुपलब्धिबाधितैवेत्युक्तिरपि विपरीतैवेति दिक्।

---

### ॥ फलवद्वोक्तहेतुत्वात् ॥

साङ्ग्रहणीति। वैश्वदेवेन यजेतेति विधौ वैश्वदेवपदस्य यद्विश्वेदेवास्समयजन्तेति अर्थवादगतस्तुत्यालंबनेन तत्प्रख्यन्यायान्नामधेयत्वमिव इहापि साङ्ग्रहणी भवति मनोग्रहणं वै संग्रहणं मन एव सजातानां गृह्णाति इत्यर्थवादगतस्तुत्यालंबनेन तन्न्यायात् साङ्ग्रहणीपदस्य

**त्वेन प्रकरणाभावेऽपि सन्निधानादेव तदङ्गत्वोपपत्तेः। "यत्प्रयाजानां पुरस्ताज्जुहुयाद्बहिरात्मानं सजातानां दध्याद्यदनूयाजानामुपरिष्टाज्जुहुयात् स्वर्गं लोकमपकामेत् मध्ये जुहोति" इति प्राकृताङ्गमध्यवृत्तित्वश्रवणेन प्रकरणाद्वा तदुपपत्तेश्च।** वस्तुतस्तु आकाङ्क्षाऽनुवृत्तौ **प्रमाणाभावान्नेदं प्रकरणमिति ध्येयम्।**

---

नवनीतश्रपितचरुद्रव्यकविश्वेदेवदेवताककर्मनामधेयत्वं ज्ञेयम्। अत्र च प्राकृताङ्गमध्यविहितत्वेन प्रकरणसंस्पर्शस्यापि संभवादिति शास्त्रदीपिकादिषु संस्पर्शपदोपादानसूचितमर्थं स्फुटयति— **वस्तुतस्त्विति।** **अयं भावः**—यदि प्रकृतौ विकृतौ वा भावनायाः कथंभावाकाङ्क्षा पदार्थानुष्ठानं यावत् अनुवर्तेत तदा प्रथमप्राकृतपदार्थानुष्ठाने उत्पन्ना आकाङ्क्षा न प्राकृतपदार्थानुष्ठानमात्रेण निवर्तते किंतु लाघवादुत्तरद्वितीयप्राकृतपदार्थानुष्ठानं यावदनुवर्तते। ततश्च तन्मध्ये विद्यमानस्यापूर्वाङ्गस्यापि प्राकृतांगानुवादेन विधीयमानापूर्वाङ्गस्येव तदाकांक्षामध्यपतितत्वेन स्यादपि प्रकरणेन ग्रहणमिति कल्प्येत न त्वेतदस्ति साध्यसाधनयोः स्वरूपेणानिष्पन्नयोरपि भावनायां साध्यसाधनाकांक्षया अन्वयेन तदाकाङ्क्षाशमनस्येव कथंभावाकाङ्क्षया कॢप्तोपकारजनकपदार्थान्वयेनानुष्ठाननिरपेक्षेण तदाकाङ्क्षानिवृत्तौ अनुष्ठानपर्यन्तप्रतीक्षायां प्रमाणाभावात्। नहि पुरुषव्यपेक्षानुष्ठानं यावद् धर्मप्रमाणवाक्यं नार्थबोधकं विलंबासहिष्णुत्वात्।

तदत्र प्रकृतिभावनायाः प्रयाजादिगतप्रयोजनाकांक्षासहकृतकथंभावाकांक्षारूपप्रकरणेन तत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशत्वरूपपारिभाषिकपदसन्निध्याख्यवाक्यकल्पनया निरुक्तपदस्थानापन्नानामवांतरवाक्यानां च स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनानुकूलयोग्यतारूपलिङ्गकल्पनाय च समिधो यजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति अश्रुतेतिकर्तव्यतावाचिइत्थमितिपदरूपश्रुतिकल्पनया च प्रयाजादीनां युगपदितिकर्तव्यतात्वेनान्वयः। युगपदन्वयेपि च न यावत्प्रमाणप्रमिताङ्गत्वं नैराकांक्ष्यप्रयोजकं गौरवात्। अपि तु तत्तदङ्गजन्यादृष्टत्वमेव पृथक् पृथक् तत्र प्रयोगविधिना अङ्गप्रधानानां साहित्यबोधनवत् अङ्गानामपि मिथः साहित्यस्यापि बोधनात् प्रयाजरूपाङ्गसाहित्यमनूयाजे अनूयाजरूपाङ्गसाहित्यं प्रयाजे इत्यादिक्रमेण तत्तत्साहित्यस्यापि अङ्गाङ्गत्वावसायात् साहित्यरूपांगाभावे केवलेन प्रयाजादिजन्यादृष्टमात्रेणैव न नैराकांक्ष्यसिद्धिरपि तु समुदितैस्सर्वैरेव स्वस्वोपकारमात्रान्वये नैराकांक्ष्यम्।

अत एव गृहमेधीये आज्यभागातिरिक्तप्राकृतानामङ्गानां आज्यभागपुनः श्रवणेनातिशस्यैवाकल्पनेनाभावात् न तत्साहित्यरूपाङ्गसापेक्षत्वं आज्यभागयोर्नैराकांक्ष्येऽपेक्षितं इति केवलाज्यभागमात्रेणैव तस्या नैराकांक्ष्यम्। विकृत्यन्तरेपि विकृतिभावनायाः कथंभावाकांक्षायामति-

**एवं प्रयोजनवत्त्वोपपत्तौ च न ग्रामकामपदानुषङ्गेण स्वतन्त्रफलार्थत्वकल्पना, प्रमाणाभावात् इष्ट्यङ्गपरिधिपरिधानाङ्गभूतवैशेषिकमन्त्रैर्व्यवायाच्च । अतस्साङ्ग्रहणीप्रयुक्ता एवैते । न तु सौम्यवत् फलार्थाः । अतस्सर्वदैव प्रयाजानूयाजमध्ये कर्तव्याः । न तु ग्रामान्तरकामनायामेव ॥ ४ ॥**

---

देशप्रमाणेन क्लृप्तोपकारप्राकृतानामन्वयेन नैराकाङ्क्ष्यं क्वचित्तूपहोमविधिं दृष्ट्वा तु विकृतेरपि तदन्यथानुपपत्त्या आकाङ्क्षामुज्जीव्य तेषां तदङ्गत्वे अवगते तत्साहित्यस्यापि अङ्गत्वावगमात् न प्राकृताङ्गान्वयमात्रेण नैराकाङ्क्ष्यम् । अपि तु अपूर्वोपहोमान्वयेनापि तज्ज्ञेयम् ।

यस्यां तु विकृतौ प्राकृताङ्गस्थानापन्नं औदुम्बरत्वशरादि विहितं तद्यावत् विकृतिभावनायाः कथंभावाकाङ्क्षया उपकारपृष्ठभावेन खादिरत्वकुशाद्यन्वीयते तावदुपदेशेनौदुबरत्वशराद्यन्वयेन अतिदेशस्य तद्विषयत्वस्यैवाकल्पनात् अनिवृत्ताकाङ्क्षायामेवौदुम्बरत्वाद्यन्वयात् विकृतावपि भवत्येवोभयाकाङ्क्षारूपप्रकरणकल्पितश्रुत्यादिना औदुम्बरत्वाद्यन्वयेन नैराकाङ्क्ष्यम् । यस्यां तु प्राकृताङ्गानुवादेनापूर्वाङ्गविधानं यथा पृषदाज्येनानूयाजान्यजतीत्यनेन पृषत्तादिकं न तत् कस्यचित् प्राकृताङ्गस्य स्थानापन्नमिति अनिवृत्ताकाङ्क्षया अग्रहणात् उपहोमवदेव सन्निधानमात्रेणान्वेतीति न प्रकरणेन गृह्यत इत्यादि सर्वं समस्तव्यस्तरूपेण **प्राचीनैः पूज्यपादैश्च** तत्र तत्र वक्ष्यते । उक्तं च । तथा च प्रकृतेष्यामनहोमानां प्रकृतौ प्रयाजानूयाजयोरन्तराले पाठाभावात् क्लृप्तोपकारप्राकृताङ्गत्वाभावेन अतिदेशाविषयाणां निवृत्ताकाङ्क्षायामेवान्वय इति न प्रकरणग्राह्यत्वम् ।

एतेनाभिक्रमणप्राग्भाविपदार्थाकाङ्क्षोत्थापितप्रयाजभावनाकथंभावाकाङ्क्षायाः अभिक्रमणोत्तरपदार्थान्वयं यावत् अनुवृत्तिकल्पनेन तन्मध्यपतिताभिक्रमणस्येव आमनहोमानां ग्रहणमित्यपास्तं ; अभिक्रमणस्य मध्येपाठस्येव आमनहोमानां प्रयाजानूयाजमध्ये पाठाभावेन तदाकाङ्क्षासंवलितत्वाभावादित्यलं विस्तरेण । **वैशेषिकमन्त्रैरिति** । ते च उग्रोस्युग्रोहँसजातेषु भूयासं उग्रश्चेत्तावसुविदित्यादयो यद्यपि भाष्यकारेण दर्शितास्तथापि ध्रुवोसि ध्रुवोहमित्येवं तैत्तिरीयशाखापठिता ज्ञेयाः ।

---

(५)—दधिग्रहो नैमित्तिकः श्रुतिसंयोगात् ॥ ८ ॥ नित्यश्च ज्येष्ठशब्दात् ॥ ९ ॥ सार्वरूप्याच्च ॥ १० ॥ नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसम्बन्धाद्भङ्गित्वाच्चान्तरायस्य ॥ ११ ॥

सोमे "यां वै कांचिदध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आवृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीयात्" इति दधिग्रहो नैमित्तिक एव। यद्यपि चायं यच्छब्दो न निमित्तत्वप्रतिपादकः, देवतापदसमभिव्याहृतस्य अन्तरायनिष्ठनिमित्तत्वाप्रतिपादकत्वात् देवतायाश्चान्तरायान्वितायाः नित्यायाः स्वरूपेण निमित्तत्वायोगाच्च, तथाऽपि देवतान्तरायनिमित्तदोषपरिहारफलत्वावगमात्तस्य च कादाचित्कत्वान्नैमित्तिकत्वं, अर्थवादान्वयार्थं यदातदापदाध्याहारस्यावश्यकत्वाद्वा नैमित्तिकत्वम्। "ज्येष्ठो ह वा एष ग्रहाणां यद्दधिग्रहः" इति तु वैगुण्यपरिहारार्थत्वेनापि श्रेष्ठत्वादुपपन्नमिति प्राप्ते—

न तावदार्थवादिकं फलं पर्णमयीन्यायविरोधात्। अर्थवादान्वयस्तु यत्र देवताभावे प्रधानस्यैव लोपापत्तेस्तन्निमित्तिकमपि वैगुण्यं परिह्रियते तत्रेतराङ्गवैगुण्यपरिहारे प्रधानसाद्गुण्ये वा काऽसम्भावनेत्येवं नानुपपन्नः। न चान्तरायजनितवैगुण्यध्वंसस्य क्लृप्तत्वेन तं प्रत्येवार्थवादिकस्य जनकत्वस्य कल्पनयोपपत्तौ द्वारीभूतादृष्टांशकल्पने गौरवमिति वाच्यं, ज्येष्ठत्वसंस्तवस्याञ्जस्यानुपपत्तेः, पक्षद्वयेऽप्यन्यतरार्थवादस्यानाञ्जस्यावश्यकत्वेन

---

॥ दधिग्रहो नैमित्तिकः ॥

यद्यपि केवलान्तरायस्य तदन्वितायाः देवताया वा न यच्छब्दबलान्निमित्तत्वं तथापि शमयत्येवैनमित्यर्थवादाद्देवतान्तरायनिमित्तदोषपरिहारार्थत्वे अवगते अर्थात् देवतान्तरायस्य निमित्तत्वमित्याह—तथापीति। अर्थवादान्वयार्थमिति। यां वै काञ्चिदिति पूर्वोक्तोऽर्थवादः। यत्त्वत्र नित्यश्च ज्येष्ठशब्दत्वादिति सूत्रमनुसृत्य ज्येष्ठो ह वा एष ग्रहाणां यस्यैष गृह्यते ज्यैष्ठ्यमेव गमयतीत्यर्थवादे प्राशस्त्यरूपस्य ज्येष्ठत्वस्य चलाचलत्वेऽनुपपत्तेः नित्यत्वमादायैव ज्येष्ठत्वमुपपद्यत इति नित्योपीति द्वितीयः पक्षः उपपादितो मूले तमन्यथयति—ज्येष्ठो ह वेति। अर्थवादान्वयस्त्विति। यां वै काञ्चनेत्यर्थवादः यद्यपि देवतान्तरायनिमित्तक्रतुवैगुण्यपरिहारसामर्थ्येन यच्छ्रेष्ठत्वं तदादायैव ज्येष्ठत्वोपपत्तिरुक्ता तथापि ज्येष्ठबन्ध्वादौ ज्येष्ठशब्दप्रयोगस्य कनिष्ठादिसमकालविद्यमानत्वेन पूर्वमपि विद्यमानत्वेन च निमित्तेन दृष्टत्वात् नैमित्तिकत्वे च कादाचित्कत्वापत्तेः ज्येष्ठशब्दार्थबाधापत्तेः अनाञ्जस्यमित्यभिप्रेत्याह—आञ्जस्यानुपपत्तेरिति।

---

प्रकरणपाठस्य पाक्षिकत्वपरिहारार्थमन्तरायार्थवादस्यैव तदौचित्याच्च। लाघवस्य प्रमाणानुग्राहकत्वेन प्रमाणविरोधे अकिञ्चित्करत्वात्। अतो देवतान्तरायनिमित्तवैगुण्यस्य दधिग्रहेण परिहर्तुमशक्यत्वान्नित्यमेवाङ्गं दधिग्रहः ॥ ५ ॥

(६)—वैश्वानरश्च नित्यः स्यान्नित्यैस्समानसङ्ख्यत्वात् ॥ १२ ॥ पक्षेवोत्पन्नसंयोगात् ॥ १३ ॥

अग्नौ "यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामि गर्भोऽवपद्यते तादृगेव तदार्तिमार्च्छेत् वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्" इति श्रुतो यागस्तु आलस्यादिना संवत्सरपर्यन्तमुख्यधारणालम्भने प्रायश्चित्तरूपो नैमित्तिक एव, कर्तृसमानाधिकरणेन यच्छब्देन क्रियाकर्तृत्वस्य उद्देश्यत्वावगमान्निमित्तत्वप्रतीतेः। अतो भेदनहोमादिवदयं संवलितक्रतुनिमित्तोभयप्रयुक्तः ॥ ६ ॥

(७)—षट्चितिः पूर्ववत्त्वात् ॥ १४ ॥ ताभिश्च तुल्यसङ्ख्यानात् ॥ १५ ॥ अर्थवादोपपत्तेश्च ॥ १६ ॥ एकचितिर्वा स्यादपवृक्ते हि चोद्यते निमित्तेन ॥ १७ ॥ विप्रतिषेधात्ताभिस्समानसङ्ख्यत्वम् ॥ १८ ॥

तत्रैव "योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्ति अथ षष्ठीं चितिं चिनुते" इति श्रुता षष्ठी चितिरपि उपक्रमस्थकर्तृसमानाधिकरणयच्छब्दबलेनाप्रतिष्ठायाः निमित्तत्वावगतेर्नैमित्तिक्येव। यस्तूपसंहारे षष्ठीमिति षण्णां पूरणार्थकः प्रत्ययः, सोऽभिधानापेक्षः, न त्वनुष्ठानापेक्षः, पञ्च चितयः पूर्वमभिहिताः इदानीमियं षष्ठी अभिधीयते इति। तस्मादग्निचयनोत्तरमप्रतिष्ठायां निमित्ते एकैव चितिरदृष्टार्था, चयनाङ्गतया प्रयोगभेदेन प्रतिष्ठाफलार्थं वा विधीयते ॥ ७ ॥

(८)—पितृयज्ञस्स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥ तुल्यवच्च प्रसङ्ख्यानात् ॥ २० ॥ प्रतिषिद्धे च दर्शनात् ॥ २१ ॥

अनारभ्य श्रुतं "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति। तत्रायं पिण्डपितृयज्ञो दर्शाङ्गम्, अमावास्यापदेन कर्मवाचिना "तत्र जयान् जुहुयात्" इतिवत् वाक्याद्दर्शाङ्गत्वप्रतीतेः। यद्यपि चायं कालेऽपि मुख्यः, तथाऽपि फलकल्पनाभियाऽत्र कर्मपरत्वमेव युक्तम् ॥

वस्तुतस्तु यद्यपि काल एव मुख्यः कर्मणि तद्योगान्निरूढलक्षणा, प्रकृते च कालपर एव, अपराह्णसामानाधिकरण्यात्। तथाऽपि "तस्मात्पितृभ्यः पूर्वेद्युः करोति" इति वाक्ये दर्शेष्टिपूर्वेद्युः कालश्रवणात् वैमृधन्यायेन दर्शेष्ट्युपस्थितत्वात्तदङ्गत्वमिति प्राप्ते—

अमावास्याशब्दस्य कर्मवाचित्वं भवतैव निराकृतम्। लक्षणा तु प्रमाणाभावात्कालसामानाधिकरण्यविरोधाच्च दूरतोऽपास्तैव। पूर्वेद्युर्वाक्यमपीष्ट्यनुपस्थितत्वान्न तत्प्रतियोगिककालं विधत्ते, अपि तु तिथिद्वैधे पूर्वेद्युः कालं

"यदाऽस्तं सविता याति पितरस्तामुपासते"

---

॥ पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥

ननु अमावास्यापदेन कर्माभिधानेपि प्राधान्याभिधायिद्वितीयाद्यभावे कथं तदङ्गत्वेन विधानमित्याशङ्क्य अपेक्षितत्वेन लक्षणयापि प्राधान्यपरत्वस्य अन्यत्रापि दृष्टत्वादत्रापि तदुपपत्तेरित्याह—तत्र जयानिति। ननु येन कर्मणेर्त्सेदिति पूर्वनिर्दिष्टकर्माभिधायितच्छब्दसत्वात् अस्तु कर्माङ्गत्वं प्रकृते तु कथं तन्निर्णय इत्याशङ्क्याह—यद्यपि चेति। अपराह्णसामानाधिकरण्यादिति। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वादिति भावः। तदङ्गत्वमिति प्राप्ते इति। न च दर्शेष्ट्युद्देशेन यागस्य तत्र च पितृरूपदेवतापूर्वेद्युःकालयोश्च विधाने वाक्यभेद इति वाच्यं विश्वजिदधिकरणे भाष्यकारेण एतस्यैवोत्पत्तिवाक्यत्वेन लिखने विशिष्टविधित्वेन वाक्यभेदानापत्तेः। अमावास्यावाक्येन तु पदद्वयेन लक्षणया अपराह्णावच्छिन्नामावास्याकालमात्रविधिरिति न दोषः। इष्टेरिति। अनारभ्याधीतत्वादिति शेषः। अपि त्विति। न च द्वितीयामावास्याप्यनुष्ठितैव येन तत्पूर्वकालिकामावास्या पूर्वेद्युः शब्देन गृह्येत इति वाच्यं पूर्वोत्तरसंदर्भेण तत्प्रतीतेः। तथाहि—इन्द्रो वृत्रं हत्वा असुरान् पराभाव्य सोमावास्यां प्रत्यागच्छत् ते पितरः पूर्वेद्युरागच्छन् इत्यादितैत्तिरीयपूर्वतनार्थवादे पूर्वममावास्यानिर्देशात् तत्प्रतियोगिकः पूर्वेद्युः कालः प्रतीयते। स च यद्यपि चतुर्दश्येव प्राप्ता तथापि अमावास्यायामपराह्णे शाखान्तरवचनेन अमावास्यारूप एव ग्राह्यः। तथा चामावास्याप्रतियोगिको यः पूर्वतनामावास्याकालः तत्र पितरः समागता इति फलिते अर्थात् तिथिद्वैध एव फलति।

**इति प्राप्तमनूद्य देवतामात्रम्। केचित्तु द्वैधे चन्द्रदर्शनात्पूर्वेद्युरिति व्याख्याय खण्डपर्वणि परेद्युः पितृयज्ञमनुतिष्ठन्ति। सर्वथा न दर्शाङ्गं पितृयज्ञः। एवं च "पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्यां हत्वा भ्रातृव्यममावास्यया यजेत पिण्डपितृयज्ञेनैवामावास्यां प्रीणाति" इति दर्शेष्ट्यभावेऽपि पिण्डपितृयज्ञदर्शनं सङ्गच्छते। एतद्बलेनैव च "पितृभ्य एव तद्यज्ञं निष्क्रीय यजमानो देवेभ्यः प्रतनुते" इत्यादिपिण्डपितृयज्ञार्थवादे यज्ञोपस्थितावपि न क्षतिः।**

**यत्तु "न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः" इति मनुवचनं तत् श्राद्धं कृष्णपक्षश्राद्धं दर्शेन अमावास्यया विना आहिताग्नेर्न भवति अनाहिताग्नेरिव तिथ्यन्तरेष्विति व्याख्येयम्। न तु दर्शेन दर्शेष्टिं विना श्राद्धं पितृयज्ञो न भवतीत्येवं व्याख्येयं, दर्शपदे लक्षणायां प्रमाणाभावात्। तेनायं स्वर्गार्थ इति मूलानुयायिनः॥**

**वस्तुतस्तु—अकरणे सप्तहोतृहोमरूपप्रायश्चित्तस्य आपस्तम्बादिभिस्स्मरणात् ज्योतिष्टोमादिक्रतुभिस्तुल्यवद्गणनाच्च नित्य एवायम्॥**

**प्रयोजनं दर्शाभावेऽपि करणं, तद्विकारेषु च नातिदेशः॥**

---

तादृशनिर्णयश्च स्मृत्यैव प्राप्त इति अनुवादमात्रं पूर्वेद्युःपदम्। तेन पूर्वामावास्यायां करणोपपत्तिरिति भावः। **वस्तुतस्तु** अनुवादे वैयर्थ्यापत्त्या तादृशकालविधायकमेव पूर्वेद्युः पदम्। न च विहितविधानानर्थक्यं कदाचिदमावास्यागतपूर्वेद्युस्त्वभ्रेषेण द्वितीयामावास्यायां पिण्डपितृयज्ञानुष्ठाने स्मार्तभ्रेषनिमित्तकप्रायश्चित्तप्राप्तौ तद्बाधेन याजुर्वैदिकप्रायश्चित्तप्राप्त्यर्थतया सार्थक्योपपत्तेः, ततश्च एका यदा शुद्धा अमावास्या तदा तिथिद्वैधे पूर्वेद्युः तिथेरेकत्वे तु तस्यामेव पिण्डपितृयज्ञानुष्ठानमिति कैमुतिकन्यायेन वचनान्तरेण वा तस्यामनुष्ठानं द्रष्टव्यम्। **केचित्त्विति**। एतच्च मतं निरालंबनं प्रतियोगिनश्चन्द्रदर्शनस्यानुपस्थितेरिति **पूज्यपादानामाशयः**। **एवं चेति**। भ्रातृव्यवतः केवलपौर्णमासानुष्ठाने सति योऽमावास्येष्ट्यभावप्रयुक्तो दोषः सोऽमावास्यायां पिण्डपितृयज्ञेनापगच्छतीत्यर्थः। **एतद्बलेनैव चेति**। एवकारेण च इदमेवालंबनं नान्यदिति ध्वन्यते। तेनैतत्सूचितं एतद्बलमप्रयोजकं यस्मादमावास्याङ्गं पिण्डपितृयज्ञः तस्मात् तत्करणमात्रेणैव वैमृधरूपाङ्गकरणेन प्रधानपौर्णमासस्य सेन्द्रत्ववत् अमावास्याप्रीणनं भविष्यतीति, अतो हेतोर्दर्शेष्ट्यभावेपि पिण्डपितृयज्ञानुष्ठानं वचनाद्भविष्यतीति उपपद्यत एव तल्लिङ्गम्। न चैतावता अमावास्याङ्गत्वमिति **कात्यायनमतसिद्धिः**। प्रकरणाभावेपि यज्ञशब्दस्य **द्विरुक्तत्वन्यायेन** दर्शपूर्णमासरूपविशेषाङ्गत्वसिद्धेः केवलामावास्याङ्गत्वासिद्धेः। अत एव तन्निराकरणं **तुल्यवच्च प्रसंख्यानादित्यत्र**

यत्तु भाष्यकारेण पौर्णमास्यामाधाने कृते अग्निमामावास्यायां दर्शेष्ट्यभावात् पूर्वपक्षेऽकरणमित्युक्तं, तत् द्वादशरात्रिषु पवमानेष्टिपक्षे आधानोत्तरदिने पौर्णमासकालाभावे च बोध्यम्। यदा तु तदुत्तरदिने कालसत्त्वं पौर्णमासस्य, तदा आधानदिन एव सेष्टिसान्वारम्भणीयं पौर्णमासस्यान्वाधानं कृत्वा श्वोभूते पौर्णमासेनेष्ट्वा अग्निमद्दर्शेष्ट्यङ्गतयैव पितृयज्ञानुष्ठाने न कश्चिद्विरोधः ॥ ८ ॥

---

(९)—पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २२ ॥ यूपाङ्गं वा तत्संस्कारात् ॥ २३ ॥ अर्थवादश्च तदर्थवत् ॥ २४ ॥

सवनीयस्य सन्निधौ " आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपं परिव्ययति " इति श्रुतेन वचनेन पशुत्रयसाधारणयूपपरिव्याणापेक्षया यूपपरिव्याणान्तरं सवनीयाङ्गतया

---

सूत्रेणैव कृतम्। तच्च चत्वारो वै महायज्ञाः अग्निहोत्रं दर्शपूर्णमासौ ज्योतिष्टोमः पिण्डपितृयज्ञ इति महायज्ञैः तुल्यवत् प्रसंख्यायते, कास्य महायज्ञता स्यात् अन्यतः फलवत्तायाः, तस्मादप्यनङ्गमिति भाष्यकारेण विवृतम्। दर्शेष्ट्यभावादिति। आधानोत्तरं पौर्णमासारंभं विना दर्शारंभेऽनधिकारेण इति पूर्वं शेषो योज्यः।

---

॥ पश्वङ्गं रशना ॥

पशुत्रयेति। परिव्ययति ऊर्वे रशनेति वाक्यविहितेति शेषः। प्रकरणान्तरन्यायेनेति। तृतीये षष्ठपादे रशना च लिङ्गदर्शनादित्यधिकरणे यूपस्य तद्धर्माणां परिव्याणादीनां च अनुष्ठानसादेश्यादग्नीषोमीययागाङ्गत्वं, अतिदेशात्तु सवनीयानुबन्ध्यार्थत्वं; तेषां च सवनीयाद्यर्थे भेदेनानुष्ठाने प्राप्तेपि अग्नीषोमीयार्थं कृतैरेव आतिथ्याबर्हिःप्रोक्षणवत् प्रसङ्गेनोपकारसिद्धेः न पृथगनुष्ठानमित्यस्यार्थस्य साधितत्वात् यूपपरिव्याणस्य प्रयोगविधिविषयत्वाभावेपि सवनीये अतिदेशोपस्थितेः न प्रकरणान्तरन्यायप्रवृत्तिः। अतएव तदधिकरणे स्वयमेव पूज्यपादैरभ्यासाद्भेदस्तु इत्यत्र प्रकरणान्तरन्यायेन इत्युक्तिः प्रौढवादमात्रम्। अथवा द्वादशाध्यायाद्यपादाधिकरणे प्रसङ्गस्थले तदुपकारजनकपदार्थानतिदेशस्यैव स्वयं साधनेन उपस्थापकातिदेशाभावाभिप्रायेण कथंचित् समर्थनीया। अतएव पशुत्रयार्थसाधारणीति पूर्वग्रन्थेन आतिथ्याबर्हिर्वत् साधारण्यमुपदेशविहितं न ग्राह्यं अपि तु तद्बर्हिःप्रोक्षणवत् प्रसङ्गोपकारित्वेनैवेति

प्रकरणान्तरन्यायेन अभ्यासाद्वा यूपदार्ढ्यप्रयोजनकं विधीयते। आश्विनोत्तरकालता उपनिष्क्रमणं च पाठादर्थाच्च प्राप्तमनूद्यत इत्युक्तमेव। अतश्च " आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति " इत्युत्पत्तिवाक्ये पुनश्श्रुतं परिव्याणं न यूपसंस्कारार्थं वैयर्थ्यापत्तेः। किन्तु यूपमिति द्वितीया सप्तम्यर्थे। 'परिवीय' इत्यस्य कर्माकाङ्क्षायां 'पशुं' इत्यस्यानुषङ्गः, तथा च त्रिवृत्करणकयूपाधिकरणकपशुसंस्कारकपरिव्याणोत्तरकालविशिष्टयागविधानात् पश्वर्थमेव परिव्याणं पश्वनपक्रमणार्थमिति प्राप्ते—

द्वितीयया परिव्याणस्य दृष्टविधयैव यूपार्थत्वे सम्भवति लक्षणानुषङ्गयोः प्रमाणाभावः। न च वैयर्थ्यं, रशनाधर्माणां दर्भमयीत्वादीनामेतत्परिव्याणसाधारण्यसिद्ध्यर्थमनुवादत्वस्य तृतीये साधितत्वात्। अन्यथा रशनाधर्माणामौपसत्थ्येऽइन्यनुष्ठीयमानयूपपरिव्याणाङ्गत्वस्यैवानुष्ठानसादेश्यादापत्तौ अप्राकृतकार्यकार्यैतत्परिव्याणार्थत्वासिद्धेः। सति त्वस्मिन् त्रिवृत्करणकयूपपरिव्याणानुवादे तद्बलेनैव प्रकृतयागीययूपव्यक्तिसम्बन्धिपरिव्याणमात्रस्यैवोद्देश्यत्वावगमात्साधारण्यसिद्धिः।

---

ज्ञेयम्। दार्ढ्यप्रयोजनकमिति। अतिदेशप्राप्तपूर्वतनपरिव्याणकृतदार्ढ्यापेक्षया अधिकदार्ढ्यप्रयोजनकमित्यर्थः। एवं च विधिसाफल्यं प्राकृतकार्यकारित्वं च लभ्यते। अनुषङ्ग इति। न च पूर्वपठितस्यैवोत्तरत्रान्वये अनुषङ्गव्यवहारात् पशुपदस्य पूर्वपठितत्वाभावेन कथमनुषङ्ग इति वाच्यं; याते अग्ने अयाशयेति शेषस्य तनूर्वर्षिष्ठेति पूर्वपठितस्य याते अग्ने रजाशया याते अग्ने हराशयेत्यनयोः उत्तरत्र पठितयोरन्वये अनुषङ्गस्येव चित्पतिस्त्वा पुनातु इत्यादिमन्त्रान्ते पठितस्य अच्छिद्रेण पवित्रेणेत्यस्यान्वयेपि अनुषङ्गस्य दर्शनात् इहाप्यनुषङ्गे बाधकाभावात्। प्रकृतयागीयेति। प्रकृतयागपदेन चाविशेषात् पशुयागत्रयमपि गृह्यते न त्वग्नीषोमीययाग एवेत्यर्थः। मात्रशब्दोपि कार्त्स्न्यार्थः। साधारण्यसिद्धिरिति। ततश्च यथैव परिव्याणाङ्गभूतरशनातद्धर्मादयः अग्नीषोमीये उपदेशेनैव भवन्ति एवमेव सवनीयादावपि भवन्ति न त्वितरयागवत् तेषामतिदेशविषयत्वमिति साधारण्यपदेन सूचितम्। कथं तर्हि व्याख्यातॄणां तु सङ्गतिलोभेन यूपतच्छेदनपरिव्याणरशनातद्धर्माणामुपदेशेनैव त्रितयसाधारण्यमङ्गीकृत्य सवनीयपरिव्याणान्तरे उपदेशेनैव तत्प्राप्तिं व्याचक्षाणानामभिप्रायं न विद्म इति तार्तीयाधिकरणोक्तिः पूज्यपादानामिति चेत् शृणु न हि तत्र तेषामुपदेशप्राप्तिखण्डनेनातिदेशेन सवनीयपरिव्याणयोर्धर्मप्राप्तौ अभिनिवेशः किन्तु सर्वेषामेव धर्माणामुपदेशेनैव त्रितयसाधारण्यमित्यर्थस्य खण्डन एव।

तथा हि व्याख्यातॄणां तावदयमाशयः। अनुष्ठानसादेश्यात् यूपतद्धर्मादीनामग्नीषोमीयपश्वङ्गत्वं वदता अग्नीषोमीयप्रकरणे यूपतद्धर्मादयो न पठिता इति न प्रकरणात् तन्मात्राङ्गत्वमिति

तावदावेदितमेव । अनुष्ठानसादेश्यमपि नास्ति यदि हि औपवसथ्येन्हि पशुधर्माणामिव यूपतद्धर्माणां विधानं भवेत् तदा तुल्य इत्यधिकरणे सर्वैः निबन्धकारैः पशुधर्माणामेव विषयतया उपादानवत् यूपतद्धर्माणामपि विषयतया उपादानं कृतं स्यात् । न त्वेतदस्ति तत्र केवलं पशुधर्माणामेव अनुष्ठान-सादेश्यात् अग्नीषोमीययागाङ्गत्वप्रतिपादनात् । अत एव दीक्षासु यूपं च्छिनत्तीति वाक्ये च्छेदनेन उत्पादकसंस्कारमात्रोपलक्षणात् तेषां च स्वतन्त्रस्य दीक्षाकालस्यैव आम्नानात् महाप्रकरणात् प्राप्तमपि ज्योतिष्टोमाङ्गत्वं दृष्टद्वारा न संभवतीति योग्यत्वादानर्थक्यतदङ्गन्यायाच्च संभाराहरणकाले उत्पादितानां पात्राणामविशेषात् सर्वार्थत्वस्येव अत्रापि च्छेदनाद्युत्पादितस्य यूपस्य पशुतन्त्रार्थत्वमेवेति सिद्धे केषाञ्चित् परिव्याणादीनां चतुर्थेऽहनि अनुष्ठानेपि यूपार्थत्वेन त्रितयार्थत्वमेवेति उपदेशेनैव साधारण्यं धर्माणां युक्तम् । एवं च सर्वेषामेव उपदेशादेव सर्वार्थत्वे सिद्धे परिव्याणा-न्तरे उपदिष्टाः त्रिवृत्त्वादयो धर्माः भवन्ति न वेति विचारः तार्तीयाधिकरणसिद्धः अध्यायसङ्गता-र्थो भवति उपदेशेनाङ्गत्वस्यैव तृतीयाध्यायार्थत्वात् । इतरथा सवनीयेऽतिदिष्टाः त्रिवृत्त्वादिधर्माः परिव्याणान्तरे भवन्ति न वेति विचारस्यातिदिष्टविषयत्वेन उत्तरषट्के विचारणीयत्वापत्त्या असङ्गतत्वापत्तेरिति ।

**पूज्यपादैस्तु** पशुधर्माणां नियोजनोपाकरणादीनां दैक्षयागाङ्गत्वे सति यूपे पशुं नियुञ्जीतेति विनियुक्तस्य यूपस्यापि दैक्षयागाङ्गपशुनियोजनाङ्गत्वात् पशुधर्माणामनुष्ठनसादेश्यात् दैक्षयागाङ्गत्व-साधनेन यूपादीनामपि **तदङ्गत्वं** युक्तमेवेत्यभिप्रायेण अनुष्ठानसादेश्यादङ्गत्वं सर्वत्र यूपादीनामुक्तम् । **मास्तु वा** अनुष्ठानसादेश्यं तावतापि यदि दीक्षासु यूपं च्छिनत्तीति विशिष्टविधिमङ्गीकृत्य यूपस्यैव विधायकं, **अथ वा** च्छेदनादीनां यूपस्य च वाक्यान्तरप्राप्तत्वात् यूपोत्पत्त्यनुवादेन कालमात्रस्यैव विधायकम् । उभयथापि **आनर्थक्यात्तदङ्गेष्विति** न्यायात् त्रयाणां पशुयागानां यावदुपस्थितिः तावदव्यभिचरितक्रतुसंबन्धसहकृतद्विरुक्तत्वन्यायात् तस्मात् दैक्षस्यैवोपस्थितेः तदङ्गत्वमेव युक्तं कल्पयितुम् । एवं सत्यपि यथा यूपतन्त्रत्वं तथोपपादयिष्यते एकादशे द्वितीयपादे । एवं च परिव्याणतद्धर्मादीनामनुष्ठानसादेश्यं न बाधितं भवति तावतापि रशनातद्धर्मादीनां परिव्याणा-न्तरे उपदेशेनाङ्गत्वमिति सिद्धान्तितार्थस्य अस्त्येवाध्यायसंगतत्वमिति न दोषः ।

**परमार्थतस्तु** अतिदेशादेव सवनीयपरिव्याणान्तरे रशनातद्धर्माणां प्राप्त्यर्थं एकोद्देश्यता-वच्छेदकाक्रान्तत्वमात्रेणैवाल साधारण्यं ग्राह्यं न तूपदेशेन तथोपपादितं तृतीय एव द्रष्टव्यमित्यलं **विस्तरेण** ।

अस्तु वा निर्वपतिवदेव प्रकृतिलिङ्गसादृश्येन प्राकृतपरिव्याणातिदेशसिद्ध्यर्थमस्मिन् परिव्याणे त्रिवृत्त्वानुवादः। सर्वथा न परिव्याणान्तरं पशुसंस्कारार्थम् ॥

प्रयोजनं—यूपे द्वैरशन्यसत्त्वेऽपि पशावपि द्वैरशन्यं पूर्वपक्षे प्रकृतौ विकृतौ च। सिद्धान्ते नेति ॥ ९ ॥

---

(१०)—स्वरुश्चाप्येकदेशत्वात् ॥ २५ ॥ निष्क्रयश्च तदङ्गवत् ॥ २६ ॥ पश्वङ्गं वाऽर्थकर्मत्वात् ॥ २७ ॥ भक्त्या निष्क्रयवादः स्यात् ॥ २८ ॥

---

प्रकृतमनुसरामः। ननु त्रिवृत्त्वानुवादतात्पर्यग्राहकबलात् रशनातद्धर्मादिविधौ प्रकृतयागीययूपसंबन्धिपरिव्याणमात्रस्योद्देश्यत्वकल्पनात् तथाविधोद्देश्यत्वकल्पनया च तदाक्रान्तत्वात् त्रिवृत्त्वादिप्राप्तेः अनुवादत्वकल्पनेत्यन्योन्याश्रयापत्तेः। किंचानया रीत्या अर्थलोपात् बाधप्राप्त्यनन्तरप्रवृत्तप्रतिप्रसवविधिमात्रस्य उच्छेदापत्तेः। कृष्णलचरौ घृते श्रपयतीत्यत्र श्रपणविधाने गौरवात् अनुवादत्वाङ्गीकारेण एतदनुवादतात्पर्यग्राहकबलाच्च प्राकृतश्रपणविधौ विकृतिरूपोपकारस्य द्वारत्वमङ्गीकृत्य आग्नेयापूर्वसाधनहविरुद्देश्यकत्वापत्तौ अत्रापि तत्प्राप्तेस्तदनुवादेन घृताधिकरणत्वमात्रविधानोपपत्तेः इत्यस्वरसात् पक्षान्तरमाह—अस्तु वेति। अत्र भाष्यकारेण अग्निचयने यत्र एकस्मिन् यूपे एकादशपशवो नियोज्यन्ते तत्र पूर्वपक्षे प्रतिपशु रशना कार्या। सिद्धान्तेतु यूपैकत्वात् एकैव रशनेति प्रयोजनमुक्तम् तद्यत्र पश्वेकत्वं प्रकृतौ सवनीये वर्तते तत्रापि प्रयोजनलाभसंभवात् नियमेन एकादशपशुपर्यन्तानुधावनस्य व्यर्थत्वादित्युपेक्ष्य प्रकृतावपि स्वयं प्रयोजनमाह—प्रयोजनमिति। यूपपरिव्याणार्थरशनापेक्षया अस्मिन् पूर्वपक्षे उपाकरणात् प्राक् पशुसंस्कारकपरिव्याणाङ्गरशनाधारतया यूपस्य विधानात् द्वितीयरशनासंबन्धेन यूपे द्वैरशन्यसत्वेपि पशावपि नियोजनार्थरशनापेक्षया उपाकरणात् प्रागपि रशनान्तरमिति द्वैरशन्यं ; सिद्धान्ते तूपाकरणात् प्राक् यूपस्यैव द्वैरशन्यम्। उपाकरणोत्तरमेव तु नियोजनार्थमेकैव पशौ रशनेति न द्वैरशन्यं पशावित्यर्थः। अत्र सुत्यादिनस्थानां ऐकादशिन्यादिपशूनां विकृतिशब्देन तन्निरूपित प्रकृतित्वात् सवनीयस्य प्रकृतिपदेन च ग्रहणं विवक्षितम् ॥

---

"यूपस्य स्वरुं करोति" इति षष्ठ्या स्वरोः यूपार्थत्वावगमात् "स्वरुणा पशुमनक्ति" इत्यत्राङ्गं प्रतिपत्तिः "यत्किञ्चित्सोमलिप्तं तेनावभृथं यन्ति" इतिवदिति प्राप्ते —

स्वरोर्यूपार्थत्वे अदृष्टार्थत्वापत्तेः षष्ठ्याश्चावयवत्वसंबन्धपरत्वेनाप्युपपत्तेः 'स्वरुणा' इति तृतीयादिबलात् पश्वञ्जनार्थत्वमेव । सोमलिप्ते त्ववभृथपदे गौणत्वाद्यनेकदोषभिया तदङ्गीकरणमित्युक्तमेव ॥

प्रयोजनं पूर्वपक्षे पशुयूपके पशुगणे एकस्यैव पशोः स्वरुणा समञ्जनम् । सिद्धान्ते तु सर्वेषामिति ।

पार्थसारथिमते तु प्रयाजशेषाभिघारणन्यायेन आधारनियमस्य पशुसंस्कारार्थत्वापत्तेः पूर्वपक्षेऽपि सर्वेषामञ्जनप्रसङ्गात् प्रयोजनानुपपत्तिरिति भाष्यविरोधोऽपि ॥ १० ॥

---

॥ स्वरुश्चाप्येकदेशत्वात् ॥

षष्ठ्येति । देवताया मालाङ्करोतीत्यादौ प्राधान्येपि षष्ठीदर्शनादिति भावः । इत्युक्तमेवेति । अस्मिन्नेवाध्याये द्वितीयचरणे सौमिके चेत्यधिकरणे । एकस्यैव पशोरिति । पश्वञ्जनस्य स्वरुप्रतिपत्त्यर्थत्वेन पशोरुपायत्वेन विवक्षितैकत्वात् एकपश्वञ्जनेनापि तत्प्रतिपत्तिसिद्धेरिति भावः । पार्थसारथिमते त्विति । तन्मते हि प्रयाजशेषाभिघारणन्यायेनात्रापि द्वितीयातृतीययोः सप्तम्यर्थद्वितीयार्थलक्षणया यद्यपि पशूनामुपादेयत्वेन विवक्षितसंख्यत्वं तथापि तदाधारतानियमम् प्रति तद्वदेव संस्कार्यत्वेनाविवक्षोपपत्तेः अनेकेष्वपि संस्कारापत्तिः । नह्यत्र कालान्तरभाविप्राजापत्यवपानामसन्निहितत्वेन प्राङ्नियमविधेः अनियतप्राप्तिविषयत्वाभाववत् किंचिदति सर्वेषामेव पशूनां सन्निहितत्वात् एकतरपशुमादायापि प्रतिपत्त्याकांक्षाशान्त्युपपादने प्रयाजशेषस्यापि एकहविष्यैव प्रतिपादनं स्यादिति तुल्यमिति भावः ।

स्वमते तु प्रयाजशेषस्य जौहवस्य चतुर्जुह्वां गृह्णातीति असंयुक्तवाक्येनोत्पन्नस्य प्रयाजार्थत्वेन वाक्यान्तरविनियुक्तस्य प्रतिपत्त्यपेक्षया वाक्यान्तरकल्पनवत् नात्र तत्प्रसरः । यूपस्य स्वरुमिति वाक्ये उत्पन्नस्वरोः केनचित् प्रमाणेन विनियुक्तत्वाभावात । अत इदमेव वाक्यं विनियोजकमिति न प्रतिपत्तिविधित्वमिति ॥

---

(११)—दर्शपूर्णमासयोरिज्याः प्रधानान्यविशेषात् ॥ २९ ॥ अपि वाऽङ्गानि कानिचित् येष्वङ्गत्वेन संस्तुतिस्सामान्यतो ह्यभिसंस्तवः ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥ अविशिष्टं तु कारणं प्रधानेषु गुणस्य विद्यमानत्वात् ॥ ३२ ॥ नानुक्तेऽन्यार्थदर्शनं परार्थत्वात् ॥ ३३ ॥ पृथक्त्वे त्वभिधानयोर्निवेशः श्रुतितो व्यपदेशाच्च तत्पुनर्मुख्यलक्षणं यत्फलवत्त्वं तत्सन्निधावसंयुक्तं तदङ्गं स्यात् भागित्वात्कारणस्याश्रुतश्चान्यसम्बन्धः ॥ ३४ ॥ गुणाश्च नामसंयुक्ता विधीयन्ते नाङ्गेषूपपद्यन्ते ॥ ३५ ॥ तुल्या च कारणश्रुतिरन्यैरङ्गाङ्गिसम्बन्धः ॥ ३६ ॥ उत्पत्तावभिसम्बन्धस्तस्मादङ्गोपदेशस्स्यात् ॥ ३७ ॥ तथा चान्यार्थदर्शनम् ॥

प्रयाजादिसाधारण्येन "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनेन राजसूयवत् यजिना न फलसम्बन्धः। किन्त्वाग्नेयादीनां षण्णामेव, दर्शपूर्णमासनाम्ना आग्नेयादिषड्यागेष्वेव प्रसिद्धार्थकेन यजेरवच्छेदात्। यथा च दर्शपूर्णमासनाम्नः प्रसिद्धार्थकत्वं तथोपपादितं पौर्णमास्यधिकरणे। तदधिकरणप्रयोजनकथनार्थं त्विदमधिकरणं प्रयुक्तिसिद्ध्यर्थं न विरुध्यते। राजसूयनाम्नश्च यथा प्रकृतसर्वयागपरत्वं तथा तदधिकरणे स्पष्टमेव। अतश्च प्रयाजादीनामङ्गत्वाद्विकृतावतिदेशः ॥ ११ ॥

---

(१२)—ज्योतिष्टोमे तुल्यान्यविशिष्टं हि कारणम् ॥ गुणानां तूत्पत्तिवाक्येन सम्बन्धात्कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात् ॥ ४० ॥ तथा चान्यार्थदर्शनम् ॥ ४१ ॥

"ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्यनेन स्वर्गफलसम्बन्धो न सोमयागस्यैव, अपि तु प्रायणीयादीनां सर्वेषामेव, यागत्वाविशेषेण सर्वेषामेव यजिना फलोद्देशेनोपादा-

नात्, सर्वेषां ज्योतिष्टोमनामत्वाविशेषाच्च। न च स्ववाक्ये विहितस्यैव ज्योतिष्टोमसंज्ञकस्य फलोद्देशेन विधानादितरेषां तदङ्गत्वमिति वाच्यं, अग्नीषोमीयाद्यपेक्षयाऽत्र कर्मान्तरे प्रमाणाभावात्। अत एवैतद्वाक्यविहितकर्मणोऽप्रसिद्धत्वादग्नीषोमीयाद्यनुवादेन च सोमविधानायोगात्सोमवाक्येऽपि सोमविशिष्टयागस्यैव विधानम्॥

न च विशिष्टविधिगौरवभिया लाघवसहकृतवाक्यान्तरोपात्तगुणादेव ज्योतिष्टोमवाक्ये कर्मविध्यङ्गीकारः, तथात्वे नित्यवाक्येऽपि कर्मान्तरस्य विनिगमनाविरहेणापत्तौ सोमवाक्य एव

---

॥ ज्योतिष्टोमे ॥

अत्र ज्योतिष्टोमवाक्यमेव यागस्य विधायकं एतद्विधिविहितज्योतिष्टोमानुवादेन च सोमवाक्येन सोमगुणमात्रं विधीयते अन्यथा सोमवाक्ये विशिष्टविधिगौरवमत्वर्थलक्षणापत्तेः। अतश्च ज्योतिष्टोमस्यैव फलसंबन्धात् प्राधान्यमितरेषामङ्गत्वमिति तन्त्ररत्नोपन्यस्तमेकीयमतमाशङ्क्य निराकरोति —न चेति। प्रमाणाभावादिति। वस्तुतस्तु यथैव क्लृप्तप्रवृत्तिनिमित्तकज्योतिष्टोमसंज्ञया अनुत्पत्तिवाक्यस्थयापि अवरुद्धे कर्मणि उद्भित्संज्ञाया निवेशायोगेन संज्ञया उद्भिद्यागस्य ज्योतिष्टोमात् कर्मान्तरत्वं साधितं स्वयमेव द्वितीयाध्याये संज्ञया भेदाधिकरणे। एवमिहापि पत्नीसंयाजान्तोऽग्नीषोमीयः सन्तिष्ठते शंय्वन्ता प्रायणीया सन्तिष्ठते इडान्ता आतिथ्या सन्तिष्ठते तावत्या दीक्षणीयायां इत्याद्यनुत्पत्तिवाक्यगताग्नीषोमीयादिसंज्ञादिभिरवरुद्धेषु ज्योतिष्टोमसंज्ञायाः निवेशायोगात् संज्ञया अग्नीषोमाद्यपेक्षया कर्मान्तरं ज्योतिष्टोमसंज्ञकं वक्तुं शक्यत एवेति ध्येयम्। गुणादेवेति। यदि ज्योतिष्टोमवाक्ये कर्मविधिर्न स्यात् तदा सोमवाक्यविहितसोमद्रव्यस्य अग्नीषोमीयादिषूत्पत्तिशिष्टद्रव्येषु निवेशायोगादगत्या सोमवाक्ये विशिष्टविधिस्वीकारापत्तेः, तत्र च गौरवात् लाघवात् ज्योतिष्टोमवाक्यमेव कर्मविधायकं भवत्विति भावः। समाधत्ते—तथात्वेपीति। विनिगमनाविरहेणेति। वसन्ते वसन्ते ज्योतिषेति वाक्यविहितकर्मणो ज्योतिष्टोमवाक्येन फलसंबन्धः किं वा ज्योतिष्टोमवाक्यविहितकर्मणो वसन्तवाक्येन निमित्तसम्बन्ध इत्येवं विनिगमकाभावादित्यर्थः। वस्तुतस्तु ज्योतिष्टोमवाक्यविहितस्य कर्मणो वसन्तवाक्यस्थज्योतिः पदेन आख्याविकारन्यायेन अनुवादसंभवेपि वसन्तवाक्यविहितज्योतिः संज्ञककर्मणोज्योतिष्टोमवाक्ये ज्योतिष्टोमपदेन अनुवादासम्भवात् ज्योतिष्टोमवाक्य एव कर्मविधानं तस्यैव वसन्तवाक्येन निमित्तसम्बन्धबोधनमिति न विनिगमनाविरह इत्यपि शक्यं वक्तुम्। शक्यं नामैकदेशं हि ससम्बन्धिकत्वात् सम्पूर्णं नामोपस्थाप्य द्विरेफपदवत् स्वार्थं प्रतिपादयति सम्पूर्णन्तु नाम नैकदेशमुपस्थाप्यार्थोपस्थापकं अधिकत्वेन ससम्बन्धिकत्वाभावात्। अतोऽकामेन वसन्तवाक्यस्य कर्मान्तरविधायकत्ववादिना

**उत्पत्त्यन्वयिगुणेन विशिष्टविध्यङ्गीकारस्य न्याय्यत्वात्।** अतश्च **प्रकृतत्वाविशेषात् राजसूयवत् सर्वेषां फलसम्बन्धः। न च "एतानि वाव ज्योतींषि य एतस्य स्तोमाः" इति वाक्यशेषात् सोमयागस्यैव ज्योतीरूपत्रिवृदादिस्तोमसम्बन्धेन ज्योतिष्टोमनाम्नस्तत्रैव प्रसिद्धार्थकत्वात् दर्शपूर्णमासपदवद्यज्यवच्छेदकत्वोपपत्तेस्तस्यैव फलसम्बन्धोपपत्तिरिति वाच्यं, एतस्यार्थवादत्वेन गौणतयाऽप्युपपत्तौ अर्थान्तरवाचिनो ज्योतिश्शब्दस्य स्तोमवाचित्वाभावात्**, ज्योतीरूपस्तोमाङ्गकत्वस्य **फलसम्बन्धोत्तरकालीनत्वेनाविशेषात्॥**

---

ज्योतिष्टोमवाक्ये कर्मान्तरं विधेयं ततो गौरवापत्तेर्लाघवात् ज्योतिष्टोमवाक्यमेव कर्मविधायकमित्यस्त्येव **विनिगमकमिति।**

**यत्त्वत्र न्यायप्रकाशकृतोक्तं** स्वर्गकामवाक्यस्य कर्मविधायकत्वे एकेनैवोत्पत्तिविनियोगकरणात् गौरवलक्षणो वाक्यभेदः स्यात् सोमेन यजेतेत्यस्योत्पत्तिविधित्वे तु यद्यपि मत्वर्थलक्षणा आपतति तथापि वाक्यदोषरूपवाक्यभेदापेक्षया पददोषरूपलक्षणाङ्गीकारे बाधकाभावः। अत एव जातपुत्रादिवाक्येषु वाक्यभेददोषमसहमानैः वयोऽवस्थाविशेषलक्षणा स्वीकृता मीमांसकैरिति।

**तन्न,** सोमवाक्यस्योत्पत्तिविधित्वेपि लक्षणातोऽधिकस्य विशिष्टविधिगौरवलक्षणवाक्यभेदस्य सिद्धान्तेपि सत्वात् **निषादस्थपत्यधिकरणन्यायेन** लक्षणापेक्षया स्वर्गवाक्ये उभयकल्पनागौरवस्य **फलमुखत्वाच्च।** अतो लक्षणादोषानापत्त्या ज्योतिष्टोमवाक्यस्यैव उत्पत्तिविधित्वमाश्रयितुं युक्तम्। किं तर्हि एकीयमते दूषणमिति चेत ? उक्तमेव सोमवाक्ये एव उत्पत्त्यन्वयिगुणेन विशिष्टविध्य**ङ्गीकारस्य न्याय्यत्वादिति ग्रन्थेन पूज्यपादैः। अयं भावः**—सत्यमुभयत्र गौरवं तुल्यं तथापि सोमादेः उत्पत्त्यन्वयिनो गुणस्य श्रवणात् सोमवाक्येनैव यागस्य विधाने अस्मन्मते मत्वर्थलक्षणाया अप्यनङ्गीकारात् तत्रैव तद्विधानं साधु। नतु स्वर्गवाक्येनेति। ततश्च वाक्यान्तरविहितस्य सोमद्रव्यकयागस्य यागत्वाविशेषात् ज्योतिष्टोमवाक्येन फलसंबन्धः तदा तदविशेषात् अग्नीषोमीयादीनामपीति नाङ्गत्वं तेषामित्यधिकरणपूर्वपक्षः सिद्ध इत्याह—**अतश्चेति।** ननु मास्तु ज्योतिःपदस्य सामानाधिकरण्यमात्रेण स्तोमवाचित्वं, किं तु गौणत्वमेव। तावतापि ज्योतिस्सदृशस्तोमवत्त्वस्य अर्थवादेऽवगतत्वात् तावतैवाधिकारवाक्यस्थज्योतिष्टोमपदस्य प्रसिद्धार्थत्वं भविष्यतीत्यत आह—**ज्योतीरूपस्तोमाङ्गत्वस्येति।** अत्र **तन्त्ररत्नकृता** ग्रहं वा गृहीत्वेति वाक्यस्यानुत्पत्तिवाक्यत्वेन आज्यैःस्तुवत इत्यादिवाक्योत्पादितानां प्रकरणावगतयागाङ्गभावानां स्तोत्राणामैन्द्रवायवं गृह्णातीत्यादिविहितानां ग्रहणानां कालार्थः संबन्धःक्रियत इति नैतावतापि स्तोमानां **परंपरया सोमयागाङ्गत्वं येन ज्योतिष्टोमपदस्य विशेषपरत्वं स्यादिति युक्तम्।** तत्र एकप्रयोगविधि-

न च "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति" इत्यनेन वचनेन स्तोत्रोपाकरणस्य सोमयागाङ्गभूतग्रहग्रहणाद्यङ्गत्वावगमात् स्तोमानामपि स्वसाध्यस्तोत्रोपाकरणद्वारा सोमयागसम्बन्धावगतेर्विशेषकत्वोपपत्तिरिति वाच्यं, उपाकरणस्य दृष्टविधया स्तोत्रोपकारकत्वेन द्वितीयया च स्तोत्राङ्गत्वावगतेरस्य कालार्थत्वात्। न च कालद्वारैव सम्बन्धेन विशेषकत्वं, कालस्य फलसम्बन्धोत्तरापेक्षत्वात् तस्य च स्तोत्रगतफलवत्त्वज्ञानाधीनत्वात् तस्यापि च यागगतफलवत्त्वबोधकवाक्याधीनत्वेन तत्प्रवृत्तेः पूर्वमेतद्वाक्यप्रवृत्त्यभावेनैतत्सम्बन्धानवगतेर्नाम्नो विशेषकत्वाभावात्॥

यद्यपि च पदार्थानां प्राप्तत्वेन अस्य वाक्यस्य क्रमविधायकत्वं स्यात्, तथाऽपि "वेदं कृत्वा वेदिं करोति" इतिवत् श्रौतक्रमविधायकत्वात् तस्य च प्रातिस्विकविधिविधेयत्वेनेतरक्रमवत् प्रयोगविधिविधेयत्वाभावेऽपि क्रमस्यानुष्ठानावगमोत्तरापेक्षत्वात् तस्य च फलवत्त्वज्ञानोत्तरकालीनत्वेन उक्तविधया न विशेषकत्वमिति प्राप्ते—

क्रमादेरुत्तरकालमाकाङ्क्षायामपि निराकाङ्क्षत्वज्ञानाभावमात्रेण वाक्यस्य पूर्वप्रवृत्त्युपपत्तेः तेन च कालस्य क्रमस्य वा विधेयत्वेन विशिष्य तद्घटितसम्बन्धस्य सोमयागेऽवगमान्नाम्नः प्रसिद्धार्थकत्वेन तस्यैव फलसम्बन्धावगमेन प्राधान्यं, अन्येषां तदङ्गत्वमिति तद्विकृतावतिदेशः॥

---

परिगृहीतानां वाक्यान्तरप्राप्तानां एतस्य अध्वर्युर्गृहपतिं दीक्षयित्वेतिवत् क्रमविधायकत्वमेवापद्यत इति कालार्थसंयोगाभिधानं अनुपपन्नम्। अतःस्तोत्राणां प्राप्तत्वेपि स्तोत्रोपक्रमरूपोपाकरणस्य विधेयत्वात् तस्य च ग्रहणाङ्गत्वबोधकत्वमेव स्वीकार्यं वैमृधवाक्यस्येवेत्यभिप्रायेणाशङ्कते— **न चेति**। स्वसाध्येत्यत्र स्वपदं स्तोमपरम्। **कालद्वारैव संबन्धेनेति**। ज्योतीरूपस्तोमानां स्वसाध्यस्तोत्राङ्गभूतोपाकरणाङ्गकालप्रतियोगिग्रहणसंस्कार्यसोमद्रव्यकत्वसंबन्धेन यागे सत्वादित्यर्थः। **तस्य चेति**। उपाकरणफलसंबन्धस्य चेत्यर्थः। **प्रयोगविधिविधेयत्वाभावेपीति**। यदि तद्विधिविधेयत्वं स्यात् तदा तस्य फलसंबन्धोत्तरं प्रवृत्तेः स एव दोषःस्यात् न त्वेतदस्तीत्यर्थः। उद्देश्यस्याकाङ्क्षितं हि विधीनां विधेयं आकांक्षितविधायकत्वस्वाभाव्याद्विधेः। उपाकरणं चात्रोद्देश्यं तस्यापेक्षया विधीयमानःक्रमः तदनुष्ठानानन्तरमेवापेक्षणीय इति तदुत्तरापेक्षितत्वमित्यर्थः। **निराकाङ्क्षत्वज्ञानाभावेऽपीति**। पदार्थविधाने नोद्देश्यनिष्ठाकाङ्क्षाज्ञानं करणं व्यभिचारात् अपितूद्देश्यगतनिराकाङ्क्षत्वज्ञानं प्रतिबन्धकं तदभावमात्रमपेक्षितम्। प्रकृते च क्रमविधायकवाक्यप्रवृत्तौ

तदेवं प्रयोज्यवर्गो निरूपितः ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
चतुर्थस्याध्यायस्य चतुर्थः पादः,
अध्यायश्च समाप्तः।

---

उपाकरणे न साकाङ्क्षत्वज्ञानं न वा निराकांक्षत्वज्ञानम्। अतःप्रतिबन्धकाभावसत्वात् क्रमवाक्य-प्रवृत्तिः पूर्वं युक्तेति भावः। अध्यायार्थमुपसंहरति—तदेवमिति।

इतिश्रीपूर्वोत्तरमीमांसापारावारीणधुरीणश्रीखण्डदेवान्तेवासि-
कविमण्डनशंभुभट्टविरचितायां भाट्टदीपिकाप्रभावल्यां
चतुर्थाध्यायस्य चतुर्थःपादः। अध्यायश्च समाप्तः।
॥ ओम् शुभमस्तु ॥

---